उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३म तो ।
वो३म् ॥
प्र चेतन प्रचेतयो४म् ॥ ६

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्या मधि ।
अतो नो यज्ञ माशुभिर्महे-
मत उग्र उग्रेभिरा गह्यो३म् ॥
रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसो३म् ॥
इन्द्र द्युम्नाय न इषो४म् ॥ ७

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।
युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा ३म् ॥
अजिरासो हरयो ये त आशवो वाता इव प्रसक्षि णति ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३म् ॥
राये वाजाय वज्रिवो४म् ॥ ८

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।
यथा प्रावो मघवन् मेध्यातिथिं
यथा नीपातिथिं धनो३म् ॥
यथा कण्वं मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियं

शविष्ठ वज्रिन्नृञ्जसोऽम् ॥ ९

...वतस्ते वसो विद्याम शूर नव्यसः ।

...था प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजोऽम् ॥

यथा कण्वं मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।

यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवोऽम् ॥

मंहिष्ठ वज्रिन्नृञ्जसोऽम् ॥ १०

...था मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।

...ातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचोऽम् ॥

... मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।

...सं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसोऽम् ॥

चिकित्वो अभि नो नयोऽम् ॥ ११

... मनौ विवस्वति सोमं शक्रापिबः सुतम् ।

...त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचोऽम् ॥

...गाः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।

...स्राण्यसिषासद्गवा ऋषिस्त्वोतो दस्यवे वृकोऽम् ॥

इन्द्रो विदेत सु स्तुषोऽम् ॥ १२

...क्थेभिर्न विग्धते चिकित्य ऋषिचोदनः ।

...तमच्छा वद नव्यस्या सत्यविष्यन्तं न भोजसेऽम्

यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म् ॥
त मूतये हवामहो४म् ॥ १३

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उपमित्रस्य धर्मभो३म् ॥
यस्मा अर्कं सप्तशीर्षाण मानृचुस्त्रिधातु मुत्तमे पदे ।
स त्वि१मा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यो३म् ॥
जेतार मपराजितो४म् ॥ १४

यो नो दाता वसूना मिन्द्रं तं हूमहे वयम् ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजो३म् ॥
यस्मै त्वं वसो दानाय मंहसे स रायस्पोष मिन्वति ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ॥
स नः पर्षदति द्विषो४म् ॥ १५

नो दाता स नः पिता महाꣳ उग्र ईशानकृत् ।
ामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म् ।
त्वं वसो दानाय शिक्षसि स रायस्पोष मश्नुते ।
यथा सुविरन्निन्द्र गिर्वणः सुतावन्तो हवामहो३म् ॥
क्रतुश्छन्द ऋतं बृहो४म् ॥ १६

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३म् ॥
यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म् ॥
स नः पर्षदतिस्निधो४म् ॥ १७

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
तुरीयादित्य हवनं त इन्द्रिय मा तस्थावमृतं
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं ि चो३म् ॥
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवो३म् ॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयो३म् ॥
स मिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यो३म् ॥
सं शुक्रासः शुचयः सङ्गवाशिरिमुद्रितम् ।
सोमा इन्द्र ममन्दिषो३म् ॥ ो३म् ॥
सुन्न आ धेहि नो वसो४म् ॥ १९

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म् ॥

यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कं मानृचुः ।
ती हे ो रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवो३म् ॥
न्ति पूर्तिः शविष्ठ शस्यतो४म् ॥ २०
ं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
पूर्भित्तमं मघवन्निन्द्र गोविद
पूर्भि मीशानं राय ईमहो३म् ॥
नचन्त इमा भिवसि सुक्रत्यया येषां सुतेषु मन्दसे ॥
यथा संव र्तमदो यथा कृश एवास्मे इन्द्र मत्स्वो३म्
नूनं तं नव्यं सन्न्यसो४म् ॥ २१
तत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं
पौरासो नक्षन् धीतिभो३म् ॥
वमर्दयो वावृधानो दिवेदिवे ।
नो दाता स नः क्रतुं वाजयन्तो हवामहो३म् ॥
ामन्नुग्रो ो जनस्य वृत्रहो४म् ॥ २२
वंश्वसां रसं मधुः सिञ्चन्त्वद्रयः ।
सुन्विरे जनेष्वा ये अर्वावतीन्दवो३म् ॥
।वष्णुहवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।

आपो वातः पर्वतासो वनस्पतिः
शृणोतु पृथिवी हवो३म् ॥
समन्येषु ब्रवावहो४म् ॥ २३

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आगमञ्छृण्वन्तु मरुतो हवो३म् ।
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा
शीष्टेषु चित्ते मदिरासो अंशवो यत्रासोमस्य तृम्पसो३म् ।
शूरो यो गोषु गच्छतो४म् ॥ २४

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शन्तमशन्तमाभिरभिष्टिभिरा स्वापे स्वापिभो३म् ॥
आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो
वीती होत्राभिरुत देववीतिभिः ससवांसो विशृण्विरो
सखा सुशेवो अद्वयो४म् ॥ २५

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो
आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभ
प्र सू तिरा शचीभिर्ये त उक्थि
क्रतुं पुनत आनुषो३म् ॥

दाता वसूना मिन्द्रं तं हूमहे वयम् ।
ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजोऽ३म्
यै त्वं वसो दानाय शिक्षसि स रायस्पोष मश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहोऽ३म्
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपिन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यतोऽ३म् ॥
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत्प्रथयन्नमूं दिव मादिज्जनिष्ट पार्थिवोऽ३म् ॥
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयोऽ३म्
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्क मानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवोऽ३म्
यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचोऽ३म्
पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।

यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसि

य उक्था केवला दधे यः सोमं धृषितापिबत् ।

यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभिः

यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो

तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म्

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।

अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म्

यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति

वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ।

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।

तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवो३म्

यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे

अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म्

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।



पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म् ।

गेती होत्राभिरुत हतीरधूनुत सं चीणी समु सूर्यम् ।

न्ति द्युवय: सङ्गवाशिर: सोमा इन्द्रममन्दिषो३म्

सं त्वा मघोनाञ्छेष्ठञ्च वृषभाणाम् ।

रुभिंत्तमं मघवन्निन्द्र गोविद मीशानं राय ईमहो३म्

य आयुं कुत्स मतिथिग्व मर्दयो वावृधानो दिवेदिवे ।

तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहो३म् ॥

ा नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।

परावति सुन्विरे जनेष्वा ये चर्वावतीन्दवो३म् ॥

वश्वा द्वेषांसि जहि चाव चा कृधि

विश्वे सन्वन्त्वा वसु ।

ष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसो३म्

न्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।

: शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभो३म् ॥

ाजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।



तिरा शचीभिर्य त उक्थिनः क्रतु पुनत आनुषो३म्

यस्ते साधिष्ठो ऽवसे ते स्याम भरेषु ... वम् ॥

वयं होत्राभिरुत देवहूतिभिः ससवांसो म... वृजूनसं

अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोति...

त्वामिदेव तमसे समश्वयुर्गव्युरग्रे मथीनो३म् ॥

एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः।

ते स्तोभन्त ऊर्जमावन्घृतश्चुतम्पौरासो नक्षन्धीतिभो३म्

नक्षन्त इन्द्र मवसे सुकृत्यया येषां सुतेषु मन्दसे।

यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वो३म्

आ नो विश्वे सजोषसो देवासो गन्तनोप नः।

वसवो रुद्रा अवसे न आ गमञ्छृण्वन्तु मरुतो हवो३म्

पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः।

आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवीहवो३

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम।

तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३

आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो

गोतौ होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरे ॥

न्ति ह्य१र्यं आशिष इन्द्र आयुर्जनानाम् ।

ान्नचस्व मघवन्नुपावसे धुक्ष्व पिप्युषी मिषोइम् ॥

वयं त इन्द्र स्तोमेभिर्विधेम त्व मस्माकं शतक्रतो ।

महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयोइम्

प्रति ते दस्यवे वृकराधो अदर्श्यह्वयम् ।

द्यौर्न प्रथिना शवोइम् ॥

दश मह्यं पौतक्रतः सहस्रा दस्यवे वृकः ।

नित्याद्रायो अमंहतोइम् ॥

शतं मे गर्दभानां शत मूर्णावतीनाम् ।

शतं दासाँ अति स्रजोइम् ॥

तत्रो अपि प्राणीयत पूतक्रतायै व्यक्ता ।

अश्वाना मिन्न यूथ्योइम् ॥

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ।

अग्निः शुक्रेण शोचिषा बृहत्सूरो अरोचत

दिवि सूर्यो अरोचतो३म् ॥

भूरीदिन्द्रस्य वीर्यं१ व्यख्य मभ्यायति ।

राधस्ते दस्यवे वृको३म् ॥

शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते

मह्ना दिवं न तस्तभो३म् ॥

शतं वेणून्छतं शुनः शतं चर्माणि म्लातानि

शतं मे बल्बजस्तुका अरुषीणां चतुःशतो३म् ॥

सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः ।

अश्वासो न चङ्क्रमतो३म् ॥

आदित्साप्तस्य चर्किरन्नानूनस्य महि श्रवः ।

श्यावीरतिध्वसन्पथश्चक्षुषा चन सन्नशो३म् ॥

इमानि वां भागधेयानि सिस्रत

इन्द्रावरुणा प्र महे सुतेषु वाम् ।

यज्ञेयज्ञे ह सवना भुरण्यथो

यत्सुन्वते यजमानाय शिक्षथो३म् ॥

ाशर्यं असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवोऽ३म् ॥

श्रुतं सुराधस मर्चा शक्र मभिष्टये ।

सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतोऽ३म् ॥

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।

गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषोऽ३म्

यदीं सुतास इन्दवोऽभि प्रिय ममन्दिषुः ।

पो न धायि सवनं म आ वसो दुघा इवोप दाशुषोऽ३म्

ानेहसं वो हवमान मूतये मध्वः क्षरन्ति धीतयः ।

त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरोऽ३म्

ा नः सोमे स्वध्वर इया नो अश्व्यो न तोशते ।

ं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे छन्दयसे हवोऽ३म्

वीर मुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।

द्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषोऽ३म्

द नूनं परावति यद्वा पृथिव्यां दिवि ।

ान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहोऽ३म्

रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पि

येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीय

एतावतस्ते वसो विद्याम शूर नव्यसः ।

यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३म् ॥

यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।

यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३

यथा मनौ सांवरणौ सोम मिन्द्रापिबः सुतम् ।

नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रि मुद्धितम्

सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृको३म् ।

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।

इन्द्रं त मच्छा वद नव्यस्या मत्यविष्यन्तं न भोजसो३

यस्मा अर्कं सप्तशीर्षाणं मानृचुस्त्रिधातु मुत्तमे पदे ।

स त्वि१मा विश्वा भुवनानि चिक्र-

ददादिज्जनिष्पौंस्यो३म् ॥

४२

अस्मान्त्स्विन्द्रावरुणा घृतस्नुत-

स्त्रिभिः साप्तेभिरवतं शुभस्पतो३म् ॥

इन्द्रावरुणा यदृषिभ्यो मनीषां

वाचो मतिं श्रुतमदत्तमग्रोऽ३म् ।

यानि स्थानान्यसृजन्त धीरा

यज्ञं तन्वानास्तपसाभ्यपश्यो३म् * ॥

[ पुनराह्वावः † ]

॥ शोंसावो३म् ॥

[ पक्षो दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसो३म् ।

होता वेदिषदतिथिर्दुरोणसो३म् ॥

---

* अस्य सूक्तस्यान्त्या ऋक् दूरोहणान्ते शस्यते। तदनुपदं द्रष्टव्यम् ( ४५पृ० )।

† शिल्पशंसनानन्तरं दूरोहणशंसनं विहितम्। तदर्थोऽय माह्वावः। "आहूय दूरोहणं रोहति"—इत्यादि ऐ० ब्रा० २भा० ३५६पृ०, ३भा० ३४६पृ० च द्रष्टव्यम्।

रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पि

येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीय

एतावतस्ते वसो विद्याम शूर नव्यसः ।

यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३म् ॥

यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।

यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३

यथा मनौ सांवरणौ सोम मिन्द्रापिबः सुतम् ।

नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रि मुद्धितम्

सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृको३म् ।

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।

इन्द्रं त मच्छा वद नव्यस्या मत्यविष्यन्तं न भोजसो३

यस्मा अर्कं सप्तशीर्षाण मानृचुस्त्रिधातु मुत्तमे पदे ।

स त्वि१मा विश्वा भुवनानि चिक्र-

दुदादिज्जनिष्टपौंस्यो३म् ॥

निः षिध्वरीरोषधीराप आस्ता-
मिन्द्रावरुणामहिमान माशत ।
या सिस्रतू रजसः पारे अध्वनो
ययोः शत्रुर्नकिरादेव ओहतोऽ३म् ॥

सत्यं तदिन्द्रावरुणा कृशस्य वां
मध्व ऊर्मिं दुहते सप्त वाणीऽ३म् ।
ताभिर्दाश्वांस मवतं शुभस्पती
यो वा मदब्धो अभि पाति चित्तिभोऽ३म् ॥

घृतप्रुषः सौम्या जीरदानवः
सप्त स्वसारः सदन आ ऋतस्य
या ह वा मिन्द्रावरुणा घृतश्चुत-
स्ताभिर्धत्तं यजमानाय शिक्षतोऽ३म् ॥

अवोचाम महते सैभगाय
सत्यं त्वेषाभ्यां महिमान मिन्द्रियोऽ३म् ।

अस्मान्त्स्विन्द्रावरुणा घृतश्चुत-

स्त्रिभिः साप्तेभिरवतं शुभस्पतो३म् ॥

इन्द्रावरुणा यदृषिभ्यो मनीषां

वाचो मतिं श्रुतमदत्तमग्रो३म् ।

यानि स्थानान्यसृजन्त धीरा

यज्ञं तन्वानास्तपसाभ्यपश्यो३म् * ॥

[ पुनराहावः † ]

॥ शोंसावो३म् ॥

[ पच्छो दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसो३म् ।

होता वेदिषदतिथिर्दुरोणसो३म् ॥

---

* अस्य सूक्तस्यान्त्या ऋक् दूरोहणान्ते शस्यते। तदनुपदं द्रष्टव्यम् ( ४५पृ० )।

† शिल्पशंसनानन्तरं दूरोहणशंसनं विहितम्। तदर्थोऽयमाहावः। "आहूय दूरोहणं रोहति"—इत्यादि ऐ० ब्रा० २भा० ३५६पृ०, ३भा० ३४८पृ० च द्रष्टव्यम्।

न्रृषद् वरसदृतसद् व्योमसो३म् ।
अब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ १ *

[ अर्द्धर्चशो दूरोहणम् † ]

हंसः शुचिषद् वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसो३म् ।
न्रृषद् वरसदृतसद् व्योमस-
दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ २

[ त्रिपद्या दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषो३म् ।
दतिथिर्दुरोणसन्न्रृषद् वरसदृतसो३म् ।
दव्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ३

[ ऋक्शोऽनवानं दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षस-
द्धोता वेदिषदतिथिर्दुरोणसत् ।

* ऋ० स० ४. ४०. ५ ।

† "सप्तरूपा हंसवती दूरोहण मितीरितम्"—इति ऐ० ब्रा० सा० भा० २भा० ३४६पृ०, २भा० ३५६ पृ० च द्रष्टव्यम् ।

नृषद् वरसदृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥

[ पुनः त्रिपद्या दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषो३म् ।

अतिथिर्दुरोणसन् नृषद् वरसदृतसो३म् ।

व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ५

( पुनरर्द्धर्चशो दूरोहणम् )

हंसः शुचिषद् वसुरन्तरिक्षस-

द्धोता वेदिषदतिथिर्दुरोणसो३म् ।

नृषद् वरसदृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ६

( पुनः पच्छो दूरोहणम् )

हंसः शुचिषद् वसुरन्तरिक्षसो३म् ।

होता वेदिषदतिथिर्दुरोणसो३म् ।

नृषद् वरसदृतसद् व्योमसो३म् ।

अब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ७

[ ऐन्द्रावरुणी परिधानीया * ]

इन्द्रावरुणा सौमनस मदृप्तं

रायस्पोषं यजमानेषु धत्तोऽम् ।

प्रजां पुष्टिं भूति मस्मासु धत्तं

दीर्घायुत्वाय प्र तिरतं न आयोऽम् ॥ †

[ शस्त्रसूक्तम् ‡ ]

आ वां राजानावध्वरे ववृत्यां

हव्येभिरिन्द्रावरुणा नमोभोऽम् ।

प्र वां घृताची बाह्वोर्दधाना

परि त्मना विषुरूपा जिगातोऽम् ॥ १

---

* "अथेद मैन्द्रावरुणं सूक्त मैन्द्रावरुणी परिधानीया"—इति ऐ॰ ब्रा॰ ३५३, ३५७पृ॰।

† वालखिल्यैकादशसूक्तस्यान्तिमा ऋगियम्। सं॰ ८. ५६. ७।

‡ "आ वां राजानाविति नित्य मैकाहिकम्"—इति च आश्व॰ श्रौ॰ सू॰ ८. २. १६। तृतीयसवने मैत्रावरुणस्य शस्त्रसूक्त मिदम्। ऐ॰ ब्रा॰ ३भा॰ २५१पृ॰ २४ पं॰ तथाहीत्यादि, पुनः ३५३, ३५७ पृ॰ च द्रष्टव्यम्।

युवो राष्ट्रं बृहदिन्वति द्यौ-
र्यौ सेतृभिररज्जुभिः सिनीथो३म् ।
परि नो हेळो वरुणस्य वृज्या
उरुं न इन्द्रः कृणवदु लोको३म् ॥ २

कृतं नो यज्ञं विदथेषु चारुं
कृतं ब्रह्माणि सूरिषु प्रशस्तो३म् ।
उपो रयिर्देवजूतो न एतु
प्र णः स्पार्हाभिरूतिभिस्तिरेतो३म् ॥ ३

अस्मे इन्द्रावरुणा विश्ववारं
रयिं धत्तं वसुमन्तं पुरुक्षो३म् ।
प्र य आदित्यो अनृता मिना-
त्यमिता शूरो दयते वसूनो३म् ॥ ४ *

---

* पञ्चर्चमिदं सूक्तमाम्नातम् (सं० ७, ८५); तत्र चतस्र इमाः; पञ्चमी तु परिधानीया ४१ ए० द्रष्टव्यम्।

अथ

# ॥ ऐतरेयब्राह्मणम् ॥

( तत्र )

## ॥ सायणभाष्यभूमिका ॥



॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।

यं नत्व [illegible] ॥ १ ॥

नित्यत्वावर [illegible] ऋ० सं० ८.

स एवोपायो वेदस्य विषयः । तद्बोध एव प्रयोजनम् । तद्बोधार्थी
७५ चाधिकारी । तेन सहोपकार्योपकारकभावः सम्बन्धः ।
इ नन्वेवं सति स्त्रीशूद्रसहिताः सर्वेऽपि वेदाधिकारिणः स्युः ।
इष्टं मे स्यादनिष्टं मा भूदित्याशिषः सार्वजनीनत्वात् ? मैवम् ; स्त्रीशूद्रयोः सत्यप्युपायबोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिबद्धत्वात् ; उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्र मनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययन मनिष्टप्राप्तिहेतुरिति बोधयति । कथं तर्हि तयोस्तदुपायावगमः ? पुराणादिभिरिति ब्रूमः ।

अतएवोक्तम् ( भाग० पु० १.४.२५. )—

"स्त्रीशूद्रद्विजबन्धूनान्त्रयी न श्रुतिगोचरा ।

इति भारत माख्यानं मुनिना कृपया कृतम् ॥"-इति ।

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य सम्बन्धः । तत्प्रामाण्यं तु बोध-

---

* तद्विशेषस्यानवगमात् ख ।

स वेदः। अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्त्येते। अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्व मौषधादेरनिष्टपरिहारहेतुत्वं च प्रत्यक्षतः सिद्धम्, स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्व मनुमानगम्यम्। एवं तर्हि भाविजन्मगत मप्यनुमानगम्य मिति चेत्, न; तद्विशेषस्यानभिगमात् *। न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः,—कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमु मर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति; तस्माद् अलौकिकोपायबोधको वेद इति लक्षणस्य नातिव्याप्तिः। अतएवोक्तम्—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥"-इति।

॥ कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निश्वसितं * वेदा यो वेदेभ्योऽखिलं जगत्—
निर्ममे; त महं वन्दे विद्यातीर्थमहेश्वरम्॥ २॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः।
आदिशन्माधवाचार्यं † वेदार्थस्य प्रकाशने॥ ३॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात्।
कृपालुर्माधवाचार्यो ‡ वेदार्थं वक्तु मुद्यतः॥ ४॥

ननु कोऽयं वेदो नाम? के वा तस्य विषयप्रयोजनसम्बन्धाधिकारिणः? कथं वा तस्य प्रामाण्यम्? न खल्वेतस्मिन् सर्वस्मिन् असति वेदो व्याख्यानयोग्यो भवति। अत्रोच्यते—

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिक मुपायं यो ग्रन्थो वेदयति

---

* निश्वसिता क। निःश्वसितं ग। † आदिशत्सायणाचार्यं ग।

‡ 'कृपालुः सायणाचार्यो'—इति मुद्रितेषु ऐतरेयारण्यक-तैत्तिरीयारण्यक-सामवेदीय-छन्द-आरण्यक-उत्तरा भाष्येषु ताण्ड्याद्यष्टब्राह्मणभाष्येषु च पाठः।

कत्वात् स्वत एव सिद्धम्। पौरुषेयवाक्यं तु बोधक मपि सत् भ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाण मपेक्ष्यैव प्रमाणम्। न तु वेदो मूलप्रमाण मपेक्षते; तस्य नित्यत्वेन कर्त्तृदोषशङ्काया अनुदयात्। एतदेव जैमिनिना सूत्रितम्—"तत्प्रमाणं वादरायणस्यानपेक्षत्वात्"-इति (१.१.५.)।

ननु वेदोऽपि कालिदासादिवाक्यवत्पौरुषेय एव, ब्रह्मकार्यत्व-श्रवणात् (ऋ० सं० १०.९०.९.)—

— — ऋचः सामानि जज्ञिरे।

छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत"-इति हि श्रुतिः। अतएव भगवान् वादरायणः (१.१.३.) "शास्त्रयोनित्वात्"-इति-सूत्रेण ब्रह्मणो वेदकारणत्व मवोचत्। नैवम्; श्रुतिस्मृतिभ्यां नित्यत्वावगमात्। "वाचा विरूपनित्यया"-इति (ऋ० सं० ८.७५.६.) श्रुतिः, "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा"-इति स्मृतिः *। वादरायणोऽपि देवताधिकरणे सूत्रयामास—"अतएव च नित्यत्वम्"-इति (१.३.२९.)। तर्हि परस्पर-विरोध इति चेत्, न; नित्यत्वस्य व्यावहारिकत्वात्। सृष्टेरूर्ध्वं संहारात् पूर्वो व्यवहारकालः; तस्मिन्नुत्पत्तिविनाशादर्शनात्। कालाकाशादयो यथा नित्याः एवं वेदोऽपि व्यवहारे कालिदास-वाक्यवत् पुरुषविरचितत्वाभावान्नित्यः। आदिसृष्टौ तु काला-काशादिवद्वेदोत्पत्तिराम्नायते। अतो विषयभेदान्न परस्परविरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य कर्त्तृदोषासम्भवात् स्वतः सिद्धं प्रामाण्यं तदवस्थम्। तस्माल्लक्षणप्रमाणसद्भावाद् विषयप्रयोजन-

---

* 'आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः'-इति चैतच्छ्लोकस्यापरार्द्धः ब्रह्मसूत्रस्य शाङ्करभाष्यादौ दृष्टः (१. ३. २८ सू० भा०)।

सम्बन्धाधिकारिसद्भावात् प्रामाण्यस्य सुस्थितत्वाद् वेदो व्याख्यातव्य एव * ॥

ननु वेदार्थावबोधे विध्यभावाद् बोधसाधनं व्याख्यानं व्यर्थ मिति चेत्, न ; अध्ययनविधेर्बोधपर्यवसायित्वात् †। एतच्च भट्ट-गुरुमतानुसारिभिर्बहुधा प्रपञ्चितम्। आम्नायते च—

"यद्गृहीत ‡ मविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि चित् ॥
स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्र मश्नुते नाक मेति ज्ञानविधूतपाप्मा ॥"-इति §
"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ऽध्येयो ज्ञेयश्च"-इति ॥

... एवं, हर्ज्ञि नस्य पृथग् विधानादध्ययनम् पाठमात्र मिति चेत्, अस्तु नाम ; वर्णयन्त्येव मेव शाङ्करदर्शनानुसारिणः।

कर्तुर्विधिव्यतिरेकेणानुष्ठानान्यथानुपपत्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद्विधेय मिति चेत्, तर्हि तद्विधिबलाद् वेदनमात्रेण स्वतन्त्रं किञ्चिदपूर्व मस्तु ; श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक् फलम्—"तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैन मेवं वेद"-इति ( तै० सं० ५.३.१२.२. )। अल्पप्रयाससाध्येन वेदनेन

* ननु कोऽयं वेद इत्यारभ्य व्याख्यातव्य एवेत्यन्तो ग्रन्थः तै० सं० भूमिकाया मपि।

† अध्ययनविधिश्चैषः—"यस्तित्याज सखिविदं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्"-इति ऋ० सं० १०. ७१. ६। "अग्निं वै जातं०—०सुकृतस्य पन्थामिति। तस्मात् स्वाध्यायोऽध्येतव्यः"-इति च तै० आ० २.१५।

‡ मुद्रितसंहिताभाष्यभूमिकायां निरुक्ते च ( १. ६. १. ) एष एव पाठः ; क-पुस्तके, पातञ्जलमहाभाष्यस्य पस्पशाह्निके तु 'यदधीत'-इति।

§ 'वचनद्वयं शाखान्तरगतम्'-इति ऋ० सं० सा० भा० भू०।

|| पातञ्जलमहाभाष्यस्य पस्पशाह्निके चोद्धृत मिदं वचनम्।

तत्सिद्धौ बह्वायाससाध्य मनुष्ठानं व्यर्थ मिति चेत्, न; तरणीयाया ब्रह्महत्याया मानसकायिकत्वादिभेदेन तारतम्योपपत्तेः। मनसा सङ्कल्पिता, वाचाऽभ्यनुज्ञाता, परहस्तेन कारिता, स्वयङ्कृता, पुनः-कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्या अनेकविधा। अत-स्तत्तरण मप्यनेकविधं यथा स्वर्गो बहुविधस्तद्वत्। 'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', ज्योतिष्टोमेन स्वर्गकामो यजेत'-इत्याद्युच्चावचकर्म्मण मेकविध-फलासम्भवात् स्वर्गो बहुविधोऽभ्युपगन्तव्यः। तथा ब्रह्महत्यादि-पापनिवृत्तेरपि बहुविधत्वाद् वेदनेनापि काचित् ब्रह्महत्या निवर्त्तत इति योग्यतानुसारेण कल्पताम्। किञ्च तत्तद्विधि-दितरायाः पुत्रेण लब्धत्वादैतरेयक मित्युच्यत इत्यं ब्रवते। तान्यर्थ-वेदभागलाभः स्मर्य्यते,—

'युगान्ते तर्हि तान्वेदान् ... ह एवैत मपराधम्, तेषां वच-... प्रशंसापरत्वात्। तर्हि 'यत्परो शब्दः स शब्दार्थः'-इति न्यायेन स्वार्थे प्रामाण्यं नास्तीति चेत्, महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयत्वानिवारणात्। 'ग्रावाणः प्लवन्ते'-इत्याद्यर्थवादस्यापि स्वार्थे प्रामाण्यं प्रसज्येतेति चेत्, न; प्रमाणान्तरबाधितत्वात्। "द्विः संवत्सरस्य सस्यं पच्यते ( तै० सं० ५. १. ७. ३. )"-इत्याद्यर्थवादस्य तु बाधाभावे-ऽप्यनुवादत्वात् न स्वार्थे प्रामाण्यम्; वेदनफलवचनानि तु नानु-वादकानि नापि बाध्यानि; तस्मादर्थवादत्वेऽप्यस्त्वेषां स्वार्थे प्रामाण्यम्। अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्त्वं न सिध्येत्। अतएवोक्तम्—"विरोधे गुणवादः स्यादनुवादोऽव-धारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"-इति *।

---

* मीमांसार्थसङ्ग्रहे चोद्धृत मिदं वचनं व्याख्यातं च सोदाहरणम्।

किं बहुना विद्यत एवावश्यं वेदनमात्रादपूर्व्वम् । अतो वेदनाय वेदो व्याख्यायते ॥

तस्य च वेदस्य भागद्वयं कल्पसूत्रकारैरुदाहृतम्—"मन्त्रब्राह्मणयोर्वेदनामधेयम्"-इति ( आप० य० प० सू० ३४. )। तत्र मन्त्रविषया विचाराः * संहिताव्याख्याने द्रष्टव्याः ; ब्राह्मणलक्षणं तु द्वितीयाध्यायस्य प्रथमपादे ( जै० सू० ३३. अधि० ८. ) विचारितम् —

"नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा ?
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ।
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः
अन्यद् ब्राह्मण मित्येतद्भवेद् ब्राह्मणलक्षणम् ॥"-इति ।

[illegible] ५.१. त्मत्य। [illegible] पृथक् —'एतद्ब्राह्मणान्येव पञ्च हवींषि'-
चातुर्मास्येष्विद माम्नायत— [illegible] शाङ्करदर्शनानुसारेणास्य लक्षणं
—इति ( तै० ब्रा० १.६.४.३ ; ७.१.१. )। तत्र [illegible] प्रा-
नास्ति, कुतः ? वेदभागाना मियत्तावधारणेन ब्राह्मणभागेष्वन्यभागेषु च वाच्यलक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितु मशक्यत्वादिति चेत्, न ; भागद्वयाङ्गीकारेण मन्त्रव्यतिरिक्तो भागो ब्राह्मण मिति लक्षणस्य निर्दोषत्वात् । ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते,—"यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीः ( तै० आ० २. ९. )"-इति ? मैवम् ; विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदाना मेवेतिहासादीनां पृथगभिधानात् । "देवासुराः संय्यत्ता आसन् ( तै० सं० १.५.१.१. )"-इत्यादय इतिहासाः । "इदं वा अग्रे नैव किञ्चनासीन्न द्यौरासीत् ( तै० सं० २.२.९.१. )"-इत्या-

* मन्त्रविचाराः क ।

दिकं जगतः प्रागनवस्थान मुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम्। कल्पस्तु आरुणकेतुकचयनप्रकरणे समाम्नायते— "इति मन्त्राः कल्पोऽत ऊर्ध्वं यदि वलिं हरेत् (तै॰ आ॰ १. २६.१.)"–इति। अग्निचयने—"यमगाथाभिः परिगायति (तै॰ सं॰ ५.१.८.२.)"–इति विहिता मन्त्रविशेषा गाथाः। मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः*। तस्मात् मन्त्रब्राह्मणव्यतिरिक्तवेदभागाभावान्मन्त्रव्यतिरिक्तं ब्राह्मण मित्येतल्लक्षणं सुस्थितम्॥

तस्य लक्षणस्य 'अग्निर्वै देवाना मवमः (ऐ॰ ब्रा॰ १.१.१.)'– इत्यादिग्रन्थे विद्यमानत्वादिदं ब्राह्मणम्। तच्चेश्वरानुग्रहादितरायाः पुत्रेण लब्धत्वादैतरेयक मित्युच्यते [illegible] वेदभागलाभः स्मर्यते,—

'युगान्ते तर्हि तान्वेदान् सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्व्वं मनुज्ञातान् स्वयम्भुवः'-इति॥

प्रकृतस्य तु ब्राह्मणस्य ऐतरेयकत्वे सम्प्रदायविद एता माख्यायिका माचक्षते।—"कस्य चित् खलु महर्षेर्बह्व्यः पत्न्यो विद्यन्ते स्म। तासां मध्ये कस्याश्चिदितरेति नामधेयम्। तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः। एतच्चारण्यकाण्डे समाम्नायते—'एतद्ध स्म वै तद्विद्वान्महिदास ऐतरेयः'–इति (ऐ॰ २ आ॰ १.८.२.)। तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयः, न तु महिदासे। ततः कस्याञ्चिद्यज्ञसभायां स महिदास मवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापयामास। तदानीं खिन्नवदनं महिदास मवगत्येतराख्या तन्माता स्वकीयकुलदेवतां भूमि मनु-

* ऐ॰ आ॰ २.९,२. भाषित्र तूदाहृतम्—"होता यक्षन्नराशंसम् (वा॰ सं॰ २१.३१.)"-इति।

सस्मार। सा च भूमिदेवता दिव्यमूर्त्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैन मुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्य मवगमय्यैतद्ब्राह्मणप्रतिभासनरूपं वरं ददौ। तदनुग्रहात् तस्य महिदासस्य मनसा 'अग्निर्वै देवाना मवमः (ऐ०ब्रा०१.१.१.)'-इत्यादिकं 'स्तृणुते (ऐ०ब्रा०८.५.५.)'-इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्ध्वम् 'अथ महाव्रतम् (ऐ०१आ०१.१.१.)-इत्यादिकम् 'आचार्याः (ऐ०३आ०२.६.९.)-इत्यन्त मारण्यकव्रतरूपं च ब्राह्मण माविरभूत्''-इति *।

तस्यैतरेयस्य प्रादुर्भूते चत्वारिंशदध्यायोपेते ब्राह्मणे चतःसंख्यो... ज्या। तष्टः... विधीयते † (१—१७अ०५ख०); ततो गवामयनम् (१७अ०६ख०—१८अ०३ख०); तत आदित्यानामयनम् (१८अ०३—८ख०); ततोऽङ्गिरसामयनम् ‡ (१८अ०३—८ख०); ततो द्वादशाहः (१९—२४अ०); ततोऽन्यत्सर्वं § (२५—४०अ०) प्रासङ्गिक मिति द्रष्टव्यम्। गोष्टोमायुष्टोमादिषु सोमयागेषु ज्योतिष्टोमस्य ‖ प्राथम्य मुक्तम् ¶—"एष वाव प्रथमो यज्ञो

---

* अहो चित्र मेतत्? महानाम्न्याख्यमन्त्रात्मकस्य चतुर्थारण्यकस्यानैतरेयत्वेन कथं न ग्रहणं कृतमिति। तद्भाष्यशेषे तूक्त मिदम्—'तदिदं नवसङ्ख्याना मृचां पुरीषपदानाञ्च प्रतिपादकं ग्रन्थजातं यद्यपि कर्मकाण्डे पठितुं युक्तं तथाप्यरण्ये एवाध्येतव्य मित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम्'-इति (ए. सो. मु. ३८४ पृ०)।

† तत्रापि प्रथमाध्याये दीक्षणीयेष्टिः, द्वितीये प्रायणीयेष्टिः उदयनेष्टिश्च, तृतीये आतिथ्येष्टयादयः, चतुर्थेऽभिष्टवादयः, पञ्चमे सोमक्रयाद्या इत्येव मुत्तरत्र बोध्यम्।

‡ गवामयन मादित्यानामयन मङ्गिरसामयनं चेति संवत्सरसत्रविशेषाः।

§ अग्निहोत्रादिकम्, पश्वङ्गविभागादिकम्, राजयज्ञे क्षत्रब्रह्मणयोर्विशेषादिकञ्चेति यावत्।

‖ "अथ यदेनं मूर्ध्वं सन्तं ज्योतिर्भूत मस्तुवंस्तस्मात् ज्योतिः-स्तोमं सन्तं ज्योतिष्टोम मित्याचक्षते"-इति ऐ० ब्रा० ३. ४. ५। ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते।

¶ "ज्योतिष्टोमं प्रथम मुपयन्त्यस्मिन्नेव तेन लोके प्रतितिष्ठन्ति गोष्टोमं द्वितीय मुपयन्त्यन्त-

यज्ञानां यज्ज्योतिष्टोमः'–इति श्रुतेः *। तस्य ज्योतिष्टोमस्य सप्तसंस्थोपेतस्य † अग्निष्टोमः, उक्थ्यः, षोड़शी, अतिरात्रश्चेत्येताश्चतस्रः संस्थाः अत्रानुक्रमेण वक्ष्यन्ते ‡। तस्मिन्नपि चतुष्टये अग्निष्टोमः प्रकृतिः §; कृत्स्नस्यानुष्ठेयस्य तस्मिन्नग्निष्टोमे प्रत्यक्षश्रुत्यैवोपदिष्टत्वात्। 'प्रकर्षेण क्रियते साकल्येनानुष्ठेय मुपदिश्यते यस्यां सा प्रकृतिः'–इति हि तच्छब्दव्युत्पत्तिः। उक्थ्यादयस्तु विकृतयः; विशेषस्यैव तत्र प्रत्यक्षोपदेशेन सम्पादितत्वात्। अवशिष्टं तु सर्व मनुष्ठेयं 'प्रकृतिवद्विकृतिः कर्त्तव्या'–इति न्यायेनैव सम्पाद्यते ‖। अतएवोपजीव्यत्वादग्निष्टोम एवादौ वक्तव्यः ॥

---

रेव एव तेन प्रतितिष्ठन्त्यायुष्टोमं तृतीय मुपयन्त्यमुष्मिन्नेव तेन लोके प्रतितिष्ठन्ति"–इति तै० सं० ७. ४. ११. १। ज्योतिष्टोमपद्धतिस्तु का० श्रौ० सू० ७—११ अध्यायेषु द्रष्टव्या।

* 'एष वाव प्रथमो यज्ञानां य एतेनानिष्ट्वाथान्येन यजेत गर्त्तपत्य मेव तज्जीयते वा प्र वा मीयते'–इति ता० ब्रा० १६. १। 'एष प्रथमः सोमः। षडुत्तरे'–इति का० श्रौ० १०. ९. २५. २७।

† 'अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोड़शी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति संस्थाः'–इति आश्व० श्रौ० ६. ११. १। 'सर्वे सोमयागाः संस्थया सप्तविधा एवेत्यर्थः'–इति च तत्र तट्टीकोपसंहारः। तदेवं सोमसम्पाद्य एक एव ज्योतिष्टोमः अग्निष्टोमाद्याख्यः सप्तविधः। तद्यथा —अग्निष्टोमसाम्ना यज्ञायज्ञीयाख्येन यज्ञसमाप्तिर्येन सोऽय मग्निष्टोमः; तत्रैवाग्निष्टोमे राजन्यस्य षोड़शिनं गृह्णीयादिति बाधिमारुतादूर्द्ध्वं षोड़शिग्रहस्य स्तुतशस्त्रे यदा भवतस्तदा सोऽत्यग्निष्टोम इत्युच्यते। एव मुक्थ्यादयश्च।

‡ "तत्राग्निष्टोमः प्रथमाध्यायादि पञ्चदशाध्यायीयचतुर्थखण्डान्तं यावदुक्तः, पञ्चदशाध्यायीयान्त्यखण्डयोरुक्थ्यः, षोड़शाध्यायीयादिचतुःखण्डेषु षोड़शी, ततः पञ्चमषष्ठखण्डयोः सप्तदशाध्यायीयाद्यखण्डपञ्चके चातिरात्र इति विवेकः।" "एतद्वा अग्निष्टोमं प्रथम मुपयन्त्यथोक्थ्य मथ षोड़शिन मथातिरात्र मनुपूर्वम्"–इति तै० सं० ७. ४. १०. १।

§ "अग्निष्टोम एकाहानां प्रकृतिः"–इति च आप० य० प० सू० १४१।

‖ "न प्रकृतावूहो विद्यते। विकृतौ यथार्थं मूहः"–इति आप० य० प० सू० १३३, १३४।

२

यद्यपि तस्याग्निष्टोमस्य प्रक्रमेऽवश्य मृत्विग्वरणं वक्तव्यम्; 'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीत,-इत्यापस्तम्बे-नाभिधानात् (श्रौ० १०. १. १.), तथापि ऋग्वेदस्य होतृवक्तव्य-प्रतिपादकत्वात् *,—ऋत्विग्वरणस्य तु हौत्रत्वाभावात्तदुपेक्ष्येष्टि-रादौ विधीयते † ॥

ऋग्वेदस्य हौत्रत्वं समाख्याबलात् तृतीयाध्यायस्य तृतीयपादे विचारितम् (जै० सू० १३. अधि० ६.)—

"वेदत्रयोक्तधर्म्माणा मृत्विग्भिः सङ्गतस्त्रिभिः,
अनियत्या नियत्या वाऽनियतिर्वाऽनिरूपणात्?
हौत्रत्वादि समाख्यानं नियतेर्गमकं स्वतः।
निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम् ॥"-इति।

याज्यापुरोनुवाक्यादयो धर्मा ऋग्वेदे प्रोक्ताः, दोहननिर्वापादयो यजुर्वेदे, आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे, तत्रास्यैवैते धर्मा इति नियामकस्य दुर्निरूपत्वाद् येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया सङ्गच्छत इति चेत्, मैवम्; हौत्र माध्वर्यव मौद्गात्र मिति समाख्यानेन नियतिर्बोध्यते; न च समाख्यानस्य वाधकं किञ्चित्पश्यामः। तस्मादबोधकत्वबाधितत्वयोरप्रामाण्य-

अतिदेशोहबाधाभ्युच्चयरूपः प्रकृतिविकृतिविचारस्तु जैमिनिदर्शने सप्तमाष्टमनवमदशमाध्यायेषु विशेषतः कृतो द्रष्टव्यः।

* तथाहि—"ऋग्वेदेनैव हौत्र मकुर्वत यजुर्वेदेनाध्वर्यवं सामवेदेनोद्गीथम्"-इति शत० ब्रा० ११.५. ८. ४। "तदाहुर्ब्रह्मावदाः: यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति। अथ केन ब्रह्मत्वं क्रियत इति? त्रय्या विद्ययेति ब्रूयात्"—इति चेद्दोपरिष्टात् ५. ५. ८। एव मापस्तम्बोऽप्याह "ऋग्वेदेन होता करोति, सामवेदेनोद्गाता, यजुर्वेदेनाध्वर्युः, सर्वैर्ब्रह्मा, वचनाद्द विप्रतिषेधाद्वान्यः कुर्यात्"-इति १९—२२।

† इष्टिः—दीक्षणीयेष्टिः। दीक्षणीयार्थस्वर्गे (१५०) द्रष्टव्यः।

कारणयोरभावाच्छ्रुतिलिङ्गादिपञ्चकवत्प्रमाणेन* समाख्यानेन धर्म्मा व्यवस्थाप्यन्ते ॥

नन्विष्टेरप्यध्वर्य्युकर्त्तृकत्वाद्यजुर्वेदे कर्तव्यता ; न त्वत्रेति चेत्, सत्यम् ! तथापीष्टिगतयोर्याज्यानुवाक्ययोर्हौत्रत्वेनात्र वक्तव्यत्वादिष्टेरनुक्तौ याज्यानुवाक्ये कुत्रत्ये इति विशेषसम्बन्धस्य ज्ञातु मशक्यत्वात् तदवबोधाय प्रथम मिष्टिर्विधातव्या ॥

---

* तथाच जैमिनिदर्शनसूत्रम् – "श्रुति लिङ्ग वाक्य प्रकरण स्थान समाख्यानां समवाये पारदौर्बल्य मर्थविप्रकर्षात्" इति ३. ३. १४ ।

# ॥ ऐतरेयब्राह्मणम् ॥

(तत्र)

प्रथमपञ्चिकायाः प्रथमाध्यायस्य

प्रथमः खण्डः ।



॥ ॐ ॥ अग्निर्वै देवाना मवमो विष्णुः परम-स्तदन्तरेण सर्वा अन्या देवता आग्नावैष्णवं पुरो-ळाशं निर्वपन्ति दीक्षणीय मेकादशकपालं सर्वाभ्य एवैनं तद्देवताभ्यो ऽनन्तरायं निर्वपन्त्यग्निर्वै सर्वा देवता विष्णुः सर्वा देवता एते वै यज्ञस्या[न्त्ये] तन्वौ यदग्निश्च विष्णुश्च तद्यदाग्नावैष्णवं पुरोळा[शं] निर्वपन्त्यन्तत एव तद्देवानृध्नुवन्ति तदाहुर्यदेकादश[-] कपालः पुरोळाशो द्वावग्नाविष्णू कैनयोस्तत्र क्लृप्ति[ः] का विभक्तिरित्यष्टाकपाल आग्नेयो ऽष्टाक्षरा वै गायत्री गायत्र मग्नेश्छन्दस्त्रिकपालो वैष्णवस्त्रिर्हीद[ं] विष्णुर्व्यक्रमत सैनयोस्तत्र क्लृप्तिः सा विभक्तिर्घृते चरुं निर्वपेत यो ऽप्रतिष्ठितो मन्येतास्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति तद्यद्घृतं तत् स्त्रियै पयो ये तण्डुलास्ते पुंसस्तन्मिथुनं मिथुनेनैवैनं तत् प्रजया पशुभिः प्रजनयति प्रजात्यै प्रजायते प्रजया

पशुभिर्य एवं वेदारब्धयज्ञो वा एष आरब्धदेवतो यो दर्शपूर्णमासाभ्यां यजत आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेतैषो एका दीक्षा सप्तदश सामिधेनी रनुब्रूयात् सप्तदशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवो हेमन्त-शिशिरयोः समासेन तावान्त्संवत्सरः संवत्सरः प्रजा-पतिः प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद ॥ १ ॥

अतस्ता मिष्टिं विधातुं तद्देवतारूप मग्निं विष्णुञ्चादौ प्रशं-सति— "अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"–इति । योऽयम् 'अग्निः' अस्ति, सोऽयं देवता-मध्ये अवमः' प्रथमो द्रष्टव्यः । यस्तु 'विष्णुः', सोऽयं 'परमः' उत्तमः । 'वै'-शब्द उक्तार्थे मन्त्रप्रसिद्धिद्योतनार्थः । 'अग्निर्मुखं प्रथमो देवतानां सङ्गताना मुत्तमो विष्णुरासीत्'-इति हि मन्त्र आम्नायते *। यद्वा 'वै'-शब्द उपपत्तिप्रसिध्यर्थः । उपपत्ति-स्त्वेवं योजनीया,— यद्यपि देवशब्दः साधारणत्वात् सर्वदेवतावाची, तथाप्यत्र प्रकरणबलादग्निष्टोमाङ्गेषु शस्त्रेषु प्रतीयमानाः प्रधान-देवता विवक्ष्यन्ते । शस्त्राणि च द्वादश †। तेष्वाज्यशस्त्रं प्रथमम्;

---

* इय मेवर्क् आग्नावैष्णवस्य हविषो याज्या इति वक्ष्यति (४ ख०)।

† तत्र आज्यशस्त्रं २. ५. ५—९, प्रउगशस्त्रं ३. १. १—४, मरुत्वतीयं शस्त्रं ३. २. ४—१०, निष्केवल्यं शस्त्रं ११—१३, आग्निमारुतं शस्त्रं ३. ३. ९—१४। एव मच्छावाकशस्त्रादीन्यपि।

तस्मिंश्च 'भूरग्निर्ज्योतिः'-इत्यग्निराम्नातः *। आग्निमारुतं शस्त्र मन्तिमम्; तस्मिन् 'विष्णोर्नु कम्'-इति विष्णुराम्नातः †। एव मग्निष्टोमसंस्थायां शस्त्रपाठापेक्ष मग्नेः प्राथम्यम्, विष्णोरुत्तमत्वं च। यद्वा, सर्वासु संस्थासूक्तन्यायेनाग्नेः प्राथम्यं विष्णोरुत्तमत्वम्; अन्तिमसंस्थाया माप्तोर्यामाख्यायां त्रयस्त्रिंशत्स्तोत्रशस्त्रोपेताया मन्तिमं स्तोत्रं शस्त्रं च वैष्णव मिति तदपेक्षया द्रष्टव्यम्। यद्वा, प्रथमायां दीक्षणीयेष्टावग्निरिज्यते; अन्तिमाया मुदवसानीयेष्टौ ‡ वैष्णवी पूर्णाहुतिर्वाजसनेयिभिराम्नाता। सर्वथापि स्तो[त्र]व्यान् यष्टव्यांश्च देवानपेक्ष्याग्नेः प्राथम्यं विष्णोरुत्तमत्वं च युक्तम्। 'तदन्तरेण' तयोः प्रथमोत्तमयोरग्नाविष्ण्वोर्मध्ये तत्तच्छस्त्रप्रति पाद्याः 'अन्याः' इन्द्रवाय्वादयः 'सर्वाः' प्रधानदेवताः वर्त्तन्ते तस्मात् सर्वदेवताना मुभयतो § रक्षकवदवस्थितावग्नाविष्णू प्रशस्तावित्यर्थः॥

सौमिकेषु यष्टव्यासु स्तोतव्यासु च सर्वासु देवतास्वग्नाविष्णू प्रशस्य तद्देवताका मिष्टिं विधत्ते—"आग्नावैष्णवं पुरोळाशं निर्व पन्ति दीक्षणीय मेकादशकपालम्"-इति। अग्निश्च विष्णुश्चाग्नाविष्णू, तावुभौ परस्परव्यासक्तौ यस्य पुरोडाशस्यैका देवता सोऽ मागावैष्णवः ‖। यथोक्तदेवतां प्रति हविष्ट्वेन प्रदेयद्रव्यरूपः प[ु]

* 'आग्नेयं हौताज्यं शंसति'-इत्यादि २. ५. ५।

† 'विष्णोर्नु कं वीर्याणि प्रवोचम् (ऋ० सं १०. १५४. १.)-इति वैष्णवीं शंसति' -इति ३. ३. १४। 'आग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते'-इति नि० ७. ६. ४।

‡ 'मुदवसानीयेष्टेः स्थाने' ख, ग।

§ " 'सर्वाः' प्रधानदेवताना मुभयतो"-इत्येवं क, ख।

‖ 'साऽस्य देवता'-इति पा० ४. २. २४।

पिष्टपिण्डः पुरोडाश इत्युच्यते *। डकारस्यात्र ळकारः, एतच्छाखाध्ययनसम्प्रदायेन प्रापितः †। शकटावस्थापितव्रीहिसङ्घान्निष्कृष्य मुष्टिचतुष्टयपरिमितानां व्रीहीणां शूर्पे प्रक्षेपो निर्वापः। तत्पूर्वको यागोऽत्र निर्वापिणोपलक्ष्यते ; आग्नावैष्णवं पुरोडाशमितिसामानाधिकरण्येनावगतस्य द्रव्यदेवतासम्बन्धस्य यागमन्तरेणानुपपन्नत्वात् ;— सति तु यागे सम्बन्ध उपपद्यते ; 'उद्दिश्य देवतां द्रव्यत्यागो यागोऽभिधीयते'-इति यागलक्षणस्य पूर्वाचार्यैरुक्तत्वात्। 'निर्वपन्तीत्ययं शब्दो न वर्त्तमानार्थः किन्तु विध्यर्थः। स च लकारो 'लिङर्थे लेडिति (पा० ३. ४. ७.) सूत्रेण विध्यर्थो द्रष्टव्यः। एवञ्च सति शाखान्तरेण संवादो भवति। तथाच तैत्तिरीया विस्पष्टं विधि मामनन्ति—"आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणः (सं० ५.५.१.४.)"-इति। तत्रैकप्रयोगापेक्ष मेकवचनम् ; अत्र तु बहुप्रयोगगतं सत्रगतं वा यजमानबहुत्व मपेक्ष्य निर्वपन्तीति बहुवचनम्। यद्वा, छान्दसो वचनव्यत्ययः ‡। सोमयागे प्रवृत्तस्य यजमानस्य संस्कारो दीक्षणम् ; तस्य च संस्कारस्य हेतुः कर्म्मविशेषो 'दीक्षणीया'-शब्दवाच्यः। तस्य च कर्म्मविशेषस्य वाचकेन शब्देन तत्कर्म्मसाधन

---

* पुरोडाशपाकादिप्रकारस्तु आपस्तम्बीयश्रौतसूत्रे (१. २२–२५.) आद्यप्रश्नीयसप्तमाष्टमपटलयोः कात्यायनीयश्रौतसूत्रे २. ४. ५ च द्रष्टव्यः। "अतुङ्ग मनूपाकृतिं कूर्मस्येव प्रतिकृतिं मश्वसफमात्रं करोति, यावन्तं वा मन्यते (आप० श्रौ० १. २५. ४, ५.)" --इति सूत्राभ्यां पुरोडाशस्वरूपञ्चाधिगम्यम्। 'पुरोडाशमेव कूर्मं भूत्वा सर्पन्तम्'-इति च शत० ब्रा० १. ६. २. ३। तैत्तिरीयब्राह्मणीये पौरोडाशिके काण्डे (३. २. ४–८.) च।

† तथाहि— "द्वयोश्चास्य स्वरयोर्मध्य मेत्य सम्पद्यते स डकारो ळकारः"–इति ऋक्प्राति०।

‡ 'व्यत्ययो बहुलम्'–इति पा० ३. १. ८५।

सुपलक्ष्यते। ततो दीक्षणीयाख्यकर्म्मसाधनं पुरोडाश मिति सामानाधिकरण्य मुपपन्नम्। एकादशसु कपालेषु संस्कृत: पुरोडाश: एकादशकपाल: * तेषु हि पुरोडाश: श्रप्यते † ॥

अत्र प्रथमोत्तमयोरग्नाविष्णो: पुरोडाशदेवतात्वे फलितं दर्शयति—"सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं निर्व्वपन्ति"-इति। 'तत्' तेनाग्नावैष्णवत्वेन तयोरग्नाविष्ण्वोर्मध्यवर्त्तिनीनां सौमिकीनां सर्वासां देवताना मुपलक्षितत्वात् 'अनन्तरायं' निरवशेषं काचिदपि देवता अविशिष्टा यथा न भवति तथैनं पुरोडाशं यजमाना: 'निर्वपन्ति' एव। अनेन निर्वापेण सर्वा देवतास्तृप्यन्तीत्यर्थ:। यथा वैय्याकरणा: प्रत्याहारेष्वाद्यन्तयोर्वर्णयोर्ग्रहणेन मध्यपातिनां सर्वेषां वर्णानां ग्रहण मिच्छन्ति ‡। न्यायस्तदीय एवं व्यवक्रियते—'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते'-इति §। यथा वा लोके भुञ्जानाना मेकपङ्क्तावुपविष्टाना माद्यन्तयो: ब्राह्मणयो: परितोषेण मध्यवर्त्तिन: सर्वे परितुष्टा इति निश्चितम्, तथैदन्द्रष्टव्यम् ॥

---

* 'संस्कृतं भक्षा:'-इति पा० ४. २. १६।

† एकादशकपालस्थापनप्रकारस्त्वेवम्— पूर्वं मध्यम मुपदधाति, तत: पुरस्तात् तृतीयम्, मध्यमाद् दक्षिणं चतुर्थम्, चतुर्थात् पूर्व मेकस्य कपालस्यान्तरालं परिशिष्य पञ्चमम्, चतुर्थपञ्चमयोरन्तराले षष्ठम्, चतुर्थस्य पश्चात् सप्तमम्, तस्य पश्चादष्टमम्, सर्वेभ्य उत्तरतो नवमदशमैकादशानि प्राक्संस्थानि। किञ्च पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धे: यावत्कपालं प्रथनविधेश्च तदर्थकपालचितेरपि अर्थाद् वृत्ताकारत्वम्। कपालानि तु घर्षणाद्युपायेन तथा करणीयानि यथा च कपालचितिश्चित्रं वृत्तं सम्पूर्येत।

‡ तथाचैतत् पाणिनीयं सूत्रम्— "आदिरन्त्येन सहेता"-इति १. १. ७१।

§ "येन विधिस्तदन्तस्य"-इति पाणिनीयसूत्रस्य ( १. १. ७२. ) पतञ्जलिकृते महाभाष्ये पठितैषा परिभाषा, परिभाषेन्दुशेखरे च व्याख्याता ( ८९ )।

नन्वग्नाविष्णोरेव निर्वापे सम्बन्धः श्रूयते, न तु मध्यवर्तिदेवतानाम्, तत्कथं तासां तृप्तिरित्याशङ्क्य तत्सिद्ध्यर्थं तयोरेव सर्वदेवतान्तर्भावं दर्शयति—"अग्निर्वै सर्वा देवता विष्णुः सर्वा देवताः"-इति । अग्नेः सर्वदेवतारूपत्वे श्रुत्यन्तरप्रसिद्धिद्योतनार्थो वै-शब्दः । तथाच तैत्तिरीयाः पौरोडाशिके काण्डे * समामनन्ति—"ते देवा अग्नौ तनूः सन्यदधत तस्मादाहुरग्निः सर्वा देवता इति"-इति (तै॰ ब्रा॰ ३. २. ८. १०.)। सौमिकेऽपि काण्डे † श्रूयते—"देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति"-इति (तै॰ सं॰ ६. २. २.)। 'विष्लृ व्याप्तौ (जु॰ १३)'-इत्यस्माद्धातोरुत्पन्नो विष्णुशब्दः ‡। व्याप्तिश्च सर्वजगदुपादानकारणत्वेन सर्वात्मकत्वादुपपद्यते । अतएव स्मरन्ति—"भूतानि विष्णुर्भुवनानि विष्णुरिति ।

सर्वदेवतात्मकत्वेनाग्नाविष्णू प्रशस्य प्रकारान्तरेण पुनः प्रशंसति—"एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च तद्यदाग्नावैष्णवं पुरोळाशं निर्वपन्त्यन्तत एव तद्देवानृध्नुवन्ति"-इति। अग्निश्च

---

* संहितायाः प्रथमकांडीयः प्रथमप्रपाठकः समग्र एवेष्टिकांड उच्यते, तत्रैवान्त्यांशः पौरोडाशिक इत्यपि । ब्राह्मणस्य तृतीयकांडीयो द्वितीयप्रपाठकश्च तस्यैव शेषः ।

† संहितायाः प्रथमकाण्डीयं द्वितीयादि प्रपाठकत्रयं सौमिकं काण्डम्; षष्ठकाण्डं च तद्ब्राह्मणम् । तत्राप्यवान्तरकाण्डानि नव । तदुक्तं मनुक्रमण्याम्— "अध्वरप्रभृति बीखि तद्विधिर्वाजपेयकौ । सवाः शुक्रियकाण्डे च नवेन्दोरिति धारणा"—इति । तथाच अध्वरकाण्डम्, ग्रहकाण्डम्, दक्षिणाकाण्डम्, तत्तद्विधिकाण्डम्, वाजपेयमन्त्रकाण्डम्, वाजपेयविधिकाण्डम्, सवकाण्डम्, शुक्रियमन्त्रकाण्डम्, शुक्रियविधिकाण्डं चेति नवकांडात्मकं सौमिकं कांडम् ।

‡ निघ॰ ३. १७. १२; ४. २. ३८. । निरु॰ ५. २. ३; १२. २. ७. ८।

विष्णुश्चेत्यनयोर्देवतयोर्यत् शरीरद्वय मस्ति, 'एते' उभौ 'तन्वौ' 'यज्ञस्यान्त्ये' सोमयागस्यादावन्ते च वर्त्तमाने। आद्या चान्त्या चेति विवक्षाया मेकशेषेणान्त्ये इति भवति; यथा माता च पिता चेत्यत्र पितरावित्येकशेषः, तद्वत्। आद्यन्तवर्त्तित्वं चाग्निर्वै देवाना मवम इत्यत्रैवोपपादितम् ( १३ पृ० )। 'तत्' तथा सत्या-द्यन्तवर्त्तित्वे सति तादृशदेवताकं 'पुरोडाशं निर्वपन्ति'-इति 'यद्' अस्ति, 'तत्' यथोक्तनिर्वापेण 'अन्ततः' यागस्यादावन्ते च 'देवा[ता]न्' सर्वान् 'ऋध्नुवन्त्येव' परिचरन्त्येव। त मेतं सार्थवादं दीक्षणीये[ष्टि]-विधिं तैत्तिरीया अपि विस्पष्ट मामनन्ति— "आग्नावैष्णव मेका[-] दशकपालं निर्वपति दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्य[ज्ञो] देवताश्चैव यज्ञञ्चारभते ऽग्निरवमो देवतानां विष्णुः परमो यदाग्न[ा-] वैष्णव मेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यज[-] मानो ऽवरुन्धे"-इति ( सं० ५. ५. १. )।

इदानीं यथोक्तविधौ ब्रह्मवादिचोद्य मुद्भावयति—"त[दा-] हुर्यदेकादशकपालः पुरोळाशो द्वावग्नाविष्णू कैनयोस्तत्र क्लृप्तिः [का] विभक्तिरिति"-इति। 'तत्' तत्र कपालसङ्ख्यायां ब्रह्मवा[दिन] 'आहुः' चोदयन्ति। एकादशसु कपालेषु संस्कृतः पुरोडाशः एक मेव द्रव्यम्, तस्य भोक्तारौ 'द्वौ' देवौ। अनयोः द्वयोः सम-प्रधानत्वेन विषमांशस्यायुक्तत्वात् 'तत्र' द्रव्ये 'का क्लृप्तिः' विभाग-कल्पनानिमित्तं किं स्यात्? 'का विभक्तिः' निमित्तविशेषा-भावे नैमित्तिको विभागविशेषः कथं घटेत? 'इति'-शब्द-श्चोद्यसमाप्त्यर्थः॥

ब्रह्मवादिष्वेव मध्ये अभिज्ञानां चोद्यपरिहार मुद्भावयति— "अष्टाकपाल आग्नेयो ऽष्टाक्षरा वै गायत्री गायत्र मग्नेश्छन्द-

स्त्रिकपालो वैष्णवस्त्रिर्हीदं विष्णुर्व्यक्रमत तैनयोस्तत्र क्लृप्तिः सा विभक्तिः”–इति। अष्टसु कपालेषु संस्कृतः पुरोडाशभागोऽग्नेः सम्बन्धी। स च सम्बन्धः छन्दोद्वारा द्रष्टव्यः। गायत्र्याख्यं छन्दोऽग्नेः सम्बन्धि; तयोरग्निगायत्र्योः प्रजापतिमुखजन्यत्व-साम्यात्। एतच्च मुखजन्यत्वं तैत्तिरीयाः सप्तमकाण्डे (सं० १. १. ४.) पठन्ति—“प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृजत गायत्रीच्छन्दः”–इति। तस्याश्च गायत्र्याः पादाक्षरेष्वष्टत्वं संख्या दृश्यते। सोऽयं यथोक्तपुरोडाश-भागस्याग्नेश्च सम्बन्धः। त्रिषु कपालेषु संस्कृतः पुरोडाशभागो विष्णोः सम्बन्धी। ‘हि’ यस्मात् कारणाद्विष्णुरिदं सर्वं जगत् ‘त्रिर्व्यक्रमत’ त्रिरावृत्तेन स्वकीयपादविक्षेपेण व्याप्तवान्। तथा च मन्त्र आम्नायते—“इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्”–इति (ऋ० सं० १. २२. १७.), “त्रीणि पदा विचक्रमे विष्णु-र्गोपा अदाभ्यः”–इति (१८) च। ‘सा’ यथोक्ता अष्टसंख्या त्रिसंख्या च ‘एनयोः’ देवयोः ‘तत्र’ पुरोडाशे ‘क्लृप्तिः’ विभाग-व्यवस्थापनाहेतुः। तदनुसारेण ‘विभक्तिः’ तादृशो विभागो अव-गन्तव्यः॥

इत्थं सार्थवादेन विधिवाक्येन दीक्षणीयेष्टिं विधाय तस्यामेवेष्टौ प्रतिष्ठाकामस्य पुरोडाश मपोह्य द्रव्यान्तरं विधत्ते—“घृते चरुं निर्वपेत यो ऽप्रतिष्ठितो मन्येत”–इति। पुत्रादि-प्रजया गवादि-पशुभिश्च रहितत्व मप्रतिष्ठितत्वं तादृशोऽह मिति मन्य-मानः यजमानः प्रतिष्ठार्थं घृतेन तण्डुलैश्चरुं निष्पादयेत्।

अप्रतिष्ठितस्यात्यन्तिकं दोषत्वं दर्शयति—“अस्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति”–इति। ‘यः’ यजमानः प्रजा-

पशुरूपया प्रतिष्ठया वर्जितः, 'सः' 'अस्यां वाव' कृत्स्नाया मप्येतस्यां भूमौ 'न प्रतितिष्ठति' श्लाघ्यो न भवति। तस्मादप्रतिष्ठा परिहर्तव्येत्यर्थः।

घृतचरुणा तत्परिहारं दर्शयति—"तद्यद्घृतं तत् स्त्रियै पयो ये तण्डुलास्ते पुंसस्तन्मिथुनं मिथुनेनैवैनं तत्प्रजया पशुभिः प्रजनयति प्रजात्यै"-इति। 'तत्' तत्र घृतपक्वे चरौ 'यद्' 'घृतम्' अस्ति, 'तत्' 'स्त्रियै * पयः' स्त्रियाः शोणितम्। द्रवत्वसाम्येन पयः-शब्दः शोणित मुपलक्षयति। विलीनस्य घृतस्य ईषद्रक्त- साम्येन योषिद्बीज मुपचर्यते। चरौ 'ये तण्डुलाः' सन्ति, '.. 'पुंसः' रेतः इति शेषः। श्वेतत्वं त्वत्र साम्यम्। 'तद्' घृ.. तण्डुलोभयात्मकं चरुं द्रव्यं मिथुनसदृशम्। 'तत्' तस्मात् कारण.. मिथुनरूपिणैव चरुद्रव्येणैव 'एनं' यजमानं पुत्रादि-प्रज.. गवादि-पशुभिः च 'प्रजनयति' प्रवर्धयति। तस्मादिदं च.. द्रव्यं 'प्रजात्यै' प्रजननाय प्रतिष्ठारूपाय सम्पद्यत इत्यर्थः †।

चरोः प्रतिष्ठाहेतुत्ववेदनं प्रशंसति—"प्रजायते प्रजया प.. भिर्य एवं वेद"-इति। तावेतौ पुरोडाशचरुपक्षावापस्तम्ब.. दर्शितौ—"दीक्षणीयायास्तन्त्रम् प्रक्रमयत्याग्नावैष्णव मेकाद.. कपालं निर्वपत्याग्नावैष्णवं वा घृते चरुं पुरोडाशो ब्रह्मवर्चस- कामस्य घृते चरुः प्रजाकामस्य पशुकामस्य वादित्यं घृते चरुं द्वितीयं प्रजाकाम-पशुकामस्यैके समामनन्ति"-इति (श्रौ० १०. ४. १—४.)॥

---

* "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति पा० २. ३. ६२. वा० १.।

† प्रतिष्ठेत्यादिपाठो नास्ति ख-गयोः।

उक्ताया दीक्षणीयेष्टेः कालं विधत्ते—"आरब्धयज्ञो वा एष आरब्धदेवतो यो दर्शपूर्णमासाभ्यां यजत आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेतैषो एका दीक्षा"–इति । 'यः' पुमान् 'दर्शपूर्णमासाभ्यां यजते' तेन सर्वोऽपि यज्ञः प्रारब्धः ; सर्वस्य तदपेक्षत्वात् । सोमयागस्य दर्शपूर्णमासविकृतित्वाभावेऽप्यङ्गादीनां दीक्षणीया-प्रायणीयादीनाम् इष्टीनां तद्विकृतत्वात् अस्ति तदपेक्षा । अग्निहोत्रस्य तदङ्गानां च तन्निरपेक्षत्वेऽप्याहवनीयाद्यग्निसापेक्षत्वादग्नीनां च पवमानेष्टिसाध्यत्वादिष्टीनां दर्शपूर्णमासविकृतित्वादस्ति परम्परया तदपेक्षा । अतस्तदनुष्ठानेन सर्वस्यापि यज्ञस्य प्रारम्भः सिध्यति । यद्यपि यज्ञारम्भेणैव तदीयदेवतानां पूजयितु मारम्भः सिद्ध एव, [t]थापि प्राधान्यख्यापनार्थ मारब्धदेवत इति पुनर्देवताभिधानम् । [त]स्माद् दर्शपूर्णमासयाजिना सर्वोऽपि यज्ञ आरब्धप्रायः, अतएव [दे]वतानां पूजा प्रारब्धप्राया । तस्मादारब्धस्य सोमयागस्यानुष्ठेय[त्वा]द् दर्शपूर्णमासानुष्ठानादूर्ध्वं 'दीक्षेत' दीक्षणीयेष्टिं कुर्यात् । यदमावास्याकाले कर्तव्यं हविरामावास्यम् *, तद्वत् पौर्णमासञ्च । [ह]विः-शब्दोऽत्र यज्ञ मुपलक्षयति । वा-शब्दौ समुच्चयार्थौ । अमावास्यादिसम्बन्धिना पौर्णमासीसम्बन्धिना च यज्ञेनेष्ट्वा दीक्षेत । उक्तार्थ एव तस्मिन्नित्यादिना प्रपञ्च्यते । हविः-शब्दवत् बर्हिः-शब्दोऽपि यज्ञोपलक्षकः । तस्मिन्नामावास्याख्ये हविषि यज्ञे, तस्मिन् पौर्णमासाख्ये बर्हिषि यज्ञे, अनुष्ठिते सति पश्चादेव दीक्षेत । तदाह आश्वलायनः—'दर्शपूर्णमासाभ्या मिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन'–इति ( ४. १. १ ) ; यजेतेति शेषः । इष्टि-

---

* 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'-इति पा० ४. ३. १६ ।

राग्रयणेष्टिः *। पशुर्निरूढपशुबन्धः †। आपस्तम्बोऽप्याह—"अथ दर्शपूर्णमासावारभते ताभ्यां संवत्सर मिष्ट्वा सोमेन पशुना वा यजते"–इति (श्रौ० ५. २३. २.) ‡। एतच्छब्दादुत्तर उकारोऽपिशब्दपर्यायः; एषाप्येका दीक्षा। एव मुक्ते सत्यन्यापि काचिद्दीक्षास्तीति सूचितं भवति। अतएव आश्वलायन इष्टिपूर्वत्वं सोमपूर्वत्वं चेतुरभौ पक्षावुदाजहार—"ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके प्रागपि सोमेनैके"–इति (४. १. २.)। उपपत्तिः द्रव्यादिसम्पत्तिस्ता मनतिक्रम्येति यथोपपत्तिः। दर्शपूर्णमासाभ्या मूर्ध्वं द्रव्यादिसम्पत्तौ सत्यां सोमेन यजेतेति केषांचिन्मतम्; ताभ्यां प्रागपि सम्पत्तौ सोमयाग इत्यपरेषां मतम्। तैत्तिरीयास्त्विष्टिपूर्वत्व मभिप्रेत्य वसन्तादिकालविशेषेष्वाधान-मास्नाय पुनः सोमपूर्वत्व मभिप्रेत्य कालनियम मन्तरेणाधान-मामनन्ति—"अथो खलु यदैवैनं यज्ञ उपनमेत् अथादधीत, सैवास्यर्धिः"–इति (ब्रा० १. १. २. ८.)। आपस्तम्बोऽपीदं सोमाधान मभिप्रेत्य वसन्तादिकालविशेषप्रतीक्षां वारयति—"... सूर्क्षेन्न नक्षत्रम्"–इति (श्रौ० ५. ३. २१.) §। तस्मात् पक्षद्वयम

---

* "आग्रयण मैन्द्राग्न मग्रपाकस्य व्रीहीणां यवानां च" कात्या० श्रौ० ४. ६... "आग्रयणं व्रीहिश्यामाकयवानाम्" आश्व० श्रौ० २. ९. १। "य आहिताग्निराग्रयणेनिष्ट्वा नवान्नं प्राश्नीयात् तस्य का प्रायश्चित्तिः" ऐ० ब्रा० ७. २. ८। "आग्रयणेष्ट्या यजते"–इति च शत० ब्रा० २. ४. ३. १।

† कात्या० श्रौ० षष्ठाध्यायी द्रष्टव्यः। तै० ब्रा० २. २. २. ३; ३. ६. ३।

‡ कात्यायनोऽप्याह—"दर्शपूर्णमासाभ्या मिष्ट्वाऽन्येन यजेतेति श्रुतेः"-इति ७. १. १।

§ "अथ नक्षत्राणि; कृत्तिकासु ब्राह्मण आदधीत ०—० वसन्तो ब्राह्मणस्य ०—० सोमेन यक्ष्यमाणो नर्त्तुं सूर्क्षेन्न नक्षत्रम्"–इति तत्र पाठः। 'न सूर्क्षेत्=नाद्रियेत'—इति तट्टीका रौद्रदत्ती। "सोमेन यक्ष्यमाणो नर्त्तुं पृच्छेन्न नक्षत्रम्"–इति आश्व० श्रौ० २. १. १५।

चोदकप्राप्तां पञ्चदशसंख्या * मपवदितुं संख्यान्तरं विधत्ते—"सप्तदश सामिधेनीरनुब्रूयात्"-इति। 'प्र वो वाजा अभिद्यवः'-इत्याद्या ( तै० ब्रा० ३. ५. २. १—१२. ) एकादशसंख्याकाः † ऋचो वह्निसमिन्धनहेतुत्वात्सामिधेन्य इत्युच्यन्ते ‡। तासु "त्रिः प्रथमा मन्वाह त्रिरुत्तमाम् ( तै० सं० २. ५. ७. १. )"-इतिवचनात् ताः पञ्चदश सम्पद्यन्ते। प्रकृतावेव विहितासु पञ्चदशस्वृक्षु चोदकप्राप्तासु ये समिध्यमान-समिद्धवत्यौ ऋचौ §, तयोर्मध्ये धाय्याभिधेये ऋचौ प्रक्षेप्तव्ये ‖। तथाच आश्वलायनः—'द्वौ च्चणीयाया धाय्ये विराजौ ( ४. २. १. )'-इति। तत्र 'पृथुपाजा अमर्त्यः ( सं० ३. २७. ५. )'-इत्येका, 'तं सबाधो यतस्रुचः ( सं० ३. २७. ६. )'-इति द्वितीया। एतच्च प्रयोगसङ्ग्रहकारेणा-

* तथाहि प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह'-इति तै० सं० २. ५. ८. २.।

† यद्यपि मूले द्वादश पठितास्तथाप्यन्त्ययोः पुरुषभेदेन विकल्पितत्वात् एकादशैव।

‡ पा० ४. ३. १२०. वा० ६। 'समिन्धे सामिधेनीभिर्होता तस्मात्सामिधेन्यो नाम'-इति शत० ब्रा० १. ३. ५. १। तासा मुत्पत्तिस्त्वेव माम्नायते—"ऋषिभ्यः पैवा एता निर्मिता यत्सामिधेन्यः"-इति तै० सं० २. ५. ७. ५। 'भिन्नेभ्य ऋषिभ्यः प्रवर्त्तितास्ताः सामिधेन्यः'-इति च तत्र भाष्ये सायणः।

§ समिध्यमाना ऋक् ( तै० ब्रा० ३. ५. २. ) नवमसामिधेनी—ऋ० सं० ३. २७. ४; समिद्धवती ऋक् तु ( तै० ब्रा० १.३. ५. २.) दशमसामिधेनी—ऋ० सं० ५. २८. ५। तथा ह्याश्वलायनः 'अथ सामिधेन्यः'-इत्युपक्रम्याह—'समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे'—इति श्रौ० सू० १. २. ७।

‖ सामिधेन्य ऋच एकादशैव। तासु प्रथमस्या अन्तिमायाश्च त्रिस्त्रिःपाठेन पञ्चदशसङ्ख्या पूरणीया भवति। सप्तदशसङ्ख्यायाः पूरणीयत्वे तु पृथुपाजेत्याद्यपरमृग्द्वयस्य तासु प्रक्षेपोऽपि विधीयते। एव मेकविंशतित्वे सम्पादनीये षण्णा मप्यृचां प्रक्षेपणीयता विहिता। ताः प्रक्षेपणीयर्च एव धाय्या उच्यन्ते ( ऐ० ब्रा० ३. २. ७. )। तत्र धाय्ययोर्धाय्यानां वा प्रक्षेपस्तु समिध्यमान-समिद्धवत्योर्मध्ये एव भवति। ते च ऋचौ सामिधेनीषु दशमैकादश्यौ।

मन्यते, तथापि पौर्णमासं हविरिति विस्पष्टप्रत्यभिज्ञानान्न कर्मान्तरं किं तु दर्शपूर्णमासयोः सोमादूर्ध्व मुत्कर्षः। तस्माद् विप्रस्य सोमपूर्व्वत्व मेव नियत मिति प्राप्ते ब्रूमः ;— नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चिद्यागवाची श्रूयते, पौर्णमास मित्येतत् तद्धितान्तं हविर्विशेषणत्वेनोपन्यस्यते *, तच्च हविरग्नीषोमीयपुरोडाशरूप मिति देवताद्वयेन संस्तवादवगम्यते। तस्मादेकस्यैव हविष उत्कर्षः ; न तु कृत्स्नयोर्दर्शपूर्णमासयो। तथा सति ब्राह्मणस्यैकस्मिन्नेवाग्नीषोमीयपुरोडाशसोमपूर्व नियमः। इतरत्र चत्रियवैश्ययोरिवास्यापोष्टिपूर्व्वत्वसोमपूर्वे विकल्प्येते॥"—इति च।

तृतीयाध्यायस्य षष्ठे पादे चिन्तितम् (जै० सू० ८. अधि० २.

"सामिधेनीः सप्तदश प्रकृतौ विकृतावुत।
पूर्ववत् प्रकृतौ पाञ्चदश्येनैतद्विकल्पते॥
विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात्।
पाञ्चदश्याविरुद्धत्वादाकाङ्क्षया निवृत्तता॥

अनारभ्य † श्रूयते—'सप्तदश सामिधेनीरनुब्रूयात् ( १ ४ पं० )—इति। 'प्र वो वाजाः'—इत्याद्या अग्निसमिन्धनार्था सामिधेन्यः ( तै० ब्रा० ३. ५. २. १—१२ )। तासां साप्त पूर्वाशयेन प्रकृतिगतम्। यदि प्रकृतौ 'पञ्चदश सामि रन्वाह'—इति ( तै० स० २. ५. ८. २. ) विधिः स्यात्, तर्हि

* 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'—इति पा० ४. ३. १६। पौर्णमासं हविरिद मेषां मयि इति च स्फुटम् तै० ब्रा० ३. ७. ४. ४.।

† अनारभ्यः ख, ग।

पाञ्चदश्यसाप्तदश्ययोर् विकल्पेयाता मिति प्राप्ते ब्रूमः ;—विकृतावेव साप्तदश्यं निविशते ; प्रकृतौ पाञ्चदश्यावरुद्धायां सामिधेनीनां सङ्ख्याकाङ्क्षाया अभावात् । न च पाञ्चदश्यसाप्तदश्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयम् ; पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात् । तस्मात् मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्य मवतिष्ठते * । न चात्र पूर्वन्यायोऽस्ति ; साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधाने दोषाभावात् ॥"—इति ।

तत्रैवान्यविध मपि ( जै० सू० १०. अधि० ३. )—

"साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत ।
पूर्ववच्च न सङ्कोचो नित्यनैमित्तिकोक्तितः ॥
गोदोहनेन प्रणयेत्कामीत्यन्यदुदाहरन् ।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः ॥

'सप्तदशानुब्रूयाद् वैश्यस्य (तै० सं० २. ५. १. २.)'–इति स्थितं वैश्यनिमित्तिकं साप्तदश्यं पूर्वन्यायेन विकृतिगत मिति चेत् मैवम् ; नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया सङ्कोचनीयत्वात् । नित्यं सामान्यरूपतया सावकाशत्वेन दुर्बलम् ; नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम् ; तस्माद् वैश्यनिमित्तकं साप्तदश्यं प्रकृताववतिष्ठते ॥

अत्र भाष्यकारो † ऽन्यदुदाजहार—'चमसेनापः प्रणयेद्गोदो-

---

* मित्रविन्देष्टिः वाजसनेयके श्रूयते । शत० ब्रा० ११. ४. ३. २० । सांख्या० श्रौ० ३. ७. १ । कात्या० श्रौ० ५. १२. १ । अध्वरकल्पस्तु हविर्यज्ञविशेषः । सोऽपि वाजसनेयके एव । शत० ब्रा० १. १. ४. ७ ; ६. ६. १. ४ ।

† मीमांसाभाष्यकारः शबरस्वामी । ३ अ० ६ पा० १० सू० ।

हनेन पशुकामस्य'—इति। तत्र प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृताविति पूर्वपक्षः। कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया सङ्कोचनीयत्वात् प्रकृतावेव गोदोहनमिति राद्धान्तः॥"—इति।

दशमाध्यायस्याष्टमपादे चिन्तितम् (जै० सू० १७—१८. अधि ८.)

"सामिधेनीसाप्तदश्यं वैमृध्यादावपूर्वगोः।
संहतिर्वोपकारस्य क्लृप्ताद्यस्त्वाज्यभागवत्॥
सामिधेनीश्चोदकाप्ताः साप्तदश्यन्तु वैमृधे।
पुनर्वाक्येन संहार्थ्य मनारभ्योक्तिचोदितम्॥

अनारभ्य किञ्चिदाम्नायते—'सप्तदश सामिधेनीरनुब्रू[illegible] (१३ पृ० ४ पं०)'--इति। तथा वैमृधे *, अध्वरकल्पायां, प[illegible] चातुर्मास्येषु, मित्रविन्दायाम्, आग्रयणेष्ट्यादौ च पुनः साप्त[illegible] विहितम्। यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय[illegible] तथापि श्रुतेन पाञ्चदश्येनावरुद्धत्वाद् विकृतिष्वेव निविशते। [illegible] सति वैमृधादिषु विकृतिष्वनारभ्यवादप्राप्ताः सप्तदश सामि[illegible] प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभा[illegible] क्लृप्तोपकारत्वेनेतिकर्त्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोप[illegible] वैमृधादेरपूर्वकर्मतां गमयन्ति; साप्तदश्यन्त्वनारभ्यवादप्राप्त[illegible] द्यत इति प्राप्ते ब्रूमः;— वैमृधादिषु सामिधेन्य आज्यभाग[illegible] न विधीयन्ते, किन्तु चोदकप्राप्ता अनूद्य साप्तदश्यं विधीयते; तच्च साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम्, अनारभ्यवादेन तु सर्वासु विकृतिषु; तत्रानारभ्यवादो

* वैमृधेष्टिः तै० सं० २. ५. २. ४। शत० ब्रा० ९. ५. २. ५।

विलम्बते। प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसम्बन्धोऽवबोध्यः, तत्सम्बन्धान्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियत इति विलम्बः। प्राकरणिकैर्विधिभिः सामिधेनीसम्बन्ध एव बोधनीयः। विकृतौ तद्विशेषे च प्रवेशो न कल्पनीयः; प्रत्यक्षप्रकरणे पाठेनैव तत्सिद्धेः। तत्र साप्तदश्यस्य वैमृधादिविकृतिविशेषसम्बन्धे सहसा प्रतिपन्ने सति तद्विरोधात्, सर्वप्रकृतिसम्बन्धो न कल्पयितुं शक्यः। अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चदशस्य बाधकः। सर्वथापि चतुर्धाकरणवदुपसंहारो न त्वाज्यभागवदपूर्वं कर्म॥"—इति॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमाध्याये प्रथमः खण्डः॥ १॥

---

अथ द्वितीयः खण्डः।

यज्ञो वै देवेभ्य उदक्रामत् तमिष्टिभिः प्रैष मैच्छन् यदिष्टिभिः प्रैष मैच्छंस्तदिष्टीना मिष्टित्वं त मन्वविन्दन्ननुवित्तयज्ञो राध्नोति य एवं वेदाहूतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति तदाहुतीना माहूतित्वं मूतयः खलु वै ता नाम याभिर्देवा यजमानस्य हव मायन्ति ये वै पन्थानो या स्रुतयस्ता वा ऊतयस्त उ एवैतत् स्वर्गयाणा यजमानस्य भवन्ति तदाहुर्यदन्यो जुहोत्यथ योऽनु चाह यजति च

कस्मात्त्वं होतेत्याचक्षत इति यद्वाव स तत्र यथाभाजनं देवता अमु मावहामु मावहेत्यावाहयति तदेव होतुर्होतृत्वं होता भवति होतेत्येन मा चक्षते य एवं वेद ॥ २ ॥

दीक्षणीयेष्टिं निरूप्य तत्प्रशंसार्थ मिष्टिशब्दनिर्वचनं दर्शयति—"यज्ञो वै देवेभ्य उदक्रामत् त मिष्टिभिः प्रैष मैच्छन् यदिष्टिभिः प्रैष मैच्छंस्तदिष्टीना मिष्टित्वं त मन्वविन्दन्"-इति। ज्योतिष्टोमाभिमानी यज्ञपुरुषः, केनापि निमित्तेनापरक्तो 'देवेभ्यः' अपक्रान्तवान्। 'तं' यज्ञं दीक्षणीया-प्रायणीयादिभि 'इष्टिभिः' 'प्रैषम्' अन्वेष्टुम् 'ऐच्छन्' इच्छन्ति। यज्ञ मा[illegible] रिच्छन्तीतीष्टिशब्दस्य व्युत्पत्तिः। यजतिधातोरिष्टिशब्दः सर्व[illegible] प्रसिद्धः *; अत्र त्विच्छतिधातोरिति विशेषः †। अन्विष्य 'तं' यज्ञ मनुक्रमेण लब्धवन्तः।

तन्नाभवेदनं प्रशंसति—"अनुवित्तयज्ञो राध्नोति य [एवं] वेद"-इति। वेदिता तदनुष्ठानेन लब्धयज्ञः फलेन सम[ृद्धो] भवति॥

पुनरपि दीक्षणीयादीष्टिप्रशंसार्थं तास्विष्टिषु विद्यमाना माहुतीनां वाचकं शब्दं निर्वक्ति—"आहूतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति तदाहुतीना माहुतित्वम्"-इति। आहुतय इत्युकारेण ह्रस्वेन, आहूतय इत्येवं दीर्घेण युक्तं द्रष्टव्यम्। ह्वयत्याभिरिति तद्व्युत्पत्तिः। जुहोतिधातो-

* "श्रुयजीषिस्तुभ्यः करणे"--इति पा० ३. ३. ९४. वा० १। अम० ३. ४. ४१।
† 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः'--इति पा० ३. ३. ९६।

उत्पन्नः शब्दः पूर्वं प्रसिद्धः *; अयं तु ह्वयतिधातोरुत्पन्न इति विशेषः † ॥

इष्टीराहूतीश्च मिलित्वा प्रकारान्तरेण प्रशंसति—"ऊतयः खलु वै ता नाम याभिर्देवा यजमानस्य हव मायन्ति ये वै पन्थानो याः स्तुतयस्ता वा ऊतयस्त उ एवैतत् स्वर्गयाणा यजमानस्य भवन्ति"-इति। हूयन्ते देवा अस्मिन्निति हवो ऽत्र सोमयागः। 'याभिः' इष्टिभिस्तत्स्थाभिराहुतिभिश्च निमित्तभूताभिः 'देवाः' 'यजमानस्य' यज्ञ मागच्छन्ति, 'ताः' इष्टय आहुतयश्च 'ऊतयः' इत्येतत् 'नाम' प्रतिपद्यन्ते। 'खलु'-शब्दो 'वै'-शब्दश्च प्रसिद्ध्यर्थः। अवन्ति रक्षन्तीत्यवतेर्धातोरूतिशब्दः प्रसिद्धः; 'आयन्ति' आगच्छन्ति याभिरित्याङ्पूर्वस्यायतिधातोर्वा वर्णविकारेणोतिशब्दः। यद्वा, तस्मादेव धातोः स्वर्गप्रापकत्वाभिप्रायेणोतिशब्दो व्युत्पाद्यते ‡। 'ये' केचित् 'पन्थानः' इष्टिरूपाः स्वर्गस्य प्राप्तिमार्गाः सन्ति, 'याः' च 'स्तुतयः' तन्मार्गावयवरूपा आहुतयः सन्ति, तद्द्विविधाः 'ऊतयः' इत्युच्यन्ते। 'त उ एव एतत्' त एवैते द्विविधा अपि मार्गाः 'यजमानस्य' 'स्वर्गयाणाः' स्वर्गप्रापकाः 'भवन्ति' ॥

पुनरपीष्टिप्रशंसार्थं तदङ्गभूतयोर्याज्यानुवाक्ययोर्वक्तरि प्रयुज्यमानं होतृशब्दं निर्वक्तुं ब्रह्मवादिनां प्रश्न मवतारयति—

"तदाहुर्यदन्यो जुहोत्यथ योऽनु चाह यजति च कस्मात् तं होतेत्याचक्षत इति"-इति। 'तत्' तास्विष्टिषु किञ्चिच्चोद्यम्

---

* 'तृन्विधावृत्विक्षु चानुपसर्गस्येति वक्तव्यम्'-इति पा० ३. २. १३५. वा० १। उणा० २. ९४। 'जुहोतेर्होतेत्यौर्णवाभः'-इति निरु० ७. ४. २।

† "ह्वातव्यः"—इति, "होतारं ह्वातारम्"-इति च निरु० ४. ४ ५ ; ७. ४. २।

‡ 'ऊतिः' निघ० ४. २, १५ ; 'ऊतिरवनात्'-इति च निरु० ५. १. ३।

'आहुः';— 'यद्' यस्मात् कारणात्, होतुः 'अन्यः' अध्वर्युः 'जुहोति', तस्मात् तत्कारणात् तद्धातुनिष्पन्नो होतृशब्दस्तस्याध्वर्योः युक्तः; याज्ञिकास्तु न मध्वर्युं होतेति नाचक्षते; 'अथ' 'यः' पुमान् 'अनु चाह' पुरोऽनुवाक्यां चानुब्रूते, 'यजति च' याज्याञ्च पठति, 'तं' पुमांसम् 'अनुवक्ता'-इति 'यष्टा'-इति चानभिधाय 'कस्मात्' कारणात् 'होता-इत्याचक्षते'? 'इति'-शब्दः प्रश्नस्यास्यर्थः ॥

अभिज्ञाना मभिप्रेतं प्रश्नस्योत्तरं दर्शयति—"यद्वाव स तत्र यथाभाजनं देवता असु मावहासु मावहेत्यावाहयति तदेव होतुर्होतृत्वं होता भवति"—इति। 'यद्वाव' यस्मादेव कारणाद्याज्यानुवाक्ययोर्वक्ता 'सः' पुमान् 'तत्र' यागे 'यथाभाजनं' यथास्थानं सर्वाः 'देवताः' 'आवाहयति',—'असुम्' अग्निम् 'आवह', 'असुं' सोमम् 'आवह' 'इति' *; 'तदेव' तस्मादेव कारणाद्याज्ञिकप्रसिद्धं होतुस्तन्नाम सम्पन्नम्। अत्र एयन्तस्य वहधातोश्छान्दस्या प्रक्रियया निष्पत्तिः; न तु जुहोतिधातोः। तस्माद्धोमकर्तृत्वाभावेऽप्यावाहयितृत्वसद्भावात् 'होतृत्वम्' उपपन्नम्;—'इति' अयं याज्यानुवाक्ययोर्वक्तापि 'होता' भवत्येव।

होतृत्ववेदनं प्रशंसति—"होतेत्येन माचक्षते य एवं वेद"-इति। याज्ञिकाः 'एवं' वेदितारं होतारं मुख्यो 'होता'-इति' कथयन्ति; हौत्रे कर्म्मणि कुशलो भवतीत्यर्थः † ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

* "अग्नि मग्न आवह। सोम मावह। अग्नि मावह"-इत्यादयः तै० ब्रा० ३, ५, ३, २।
† 'तस्य धर्म्मम्। अण् महिष्यादिभ्यः'-इति पा० ४, ४, ४७, ४८।

॥ अथ तृतीयः खण्डः ॥

पुनर्वा एत मृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्त्य-
द्भिरभिषिञ्चन्ति रेतो वा आपः सरेतस मेवैनं तत्
कृत्वा दीक्षयन्ति नवनीतेनाभ्यञ्जन्त्याज्यं वै देवानां
सुरभि घृतं मनुष्याणा मायुतं पितॄणां नवनीतं
गर्भाणां तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैनं तद्भाग-
धेयेन समर्धयन्त्याञ्जन्त्येनं तेजो वा एतदक्ष्योर्यदाञ्जनं
सतेजस मेवैनं तत् कृत्वा दीक्षयन्त्येकविंशत्या दर्भ-
पिञ्जूलैः पावयन्ति शुद्ध मेवैनं तत्पूतं दीक्षयन्ति
दीक्षितविमितं प्रपादयन्ति योनिर्वा एषा दीक्षितस्य
यद्दीक्षितविमितं योनि मेवैनं तत् स्वां प्रपादयन्ति
तस्माद् ध्रुवाद्योनेरास्ते च चरति च तस्माद् ध्रुवा-
द्योनेर्गर्भा धीयन्ते च प्र च जायन्ते तस्माद्दीक्षितं नान्यत्र
दीक्षितविमितादादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वापि
वाभ्याश्रावयेयुर्वाससा प्रोर्णुवन्त्युल्बं वा एतद्दीक्षितस्य
यद्वास उल्बेनैवैनं तत्प्रोर्णुवन्ति कृष्णाजिन मुत्तरं
भवत्युत्तरं वा उल्बाज्जरायु जरायुणैवैनं तत् प्रोर्णु-
वन्ति मुष्टी कुरुते मुष्टी वै कृत्वा गर्भोऽन्तः शेते मुष्टी
कृत्वा कुमारो जायते तद्यन् मुष्टी कुरुते यज्ञञ्चैव
तत्सर्वाश्च देवता मुष्ट्योः कुरुते तदाहुर्न पूर्वदीक्षिणः

संसवोऽस्ति परिगृहीतो वा एतस्य यज्ञः परिगृहीता देवता नैतस्यार्तिरस्त्यपरदीक्षिणा एवं यथा तथेत्युन्मुच्य कृष्णाजिन मवभृथ मभ्यवैति तस्मान्मुक्ता गर्भा जरायोर्जायन्ते सहैव वाससाभ्यवैति तस्मात्सहैवोल्बेन कुमारो जायते ॥ ३ ॥

इत्थ मिथ्याहुत्यूतिहोतृशब्दानां निर्वचनेन दीक्षणीयेष्टिं प्रशंस्य तयेष्ट्या दीक्षितस्य संस्कारविशेषान्विधातुं प्रस्तौति— "पुनर्वा एत मृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति"-इति। 'यं यजमानं दीक्षणीयेष्ट्या दीक्षितं कुर्वन्ति, तं यजमानं पुरा मा ता- पितरौ कश्चित्कालं गर्भं कृतवन्तौ, पुनरप्येन मिदानीम् 'ऋत्वि[...] यज्ञकाले 'गर्भं कुर्वन्ति' गर्भवदसौ संस्कारैः पालनीय इत्यर्थः

एकं * संस्कारं विधत्ते—"अद्भिरभिषिञ्चन्ति"-इति। स्नपयन्तीत्यर्थः। एतदेवाभिप्रेत्य तैत्तिरीया यजमानस्य [...] वप- दूर्ध्वं स्नान मामनन्ति—'अङ्गिरसः सुवर्गं लोकं यन्तोऽप्[...] दी- तपसो प्राविशयन्नप्सु स्नाति साक्षादेव दीक्षातपसो † अ[...] इति (तै० स० ६. १. १. २.)। यजमानस्य स्नानव[...] ऋत्विजां स्नपयितृत्व मभिप्रेत्याभिषिञ्चन्तीत्युक्तम्।

उक्ताना मपां प्रशंसा माह—"रेतो वा आपः सरेतस मेवैनं तत् कृत्वा दीक्षयन्ति"-इति। कार्यकारणयोरभेदादपां रेतस्त्वम्; वैराजदेहगताद्रेतस आप उत्पन्नाः। तथाचारण्यके सृष्टि-

* एवं क।

† 'मुण्डनादिसंस्कारो दीक्षा, आहारादिनियमस्तपः; अप्सु स्नानेन तदुभय मव्यवधानेनैव प्राप्नोति'-इति च च तद्भाष्यं सायणीयम्।

प्रकरणे समाम्नायते—'शिश्नाद्रेतो रेतस आपः ( २. ४. १. ६. )'-इति। यद्वा, मनुष्यादिशरीरगतं रेतोमूत्रादिक मपां कार्यम्। तच्च गर्भोपनिषद्याम्नातम्—'अस्मिन् पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी, यद्द्रवं तदापः'-इति। 'तत्' तेनाभिषेचनेन 'एनं' यजमानं 'सरेतसं' पुत्रोत्पादनसमर्थं 'कृत्वा' संस्कुर्वन्ति॥

संस्कारान्तरं विधत्ते—"नवनीतेनाभ्यञ्जन्ति"-इति। सर्वस्मिन्नपि शरीरेऽनुलेपयन्तीत्यर्थः॥

नवनीतस्य गर्भस्थानीययजमानयोग्यतां दर्शयति—'आज्यं वै देवानां सुरभि घृतं मनुष्याणा मायुतं पितॄणां नवनीतं गर्भाणां तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैनं तद्भागधेयेन समर्धयन्ति'-इति। आज्यघृतयोर्भेदः पूर्वाचार्यैरुदाहृतः—'सर्पिर्विलीन माज्यं स्याद् घनीभूतं घृतं विदुः'-इति। ईषद्विलीन मायुतं सुरभि योग्यं प्रियं मित्यर्थः। घृतायुतनवनीतेष्वप्येतत्पद मनुवर्त्तते। ननु तैत्तिरीया घृतस्य देवप्रियत्व मामनन्ति—'घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणाम् ( सं० ६. १. १. ४. )'-इति *। ईषद्विलीनं मस्तु; निःशेषेण विलीनं निष्पक्वम्। नायं दोषः; उभयत्र नवनीतप्रशंसारूपार्थवादत्वेन घृताज्ययोः व्यत्ययेन पाठेऽपि विरोधाभावात्। तथा सति नवनीतस्य गर्भयोग्यत्वे सति यदि नवनीतेनाभ्यङ्गं कुर्युः, तदानी मेनं यजमानं स्वोचितेनैव भागेन समृद्धं कुर्वन्ति॥

नेत्रयोरञ्जनेन संस्कारं विधत्ते—"आञ्जन्त्येनम्"-इति।

---

* "नवनीतस्य पाकजन्यास्तिस्रोऽवस्थाः;—पक्वम्, ईषत्पक्वम्, निःशेषपक्वं च। द्रव्यान्तरप्रक्षेपेण सुरभि निःशेषपक्वम्। अतएव बह्वृचाः पठन्ति—'आज्यं वै देवानाम्'-इति ( ऐ० ब्रा० १. १. ३. )"-इति तत्रैव सा० भा०।

अक्ष्णोर्दृष्टिप्रसादहेतुत्वेनाञ्जनं प्रशंसति—"तेजो वा एत
दक्ष्योर्यदाञ्जनं सतेजस मेवैनं तत् कृत्वा दीक्षयन्ति"-इति। आञ्ज
नस्याक्षितेजस्त्वं लोके सिद्धम्। तत्प्रकारविशेषः शाखान्तरे "दक्षिण
पूर्वं माङ्क्ते"-इत्यादिना विहितः ( तै० सं० ६.१.१.५,६. )*

संस्कारान्तरं विधत्ते—"एकविंशत्या दर्भपिञ्जूलैः पावयन्ति"
इति। दर्भपिञ्जूल-शब्देन कुशसङ्घा उच्यन्ते। तैरेकविंशति
सङ्ख्याकैः यजमानं मार्जयित्वा शुद्धं कुर्युः।

यद्यप्यसावभिषिकेणैव शुद्धः, तथापि अतिशयेन शुद्धिरि
मभिप्रायं दर्शयति—"शुद्ध मेवैनं तत् पूतं दीक्षयन्ति"-इति
पूर्व मपि शुद्ध मेव सन्त मेतं यजमानं पुनरपि तत्तेन कुशसं
मार्जनेन पूतं कृत्वा संस्कुर्वन्ति। यद्यपि शाखान्तरे †—'द्वा
पावयति, त्रिभिः पावयति'-इत्यादिना सङ्ख्यान्तरविषया ब
पक्षा उपन्यस्ताः, तथाप्येते सर्वे एकविंशतावन्तर्भावादनुवादरू
प्रशंसार्थाः। अतएव तत्रान्तिमे पर्याये एकविंशत्या पावयती
संहारः कृतः ‡॥

उक्तैः संस्कारैः संस्कृतस्य दीक्षितस्य प्राचीनवंशाख्यश

---

* तद्यथा—'दक्षिणं पूर्वं माङ्क्ते ; सव्यं हि पूर्वं मनुष्या आञ्जते, न निधावते ; मनुष्या धावन्ते। पञ्चकृत्व आङ्क्ते, ०—०, अपरिमितं हि मनुष्या आञ्जते। स आङ्क्ते, अपतूलया हि मनुष्या आञ्जते ०—०'-इति। 'मनुष्येषु योषित्सु अञ्जने वावै पूर्वत्वं प्रसिद्धम्। अञ्जनोपेताङ्गुलेः चक्षुषि सहसा पुनः पुनः पर्यावर्त्तनं निधावनं। मनुष्याः कुर्वन्ति। + + + । अग्रसहिता शरेषीका सतूला। मनुष्या मिषीकामियम एव नास्ति कुतः सतूलत्वनियमः'-इत्यादि तत्र। सा० भा० शतपथब्राह्मणे "अथाद्यावनक्ति"-इत्यादि ३. १. ३. ९—१६।

† तै० सं० ६. १. १. ७, ८। तन्मन्त्रा अपि पूर्वं व पुरस्तात् १. २. १।

‡ द्वाभ्याम्, त्रिभिः, पञ्चभिः, षड्भिः, सप्तभिः, नवभिः, एकविंशत्या।

प्रवेशं विधत्ते—"दीक्षितविमितं प्रपादयन्ति"-इति। दीक्षितस्य प्रवेशार्थं विशेषेण निर्मितः प्राचीनवंशो दीक्षितविमितः; तं प्रवेशयेयुः।

पूर्वत्र दीक्षितस्य गर्भत्वाभिधानाद्दीक्षितत्वेन प्राचीनवंशं योनित्वेन प्रशंसति—"योनिर्वा एषा दीक्षितस्य यद्दीक्षितविमितं योनि मेवैनं तत् स्वाम्प्रपादयन्ति"-इति। प्राचीनवंशस्य योनित्वोपचारात् 'तत्' तेन प्राचीनवंशप्रवेशेन स्वकीययोनिप्रवेशः सम्पाद्यते। सोऽयं प्रवेशः शाखान्तरे विस्पष्ट माम्नायते—'बहिः पावयित्वान्तः प्रपादयति मनुष्यलोक एवैनं पावयित्वा पूतं देवलोकं प्रणयति'-इति (तै० सं० ६. १. २. १.)। आपस्तम्बोऽप्याह—'आ वो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्य'-[illegible]ति (श्रौ० १०. ८. १.)॥

तस्य दीक्षितस्य कञ्चिन्नियमं विधत्ते—"तस्माद् ध्रुवाद् योनेरास्ते च चरति च"-इति। अत्र तिस्रः पञ्चम्यः सप्तम्यर्थे द्रष्टव्याः। अस्मिन् दीक्षितार्थं निर्मिते देवयजनाख्ये स्थिरस्थाने धाम्नि दीक्षितः उपवेशनं सञ्चरणं च कुर्यात्।

विहित मर्थं प्रशंसति—"तस्माद् ध्रुवाद्योनेर्गर्भा धीयन्ते च प्र च जायन्ते"-इति। यस्माद् गर्भस्थानीयस्य दीक्षितस्य स्थिरे देवयजनस्थाने योनिरूपे उपवेशनं सञ्चरणं च; तस्माल्लोकेऽपि स्थिरे योनिमध्ये नवसङ्ख्याकान् मासान् 'गर्भा धीयन्ते'*। तस्मादेव स्थिरात् योनिमध्यात् उत्पद्यन्ते॥

तस्य दीक्षितस्य देवयजनाद् बहिर्निर्गमनं निषेधति—"तस्माद्

---

* 'गर्भाः' धार्यन्ते क।

दीक्षितं नान्यत्र दीक्षितविमितादादित्योऽभ्युदियाद्वाभ्यस्तमिया
द्वापि वाभ्याश्रावयेयुः''-इति। यस्माद् दीक्षितस्योपवेशनसञ्चरण
योर्देवयजन मेव स्थानम्, तस्मात् कारणात् 'दीक्षितविमिताद्
देवयजनदेशाद् 'अन्यत्र' वहिर्देशे 'दीक्षितम्' 'अभि' लक्ष्
'आदित्यो नोदियान्नास्तमियात्' च। किञ्च ऋत्विजो वहिर
वस्थितं दीक्षित मभिलक्ष्य आश्रावणादिकं न कुर्युः। यद्यपि
योनेरास्ते चरति विधानादेवाय मर्थः सिद्धः, तथापि मलम
विसर्गाद्यावश्यककार्यार्थं कदाचिद्बहिर्निर्गमन मभ्युपगम्य
विशेषाभिधान मेतत्। कालान्तरे कथञ्चिद्गमनेऽप्युदयास्तम
श्रवणादिकालेषु सर्वथा न निर्गच्छेदित्यर्थः। तदेतद् दृष्टा
पुरःसरं शाखान्तरे प्रपञ्चितम्—'गर्भो वा एष यद्दीक्षितो यो
र्दीक्षितविमितं यद्दीक्षितविमित मभ्येत्य वसेद्यथा योनेर्ग
स्कदति तादृगेव तत्र प्रवस्तव्य मात्मनो गोपीथायेति * ॥

संस्कारान्तरं विधत्ते—''वाससा प्रोर्णुवन्ति उल्बं वा ए
क्षितस्य यद्वास उल्बेनैवैनं तत्प्रोर्णुवन्ति''-इति। उल्बशब्देन
स्याभ्यन्तरं चर्मवेष्टन मुच्यते। अय मर्थः शाखान्तरे स्पष्ट
'गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्माद्गर्भा
जायन्ते'-इति (तै० सं० ६. १. ३. २.)। वाससो व
न्तरं विधत्ते—''कृष्णाजिन मुत्तरं भवति''-इति।
नत्वसाम्येन कृष्णाजिनस्य जरायुरूपत्वं दर्शयति—'उ तरं
उल्बाज्जरायु जरायुणैवैनं तत्प्रोर्णुवन्ति''-इति ॥

संस्कारान्तरं विधत्ते—''मुष्टी कुरुते''-इति। यजमा नो हस्त

* शत० ब्रा० ३. २. १ द्रष्टव्यम्।

योर्मुष्टिं कुर्यात्। तत्प्रकार आपस्तम्बेन स्पष्ट मभिहितः—'अथाङ्गुलीर्न्यञ्चति। स्वाहा यज्ञं मनसेति द्वे स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टी करोति'-इति (श्रौ० १०.११.३,४.)।

गर्भसाम्येन यज्ञस्य सर्वदेवतानां च धारणेन प्रशंसति—"मुष्टी वै कृत्वा गर्भोऽन्तः शेते मुष्टी कृत्वा कुमारो जायते तद्यन्मुष्टी कुरुते यज्ञं चैव तत्सर्वाश्च देवता मुष्ट्योः कुरुते"–इति। गर्भस्य मुष्टिद्वये शास्त्रप्रसिध्द्यर्थो 'वै'-शब्दः। जायमानस्य मुष्टिद्वयं लोके प्रसिद्धम्। मुष्टिमध्ये यज्ञधारणं शाखान्तरेऽप्याम्नातम्—'मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै'-इति( तै० सं० ६.१.४.३.)।

प्रकारान्तरेण मुष्टिद्वयं प्रशंसति—"तदाहुर्न पूर्वदीक्षिणः संसवोऽस्ति परिगृहीतो वा एतस्य यज्ञः परिगृहीता देवता नैतस्यार्त्तिरस्त्यपरदीक्षिण एव यथा तथेति"–इति। तत्र मुष्ट्योः करणे ब्रह्मवादिनः किञ्चिद्गुणम् 'आहुः'। द्वयोर्बहूनां वा यजमानानां सम्भूय सोमाभिषवः 'संसवः', स च महान् दोषः; एकस्मिन्नेव देशे तस्मिन्नेव काले मत्सरग्रस्तैर्यजमानैः प्रवर्त्तितत्वात्। नद्या वा पर्वतेन वा व्यवधानरहितयोः समीपवर्तिनोः परस्परमन्त्रध्वनिश्रवणयोग्ययोर्देशयोः स्पर्द्धमानाभ्यां यजमानाभ्यां प्रवर्तितौ यौ सोमयागौ, तयोरयं संसवाख्यो दोषः। तथाच सूत्रकार आह—"संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा"–इति ( आ० श्रौ० ६. ६. ११. )। सोऽयं दोषः 'पूर्वदीक्षिणो नास्ति'। एकस्मिन्नेव दिवसे द्वयोर्यजमानयोर्मध्ये यः पूर्वं दीक्षणीयेष्टिं करोति, स पूर्वदीक्षी। 'एतस्य' मुष्ट्योर्मध्ये 'यज्ञः' परिगृहीतः, सर्वाश्च 'देवताः' परिगृहीताः; तदानीमितरसम्बन्धिनो यज्ञस्या-

प्रवृत्तत्वेन 'तत्र गच्छामः'—इत्येवं यज्ञस्य देवतानां वाऽऽलोचनाभावात्। पश्चाद्दीक्षणीयेष्टिं कुर्वाणस्यापरदीक्षितस्य यज्ञो देवताश्च सुलभा न भवन्ति; पूर्वं मन्येन यजमानेनावरुद्धत्वात्। तस्मात् 'अपरदीक्षिणः' 'आर्त्तिः' यो विनाशो 'यथा' अस्ति, 'तथा' पूर्वदीक्षिण आर्त्तिर्नैवास्ति। "संवेशाय त्वोपवेशाय त्वा"—इत्यादिमन्त्रेण येयं संसवप्रायश्चित्ताहुतिः *, सेय मपरदीक्षिणैव कर्तव्या; न पूर्वदीक्षिणीत्यर्थः। 'इति'-शब्दो ब्रह्मवादिवचनसमाप्त्यर्थः॥

यदेतत् कृष्णाजिनवेष्टनं विहितम्, तस्यावभृथगमनात् प्रा[illegible]-वोन्मोचनं विधत्ते—"उन्मुच्य कृष्णाजिन मवभृथ मभ्यवै[illegible]न्ति तस्मान् मुक्ता गर्भा जरायोर्जायन्ते"—इति। योनिस्थानी[illegible]देवयजनदेशान्निर्गत्यावभृथगमनं गर्भरूपस्य दीक्षितस्य जन्मस्थानीय[illegible]: जन्म च लोके जरायुरूपवेष्टने छिन्ने सति पश्चात्सम्पद्यते, तस्[illegible] दत्रापि जरायुस्थानीयं कृष्णाजिन मुन्मुच्य जन्मस्थानीय मव[illegible] देशगमनं कुर्यात्॥

कृष्णाजिनवद्वाससोऽपि प्रसक्त मुन्मोचनं वारयति—"[illegible]:—वाससाभ्यवैवि तस्मात् सहैवोल्वेन कुमारो जायते"—इति। [illegible]वृता ख्यस्याभ्यन्तरवेष्टनस्य जन्मकालेऽप्यनिवृत्तिदर्शनात् उल्वस्या[illegible]ष्टनावस्त्रस्यावभृथगमनकालेऽप्यनिवृत्तिर्द्रष्टव्या॥

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे (जै॰ सू॰ २९—३१; अधि॰ ११.) चिन्तितम्—

"इष्टिदण्डादिभिर्दीक्षा किं वेष्टैरवोक्तितोऽग्रिमः।
युक्तः संस्कार इष्टैव दण्डादिर्व्यञ्जकत्वतः॥

* तत्र संवेशाय त्वेत्यादयः पञ्च मन्त्राः तै॰ सं॰ ३. [illegible]

ज्योतिष्टोमे श्रूयते—"आग्नावैष्णव मेकादशकपालं निर्वपति दीक्षिष्यमाणः"—इति (तै० सं० ५.६.१.४.)। अन्यदपि श्रुतम्—"दण्डेन दीक्षयति", "कृष्णाजिनेन दीक्षयति"—इति (तै० सं० ६.१.३.२.)। अत्रेष्टिवद् दण्डादीना मपि साधनत्वविधानात् सर्वैरियं दीक्षेति चेत्, मैवम्; इष्टेः क्रियारूपत्वात् संस्कारहेतुत्वं हि युक्तम्; दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैवं दण्डादेर्वैयर्थ्यम्; दीक्षितोऽय मित्यभिव्यक्तिरूपस्य दृष्टप्रयोजनस्य सद्भावात्। तस्मादिष्ट्यैव दीक्षा सिध्यति"—इति ॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थः खण्डः।

त्व मग्ने सप्रथा असि सोम यास्ते मयोभुव इत्याज्यभागयोः पुरोनुवाक्ये अनुब्रूयाद्यः पूर्व मनीजानः * स्यात् तस्मै त्वया यज्ञं वितन्वत इति यज्ञ मेवास्मा एतद्वितनोत्यग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वय मिति यः पूर्व मीजानः † स्यात् तस्मै प्रत्न मिति पूर्वं कर्माभिवदति तत्तन्नादृत्य मग्निर्वृत्राणि जङ्घनत् त्वं सोमासि सत्पतिरिति वार्त्रघ्नावेव

*, † उभयत्रैव निर्विसर्गोऽत्र पाठः कान्येष्वस्मद्दृष्टेषु मूलपुस्तकेषु।

कुर्याद् वृत्रं वा एष हन्ति यं यज्ञ उपनमति * तस्मा-
द्वार्त्रघ्नावेव कर्त्तव्यावग्निर्मुखं प्रथमो देवतानामग्निश्च
विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो
याज्यानुवाक्ये भवत आग्नावैष्णव्यौ रूपसमृद्धे एतद्वै
यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभि
वदत्यग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ तौ
दीक्षाया ईशाते तद्यदाग्नावैष्णवं हविर्भवति
दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां
दीक्षयितारौ तौ दीक्षयेतामिति त्रिष्टुभौ भव-
सेन्द्रियत्वाय ॥ ४ ॥

विवक्षितस्य हौत्रस्योपोद्घातत्वेन दीक्षणीयेष्टिं विधाय
च बहुधा प्रशंस्य प्रसङ्गाद् दीक्षितसंस्कारा विहिताः ;
विवक्षितं हौत्रं विधत्ते— "त्व मग्ने सप्रथा असि, सोम
मयोभुव इत्याज्यभागयोः पुरोनुवाक्ये अनुब्रूयाद्यः पूर्व मन
स्यात्तस्मै"–इति। 'यः' यजमानः इतः पूर्वं सोमयागं न कृ
इदानीं क्रियमाण एव प्रथमः ; 'तस्मै' यजमानाय, तदर्थं दी
येष्टौ ; प्रथमस्याज्यभागस्य 'त्व मग्ने'–इति ( सं० ५. १३
पुरोनुवाक्या, द्वितीयस्य 'सोम यास्ते'-इति ( सं० १. ९१
पुरोनुवाक्या। तदुभय मध्वर्युणा प्रेषितो होता 'अनुब्रूयात

* 'यज्ञ मुपनमति' क।

† आश्व० श्रौ०—'प्रेषितो जपति' १. १. १७, 'द्वे द्वे तु याज्यानुवाक्ये' २. १
लक्षणा याज्यानुवाक्याः' २. ...

उक्तस्य प्रथममन्त्रस्य प्रथमप्रयोगानुकूल्यं दर्शयति—"त्वया यज्ञं वितन्वत इति यज्ञ मेवास्मा एतद्वितनोति"–इति। तस्मिन् मन्त्रे त्वयेत्यादिस्तृतीयः पादः *; तस्याय मर्थः— हे अग्ने! क्रियमाण मस्मद्यज्ञ मिमम् ऋत्विजः 'त्वया' त्वत्प्रसादेन 'वितन्वते' विस्तारयन्ति–'इति'। 'एतत्' एतेन मन्त्रवचनेन 'अस्मै' यजमानाय 'यज्ञं वितनोत्येव' पूर्वं मविस्तारित मपि यज्ञ न मिदानीं विस्तारयत्येव ॥

प्रयो[illegible] अधिकारविशेषेण प्रकारान्तरं विधत्ते—"अग्निः प्रत्नेन [illegible]मना, सोम गीर्भिष्ट्वा वय मिति यः पूर्व मीजानः स्यात्तस्मै"–[illegible]ति। 'यः' यजमानः 'पूर्वं' सोमयागं कृतवान्, 'तस्मै' यज[illegible]मानार्थं पुनः सोमयागप्रयोगे दीक्षणीयेष्टौ 'अग्निः प्रत्नेन'–इति मं (सं० ८. ४४. १२.) प्रथमस्याज्यभागस्य पुरोनुवाक्या, 'सोम गीर्भिः' [illegible]ति (सं० १. ९१. ११.) द्वितीयस्य †।

कर[illegible] तत्र प्रथममन्त्रस्य पुनःप्रयोगानुकूल्यं दर्शयति—"प्रत्न मिति मानार्थं कर्माभिवदति"–इति। तस्मिन् मन्त्रे यत् 'प्रत्न मिति' पदं तस्मिन् पदेन 'पूर्वम्' अनुष्ठितं सोमयागाख्यं 'कर्म' अभिधीयते; [illegible] प्रतन-प्रत्न-पुरातन-चिरन्तनाः'–इति (अम० ३. १. ७७.) प्रत्न-शब्दस्याभिधानकारैः पुरातनपर्य्यायत्वाभिधानात् ॥

[illegible]जानानीजानभेदेन व्यवस्थितं यन्मन्त्रचतुष्टय मुक्तम्, सोऽयं पूर्वः पक्षः, इत्यभिप्रेत्य दूषयति—"तत्तन्नादृत्यम्"–इति। 'तत्' तत्र दीक्षणीयेष्टिगतयोराज्यभागयोस्त्वमग्नइत्यादिक मनुब्रूयादिति यन्मत मस्ति, 'तत्' मतं 'न' आदरणीयम् ॥

---

* पूर्णपाठस्त्वेवम् "त्व मग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते"–इति।

† आश्व० श्रौ० १. ५. ३५। तै० ब्रा० ३. ५. ६. ४, ५; सं० २. ६. २।

किं तर्ह्यादरणीय मित्याशङ्क्याह—"अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिरिति वार्त्रघ्नावेव कुर्याद्"-इति। वृत्रं शत्रुं हन्तीति वृत्रहा; वृत्रघ्नः सम्बन्धिनौ मन्त्रौ 'वार्त्रघ्नौ'; वृत्राणि जङ्घनदिति तल्लिङ्गात्तत्सम्बन्धित्वम्। 'अग्निर्वृत्राणि'-इति (सं० ६. १६. ३४.) प्रथमस्याज्यभागस्य पुरोनुवाक्या, 'त्वं सोमासि'-इति (सं० १. ९१. ५.) द्वितीयस्य *।

एतयोर्मन्त्रयोरानुकूल्यं दर्शयति—"वृत्रं वा एष हन्ति, यं यज्ञ उपनमति तस्माद्वार्त्रघ्नावेव कर्तव्यौ"-इति। 'यं' यजमानं 'यज्ञ उपनमति' सोमयागे प्रेरयति, 'एषः' यजमानो 'वृत्र'' पापरूपं शत्रुं 'हन्ति' एव; 'तस्मात्' कारणात् वृत्रहत्यासम्बन्धिनौ 'एव' मन्त्रौ 'कर्तव्यौ'। यथा प्रथममन्त्रे 'वृत्राणि जङ्घनत्'— इति लिङ्ग मस्ति †, तथा द्वितीयेऽपि 'त्वं राजोत वृत्रहा'— लिङ्गं विद्यते ‡। तस्मादुभयोरपि तत्सम्बन्धित्वं पूर्वोक्त पक्षयोः वितन्वते। अत्र मित्यानुकूल्यलिङ्गं प्रथमयोरेव म... दृश्यते, न तूत्तरयोः तस्मात् तन्नादरणीय मिति दूष... उभयलिङ्गसद्भावादयं पक्षः स्वीकृतः॥

आज्यभागरूपेऽङ्गकर्मणि पुरोनुवाक्या-युग्मं विधाय ...प्रधान-कर्मणि हविषि याज्यानुवाक्ये विधत्ते—"अग्निर्मुखं प्रथ... ताना मग्निस्य विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य ... याज्यानुवाक्ये भवतः"-इति। प्रथमनिर्दिष्टत्वादग्निर्मुख मित्यर्थः

* आश्व० श्रौ० १. ५. २९। तै० ब्रा० ३. ५. ६. १, २; सं० २. ६. २।

† तद्यथा—"अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥"-इति।

‡ तथाच तत्पाठः—"त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः"-इति।

( तै० सं० २.४.३.३. * ) पुरोनुवाक्या ; यथाग्निर्लिङ्गत्वादग्निश्चेति ( तै० सं० २.४. ३.४. † ) याज्या ‡ । यद्यप्यर्थानुसारेण अनुवाक्यायाज्ये भवत इति विधातव्यम्, तथापि 'अल्पाच्तर मिति व्याकरणसूत्रानुसारेण ( पा० २. २. ३४. ) याज्या-शब्दस्य पूर्वनिपातो द्रष्टव्यः § ॥

तयोः ऋचोः कर्मानुकूल्यं दर्शयति—"आग्नावैष्णव्यौ रूपसमृद्धे एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति"–इति । अग्निश्च विष्णुश्च ययोः ऋचोः प्रतिपाद्ये देवते भवतः, ते उभे ऋचौ आग्नावैष्णव्यौ ‖ । ते च कर्मानुकुल्येन रूपेण समृद्धे । न च रूपसमृद्धं वैयर्थ्यं शङ्कनीयम् ;—कर्मणो यदङ्गं रूपसमृद्धं भवति, 'एतत्' एव 'यज्ञस्य' अङ्गेषु 'समृद्धं' सम्पूर्णम्, न तु तस्मिन् किञ्चिदपि वैकल्य मस्ति । केयं रूपसमृद्धिरिति चेत्, पठ्यमानेयम् 'ऋक्' अनुष्ठीयमानं 'कर्माभिवदति' साकल्येन ब्रवीतीति यदस्ति, एषैव रूपसमृद्धिः ॥

---

*. † ऋचावेतेऽन्यशाखीये गम्यते ; आश्वलायनेन हि प्रपठ्य विहिते ( श्रौ० ४. २. ३ ), तैत्तिरीये पाठस्तु किञ्चिद्भिन्न एवेति ।

‡ 'सर्वेषा मर्धर्चऽर्धर्चे ऽनुवाक्यास्तती याज्याः'–इति आश्व० श्रौ० १. ७, २ ।

§ "याज्यानुवाक्ययोर्लक्षणं दर्शयति—'पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति ; जातानेव भ्रातृव्यान् प्रणुदत । उपरिष्टाल्लक्ष्मा याज्या ; जनिष्यमाणानेव प्रति नुदते'—इति ( तै० सं० २. ६. २. ३. )। मन्त्रप्रतिपाद्याया देवताया ,नामधेयं लक्ष्म । तद्यस्या ऋचि पूर्वार्द्धे विद्यते सा पुरोऽनुवाक्या ; तन्नाम यस्या मुत्तरार्द्धे विद्यते सा याज्या । तद्यथा—अग्निर्मूर्द्धा इति पूर्वार्द्धेऽग्निशब्दः, जिह्वा मग्ने चकृषे इत्युत्तरार्द्धेऽग्निशब्दः"–इति सा० भा० । 'अनुवाक्या—तिष्ठन्नन्वाह ; आसीनो याज्यां यजति'–इति च शत० ब्रा० १. ४. २. १८, १९ ।

‖ 'विमुक्तादिभ्योऽण्', 'देवताद्वन्द्वे च', 'इद् वृद्धौ', 'विष्णौ न'–इति पा० ५. २. ६१ ; ७. ३. २१ ; ६. ३. २८ ; वा० १ ।

मन्त्रप्रतिपाद्यदेवताप्रशंसाद्वारेण पुनरपि मन्त्रौ प्रशंसति—"अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ तौ दीक्षाया ईशाते तद्यदाग्नावैष्णवं हविर्भवति यौ दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां यौ दीक्षयितारौ तौ दीक्षयेता मिति"-इति। योऽय मग्निः सर्वेषां देवानां प्रथमः, यश्च विष्णुः सर्वेषा मुत्तमः; तावुभौ देवानां मध्ये दीक्षाख्यस्य च व्रतस्य पालयितारौ। 'तौ' उभौ 'दीक्षायाः' 'ईशाते' स्वामिनौ भवतः। तस्मात् तयोर्दीक्षापालकत्वं युक्तम्। तथा सति यद् अग्नाविष्णुदेवताकं 'हविः' दीक्षणीयेष्टौ 'भवति', तदानीं 'यौ दीक्षायाः' स्वामिनौ देवौ, 'तौ प्रीतौ' यजमानाय 'दीक्षां प्रयच्छताम्'। उक्तस्यैव व्याख्यानं 'यौ दीक्षयितारौ'- इत्यादिकम्। 'इति'-शब्दो ... अभिप्रायपरामर्शार्थः *; अनेनाभिप्रायेणाग्नावैष्णवं हविः क्रिय... ति तस्मान्मन्त्रप्रतिपाद्यावग्नाविष्णू प्रशस्तावित्यर्थः॥

अनेनाभिप्रायेण मन्त्रगतं छन्दः प्रशंसति—"त्रिष्टुभौ ... सेन्द्रियत्वाय"-इति। त्रिष्टुप्छन्दस इन्द्रियसाधनत्वं श्रुत्यन्तरे—"इन्द्रियं वै त्रिष्टुप् † -इति" (तै० ब्रा० १. ७. ६. अतो मन्त्रगतं छन्दो यजमानस्य सेन्द्रियत्वाय भवति॥

अथ मीमांसा। द्वादशाध्यायस्य चतुर्थपादे (जै० सू० ... अधि० २.) चिन्तितम्—

---

* 'इति करणोऽर्थनिर्देशार्थः'-इत्यादि पात० भा० १ अ. १ पा. ६ आह्निके द्रष्टव्यम्। ऋ० प्राति० १. १९। अम० को० ३. ४. ३२. ७। हे० अने० को० ७. २१, २२। मेदि० अव्य० २२, २३।

† तत्र तु त्रिष्टुगिति पाठः। 'गायत्री पुरोऽनुवाक्या भवति, त्रिष्टुग् याज्या'-इति (तै० सं० २. ६. २. ५.) च तद्विधायकं वचनम्।

“पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
परैवाद्या समाख्यानाद्वचनाच्च समुच्चयः ॥

देवताप्रकाशनकार्यस्यैकत्वाद् युग्मयोर्यथाविकल्पः, तथैवैक-युग्मगतयोरिति चेत्, मैवम् ; पुरोनुवाक्येतिसमाख्याया उत्तर-कालीनयाज्या मन्तरेणानुपपत्तेः । किञ्च ‘पुरोऽनुवाक्या मनूच्य याज्यया जुहोति’-इति प्रत्यक्षवचनेन देवतोपलक्षणहविः-प्रकाशनकार्यभेदोक्तिपुरःसरं साहित्यं विधीयते * । तस्मात् समुच्चयः”-इति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

॥ अथ पञ्चमः खण्डः ॥

गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसङ्गायत्री तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गायत्र्यौ कुरुत उष्णिहावायुष्कामः कुर्वीतायुर्वा उष्णिक् सर्वं मायुरेति य एवं विद्वानुष्णिहौ कुरुतेऽनुष्टुभौ स्वर्गकामः

* पुरोऽनुवाक्या देवतास्मरणार्था भवति, याज्या तु हविःप्रदानार्था । तथाहीयं शतपथश्रुतिः—‘ह्वयति वाऽअनुवाक्यया ; प्रयच्छति याज्यया’-इति १. ७. २. १७ । अतएवाश्वलायनेन च सूचितम्—‘सर्वेषा मग्नेऽर्य ऽनुवाक्यास्ततो याज्याः’-इति ३. ७. ३ ।

कुर्वीत द्वयोर्वा अनुष्टुभोश्चतुःषष्टि रक्षराणि त्रय इम उर्ध्वा एकविंशा लोका एकविंशत्यैकविंशत्यैवेमांल्लोकान् रोहति स्वर्ग एव लोके चतुःषष्टितमेन प्रतितिष्ठति प्रतितिष्ठति य एवं विद्वाननुष्टुभौ कुरुते बृहत्यौ श्रीकामो यशस्कामः कुर्वीत श्रीर्वै यशश्छन्दसां बृहती श्रिय मेव यश आत्मन् धत्ते य एवं विद्वान् बृहत्यौ कुरुते पङ्क्ती यज्ञकामः कुर्वीत पाङ्क्तो वै यज्ञ उपैनं यज्ञो नमति य एवं विद्वान् पङ्क्ती कुरुते त्रिष्टुभौ वीर्यकामः कुर्वीतौजो वा इन्द्रियं वीर्यं त्रिष्टुबोजस्वीन्द्रियवान् वीर्यवान् भवति य एवं विद्वांस्त्रिष्टुभौ कुरुते जगत्यौ पशुकामः कुर्वीत जागता वै पशवः पशुमान् भवति य एवं विद्वान् जगत्यौ कुरुते विराजावन्नाद्यकामः कुर्वीतान्नं वै विराट् तस्माद्यस्यैवेह भूयिष्ठ मन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वं वि स्वेषु राजति श्रेष्ठः स्वानां भवति य एवं वेद ||५||

प्रधानस्य हविषो याज्यानुवाक्ये विधाय स्विष्टकृद्रूपस्य यागस्य फलविशेषाय छन्दोविशेषयुक्ते याज्यानुवाक्ये विधातुकामः प्रथमं द्वे ऋचौ विधत्ते—"गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः"-इति। 'स हव्यवाडमर्त्यः'-इत्येका ( सं० ३. ११. २. ) गायत्री, 'अग्निर्होता पुरोहितः'-इत्यपरा

गायत्री ( सं० ३. ११. १. ); ते उभे स्विष्टकृद्यागस्य * संयाज्ये कुर्यात्। कीदृशोऽधिकारी ? तेजः शरीरकान्तिः, ब्रह्मवर्चसं श्रुताध्ययनसम्पत्तिः, तदुभयकामोऽत्राधिकारी। संयाज्यशब्दार्थ माश्वलायन आह— 'स हव्यवाळमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्'-इति ( श्रौ० २. १. २१. )। स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये इत्यर्थः॥

गायत्र्या उक्तफलसाधनत्व मुपपादयति—"तेजो वै ब्रह्मवर्चसङ्गायत्री"-इति। 'तत्सवितुर्वरेण्यम्'-इत्यस्या मृचि ( सं० ३.६२. १०. ) यद्गायत्रीच्छन्दस्तस्य तेजोब्रह्मवर्चससाधनत्वेन तद्रूपत्वं लोके प्रसिद्धम्। स्नानधौतवस्त्रदर्भतिलकधारणपुरःसरं गायत्रीं जपमानस्य ब्राह्मणस्य देहे काचिदाकारशोभा दृश्यते, तदिदं तेजः। स च जानता वेद मधीते तदर्थं च शृणोति, तदिदं ब्रह्मवर्चसम्। वेदनपुरःसर मनुष्ठातुः फलं दर्शयति—"तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गायत्री कुरुते"-इति। यद्यपि विधिवाक्येऽनुष्ठानमात्रात् फल मुक्तम्, तथापि वेदनपूर्वकानुष्ठाने तस्मिन्नेव फले कश्चिदतिशयो द्रष्टव्यः॥

फलान्तराय छन्दोऽन्तरं विधत्ते—"उष्णिहावायुष्कामः कुर्वीत" इति। [ 'अग्ने वाजस्य गोमतः'-इत्येका ( सं० १. ७९. ४. ) उष्णिक्, 'स इधानो वसुष्कविः'-इत्यपरा ( सं० १. ७९. ५. ); ते उभे शतसंवत्सरायुष्कामः कुर्वीत। † ] गायत्र्या अप्यक्षर-

---

* "स्विष्टकृद्यागानुमन्त्रणम् तै० सं० १. ६. २. ४। तद्ब्राह्मणम्, तन्निर्वचनसूचको मन्त्रश्च तत्रैव भाष्ये। स्विष्टकृद्यागविधिस्तु तै० सं० २. ६. ६. ५। तद्विचारास्तु मी० जै० सू० ३. ४, ४२—४५ ; पुनः ४६, ४७ ; ततः ४. १. २८—३२।

† अत्रापरश्च चैवंवक्ष्यमाणीचिह्नान्तःकृतो ग्रन्थः खगयोर्न दृश्यते, परं प्रयोजनीयः।

चतुष्टयेनोष्णिक्छन्दसोऽधिकत्वात् * आयुर्वृद्धिहेतुत्वं युक्त मित्य-भिप्रेत्योष्णिगायुषोरभेद माह—"आयुर्वा उष्णिग्"-इति। पूर्व-वद्वेदनं प्रशंसति—"सर्व मायुरेति य एवं विद्वानुष्णिहौ कुरुते"-इति ॥

फलान्तराय छन्दोऽन्तरं विधत्ते—"अनुष्टुभौ स्वर्गकामः कुर्वीत"-इति। [ 'त्व मग्ने वसून्'-इति द्वे ( सं० १.४५.१,२.) अनुष्टुभौ। ] अनुष्टुभोः स्वर्गहेतुत्व मुपपादयति—"द्वयोर्वा अनु-ष्टुभोश्चतुःषष्टिरक्षराणि त्रय इम ऊर्ध्वा एकविंशा लोका एक-विंशत्यैकविंशत्यैवेमांल्लोकान् रोहति स्वर्ग एव लोके चतुःषष्टितमेन प्रतितिष्ठति"-इति। श्रुत्यन्तरे ( तै० सं० २. ५. [illegible] ३.) "द्वात्रिंशदक्षरानुष्टुप्"-इत्यभिधानात् द्वयोरनुष्टुभोर्मि[illegible] चतुःषष्टिसङ्ख्याकान्यक्षराणि सम्पद्यन्ते †। 'इमे' पृथिव्यन्तरिक्षस्वर्गरूपाः, एकैकस्मादूर्ध्वत्वेन वर्तमानाः, प्रत्येक मेकविंशत्यवयवसमूहरूपाः 'लोकाः' त्रयो विद्यन्ते। तेष्वेकैकं लोकमयोग्य[illegible] काक्षरगतयैकविंशतिसङ्ख्यया यजमानः 'आरोहति', अथित्वशी[illegible] 'चतुःषष्टितमेन' अक्षरेण तृतीये 'स्वर्गे एव लोके' य[illegible] 'प्रतितिष्ठति' स्थिरोऽवतिष्ठते। वेदनं प्रशंसति—"प्रतितिष्ठति य एवं विद्वाननुष्टुभौ कुरुते"-इति ॥

फलान्तराय छन्दोऽन्तरं विधत्ते—"बृहत्यौ श्रीकामो यशस्कामः कुर्वीत"-इति। श्रीर्धनधान्यादिसम्पत्तिः; यशः सत्कुल-

---

* तथाचेदं पिङ्गलसूत्रम्—'चतुरश्चतुरः प्राजापत्यायाः'-इति ३. ११।

† "अनुष्टुबनुष्टोभनात्। 'गायत्री मेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभति'-इति ब्राह्मणम्"-इति निरु० ७. ३. ७। 'द्वात्रिंशदक्षरानुष्टुप् चत्वारोऽष्टाक्षराः समाः'-इति च ऋक्प्राति० १६. १७।

दानादिजन्या कीर्त्तिः। 'एना वो अग्निम्'-इति द्वे (सं० ७. १६. १, २.), ['उदस्य शोचिरस्थात्'-इति (सं० ७. १६. ३.),] बृहत्यौ श्रीयशसोः कारणत्वेन। बृहत्यास्तदुभयरूपत्वं दर्शयति —"श्रीर्वै यशश्छन्दसां बृहती"-इति। गायत्र्यादीनां छन्दसां मध्ये येषा बृहती, सैव श्रीरूपा यशोरूपा च; सर्वेषां छन्दसां पशुसम्पादनसामर्थ्ये सति बृहती विजय माप्ता; पशुरूपत्वाच्छ्री-रूपत्वम्। तथाच तैत्तिरीया आमनन्ति—"छन्दांसि पशुष्वाजि-मयुस्तान् बृहत्युदजयत्तस्माद्बार्हताः पशव उच्यन्ते"-इति (सं० ५. ३. २. ३, ४.)। इतरच्छन्दोभिराश्रितत्वादपि श्रीरूपत्वं त एवामनन्ति—"यानि छन्दांस्यत्यरिच्यन्त, यानि च नोदभवन्, तानि निर्वीर्याणि हीनान्यमन्यन्त, साब्रवीद् बृहती, मा मेव भूत्वा, मा मुपसंश्रयतेति"-इति (तै० ब्रा० १. ५. १२. ३.)। मध्यं ह्येषा सङ्गाना माला, मध्यं छन्दसां बृहतीति मध्यत्वेन प्रशंसनाद्यशोरूपत्व मपि द्रष्टव्यम्। वेदनं प्रशंसति—"श्रिय मेव यश आत्मन् धत्ते य एवं विद्वान् बृहत्यौ कुरुते"-इति। 'एव'-कारः श्रीयशसोः समुच्चयार्थः॥

यज्ञीनसत्वादुत्तरयज्ञप्राप्तिकामस्य छन्दोऽन्तरं विधत्ते—"पङ्क्ती यज्ञकामः कुर्वीत"-इति। 'अग्निं तं मन्ये'-इति द्वे (सं० ५. ६. १, २.) पङ्क्ती। यज्ञस्य पङ्क्तिसम्बन्धित्वं दर्शयति—"पाङ्क्तो वै यज्ञः"-इति। ['वै'-शब्दो वक्ष्यमाणबहुविध-पाङ्क्तत्वप्रसिद्धिप्रदर्शनार्थः। वेदनं प्रशंसति—"उपैनं यज्ञो नमति य एवं विद्वान् पङ्क्ती कुरुते"-इति]॥

वीर्यप्राप्त्यर्थं छन्दोऽन्तरं विधत्ते—"त्रिष्टुभौ वीर्यकामः कुर्वीत"-इति। 'द्वे विरूपे चरतः'-इति द्वे (सं० १. ९५. १, २.)

त्रिष्टुभौ। त्रिष्टुप्छन्दसो वीर्यसाधनत्वेन तद्रूपत्वं दर्शयति—"ओजो वा इन्द्रियं वीर्यं त्रिष्टुप्"–इति। वीर्यं शरीरबलम्। तच्चौजस इन्द्रियस्य चोपलक्षणम्। ओजो बलहेतुरष्टमो धातुः*, इन्द्रियं चक्षुरादिपाटवम्। वेदनं प्रशंसति—"ओजस्वीन्द्रियवान् वीर्यवान् भवति य एवं विद्वांस्त्रिष्टुभौ कुरुते"–इति॥

गवादिपशुप्राप्तये छन्दोऽन्तरं विधत्ते—"जगत्यौ पशुकामः कुर्वीत"–इति। 'जनस्य गोपाः'–इति द्वे ( सं० ५. ११. १, २ ) जगत्यौ। पशूनां जगतीच्छन्दःसाध्यत्वेन तत्सम्बन्धं दर्शयति—"जागता वै पशवः"–इति। वेदनं प्रशंसति—"पशुमान् भव[ति] य एवं विद्वान् जगत्यौ कुरुते"–इति॥

अत्तुं योग्यमन्नं कामयमानस्य छन्दोऽन्तरं विधत्ते—"वि[रा]जावन्नाद्यकामः कुर्वीत"–इति। 'प्रेद्धो अग्ने', 'इमो अग्ने'–इति द्वे ( सं० ७, १. ३, १८. ) विराजौ†। अन्नस्य विराजनहेत[ु]स्तु विराड्रूपत्वमाह—"अन्नाद्यकामः कुर्वीतान्नं वै विराट्"–इ[ति] ... तदेव स्पष्टयति—"तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति, ... भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वम्"–इति। ... दन्नस्य विराजनहेतुत्वम् 'तस्मात्' कारणाद् 'इह' लोके ... पुरुषस्य 'अन्नं' प्रभूतं 'भवति', 'स एव' जनमध्ये ... शोभते। तस्माद्विराजत्यनेनेति व्युत्पत्त्या विराट्शब्दो नि...

* निघ० २. ९. १। अम० को० ३. ४. २३५। हे० अने० २. ५७७। मेदि० ... १९। छा० उप० ३. १३. ५। शु० य० १. ४. १३; २१. १०। 'ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते'–इति च साहित्यदर्पणे। 'ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः। ओजो बले च दीप्तौ च'–इति विश्वः ३. १९.। रघु० ५. ३७।

† 'प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावविच्युता एते प्रतीयात्' आश्व० श्रौ० २.१.३०।

वेदनं प्रशंसति—"वि स्वेषु राजति श्रेष्ठः स्वानां भवति य एवं वेद"–इति। 'यः पुमान् विराजो महिमानं वेत्ति, सः पुमान् स्वकीयेषु ज्ञातिषु मध्ये विशेषेण 'राजति' लौकिकसामर्थ्येन शोभते; तथा स्वीयानां ज्ञातीनां मध्ये वृत्तविद्याविनयादिभिः 'श्रेष्ठः' भवति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

॥ अथ षष्ठः खण्डः ॥

अथो पञ्चवीर्यं वा एतच्छन्दो यद्विराड् यत्त्रिपदा तेनोष्णिहा गायत्र्यौ यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुब् यत्त्रयस्त्रिंशदक्षरा तेनानुष्टुब् न वा एकेनाक्षरेण छन्दांसि वियन्ति * न द्वाभ्यां यद्विराट् तत्पञ्चमं सर्वेषां छन्दसां वीर्यमवरुन्धे सर्वेषां छन्दसां वीर्यमश्नुते सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकताम् अश्नुतेऽन्नादोऽन्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं विद्वान् विराजौ कुरुते तस्माद् विराजावेव कर्त्तव्ये प्रेद्धो अग्न इमो अग्न इत्येते ऋतं

* 'छन्दांसि यन्ति' ग।

वाव दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्यमेव वदितव्यमथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीत्येतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षु-स्तस्मादाचक्षाण माहुरद्रागिति स यद्यदर्श मित्या-हाथास्य श्रद्दधति यद्यु वै स्वयं पश्यति न बहूनां च-नान्येषां श्रद्दधाति तस्माद्विचक्षणवतीमेव वा[चमे]व वदेत्सत्योत्तरा हैवास्य वागुदिता भवति भवति ॥ [६॥]

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां प्रथमोऽध्याय[ः ॥]

काम्ये संयाज्ये नानाविधे विधाय नित्ये संयाज्ये [...] विराट् छन्दः प्रशंसति—"अथो पञ्चवीर्यं वा एतच्छन्दो यद्वि[राट्]"--इति। 'अथो' काम्यसंयाज्याकथनानन्तरं नित्ये संयाज्ये ते [...] इति शेषः। विराडाख्यं यच्छन्दोऽस्ति, 'एतच्छन्दः' पञ्चविध-वीर्यो-पेतत्वेन प्रसिद्धम्। तदेव विस्पष्टयति—"यत्त्रिपदा तेनोष्णि[ग्]गायत्र्यौ यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुब् यत्त्रय-स्त्रिंशदक्षरा तेनानुष्टुभ् न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यां यद्विराट् तत्पञ्चमम्"--इति। यस्मात्कारणादियं विराट् पादत्रयोपेता 'तेन' कारणेनोष्णिग्रूपा गायत्रीरूपा च भवति; तयोरपि पादत्रयोपेतत्वेन समत्वात्। अतस्तयोः उभयोर्वीर्यं

विराज्यस्ति । यस्मात्कारणाद् 'अस्याः' विराजः पादा एकादशा-
क्षरोपेताः, 'तेन' कारणेनेयं 'त्रिष्टुप्' रूपा भवति ; तदीयं वीर्यं
प्राप्नोति । यस्मात्कारणादियं 'त्रयस्त्रिंशदक्षरा' विराडिति श्रूयते,
—तत्र, 'प्रेद्धो अग्ने'—इत्यस्या ऋचि ( सं० ७. १. ३. ) एकोन-
त्रिंशदक्षराणि, 'इमो अग्ने'-इत्यस्या ऋचि ( सं० ७. १. १८. )
द्वात्रिंशदक्षराणि ; अतस्तयोः न विराट्त्व मिति चेत्, मैवम् ;
'न वा एकेनाक्षरेण'-इति वाक्येनैव परिहृतत्वात् *। यस्मात्
'विराट्', तस्मादेतदीयं 'पञ्चमं' वीर्य मस्ति ।

एवंविधविराड्वेदनं प्रशंसति—"सर्वेषां छन्दसां वीर्य मव-
रुन्धे, सर्वेषां छन्दसां वीर्य मश्नुते, सर्वेषां छन्दसां सायुज्यं सरू-
पतां सलोकता मश्नुते, ऽन्नादोऽन्नपतिर्भवत्यश्नुते, प्रजयान्नाद्यं य
एवं विद्वान् विराजौ कुरुते"-इति । गायत्र्युष्णिक्त्रिष्टुबनुष्टुब्-
त्वरूपाणां 'सर्वेषां छन्दसां' यत्सामर्थ्य मस्ति, तदयं वेदिता
'आनरुन्धे' अभिमुखीकरोति ; कृत्वा च 'अश्नुते' प्राप्नोति । तथा
सर्वच्छन्दोभिमानिदेवानां 'सायुज्य' सहभावं, 'सरूपतां' समान-
रूपत्वं, 'सलोकताम्' एकस्थाननिवासञ्च प्राप्नोति । 'अन्नादः'
अन्नभक्षणसमर्थो नीरोगः, 'अन्नपतिः' बह्वन्नस्वामी 'भवति' । न
केवलं स्वय मेव ; किं तु स्वकीयया पुत्रादिप्रजया सह 'अन्नाद्यम्
अश्नुते' ॥

इत्थं छन्दः प्रशंस्येदानीं विधत्ते—"तस्माद्विराजावेव कर्त्तव्ये"

---

* वस्तुतः त्रिंशदक्षरैव विराट् सर्ववेदप्रसिद्धा ; तथा ह्याम्नातं तैत्तिरीयैः स्फुटम्—'त्रिंशदक्षरा विराट्'-इति ( सं० २. ५. १०. ३. )। 'विराजो दिशः'-इति ( ४. ५. ) च वैदिकछन्दःसूत्रं तदनुगतम् । इह त्वस्या एकाक्षरन्यूनत्वेन छन्दःशास्त्रमते निचृदिति विशेषणान्वितं विराट्त्व मपरायास्तु स्वराड्विशेषणान्वित मिताभिप्रायः (पि० ६.१९,२०.)।

—इति। यस्माद्विराजो ह्युत्तमहिमास्ति तस्मादित्यर्थः। तयोः प्रतीकद्वयं दर्शयति—'प्रेद्धो अग्ने', 'इमो अग्ने'—इत्येते इति॥

दीक्षणीयेष्टौ स्विष्टकृतः संयाज्ये विधाय दीक्षितस्य सत्यवदनं विधत्ते—"ऋतं वाव दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्य मेव वदितव्यम्"—इति। मनसा यथावस्तुचिन्तन मृतशब्दाभिधेयम्; वाचा यथावस्तुकथनं सत्यशब्दाभिधेयम्। तदुभयात्मिका दीक्षा; तद्वैकल्ये विनश्यति। यस्मादेवं 'तस्माद्दीक्षितेन सत्य मेव वदितव्यम्' न तु किञ्चिदप्यनृतं वदेत्। तदशक्याभिधान मित्यनुजिघृक्षया प्रकारान्तरं विधातुं प्रस्तौति—"अथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति"—इति। प्रकारान्तरारम्भार्थोऽयम् 'अथो' इति शब्दः। ब्रह्मवादिन एवम् 'आहुः'—'खलु मनुष्यः कः' 'सर्वं' वाक्यं 'सत्यं' वदितु मर्हति?' न कश्चिदपि तथा शक्नोति; 'देवाः' एव 'सत्यसंहिताः' सत्ये तात्पर्ययुक्ताः। 'इति' शब्दो ब्रह्मवादिवचनसमाप्त्यर्थः॥

इदानीं सत्यवदनफलसिध्यर्थं प्रकारान्तरं विधत्ते—"विचक्षणवतीं वाचं वदेद्"—इति। विचक्षणेत्यक्षरचतुष्टयात्मको मन्त्रः; तद्युक्तं वाक्यं प्रयुञ्जीत—देवदत्त विचक्षण! गां मोचय; यज्ञदत्त विचक्षण! गां वधानेत्येवं तत्प्रयोगः। तदाहापस्तम्बः—'चनसितं विचक्षण मिति नामधेयान्तेषु निदधाति; चनसितेति ब्राह्मणं विचक्षणेति राजन्यवैश्यौ'—इति (१०.१२.७,८)*।

* "चनसितं विचक्षण मिति च प्रतिपदिकनिर्देशः, न विभक्तिर्विवक्षिता। एतद्दर्शयति 'चनसितेति ब्राह्मणम्—'आमन्त्रयेतेति शेषः। आमन्त्रयेतेत्येव भारद्वाजः। 'तद्यथा देवदत्त चनसित! मित्रपाल विचक्षण!"—इति तट्टीका। 'विचक्षण-चनसितवतीं वाचम्'—इति च कात्या० श्रौ० ७. ५. ७।

विचक्षणेतिमन्त्रस्य सत्यवदनपूर्तिहेतुत्वं प्रतिपादयति—"चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीति"–इति। चक्षुरिन्द्रियमेव विचक्षणशब्दवाच्यम्, तदेव स्पष्टीक्रियते—'चक्षिङ् दर्शने (अदा० ७.)'—इत्यस्माद्धातोरयं शब्दो निष्पन्नः; तथा सति विशेषेण वस्तुतत्त्व मनेनाचष्टे 'पश्यतीति विचक्षणं' नेत्रम्। तस्माच्चक्षुर्विचक्षण मिति पर्यायौ। उक्तनिर्वचनप्रदर्शनार्थः 'इति'-शब्दः।

अस्त्वेवं तयोः पर्यायत्वम्, कथ मेतावता सत्यसम्पूर्तिसिद्धि-रित्याशङ्क्याह—"एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः"–इति। लोकेऽनुमानादिप्रमाणानां * मध्ये प्रत्यक्षप्रमितिसाधनं 'यच्चक्षुः' इन्द्रिय मस्ति, 'एतद्' एव 'मनुष्येषु' सर्वेषु सत्यं 'निहितं' यथा-वस्तुज्ञानसाधनत्वेनाभिमतम्; तस्माच्चक्षुःपर्यायविचक्षणशब्दप्रयोगेण सत्यसम्पूर्तिर्भवति। अन्वयव्यतिरेकाभ्यां चक्षुषां यथावस्तुदर्शन-साधनत्वं साधयति—"तस्मादाचक्षाण माहुरद्रागिति स यद्यदर्श मित्याहाथास्य श्रद्दधति यद्युवै स्वयं पश्यति न बहूनाञ्चनान्येषां श्रद्दधाति"–इति। यस्माच्चक्षुस्तत्त्वदर्शनहेतुत्वं मनुष्याणा मभिप्रेतं 'तस्मात्' लोके सभाया मागत्य काञ्चिद्वार्ताम् 'आचक्षाणं' पुरुष प्रति सभ्या एवम् 'आहुः'—'अद्राग़िति'; किं त्व मेव मद्राक्षीः? इत्यर्थः। 'सः' च पुरुषो 'यदि' अह मेव मद्राक्ष मिति ब्रूयात्, तदा 'अस्य' वचनं सत्य मिति सभ्याः सर्वे 'श्रद्दधति' विश्वासं कुर्वन्ति। तदिद मेक मुदाहरणम्। 'यदि-उ-वै'–इत्ययं निपातसमूहः उदा-

---

* 'स्मृतिः प्रत्यक्ष मैतिह्य मनुमानश्चतुष्टयम्'–इति तै० आर० १. २. १। 'तदेतत् स्मृत्यादिचतुष्टयमवगतिकारणभूतं (धर्मस्य) प्रमाणम्'–इति तद्भाष्यम् सा०। 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'–इति गौ० सू० १. १. ३।

हरणान्तरप्रदर्शनार्थः । अथवा कश्चित् पुमान् 'स्वयम्' एव चक्षुषा स्कन्धमूलादुपेतं स्थाणुं 'पश्यति'; अन्ये बहवः पुरुषाः दूरवर्त्तिनो * पश्यन्तः पुरुषोऽय मित्याचक्षते । 'चन'-शब्दोऽपिशब्दार्थः; 'बहूनाम्' अपि 'अन्येषां' वचन मयं पुरुषो 'न श्रद्दधाति' किन्तु स्वकीयं चाक्षुषदर्शन मेव श्रद्दधाति । वाजसनेयिनोऽप्यामनन्ति—"द्वौ विवदमानावेयाताम् अह मदर्श मह मश्रौष मिति; य एव ब्रूयादह मदर्श मिति, तस्मा एव श्रद्दध्याम"-इति ( शत० ब्रा० १. ३. १. २७. ) † । तैत्तिरीयाश्चामनन्ति—"अनृतं वाचा वदति अनृतं मनसा ध्यायति, चक्षुर्वै सत्य मद्राक्षमित्याह मदर्श मिति तत्सत्यम्"-इति ‡ ॥

तथाविधचक्षुःपर्यायस्य विचक्षणशब्दस्य सत्यसम्पूर्तिहेतुत्व मुपपाद्य पूर्वोक्तं विधि मुपसंहरति—"तस्माद्विचक्षणवतीमेव वाचं वदेत्सत्योत्तरा हैवास्य वागुदिता भवति भवति"-इति । 'अस्य' विचक्षणशब्दोपेतवचनवादिनो § या 'वाग्' अस्ति सा

---

* 'बहवः पुरोवर्त्तिनो' ख, ग ।

† 'चक्षुषा वै सम्राट् पश्यन्त माहुरद्राक्षीरिति स आहाद्राक्ष मिति तत् सत्यं भवति'-इति च पुनस्तत्रैवोपरिष्टात् १४. ६. १०. ९ = बृ० उप० ४. १. ४ ।

‡ 'नानृतं वदेत्'-इति ( तै० सं० २. ५. ५. ६. ) विधौ विचारितं च मीमांसायाम् जै० सू० ३. ४. १२, १३ । तदधिकरणं चोद्धृतं स-व्याख्यानं तत्रैव तैत्तिरीयसंहिताभाष्ये सायणेन 'अनृतं न वदेद्दोषः पुंधर्मो वागुवादगीः'-इत्यादि ( जै० अधि० मा० ३. ४. ४. ) ।

§ अस्मन्मते तु 'विचक्षणवती मेव वाचं वदेत्'—इत्यस्य वचनस्य हि दृष्टविषयमात्रकथन-विधानेऽदृष्टविषयकथननिषेधे च तात्पर्यम्; विचक्षणेतिमन्त्रयुक्तमिथ्याकथनेऽपि न दोष इति नाभिप्रेतो ब्राह्मणस्य इति । चनसितविचक्षणान्वितनामधेयग्रहणस्य विधानन्तु इतः पृथक् ( आप० श्रौ० १०. १३. ७, ८; कात्या० श्रौ० ७. ५. ७; लाट्या० श्रौ० ३. ३. १४. ) दीक्षितधर्मान्तर मिति दिक् ।

'सत्योत्तरा' स्वरूपेणानृतापि विचक्षणेतिमन्त्रसामर्थ्येन सत्यभूयिष्ठा एव भवति ; अनृतदोषो न स्पृशतीत्यर्थः ॥ 'भवति'-शब्दस्याभ्यासोऽध्यायसमाप्त्यर्थः * ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः प्रथमोऽध्यायः ॥

---

* दीक्षणीयेष्टिरेव सर्वेष्टिमूलम्। वक्ष्यति हि 'दीक्षणीयेष्टिस्तायते तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोमं सपियन्ति'—इति ( ३. ४. २. )। सैषा प्रथमेष्टिः शतपथब्राह्मणस्य तृतीये काण्डे प्रथमाध्यायतो द्वितीयाध्यायीय-द्वितीयब्राह्मणान्तं यावच्छ्रूयते, तैत्तिरीये सांहितिकब्राह्मणे च ६ का० १ प्र० १–४ अनु०। एवम् आश्व० श्रौ० ४. २. १—१७। तथा 'दीक्षणीयायास्तन्त्रं प्रक्रमति'—इत्यादि आप० श्रौ० १०. ४—२०.। कात्या० श्रौ० सप्तमाध्यायस्य प्रथमकण्डिकातः पञ्चमकण्डिकाया द्वादशसूत्रं यावत्। अपि तत्राद्यकण्डिकायाः सप्तमसूत्रस्य वृत्तौ याज्ञिकदेवेन दीक्षितधर्माः कतिचित् सङ्गृह्य प्रदर्शिताः॥

# ॥ अथ द्वितीयाध्यायः ॥

( तत्र )

## ॥ प्रथमः खण्डः ॥

---

॥ ओं ॥ स्वर्गं वा एतेन लोक मुपप्रयन्ति यत्प्रा
यणीयस्तत्प्रायणीयस्य प्रायणीयत्वम् प्राणो वै प्राय
णीय उदान उदयनीयः समानो होता भव
समानौ हि प्राणोदानौ प्राणानां कॢप्त्यै प्राणा
प्रतिप्रज्ञात्यै यज्ञो वै देवेभ्य उदक्रामत् ते दे
न किञ्चनाशक्नुवन् कर्तुं न प्राजानंस्तेऽब्रुवन्नदि ॥
त्वयेमं यज्ञं प्रजानामेति सा तथेत्यब्रवीत्सा वै
वरं वृणा इति वृणीष्वेति सैत मेव वर मवृ
मत्प्रायणा यज्ञाः सन्तु मदुदयना इति त
तस्मादादित्यश्चरुः प्रायणीयो भवत्यादित्य उदय
वरवृतो ह्यस्या अथो एतं वर मवृणीत
प्राचीं दिशं प्रजानाथाग्निना दक्षिणां
प्रतीचीं सवित्रोदीची मिति पथ्यां यजति यत्पथ्यां
यजति तस्मादसौ पुर उदेति पश्चास्त मेति पथ्यां
ह्येषोऽनुसञ्चरत्यग्निं यजति यदग्निं यजति तस्मा-
द्दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्त्याग्नेय्यो

ह्योषधयः सोमं यजति यत्सोमं यजति तस्मात् प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते सौम्या ह्यापः सवितारं यजति यत्सवितारं यजति तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः पवते सवितृप्रसूतो ह्येष एतत्पवत उत्तमा मदितिं यजति यदुत्तमा मदितिं यजति तस्मादसाविमां वृष्ट्याभ्युनत्त्यभिजिघ्रति पञ्च देवता यजति पाङ्क्तो यज्ञः सर्वा दिशः कल्पन्ते कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति ॥ १ ॥

प्रथमे दीक्षणीयेष्टिस्तत्स्तुतिस्तत्र संस्कृतिः ।
याज्यानुवाक्ये संयाज्याः सत्योक्तिश्चेति वर्णिताः ॥

अथ प्रायणीयादिकं * विधातुं द्वितीयोऽध्याय आरभ्यते । तत्रादौ प्रायणीयशब्दार्थं वदति—"स्वर्गं वा एतेन लोक मुपप्रयन्ति यत्प्रायणीयस्तत्प्रायणीयस्य प्रायणीयत्वम्"–इति । प्रायणीयाख्यो यः कर्म्मविशेषोऽस्ति, 'एतेन' यजमानाः 'स्वर्गं लोकं' सामीप्येन प्राप्नुवन्ति । तस्मात्प्रयन्त्यनेनेतिव्युत्पत्त्या तत्प्रायणीयनाम सम्पन्नम् ॥

---

* 'दीक्षान्ते प्रायणीयम्' का० श्रौ० ७. ५. १३ । 'दीक्षान्ते राजक्रयः । तदहः प्रायणीयेष्टिः' आश्व० श्रौ० ४. २. १८ ; ३. १ । 'दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहः, तस्मिन्नहनि राजक्रयः कर्त्तव्यः ; सोमः क्रेतव्य इत्यर्थः । यस्मिन्नहनि सोमः क्रीयते, तदहः प्रायणीया नामेष्टिः कार्या'–इति तट्टीका गा० ना० ।

अथ विधास्यमानौ प्रायणीयोदयनीयाख्यौ कर्म्मविशेषौ स्तः; तौ सह प्रशंसति—"प्राणो वै प्रायणीय उदान उदयनीयः समानो होता भवति; समानौ हि प्राणोदानौ प्राणानां क्लृप्त्यै प्राणानां प्रति-प्रज्ञात्यै"-इति। प्राणवायोः प्रायणीयकर्म्मणश्च प्र-शब्दसाम्याद-भेदः; उदानवायोरुदयनीयकर्म्मणश्चोच्छब्दसाम्यादभेदः। किञ्च प्रायणीयोदयनीययोः कर्म्मणोर्याज्यानुवाक्यादिप्रयोगार्थ मेक एव होता भवति; प्राणोदानवायू चैकदेहवर्त्तित्वादेकेन होत्र[illegible] छेयाभ्यां कर्म्मभ्यां समानौ; अतो वायुविशेषयोश्चाभेदः। [illegible] कर्मद्वयानुष्ठानं प्राणवायूनां क्लृप्त्यै स्वस्वव्यापारसामर्थ्याय भवति तथा प्राणवायूनां प्रत्येकम्, अयं प्राणो अय मुदान इत्यादि वि[illegible] षस्य प्रज्ञानाय भवति। तस्मात्कर्म्मद्वयं प्रशस्त मित्यर्थः * [illegible]

अथ देवताविशेषविधानायाख्यायिका मुपक्रमते—"[illegible] देवेभ्य उदक्रामत्ते देवा न किञ्चनाशक्नुवन् कर्तुं न प्रा[illegible] ऽब्रुवन्नदितिं त्वयेमं यज्ञं प्रजानामेति सा तथेत्यब्रवीत्स[illegible] वरं वृणा इति; वृणीष्वेति सैत मेव वर मवृणीत मत्प्रायणा[illegible] सन्तु मदुदयना इति, तथेति; तस्मादादित्यश्चरुः प्रायणी[illegible] त्यादित्य उदयनीयो वरवृतो ह्यस्यै"-इति। योऽयं 'यज्ञः' [illegible] यागाभिमानी पुरुषः, सोऽयं केनापि निमित्तेनापरक्तः [illegible] सकाशादुपक्रम्य गतवान्। यज्ञपुरुषे गते सति 'ते देवाः' वि[illegible] यज्ञाङ्गं 'कर्त्तुं' शक्तिरहितास्तदभिज्ञानरहिताश्चाभवन्। त[illegible] सर्वे समागत्य 'अदितिं' प्रार्थितवन्तः। हे अदिते! त्वत्प्रसादेन वयम् 'इमं यज्ञं' कर्तुं ज्ञातुं च शक्ताः भूयास्मेति। ततोऽदितिरङ्गीकृत्य

---

* 'द्वे शीर्षे प्रायणीयोदयनीये (यज्ञस्य)'-इति निरु० १३.१.७। 'शिरो वै यज्ञस्यातिथ्यम्, बाहू प्रायणीयोदयनीयौ' शत० ब्रा० ३. २. २. २०। 'आतिथ्येष्टिं' तृतीयेऽध्याये वक्ष्यति।

ज्ञापयितु मुक्ता चरुरूपेण 'एतं वर मवृणीत',—ये सोमयागास्ते सर्वे 'मत्प्रायणा:' मदुपक्रमा:; 'मदुदयना:' मदवसानाश्च 'सन्त्विति'। तस्य वरस्य देवैरङ्गीकृतत्वात् प्रायणीय: प्रारम्भकालीनेष्टिगतश्चरुरदितिदेवताक: कर्तव्य: ; उदयनीय: समाप्तकालीनोऽपि चरुरदितिदेवताक: कर्तव्य: *। यस्मादस्या अदितेस्तादृगश्चरुर्वरेण प्रार्थित:, तस्मात्तथानुष्ठानं युक्तम् †। त मिम मर्थं तैत्तिरीयाआमनन्ति—"देवा वै देवयजन मध्यवसाय दिशो न प्राजानन् तेऽन्योऽन्य मुपाधावन् त्वया प्रजानाम त्वयेति तेऽदित्याᳫ समभ्रियन्त त्वया प्रजानामेति साब्रवीद्वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना आसन्निति तस्मादादित्य: प्रायणीयो यज्ञाना मादित्य उदयनीय:"–इति ( सं० ६. १. ५. १. )।

अदितिर्वरान्तरं दर्शयति—"अथो एतं वर मवृणीत, मयैव प्राचीं दिशं प्रजानाथाग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमिति"–इति। 'अथो' अपिचेत्यर्थ:। मयेत्यादिना वर: प्रपञ्च्यते ; हे देवा: ! यूय मिदं देवयजनं समीचीन मित्येवं बहुधा विचारयन्त: तदर्थं बहुषु देशेषु पर्यटन्तो दिग्भ्रमं प्राप्य प्राच्यादि

* तदेवं प्रायणीयेष्ट्या सोमयाग आरभ्यते, उदयनीयेष्ट्या च स समाप्यते इति व्यक्तम्।

† अदितिदेवता 'अदितिरदीना देवमाता'–इत्यादिना, 'अदितिर्दाक्षायणी:'–इत्यादिना ( ४. ४. २ ; ११. ३. २. ) च निरुक्ते व्याख्याता। 'अग्निरप्यदितिरुच्यते'–इति च ( ११. ३. २. ) तत्रैव। इतो ज्ञायते अस्ति काचिदखण्डनीया ज्योति:स्वरूपा ऐशी शक्ति: ; सैवास्य जगतो जननि:, सैवादिति:, सैव वेदान्तिनां माया, साङ्ख्यज्ञानां प्रकृतिश्चेति। अत: सर्व एवेमे भावा आदित्या एव, तत्र मुख्य: सूर्य इति तत्रादित्यशब्दो योगरूढ:। कश्यपश्चेश्वर:; 'कश्यप: पश्यको भवति ; यत्सर्वं परिपश्यतीति सौक्ष्म्यात्'–इति हि तै० आर० १, ८, २१। अतएव च कश्यपप्रजापते: पत्नी अदिति:, तयो: कृतिश्चैषा सृष्टिरिति पौराणिका: स्त्रीशूद्रद्विजबन्धूनुपदिशन्ति। ऋ० सं० १,८९,१० ; १०,७२,८,९ ; तै० सं० ६.५.६, द्र०।

दिशं न ज्ञातवन्तः, अतो भवतां दिग्विशेषज्ञापनाय अहं मन्नि: सोमः सविता चेत्येते चत्वारः चतुर्षु देशेषु अवस्थिताः। तथा सति यत्राहं मन्नि सा प्राची दिगित्येवं 'मयैव प्राचीं दिशं' बुध्यध्वम्। एव मन्नादिभिः दक्षिणादयस्तिस्रो दिशो बोद्धव्याः। इत्येष द्वितीयो वरः। एते देवा अनेन चरुणा तत्र तत्र यष्टुं योग्या इति तात्पर्यार्थः * ॥

तत्र प्रथमं यागं विधत्ते—"पथ्यां यजति"–इति। पथ्येति देवताया नामधेयम् †। यद्यपि शाखान्तरे "पथ्यां स्वस्तिं य... प्राचीमेव तया दिशं प्रजानाति"–इति (तै० सं० ६. १. ५. ... पथ्यास्वस्तिरित्येतं नामधेय माम्नातम्, तथापि भीमशब्दवन्नामै... देशेनात्र व्यवहारः। ननु पूर्वत्र "मयैव प्राचीं दिशं प्रजान... इत्यदितेर्वाक्य माम्नातम्, इह तु पथ्यां यजतीत्युक्तौ पूर्व... विरोधः? इति चेत्, नायं दोषः; अदितिदेवताया एव प... सूर्त्यन्तर मिति वक्तुं शक्यत्वात् ॥

उक्तं विधि मनूद्य प्रशंसति—"यत्पथ्यां यजति तस्मादसौ पुर उदेति पश्चास्त‡ मेति पथ्यां ह्येषोऽनुसञ्चरति"–इति। 'यद्' ... कारणात् पूर्वस्यां दिश्यवस्थितां 'पथ्यां' देवतां 'यजति', ... कारणाद् 'असौ' आदित्यः 'पुरः' 'पूर्वस्यां दिशि' '...उदेति',

---

* अस्याः श्रुतेर्दिगुपदेशे एव वा स्यात् तात्पर्यम्।

† 'पथ्या स्वस्तिः— पन्था अन्तरिक्षम्, तन्निवासात्'–इति, तन्निगम-गत-'देवगोपा'–इतेत्रतत्पदस्य व्याख्यानाय च पुनः 'देवी गोपत्री, देवान् गोपायत्विति, देवा एना गोपायन्त्विति वा'–इति च निरु० ११. ४. ११, १२। 'देवाः— माध्यमिका द्युस्थाना वा रश्मयः'–इति च तट्टीका। तदित्थ मन्तरिक्षस्थिता कल्याणसत्ता एव 'पथ्या स्वस्ति'–इति गम्यते।

‡ 'पथ पथा च च्छन्दसि'—इति पा० ५. ३. ३३।

'पश्चात्' * पश्चिमायां दिशि 'अस्त मेति'; 'हि' यस्मात् कारणाद् 'एषः' आदित्यः पथ्याख्यां देवताम् 'अनुसृत्य 'सञ्चरति', तस्मात् पूर्वापरयोरुदयास्तमयावुपपन्नौ। न च पूर्वदिशः पथ्यासम्बन्धेऽपि पश्चिमदिशः स नास्तीति वाच्यम्; उदयनीयायां पश्चिमदिशि पथ्याया यक्ष्यमाणत्वात्। द्वयोर्दिशोस्तत्सम्बन्धे सति आदित्यस्य तदनुसञ्चारो युक्तः॥

दक्षिणदिग्वर्तिनोऽग्नेर्यागं विधत्ते—"अग्निं यजति"-इति। तं विधि मनूद्य प्रशंसति—"यदग्निं यजति तस्माद्दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्त्याग्नेय्यो ह्योषधयः"--इति। यस्मा-[illegible]देवानां दिग्विशेषज्ञापनाय दक्षिणदिश्यवस्थितम् 'अग्निं' [illegible]', 'तस्मात्' कारणाद् विन्ध्यपर्वतस्य दक्षिणभागे व्रीह्याद्योषधयः 'अग्रे पच्यमानाः' 'आयन्ति' तत्तत्स्वामिगृहेष्वागच्छन्ति। विन्ध्यस्योत्तरभागे यवगोधूमचणकादिधान्यप्राचुर्यम्, तानि च धान्यानि माघफाल्गुनयोः पच्यन्त इति पश्चाद्भावीनि; दक्षिणदिग्भागे तु यवादिप्राचुर्याभावात् प्राचुर्याणि च व्रीह्यादीनीति कार्तिकमार्गशीर्षयोः पच्यमानत्वादग्रे पाकोऽभिहितः। 'हि' यस्मात् कारणाद् 'ओषधयः आग्नेय्यः' आसां पाकस्याग्न्यधीनत्वात्। यथौदनरूपेण बाह्यपाकोऽग्न्यधीनः, एवं बीजरूपेण सस्यपाकोऽपि तदन्तर्वर्त्यग्न्यधीन इति द्रष्टव्यम्। तस्मादग्निसम्बन्धिन्यां दक्षिणस्यां दिशि अग्रे पाको युक्तः॥

पश्चिमदिश्यवस्थितस्य सोमस्य यागं विधत्ते—"सोमं यजति" -इति। तं विधि मनूद्य प्रशंसति—"यत्सोमं यजति, तस्मात्

* अस्मद्दृष्टेषु सर्वेष्वेव मूलपुस्तकेषु 'पश्चास्तमेति'-इत्येवंविध एव पाठः; ततोऽत्र पश्चेतिप्रतीकग्रहण मेव न्याय्यम्।

प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते ; सौम्या ह्यापः”–इति। यस्माद् ‘आपः’ सोमसम्बन्धिन्यः, सोमस्यामृतकिरणत्वात्, तस्मात् ‘बह्व्यः आपः’ ‘प्रतीच्योऽपि’ प्रत्यङ्मुखोऽपि सत्यः ‘स्यन्दन्ते’; पश्चिमसमुद्रसमीपे प्रवहन्तीनां नदीनां पश्चिमाभिमुखत्वदर्शनात्। सोमस्याव पश्चिमदिश्यवस्थितेन तदीयाना मपां तन्मुखत्वं युक्तम् ॥

उत्तरदिश्यवस्थितस्य सवितुर्यागं विधत्ते—“सवितारं यजति” –इति। तं विधि मनूद्य प्रशंसति—“यत्सवितारं यजति, तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः पवते ; सवितृप्रसूतो ह्येष एतत्पवते”–इति। सविता प्रेरको देवः। सोऽत्र यस्माद् उत्तरस्यां दिश्यवतिष्ठते, ‘तस्मात्’ तेन सवित्रा प्रेरितो वायुरुत्तरपश्चिमयोरन्तरालवर्त्तिन्यां, वायव्यां दिशि ‘भूयिष्ठं पवते’ अत्यर्थं सञ्चरति ॥

ऊर्द्ध्वदिग्वर्त्तिन्या अदितेर्यागं विधत्ते—“उत्तमा म[illegible]दितिं यजति”–इति। ‘उत्तमाम्’ ऊर्द्ध्वावस्थिता मित्यर्थः। अतएव [illegible] तैत्तिरीया आमनन्ति—“पथ्याꣳ स्वस्ति मयजन् प्राची मेव [illegible] तया दिशम् प्राजानन्नग्निना दक्षिणां सोमेन प्रतीचीꣳ सवित्र[illegible]दीची मदित्योर्ध्वाम्”–इति ( सं० ६. १. ५. २. )। उक्तं विधि[illegible] मनूद्य प्रशंसति—“यदुत्तमा मदितिं यजति तस्मादसाविमां वृ[illegible]ष्टाभ्युनत्त्यभिजिघ्रति”–इति। यस्मादूर्द्ध्वदिग्वर्त्तिनी अदितिः, ‘तस्माद्’ ऊर्द्ध्वदिग्वर्त्तिनी द्यौः ‘इमाम्’ अधोवर्त्तिनीं स्वकीयया ‘वृष्ट्याऽभ्युनत्ति’ सर्वतः क्लेदयति ; पुनरपि घर्मकाले ‘अभिजिघ्रति’ भूमिगतं रस माभिमुख्येनादत्ते ॥

अत्र पथ्यादीनां ‘चतसृणां’ देवताना माज्येन यागः ; अदितेस्तु चरुणेति द्रष्टव्यम्। तदाहापस्तम्बः—‘चतुर आज्यभागान् प्रति-

दिशं यजति, पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात्सवितार मुत्तरतो मध्ये ऽदितिं हविषा'-इति ( १०. २१. ११. ) ॥

यथोक्तदेवतागतां सङ्ख्यां प्रशंसति—"पञ्च देवता यजति, पाङ्क्तो यज्ञः, सर्वा दिशः कल्पन्ते ; कल्पते यज्ञो ऽपि"-इति । पथ्याद्यदित्यन्ताः 'पञ्च देवताः', यज्ञस्य पञ्चसङ्ख्यायोगात् पाङ्क्तत्वं बहुधा वक्ष्यते ; अतो यज्ञे देवताविषया पञ्चसङ्ख्या युक्ता । 'दिशः' अपि प्राच्याद्या ऊर्द्ध्वान्ताः पञ्चसङ्ख्याकाः । अतो देवतागतपञ्चसङ्ख्यया एताः 'सर्वा दिशः' 'कल्पन्ते' समर्था भवन्ति, पूर्वमविज्ञाताः सत्यो ज्ञाता भवन्तीत्यर्थः । 'यज्ञोऽपि' अनया 'कल्पते' स्वप्रयोजनसमर्थो भवति ॥

वेदनं प्रशंसति—"तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति"-इति । 'यत्र' यस्यां 'जनतायां' याज्ञिकजनसमूहे 'होता' [?]यदेवतानां वेदिता 'भवति', तस्यां जनताया मयं होता स्वप्रयोजनसमर्थो भवति ॥ १ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये
प्रथमः खण्डः ॥ १ ( ७ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

**यस्तेजो ब्रह्मवर्चस मिच्छेत्प्रयाजाहुतिभिः प्राङ् स इयात् तेजो वै ब्रह्मवर्चसं प्राची दिक् तेजस्वी**

ब्रह्मवर्चसी भवति य एवं विद्वान् प्राङेति योऽन्नाद्य
मिच्छेत् प्रयाजाहुतिभिर्दक्षिणा स इयादन्नादो
वा एषोऽन्नपतिर्यदग्निरन्नादोऽन्नपतिर्भवत्यश्नुते प्रज-
यान्नाद्यं य एवं विद्वान् दक्षिणैति यः पशूनिच्छेत्
प्रयाजाहुतिभिः प्रत्यङ् स इयात् पशवो वा एते
यदापः पशुमान् भवति य एवं विद्वान् प्रत्यङेति यः
सोमपीथ मिच्छेत् प्रयाजाहुतिभिरुदङ् स इयादु
ह वै सोमो राजा प्र सोमपीथ माप्नोति य
विद्वानुदङेति स्वर्ग्यैवोर्ध्वा दिक् सर्वासु दिक्षु राध्
सम्यञ्चो वा इमे लोकाः सम्यञ्चोऽस्मा इमे लो
श्रियै दीद्यति य एवं वेद पथ्यां यजति यत्पथ्यां
यजति वाच मेव तद्यज्ञमुखे सम्भरति प्राणापाना
वग्नीषोमौ प्रसवाय सविता प्रतिष्ठित्या अदितिः
पथ्या मेव यजति यत्पथ्या मेव यजति वाचैव तद्यज्ञ
पन्था मपि नयति चक्षुषी एवाग्नीषोमौ प्रस-
वाय सविता प्रतिष्ठित्या अदितिश्चक्षुषा वै देवा
यज्ञं प्राजानंश्चक्षुषा वा एतत् प्रज्ञायते यदप्रज्ञेयं
तस्मादपि मुग्धश्चरित्वा यदैवानुष्ठ्या चक्षुषा प्रजा-
नात्यथ प्रजानाति यद्वै तद्देवा यज्ञं प्राजानन्नस्यां
वाव तत्प्राजानन्नस्यां समभरन्नस्यै वै यज्ञस्तायते

ऽस्यै क्रियतेऽस्यै सम्भ्रियत इयं ह्यदितिस्तदुत्तमा मदितिं यजति यदुत्तमा मदितिं यजति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै ॥ २ (८) ॥

प्रायणीयेष्टिं विधाय तत्र प्रयाजानां काम्यप्रकारविशेषं विधत्ते—"यस्तेजो ब्रह्मवर्चस मिच्छेत्, प्रयाजाहुतिभिः प्राङ् स इयात्; तेजो वै ब्रह्मवर्चसं प्राची दिक्"-इति। 'समिधो यजति', 'तनूनपातं यजति'-इत्यादिना विहिताः पञ्च प्रयाजाहुतयः *। तासां प्रकृतावनुष्ठानप्रकार आपस्तम्बेन दर्शितः—"पञ्च

---

* 'समिधो यजति वसन्त मेवर्तूना मवरुन्धे, तनूनपातं यजति ग्रीष्म मेवावरुन्धे, इडो यजति वर्षा एवावरुन्धे, बर्हिर्यजति शरद मेवावरुन्धे, स्वाहाकारं यजति हेमन्त मेवावरुन्धे'-इति तै० सं० २. ६. १. १। तन्मन्त्राः तै० ब्रा० ३.५.५. द्रष्टव्याः। तेषु च 'विभक्तिं करोति'-इति विभक्तिविधानं भवति (तै० सं० १. ५. २.)। ताश्च विभक्तयः सूत्रे दर्शिताः—'अग्न अग्ने ऽग्नावग्ने ऽग्निनाग्ने ऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति'-इति (आप० श्रौ० ५. २८. ६.)। तदुक्तं पातञ्जले महाभाष्ये पस्पशाह्निके—'विभक्तिं कुर्वन्ति। याज्ञिकाः पठन्ति—प्रयाजाः सविभक्तिकाः कर्तव्या इति। न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। तस्मादध्येयं व्याकरणम्'-इति। तथाच 'समिधो अग्न आज्यस्य वियन्तु। तनूनपादग्न आज्यस्य वेतु'-इत्येवं मन्त्रपाठाः सम्पद्यन्ते। अत एव श्रूयते शतपथब्राह्मणे 'व्यन्तु वेत्वित्येवं प्रयाजानां रूपम्'-इति २. २. १. २७। तै० प्रा० अनुशासनाद् 'व्यन्तु' इति 'वियन्तु' भवति। 'प्रयाजान् प्रधानस्य प्रमुखे यष्टव्याने-तन्नामकान् हविर्भागान्'-इति सा० भा० (ऋ० सं० ८. १. ११. ३.)। 'आज्येन प्रयाजा इज्यन्ते'-इति च तै० सं० ६. ३. ११. ७। यास्केन हि 'किं देवताः प्रयाजानुयाजाः?'-इत्युपक्रम्य बहुविचारानन्तरम् 'आग्नेया इति तु स्थितिः'-इति निर्णीतम् (निरु० ८.३.६,७) अत्र च मीमांसासूत्राणि बहूनि (२. २. २; ९. २. ५९, ६०; १०. १. १४, १५; ३. ३, ११; ३. १. १९, २०; ४. १. ३३—३९; ४०, ४१; ५. २. १६.)। तान्यवलम्ब्य अधिकरणानि चाष्टौ रचितानि माधवाचार्येण जैमिनीयन्यायमालाया मिति।

प्रयाजान् प्राचो यजति । प्रतिदिशं वा ; समिधः पुरस्तात्, तनुनपातं दक्षिणतः, इड़ः पश्चाद्, बर्हिरुत्तरतः, स्वाहाकारं मध्ये”-इति ( २. १७. १, २. ) । स प्रकारोऽत्र चोदकप्राप्तस्त मपोद्य शरीरकान्तिं श्रुताध्ययनसम्पत्तिं च कामयमानस्य प्रकारान्तरं विधीयते । 'यः' पुमान् 'तेजो ब्रह्मवर्चस मिच्छेत्', 'सः' पुमान् 'प्रयाजाहुतिभिः' 'प्राङियात्' प्रागपवर्गास्ता आचरेदित्यर्थः । आदित्योदयेन प्राच्यास्तेजस्त्वम्, तदाभिमुख्येन गायत्रीजपानुष्ठानात् ब्रह्मवर्चसत्वञ्च । वेदनं प्रशंसति—“तेजस्वी ब्रह्मवर्चसी, भवति य एवं विद्वान् प्राङेति”-इति ॥

अन्नाद्यकामस्य दक्षिणापवर्गत्वं विधत्ते—“यो ऽन्नाद्य मिच्छेत् प्रयाजाहुतिभिर्दक्षिणा स इयादन्नादो वा एषो ऽन्नपतिर्यदग्निः”-इति । दक्षिणस्यां दिश्यवस्थितो 'यः' अग्निः, 'सोऽग्निः' 'अन्नादः' भक्षितस्यान्नस्योदराग्निना जीर्यमाणत्वात् । सस्य[illegible] स्याय व्रीह्यादिपाकहेतुत्वात्, स्थाल्यादिष्ववस्थायौदनपाकहेतुत्वा दन्नपतित्वम् । अतोऽन्नाद्यकामस्य दक्षिणापवर्गत्वं युक्तम् । [illegible] प्रशंसति—“अन्नादोऽन्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं [illegible] दक्षिणैति”-इति ॥

पशुकामस्य प्रत्यपवर्गत्वं विधत्ते—“यः पशूनि[illegible] प्र[illegible] हुतिभिः प्रत्यङ् स इयात् ; पशवो वा एते यदापः[illegible] प्रत्यग्दिश्यवस्थितस्य सोमस्य सम्बन्धिन्य आपः इति पूर्वं मुक्तम्[illegible] तासां चापां पानद्वारेण, तृणोत्पादनद्वारेण वा पशूपकारित्वा[illegible] पशुत्वम् । अतः पशुकामस्य तथाविधं प्रत्यपवर्गत्वं युक्तम् । वेदनं प्रशंसति—“पशुमान् भवति य एवं विद्वान् प्रत्यङेति”-इति ॥

अहीनादुत्तरक्रतुषु सोमपानं कामयमानस्योत्तरापवर्गत्वं विधत्ते —"यः सोमपीथ मिच्छेत्, प्रजायाहुतिभिरुदङ् स इयादुत्तरा ह वै सोमो राजा"–इति। 'यः' सोमवल्लीरूपः, राजमानत्वेन 'राजा'; तस्योत्तरस्यां दिशि प्रभूतत्वात्तद्रूपत्वम्। अतः सोम-पानद्वारा अस्योत्तरापवर्गत्वं युक्तम्। वेदनं प्रशंसति—"प्र सोम-पीथ माप्नोति, य एवं विद्वानुदङेति"–इति॥

स्वर्गकामस्याहवनीये प्रयाजहोमविधि मर्थवादेनोन्नयति—"स्वर्ग्यैवोर्ध्वा दिक्, सर्वासु दिक्षु राध्नोति"–इति। येयं 'ऊर्ध्वा दिक्'
य हितैव; तस्मात् स्वर्गकामः ऊर्ध्वां दिशं भावयन्, आहव-
मध्ये प्रयाजान् यजेतेत्यर्थः। यथा स्वर्गं प्राप्नोति, तथा सर्वासु
समृद्धश्च भवति। अतः समृद्धिकामी मध्ये यजेतेत्यव-
यम्। वेदनं प्रशंसति—"सम्यञ्चो वा इमे लोकाः, सम्यञ्चो
इमे लोकाः, श्रियै दीद्यति, य एवं वेद"–इति। 'इमे'
ूरादयस्त्रयो 'लोकाः', ते 'सम्यञ्चः' स्वस्वोचितभोगप्रदाः; अतो
'एवम्' आहवनीयमध्ये होमं 'वेद', 'अस्मै' यजमानाय भूरा-
यः 'इमे लोकाः', 'सम्यञ्चः' स्वस्वोचितभोगप्रदाः सन्तः 'श्रियै'
नधन्यादि-सम्पदे 'दीद्यति' प्रकाशते॥

इत्थं काम्यान् प्रयाजहोमप्रकारान् विधाय पूर्वोक्त-प्रायणीय-
ताः क्रमेण स्तोतुं प्रथमदेवतां प्रशंसति—"पथ्यां यजति; यत्पथ्यां
ति, वाच मेव तद्यज्ञमुखे सम्भरति"–इति। पथ्याभिधां देवतां यजतीति पूर्वोक्तविधिरत्र स्मारितः; प्रयाजविधिभिर्व्यवहितत्वात् स्तोतव्यस्य स्मारण मपेक्षितम्; स्मारितस्य स्तुतावन्वेतुं पुनरनु-वादः। पथ्यायागेन 'यज्ञमुखे' सोमयागप्रारम्भे 'वाच मेव' मन्त्र-रूपां 'सम्भरति' सम्पादयति। यतो यज्ञानुष्ठानरूपाय मार्गाय

हिता पथ्या मन्त्ररूपा वाक् तादृशी ; अतः पथ्यायाग एव वाक्-सम्पादनम् ॥

अग्न्यादिकास्तिस्रो देवताः प्रशंसति—"प्राणापानावग्नीषोमौ, प्रसवाय सविता, प्रतिष्ठित्या अदितिः"-इति। मुखनासिकाभ्यां बहिः सञ्चरन्नुच्छ्वासरूपो वायुः प्राणः। स ह्यौष्ण्यं शरीरे जनयति। ततोऽग्नेः प्राणरूपत्वं प्रतिनिक्रत्य मुखनासिकाभ्यामन्तः सञ्चरन्वायुरपानः। स च शरीरे शैत्यं जनयतीति निःश्वासस्य सोमरूपत्वम्। 'सविता' देवः 'प्रसवाय' यज्ञकर्माणि प्रेरणायोपयुज्यते। 'अदितिः' भूमिः 'प्रतिष्ठित्यै' स्थिरावस्थानायोपयुज्यते [illegible]

पुनरपि प्रकारान्तरेण प्रथमां देवतां स्तौति—"पथ्य[illegible] एवं यजति; यत्पथ्या मेव यजति, वाचैव तद्यज्ञं पन्था मपि नय[illegible]तीति इति। अत्रैवकारः पूर्वोक्तस्तुतिविशेषः। तस्याय मर्थः [illegible]देवतान्तरं परित्यज्य प्रथमतः 'पथ्या मेव यजति', इति [illegible]याख्यं 'यद्' अस्ति, 'तत्' तेन यजनेन मन्त्ररूपया 'वाचैव' क्रि[illegible] 'यज्ञं' वैकल्यपरिहारेण समीचिनं अनुष्ठानमार्गं प्रापयति [illegible] तान्तरस्य प्रथमयागे तु नैतत्सम्भवतीति।

द्वितीयाद्यां देवतां प्रशंसति—"चक्षुषी एवाग्नीषोमौ प्रसवाय सविता, प्रतिष्ठित्या अदितिः"-इति। अग्नीषोमयोस्तेजस्त्वाद्[illegible]दिग्विशेषज्ञानहेतुत्वाच्चक्षुरिन्द्रियरूपत्वम्। चतुर्थपञ्चमदेवतयोस्तु पूर्वोक्तस्तुतिरेव समीचीनेत्यभिप्रेत्य न पुनस्तत्पाठः। अग्नीषोमयोश्चक्षुःस्वरूपत्वे कोऽतिशयः? इत्याशङ्क्याह—"चक्षुषा वै देवा यज्ञं प्राजानंश्चक्षुषा वा एतत् प्रज्ञायते यदप्रज्ञेयं तस्मादपि मुग्धश्चरित्वा यदैवानुष्ठ्या चक्षुषा प्रजानात्यथ प्रजानाति"-इति। 'देवाः' पुरा यज्ञपुरुषे उत्क्रान्ते सत्यन्विष्य 'चक्षुषा' एव प्रज्ञात-

वन्तः ; लोकेऽपि 'यद्' वस्तु सहसा प्रज्ञातु मशक्यम्, तदेव 'चक्षुषा' एव प्रज्ञायते । 'तस्मात्'-इत्यादिना तदेवोदाह्रियते । यस्माद् दुर्ज्ञेय मपि चक्षुषा ज्ञातुं शक्यम्, तस्मादेव कारणात् लोके 'मुग्धः' दिग्मोहं प्राप्तः पुरुषो वनेषु बहुधा 'चरित्वा' 'यदैव' यस्मिन्नेव काले 'अनुष्ठ्या' * केनापि प्रयत्नविशेषेण पर्वतारोहणादिरूपेण सूर्य्योदयादिरूपं दिग्विशेषलिङ्गं 'चक्षुषा प्रजानाति', 'अथ' तदानी मेव ग्रामादिमार्गं 'प्रजानाति'। तस्माच्चक्षुःस्वरूपाभ्या मग्नीषोमाभ्यां दिग्विशेषज्ञानं युक्तम् ।

[illegible] अथादितेः प्रतिष्ठाहेतुत्वं प्रपञ्चयति—"यद्वै तद्देवा यज्ञं [illegible]यन्नस्यां वाव तत्प्राजानन्नस्यां समभरन्नस्यै वै यज्ञस्तायते [illegible]: "दस्यै क्रियते ऽस्यै सम्भ्रियत इयं ह्यदितिस्तदुत्तमा मदितिं यजति, [illegible]मा मदितिं यजति, यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानु-[illegible]यजन्त्यै"-इति । पूर्वत्र ( ७२ पृ० ) "चक्षुषा वै देवा यज्ञं प्राजा-[illegible]माणन्"-इति यदुक्तम्, 'तत्' प्रज्ञानं 'यद्वै' यस्मिन्नेव काले [illegible] देवस्पन्नम्, 'तत्' तस्मिन् काले 'अस्यां वाव प्राजानन्' भूमावेव [illegible] यज्ञपुरुषं प्रज्ञातवन्तः । ततोऽस्यां भूमौ 'समभरन्' यज्ञसाधनानि सम्पादितवन्तः। 'अस्यै वै' अस्या मेव भूमौ 'यज्ञः' 'तायते' विस्तीर्यते । न केवलं यज्ञस्यैव भूमिराधारः, किन्तु लौकिकं कृष्यादिक मस्यां 'क्रियते', तत्साधन मप्यस्यां सम्पाद्यते । न च भूमेः प्राशस्त्ये सति अदितेः कि मायात मिति वाच्यम् ; 'हि'

* शतपथव्याख्यायाम् 'अनुष्ठ्या = अनुक्रमेण'-इत्याह हरिस्वामी ( १. ४. २. १७; ५. १. ६. ) ; सायणेन तूक्तं तत्रापि 'अनुष्ठ्या = अनुष्ठानेन'-इति ( २. १. २. १२. )। वस्तुतो वेदेषु अनुष्ठी-अनुष्ठु-अनुष्ठा-अनुष्ठान-शब्दाः समानार्था इतीव गम्यते। तत्रानुष्ठीशब्दस्य तृतीयैकवचने रूप मनुष्ठ्याति, अनुष्ठु-शब्दस्यानुष्ठ्येति ( ऋ० सं० ४. ४. १४. ) च ।

यस्माद् 'इयम्' भूमिः 'अदितिः', 'तत्' तस्मात् 'अदितिम्' 'उत्तमां' चरमदेवतां 'यजति'। तादृशं यजनं यदस्ति, तत् क्रियमाणस्य 'यज्ञस्य' अदितिद्वारा देवेषु प्रज्ञानाय सम्पद्यते। तच्च देवप्रज्ञानं यजमानस्य स्वर्गलोकावगमाय भवति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ( ८ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

देवविशः कल्पयितव्या इत्याहुस्ताः कल्प[illegible] मान अनु मनुष्यविशः कल्पन्त इति सर्वा विशः क[illegible] ल्पन्ते कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं [illegible] विद्वान् होता भवति स्वस्ति नः पथ्यासु धन्वस्वित्यन्वा[illegible] स्वस्त्यप्सु वृजने स्वर्वति स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातनेति मरुतो वै देवानां विशस्ता एवैतद्यज्ञमुखेऽचीक्लृपत् सर्वैश्छन्दोभिर्यजेदित्याहुः सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमानः सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति स्वस्ति नः पथ्यासु धन्वसु स्वस्तिरिद्धि प्रपथे

श्रेष्ठेति पथ्यायाः स्वस्तेस्त्रिष्टुभावग्ने नय सुपथा राये अस्मानादेवाना मपि पन्था मगन्मेत्यग्नेस्त्रिष्टुभौ त्वं सोम प्रचिकितो मनीषा या ते धामानि दिवि या पृथिव्या मिति सोमस्य त्रिष्टुभावा विश्वदेवं सत्पतिं य इमा विश्वा जातानीति सवितुर्गायत्रौ सुत्रामाणं पृथिवीं द्या मनेहसं महो मूषु मातरं सुव्रताना मित्यदितेर्जगत्यावेतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागत मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्त एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद ॥ ३ ( ९ ) ॥

प्रायणीयेष्टौ काम्यान् प्रयाजप्रकारान्विधाय देवताश्च प्रशंस्य तासां देवतानां सम्बन्धिन्यौ याज्यानुवाक्ये क्रमेणाभिसन्धातुं प्रस्तौति—"देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति सर्वा विशः कल्पन्ते, कल्पते यज्ञोऽपि"–इति। विश इत्ययं शब्दः प्रजामात्रवाची, वैश्यजातिविशेषवाची वा ; सन्ति हि देवेष्वपि जातिविशेषाः । अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ ; "अग्ने महाँ असि ब्राह्मण भारत ( तै० ब्रा० ३.५.३. * )", "ब्रह्म वै देवानां बृहस्पतिः"–इति ( तै० सं० २.

* एतन्मन्त्रस्य सांहितिके ब्राह्मणे, वाजसनेयिब्राह्मणे च व्याख्यानं द्रष्टव्यम् ( तै० सं० २. ५. ९. १, तथा शत० ब्रा० १. ४. २. २ )।

२. ८. १. )''-इति श्रुतेः *। क्षत्रियादिजातयस्तु सृष्टिप्रकरणे वाजसनेयिभिः स्पष्ट मेवाम्नाताः—''तच्छ्रेयो रूप मत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति ०—० स विश मसृजत यान्येतानि देव-जातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ०—० स शौद्रं वर्ण मसृजत पूषणम्''-इति ( शत० ब्रा० १४. ४. २. २३—२५. † )। एवम् ''आदित्यो वै दैवं क्षत्रम्''-इत्यादिक मुदाहार्यम् ‡। एवं सति देवेषु विशो वैश्य-जातिरूपाः प्रजा मरुदादयो याः सन्ति, ता अस्मिन् यागे 'व[…] कल्प-यितव्याः' सम्पादयितव्याः, 'इति' एवम् ब्रह्मवादिनः 'आ[…]हुः' 'कल्पमानाः' सम्पन्नाः 'ता देवविशः' 'अनु'सृत्य 'मनुष्य[…] विशः' अपि तदनुग्रहात्सम्पद्यन्ते 'इति' एवं दैव्यो मानुषश्च 'सर्वा […]' यजमानस्य सम्पद्यन्ते। तासु सम्पन्नासु द्रव्यलाभात् 'य[…]

---

* ''ब्रह्म हि ब्राह्मणः'' शत० ब्रा० ५. १. १. ११; १३. १. ५. ३।

† तदाद्यन्तपाठस्त्वेवम्—''ब्रह्म वा इद मग्र आसीत् एक मेव तदेकᳬ स […] तच्छ्रेयोरूप०—० रीशान इति तस्मात् क्षत्रात् परं नास्ति। तस्माद् ब्राह्मणः क्षत्रि[…] दुपास्ते राजसूये क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद् ब्रह्म। तस्मा[…] राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एनᳬ हिनस्ति […] योनि मृच्छति। स पापीयान् भवति। यथा श्रेयांसᳬ हिंसित्वा। स नैव […] स विश०—० मरुत इति। स नैव व्यभवत्। स शौद्रं०—० पूषणम्। इयं वै पूषा […] इयᳬ हीदᳬ सर्वं पुष्यति यदिदं किञ्च। स नैव व्यभवत्। तच्छ्रेयोरूप मत्यसृजत धर्मम्। तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः। तस्माद्धर्मात् परं नास्ति। अथो अबलीयान् बलीयाᳬ स माशᳬसते धर्मेण। यथा राज्ञा। एवं यो वै स धर्मः सत्यं वै तत्। तस्मात् सत्यं वदन्त माहुर्धर्मं वदतीति, धर्मं वा वदन्तᳬ सत्यं वदतीति। एतद्ध्येवैतदुभयं भवति। तदेतद् ब्रह्म क्षत्रं विट् शूद्रः''-इति शत० ब्रा० १४.४.२.२३—२७= बृ० उप० १.४.११—१५।

‡ उपरिष्टादिहैव ७. ४. २।

'कल्पते' स्वप्रयोजनसमर्थो भवति। एतद्वेदनं प्रशंसति—"तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति"-इति। पूर्ववद् (६७ पृ०) व्याख्येयम् ॥

प्रथमं देवतायाः पुरोऽनुवाक्यां विधत्ते—"स्वस्ति नः पथ्यासु धन्वस्वित्यन्वाह"-इति। स एष प्रथमः पादः कृत्स्नाया ऋचः प्रतीकग्रहणार्थः *। अस्या मृचि देवविशां वाचकं मरुच्छब्दं दर्शयितु मवशिष्टं पादत्रयं पठति—"स्वस्त्यप्सु वृजने स्वर्वति, स्वस्ति नः पुत्रकृथेषु योनिषु, स्वस्ति राये मरुतो दधातनेति" -इति। 'इति' शब्दो मन्त्रसमाप्त्यर्थः। मन्त्रस्याय मर्थः—हे 'मरुतः'! 'नः' अस्माकं 'धन्वसु पथ्यासु' मरुदेशरूपेषु मार्गेषु 'स्वस्ति दधातन' जलप्रदानेन क्षेमं कुरुत। किञ्च सतीष्वपि 'अप्सु' 'वृजने' वर्जिते जनशून्ये 'स्वर्वति' स्वर्गयुक्ते मार्गे 'स्वस्ति' दधातने। तथा 'पुत्रकृथेषु' पुत्रोत्पत्तिकरणेषु 'योनिषु' कलत्रेषु 'नः' अस्माकं 'स्वस्ति' दधातन। तथा 'राये' धनाय 'स्वस्ति' अस्तु (सं० १०.६३. १५.)। अस्या मृचि मरुच्छब्दः, कथ मेतावतैव विशां कल्पन मित्याह—"मरुतो वै देवानां विशस्ता एवैतद्यज्ञमुखेऽचीक्लृपत् सर्वैश्छन्दोभिर्यजेदित्याहुः; सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानः(”—इति। 'एतत्' एतेन मरुच्छब्दोपेत-मन्त्रपाठेन 'यज्ञमुखे' यज्ञप्रारम्भरूपे कर्म्मणि 'ता देवानां विशः' 'अचीक्लृपत्' कल्पितवान् भवति। छन्दोबाहुल्य मभिधाय प्रशंसति—")सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति"—इति। स्पष्टोऽर्थः † ॥

---

* तथाच सूत्रम्—'ऋचं पादग्रहणे'—इति आश्व० श्रौ० १. १. १७।

† बन्धनीचिह्नान्तर्गतो ग्रन्थः क-ग-पुस्तकयोर्नास्ति।

मन्त्रविशेषान्, तत्र छन्दांसि च, पञ्चानां देवानां क्रमेणोदाहरति—"स्वस्ति नः पथ्यासु धन्वसु, स्वस्तिरिद्धि प्रपथे श्रेष्ठेति पथ्यायाः स्वस्तेस्त्रिष्टुभावग्ने नय सुपथा राये अस्माना-देवाना मपि पन्था मगन्मेत्यग्नेस्त्रिष्टुभौ; त्वं सोम प्रचिकितो मनीषा, या ते धामानि दिवि या पृथिव्या मिति सोमस्य त्रिष्टुभावा विश्वदेवं सत्पतिं, य इमा विश्वा जातानीति सवितुर्गायत्र्यौ; सुत्रामाणं पृथिवीं द्या मनेहसं, मही मू षु मातरं सुव्रताना मित्यदितेर्जगत्यौ"–इति। 'स्वस्ति नः'–इत्यनुवाक्या (सं० १०. ६३. १५.); 'स्वस्तिरिद्धि'–इति याज्या (सं० १०. ६३. १६.)। 'अग्ने नय'–इत्यनुवाक्या (सं० १. १८९. १.); ... देवानाम्'–इति याज्या (सं० १०. २. ३.) 'त्वं सोम'–इत्यनु... (सं० १. ९१. १.); 'या ते धामानि'–इति याज्या (सं० १... ४.)। 'आ विश्वदेवम्'–इत्यनुवाक्या (सं० ५. ८२. ७.); ... इमा'–इति याज्या (सं० ५. ८२. ९.)। 'सुत्रामाणम्'–इत्यनुवाक्या (सं० १०. ६३. १०.); 'मही मू षु'–इति ... (वा० सं० २१. ५.)*। नन्वत्र त्रीण्येव छन्दांस्युक्तानि, ... सर्वाणीत्याशङ्क्याह—"एतानि वाव सर्वाणि छन्दांसि ... त्रैष्टुभं जागत मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्ते"–इति। मुख्यानि 'सर्वाणि छन्दांसि' त्रीण्येव, इतराणि तु मुख्यान्यनुसृत्य वर्त्तन्ते। मुख्यत्व मेव 'एतानि ह' इत्यादिना स्पष्टीक्रियते। 'हि' यस्मात्कारणात् 'एतानि' त्रीणि 'यज्ञे' 'प्रतमाम् इव क्रियन्ते' अत्यन्तप्राचुर्येणैव प्रयुज्यन्ते; ततो मुख्य-

* आश्व० श्रौ० ४. ३. २। कात्या० श्रौ० १९. ७. १६।

त्वम्। एतद्वेदनं प्रशंसति—“एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद”–इति। स्पष्टोऽर्थः ॥ ३ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये
तृतीयः खण्डः ॥ ३ (९) ॥

---

॥ अथ चतुर्थः खण्डः ॥

ता वा एताः प्रवत्यो नेतृमत्यः पथिमत्यः स्वस्तिमत्य एतस्य हविषो याज्यानुवाक्या एताभिर्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमान एता- ष्ट्वा स्वर्गं लोकं जयति तासु पदमस्ति स्वस्ति मरुतो दधातनेति मरुतो ह वै देवविशो- रिक्षभाजनास्तेभ्यो ह योनिवेद्यः स्वर्गं लोकमेतीश्वरा हैनं नि वा रोद्धोर्वि वा मथितोः स यदाह स्वस्ति राये मरुतो दधातनेति तं मरुद्भ्यो देवविड्भ्यो यजमानं निवेदयति न ह वा एनं मरुतो देवविशः स्वर्गं लोकं यन्तं निरुन्धते न विमथ्नते स्वस्ति हैनमत्यर्जन्ति स्वर्गं लोकमभि

य एवं वेद विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्यातां ये त्रयस्त्रिंशदक्षरे सेदग्निरग्नीँ* रत्यस्त्वन्याल्- सेदग्निर्यो वनुष्यतो निपातीत्येते विराड्भ्यां वा इष्ट्वा देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानो विराड्भ्या मिष्ट्वा स्वर्गं लोकं जयति ते त्रयस्त्रिंशदक्षरे भवतस्त्र- यस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशा- दित्याः प्रजापतिश्च वषट्कारश्च तत्प्रथमे य[illegible]मुखे देवता अक्षरभाजः करोत्यक्षरेणाक्षरेणैव तद्दे[illegible] प्रीणाति देवपात्रेणैव तद्देवतास्तर्पयति ॥ ४ (१ [illegible]

पञ्चानां देवानां क्रमेण याज्यानुवाक्ये उदाहृते; अथ [illegible] वक्तव्ये। तत्रादौ तावदुदाहृता याज्यानुवाक्याः प्र[illegible] "ता वा एताः प्रवत्यो नेतृमत्यः पथिमत्यः स्वस्तिमत्य [illegible] याज्[illegible] हविषो याज्यानुवाक्या, एताभिर्वा इष्ट्वा देवाः स्वर्गं [illegible] न तु स्तथैवैतद्यजमान एताभिरिष्ट्वा स्वर्गं लोकं जयति"–इ[illegible] [illegible], स्तायत्र नः पथ्यासु धन्वसु'–इत्याद्याः, 'मही मू षु मातर[illegible]'–इ[illegible] [illegible]ाः,[illegible] दशर्चौ याः पूर्व मुदाहृताः ( ७८ पृ० ), 'ताः' एव 'एताः' प्रशब्द-[illegible] नेतृशब्द-पथिशब्द-सस्तिशब्दवत्यः। तत्र। 'प्र'शब्दः—'स्वस्ति-[illegible]म्। रिद्धि प्रपथे', 'तं सोम 'प्रचिकितो'–इत्यत्र श्रूयते। 'नेतृ'शब्दः— 'अग्ने नय'–इत्यत्र श्रूयते; नयति धातोः कर्त्तुस्तत्रावगमात्।

---

* 'रथीँ' क, ङ; 'रथीँ' घ। वस्तुत संहितायां 'दीर्घादटि ( पा० ८. ३. ९. )'– इति नस रुत्वे 'आतोऽटि नित्यम् ( पा० ८. ३. ३. )'–इतीकारः सानुनासिक इतीव।

'पथि'शब्दः—'अग्ने नय सुपथा', 'आ देवाना मपि पन्थाम्'-इत्यत्र श्रूयते। 'स्वस्ति'शब्दः— 'स्वस्ति नः पथ्यासु', 'स्वस्तिरिद्धि'-इत्यत्र श्रूयते। तथा सति छत्रिन्यायेन सर्वा अप्येता ऋचः प्रादिभिः शब्दैर्युक्ता इति वक्तुं शक्याः। एवं सत्युत्कर्षद्योतकैः एतैः शब्दैर्युक्ताः, एता ऋचः प्रायणीयेष्टिगतस्य 'हविषो याज्यानुवाक्याः' प्रशस्ता भवन्ति। 'एताभिरिष्ट्वा'-इत्यादेरर्थो विस्पष्टः॥

प्रथमाया ऋचि चतुर्थं पाद मादाय तत्रत्यस्य मरुच्छब्दस्य अन्वयव्यतिरेकाभ्यां तात्पर्यं दर्शयति—"तासु पद मस्ति, स्वस्ति [illegible]तो दधातनेति मरुतो ह वै देवविशोऽन्तरिक्षभाजना[illegible] ह योनिवेद्यः स्वर्गं लोक मेतोश्वरा हैनं नि वा रोद्धोर्वि [illegible]तोः; स यदाह स्वस्ति राये मरुतो दधातनेति तं मरुद्भ्यो [illegible]भ्यो यजमानं निवेदयति ; न ह वा एनं मरुतो देवविशः [illegible]र्गं लोकं यन्तं निरुन्धते न विमथ्नते"-इति। 'तासु' पूर्वोक्तासु [illegible] 'दं' पादः, तस्मिन् पादे प्रोक्ताः 'मरुतः' देवानां वैश्याः, [illegible] निवसन्ति *, 'एनं' यजमानम् 'नि वा रोद्धोः' † [illegible] निरोद्धुं वा, 'वि वा मथितोः' ‡ विशेषेण मथितुं [illegible]लोड़यितुं विनाशयितुं वा, ते 'मरुतः' ईश्वराः §, समर्थाः। [illegible] व्यतिरेकः ; बाधस्यात्रोपन्यस्तत्वात्। 'सः यदाह'-इत्यादि-[illegible]न्वयः, उक्तबाधसमाधानस्य ; तत्रोपन्यासात्। यदि होता 'स्वस्ति राये'-इत्यादि पादं पठेत्, तदानीं 'मरुद्भ्यो यजमानं निवेदयति'। ततो 'मरुतः स्वर्गं लोकं गच्छन्तं यजमानं 'न' एव

* 'अथातो मध्यस्थाना देवगणाः। तेषां मरुतः प्रथमागामिनो भवन्ति'-इत्यादि निरु० ११. २. १, २। ते च रुद्रपुत्राः ऋ० सं० १. ८. ६. १ ; ४. ३. २१. १. सा० भा०।

†, ‡, § 'ईश्वरे तोसुन्-कसुनौ' पा० ३. ४. १३।

'निरुन्धते', नापि 'विमथ्नते' विनाशयन्ति। वेदनं प्रशंसति—"स्वस्ति हैन मत्यर्जन्ति स्वर्गं लोक मभि य एवं वेद"–इति 'स्वर्गम्' 'अभि'लक्ष्य जिगमिषुम् 'एनं' वेदितारं 'स्वस्ति' क्षेमं यथा भवति तथा मरुतो अतिशयेन प्रापयन्ति॥

इत्थ मुक्ताः प्रधानहविषो याज्यानुवाक्याः प्रशस्य संयाज्ये विधत्ते—"विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्यातां त्रयस्त्रिंशदक्षरे"–इति। विराट्छन्दस्कानां बहूनां विद्यमानत्वात् त्रयस्त्रिंशदक्षरशब्देन ते ऋचौ विशिष्येते। तयोर्ऋचोः प्रथमपादावुदाहरति— "सेदग्निरग्नीँरत्यस्त्वन्यान्, सेदग्ने... वनुष्यतो निपातोत्यर्ते"–इति *। विराजौ प्रशंसति—"वि... वा इष्ट्वा देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानो वि... मिष्ट्वा स्वर्गं लोकं जयति"–इति। 'तथैवैतत्'-इति दार्ष्टा... प्रतिज्ञा; 'यजमानः'-इत्यादिकं तद्विवरणम्। ऋचोः अ... मक्षरसङ्ख्यां प्रशंसति—"ते त्रयस्त्रिंशदक्षरे भवतस्त्रय... देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापति... कारश्च; तत्प्रथमे यज्ञमुखे देवता अक्षरभाजः करोत्यक्षरेण... तद् देवतां प्रीणाति देवपात्रेणैव तद् देवतास्तर्पयति"... वषट्कारो देवताविशेषः। 'तत्' तथा सति, देवताना म... च सङ्ख्यासाम्ये सति, यज्ञमुखं यज्ञोपक्रमः; स च सुत्यादि... प्रातरनुवाकादिना भविष्यति, तदपेक्षया प्रायणीयेष्टिः प्रथमं यज्ञमुखम्; तस्मिन् 'यज्ञमुखे' वस्वादिकाः सर्वाः 'देवताः' सङ्ख्या... साम्याद् 'अक्षरभाजः करोति'। 'तत्' तेन देवताना मक्षर-

* ऋ० सं० ७. १. १४, १५। आश्वा० श्रौ० ४. ३. २।

प्रायणेनैकैकां देवता मेकैकेनाक्षरेण तोषयति । देवानां पात्रं फल मेकैक मक्षरम् ; तेनैव पात्रेण 'तत्' तदानीं 'देवताः' 'तर्पयति' प्रीणातीत्यस्यैव विवरण मेतत् ॥ ४ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीयाध्याये
चतुर्थः खण्डः ॥ ४ ( १० ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

याजवदननुयाजं कर्तव्यम्प्रायणीय मित्याहुर्हीन
ा एतदीङ्खित मिव यत्प्रायणीयस्यानुयाजा इति
हृत्यम् प्रयाजवदेवानुयाजवत्कर्तव्यम् प्राणा व
ाः प्रजानुयाजा यत्प्रयाजानन्तरियात्प्राणांस्त-
नस्यान्तरियाद्य दनुयाजानन्तरियात्प्रजान्तद्य
ास्यान्तरियात् तस्मात्प्रयाजवदेवानुयाजवत्क-
;न्पत्नीर्न संयाजयेत् संस्थितयजुर्न जुहुयात्तावतैव
यज्ञो ऽसंस्थितः प्रायणीयस्य निष्कासं निदध्यात्त मुद-
यनीयेनाभिनिर्वपेद्यज्ञस्य सन्तत्यै यज्ञस्याव्यवच्छे-
दायाथो खलु यस्या मेव स्थाल्यां प्रायणीयं निर्व-

पेत्तस्या मुदयनीयं निर्वपेत्तावतैव यज्ञः सन्ततो ऽव्यवच्छिन्नो भवत्यमुष्मिन्वा एतेन लोके राध्नुवन्ति नास्मिन्नित्याहुर्यत्प्रायणीयमिति प्रायणीयमिति निर्वपन्ति प्रायणीयमिति चरन्ति प्रयन्त्येवास्माल्लोका-द्यजमाना इत्यविद्ययैव तदाहुर्व्यतिषजेद्याज्यानु-वाक्या •याः प्रायणीयस्य पुरोनुवाक्यास्ता उदय-नीयस्य याज्याः कुर्याद्या उदयनीयस्य पु[रो]नु-वाक्यास्ताः प्रायणीयस्य याज्याः कुर्यात् तद् व्यतिष-जत्युभयोर्लोकयोरृध्या उभयोर्लोकयोः प्रति[ष्ठित्या] उभयोर्लोकयोरृध्नोत्युभयोर्लोकयोः प्रतितिष्ठ[ति] [प्र]तितिष्ठति य एवं वेदादित्यश्चरुः प्रायणीय[ः स्या]त्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य [बल्ब]नध्यै यज्ञस्याप्रस्रंसाय तद्यथैवाद इति ह [रश्मिभ्या]-तेजन्या उभयतोऽन्तयोरप्रस्रंसाय वसौ नह्यत्य[ेवमे]-तद्यज्ञस्योभयतोऽन्तयोरप्रस्रंसाय वसौ नह्य[न्ति ... आ]-दित्यश्चरुः प्रायणीयो भवत्यादित्य उद[यनीय ...] पथ्ययैवेतः स्वस्त्या * प्रयन्ति पथ्यां स्वस्ति मभ्युद्यन्ति स्वस्त्यैवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्त्युद्यन्ति ॥ ५ (११) ॥

इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां द्वितीयोऽध्यायः ॥२॥

* 'पथ्ययैवेत स्वस्त्या'—इति निर्विसर्गपाठः ख-ग-पुस्तकयोः ।

संयाज्ये विधाय प्रयाजानुयाजविषये किञ्चिद् विशेषविधानं पूर्वपक्षत्वेन शाखान्तरीयमत मुपन्यस्यते— "प्रयाजवदननुयाजं कर्त्तव्यम् प्रायणीय मित्याहुर्हीन मिव वा एतदीङ्खित मिव यत्प्रायणीयस्यानुयाजा इति"–इति। प्रायणीयेष्टेर्दर्शपूर्णमासविकृतित्वाच्चोदकेन प्रयाजा अनुयाजाश्च प्राप्ताः। "समिधो अग्न आज्यस्य" –इत्याद्या मन्त्रसाध्याः पञ्च प्रयाजाः (तै० ब्रा० ३.५.५.१—५.)। "देवं बर्हिः"–इत्याद्या मन्त्रसाध्यास्त्रयोऽनुयाजाः (तै० ब्रा० ३.५. [illegible].१–३.)। प्रायणीयाख्यं कर्म प्रयाजोपेत मनुयाजवर्जितं * [illegible] मिति शाखान्तरीया आहुः†। तत्रैषा युक्तिः‡। 'प्राय[illegible]ानुयाजाः'–इति यदस्ति, तत् 'एतत्' 'हीन मिव वै'; तस्यैव [illegible]ानम् '[illegible]ङ्खित मिव'–इति, विलम्बित मित्यर्थः। अनुया[illegible] तत्र[illegible]ज्यमानेषु कर्मणि विलम्बो भवेत्; तस्मात् न यष्टव्या अनु[illegible]। 'इति'-शब्दः पूर्वपक्षसमाप्त्यर्थः। यथा प्रायणीये कर्मणि 'न' ए[illegible]जा वर्ज्यन्ते, तथैवोदयनीये कर्मणि प्रयाजा वर्जनीया द्योतन[illegible]पूर्वपक्षाभिप्रायः। त मेतं तैत्तिरीया विस्पष्ट मामनन्ति— एवं [illegible]जवदननुयाजं प्रायणीयं कार्यं मनुयाजवदप्रयाज मुदय-[illegible] ज्योति"–इति (तै० सं० ६. १. ५. ३.)। स्वोक्तं पूर्वपक्षं निरा[illegible]ति"–"तत्तन्नादृत्यम्"–इति। (तस्मिन् प्रायणीये कर्मणि

---

* अनूयाज मिति दीर्घमध्यपाठस्तैत्तिरीयाणाम्, बह्वृचां तु अनुयाज मिति ह्रस्वमध्य एव; वक्ष्यति चैतदनुपदं स्वयं भाष्यकारोऽपि (८६ पृ०)। पर मदृष्टेषु सर्वेष्वैतरेयभाष्येषु दीर्घमध्यः, तदत्र लिपिकरप्रमादप्रवाह एव हेतुर्गम्यते।

† तथाहि— शत० ब्रा० "तदिडान्तं भवति, नानुयाजान् यजन्ति"–इत्यादि "तस्मादिडान्तं भवति, नानुयाजान् यजन्ति"–इतान्तम् (३. ४. १. २६.)। तथा कात्या० 'उत्तरं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधाभ्याम् (७. ५. २४.)'–इति।

‡ 'उक्तिः' ख, ग।

'तत्' कर्म्म, अनुयाजवर्जनरूपम् 'न' आदरणीयम्। *) वर्जने बाध मुपन्यस्यति—"प्रयाजवदेवानुयाजवत्कर्त्तव्यम्; प्राणा वै प्रयाजाः प्रजानुयाजा यत्प्रयाजानन्तरियात्प्राणांस्तद्यजमानस्यान्तरियाद्यदनुयाजानन्तरियात्प्रजान्तद्यजमानस्यान्तरियात्"--इति। प्रथमशब्दसामान्यात्प्रथमभावित्वाद्वा 'प्रयाजाः' यजमानस्य प्राणरूपाः; पश्चाद्भावित्वाद् 'अनुयाजाः' पुत्रादिरूपाः; यदा प्रयाजा वर्ज्यन्ते, तदा यजमानसम्बन्धिनां प्राणाना मन्तरायो [illegible] विच्छेदः स्यात्; अनुयाजवर्जने पुत्रादिविच्छेदः। अय मेव पूर्वपक्षबा[illegible] त्तैत्तिरीयैराम्नातः—"तत्तथा न कार्य मात्मा वै प्रयाजाः [illegible] यत्प्रयाजानन्तरियादात्मान मन्तरियाद्यदनुयाजानन्तरि[illegible] मन्तरियात्"-इति (तै० सं० ६. १. ५. ४.)। यद्यपि प्राय[illegible] प्रयाजवर्जन मप्रसक्तम्, तथापि उदयनीये तैत्तिरीयोपन्यस्तं [illegible] वर्जन मभिप्रेत्यायं बाधोपन्यासः। इत्थं पूर्वपक्षे बाध मु[illegible] चोदकैः प्राप्तस्योभयानुष्ठानस्य प्रतिप्रसवरूपं सिद्धान्त[illegible] —"तस्मात् प्रयाजवदेवानुयाजवत्कर्त्तव्यम्"-इति। यस्म[illegible] तरत्यागे बाधस्तस्मादित्यर्थः। तैत्तिरीया अप्येतदामन[illegible] "प्रयाजवदेवानूयाजवत् प्रायणीयं कार्यम्; प्रयाजवदनूयाज[illegible] नीयम्"-इति (तै० सं० ६. १. ५. ५.)। अत्र सर्व[illegible] पाठेऽनुयाज इति ह्रस्व उकारः; तैत्तिरीयपाठे दीर्घ इति[illegible] विवेकः॥

चोदकप्राप्तान् पत्नीसंयाजान् समिष्टयजुश्च निषेधति—"पत्नीर्न संयाजयेत्, संस्थितयजुर्न जुहुयात्"-इति †। ततः कि मित्य-

* बन्धनीचिह्नान्तर्गत एष ग्रन्थो नास्ति क-पुस्तके।

† पत्न्यनुष्ठेयाश्चत्वारो यागाः पत्नीसंयाजा उच्यन्ते। ते च दधिभक्षणानन्तरं वेद्या-

प्रेक्षाया माह—"तावतैव यज्ञो ऽसंस्थितः"-इति । तदानीं यज्ञस्य समाप्तत्वादुत्तरकालीनं सोमक्रयादिकं न प्रवर्त्तेत ; एतेषा मननुष्ठानमात्रेण यज्ञोऽसमाप्तो भवति, ततः उत्तरानुष्ठानं निर्बाधं प्रवर्त्तते ॥

किञ्चिद्विशेषं विधत्ते—"प्रायणीयस्य निष्कासं निदध्यात्त मुदयनीयेनाभिनिर्वपेद्यज्ञस्य सन्तत्यै, यज्ञस्याव्यवच्छेदाय"-इति । प्रायणीयकर्म्मभाण्डगतो लेपरूपो हविःशेषो निष्कासः । प्रायणीयकर्म्म-सम्बन्धिनं निष्कासं कस्मिंश्चित् पात्रे स्थापयेत् । ततः सुत्या-

---

ं कृत्वा शालाद्वार्ये भवन्ति ( कात्या० १०.८.१०. )। "ते वै पत्नीः संयाजयिष्यन्तः न्ति०—० अथ पत्नीः संयाजयन्ति०—० तस्मात् पत्नीः संयाजयन्ति । चतस्रो देवता -० अथ सोमं यजति०—० अथ त्वष्टारं यजति०—० अथ देवानां पत्नीर्यजति० ग्निं गृहपतिं यजति०—० एव मेवैतत् पत्नीᳬ स्वगा करोति"—इति शत० ब्रा० :—१५ । तैत्तिरीयकेऽपि—'सोमं यजति'-इत्यादि 'आज्येन पत्नीसंयाजाः'- ष्टव्यम् ( तै० सं० २. ६. १०. )। तन्मन्त्रादिविषयस्तु तद्ब्राह्मणे ३. ५. १२. १३ । ास्तृतीयाध्यायीयतृतीयपादे चैतन्मूलक मधिकरण मेक मारचितम् ( जै० सू० ३. २३. अधि० १०. )।

ं समिष्टयजुर्जुहोति०—० या वा एतेन यज्ञेन देवता ह्वयति, याभ्य एष यज्ञस्तायते, ता: सन्निष्टा भवन्ति, यद्यत् तासु सर्वासु समिष्टास्वथैतज्जुहोति, तस्मात् समिष्ट- —० तस्मात् समिष्टयजुर्जुहोति"-इति शत० ब्रा० १. ९. २. २५—२७ । तथा केऽपि "समिष्टयजूᳬषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं, यद् विलिष्टं, यदत्येति, यन्नात्येति, यदतिकरोति, यन्नापि करोति, तदेव तैः प्रीणाति"-इति तै० सं० ६. ६. २. १ । एतद्विधानं च तत्पुरस्तादेव श्रुतं द्रष्टव्यम् ( २. ६. १०. )। तत्रैवेद मप्युक्तं सायणेन—'देवा गातुविद:'-इत्ययं मन्त्रः (वा० सं० ८. २१.) इष्टिसम्पूर्तिकारित्वात् समिष्टयजुरित्युच्यते। स च मन्त्र आध्वर्य्यवकाण्डे समाम्नातो व्याख्यातश्च'-इति । तत्र चाध्वर्य्यवे ( तै० सं० १. १. ४४. ) समिष्टयजुर्होमो निरूपितः । "नव समिष्टयजूᳬषि जुहोति"-इत्यादि शत० ब्रा० ४. ४. ४. १. द्रष्टव्यम् । "समिन्द्रेण इति ( वा० सं० ८. १५. ) नव समिष्टयजूᳬषि जुहोति प्रतिमन्त्रम्"-इति च कात्या० श्रौ० १०. ८. ११ ।

दिने * सोमयागस्यावसाने उदयनीयेष्टिगतेन हविषा सह तं 'निष्कासं' 'समभिनिर्वपेत्'। एवं सति प्रायणीयशेषस्यानुवर्त्तनात् सोमयागः सन्ततो भवति; न तु तस्य विच्छेदः प्राप्नोति। तैत्तिरीयास्त्वामनन्ति—"प्रायणीयस्य निष्कास उदयनीय मभिनिर्वपति, सैव सा यज्ञस्य सन्ततिः"--इति (तै० सं० ६. १. ५. ५.)। प्रकारान्तर माह—"अथो खलु यस्या मेव स्थाल्यां प्रायणीयं निर्वपेत्तस्या मुदयनीयं निर्वपेत्तावतैव यज्ञः सन्ततो ऽव्यवच्छिन्नो न भवति"-इति। नात्र निष्कासोऽपेक्षितः किन्तु स्थाल्येकत्वमात्रे अ यज्ञस्य सन्ततत्वादव्यवच्छेदराहित्यं सिध्यति। सान्तत्य-व्यवच्छेद राहित्ययोऽर्थत एकत्वेऽप्यन्वयव्यतिरेकरूपत्वेन पृथगुपन्यास इयत्

अथ प्रायणीयोदयनीयेष्ट्योर्याज्यानुवाक्याव्यत्यासं प्रस्तौति—"अमुष्मिन्वा एतेन लोके राध्नुवन्ति नास्मिन्नि प्रायणीय मिति; प्रायणीय मिति निर्वपन्ति, प्रायणीय चरन्ति; प्रयन्त्येवास्माल्लोकाद्यजमाना इति"-इति। ब्रह्मवा किञ्चिद् † दोषम् 'आहुः'—'प्रायणीयम्' 'इति' एवंविधना याज्य 'यत्' कार्य मस्ति, 'एतेन' कर्म्मणा, यजमानाः स्वर्गलोके एव न प्राप्नुवन्ति; 'नास्मिन्' लोके। कथ मिति चेत्, 'प्राय 'इति' एतत् नाम, मनसा कृत्वा 'निर्वपन्ति', चरणका तथैव 'चरन्ति'। चरण माहुतिप्रक्षेपः। तस्य च नाम्नो ऽर्य मर्थः— अनेन कर्म्मणा 'यजमानाः अस्माल्लोकात् प्रयन्त्येव'; न त्वस्मिंल्लोके कञ्चित्कालं प्रतितिष्ठन्ति। तस्मात् प्रायणीय-

* सुत्यालक्षण मिहैव चतुर्थाध्यायान्ते वक्ष्यति भाष्यकारः— 'यस्यां क्रियायां सोमः सूयते अभिषूयते, सा सुत्या'-इति। तथाच सुत्यादिने इत्यस्य अभिषवक्रियादिवसे इत्यर्थः।

† 'कश्चिद्' ख, ग।

नाम सम्पन्न मिति । श्रौतः 'इति'-शब्दो ब्रह्मवादुद्भावितदोष-समाप्त्यर्थः । अथ तद्दोषसमाधानं विधत्ते—"अविद्ययैव तदाहुर्व्यतिषजेद्याज्यानुवाक्याः"—इति । अज्ञानेनैव ब्रह्मवादिनः तद्वचन माहुः, न खलु तदुक्तदोषोऽस्ति । तद्दोषानुदयाय 'स्वस्ति नः पथ्यासु'-इत्यारभ्य 'महो मू षु मातरम्'-इत्यन्तानां (७८ पृ०) याज्यानुवाक्यानां व्यतिषङ्गं कुर्यात् । त मेव व्यतिषङ्गं विस्पष्टयति—"याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः कुर्याद् ; या उदयनीयस्य पुरोनुवाक्यास्ताः प्रायणीयस्य याज्याः कुर्यात् ; तद् व्यतिषजतुभयोर्लोकयोरृद्ध्या उभयोर्लोकयोः प्रति[illegible] उभयोर्लोकयोरृद्ध्नोतुभयोर्लोकयोः प्रतितिष्ठति"—इति । [illegible]न 'याः प्रायणीयस्य'-इत्युक्तप्रकारेण व्यतिषङ्गः सम्पद्यते । तत्[illegible]ोकद्वये भोग्यवस्तुसमृद्ध्यै, स्थैर्येणावसानाय भवति ;—तया-[illegible] यजमानो लोकद्वये समृद्धः प्रतिष्ठितश्च भवति । यथोक्त-'न' एवाधाने तैत्तिरीया आमनन्ति—"याः प्रायणीयस्य याज्या-[illegible]उदयनीयस्य याज्याः कुर्यात्, पराङमुं लोक मारोहेत् [illegible]वं व्यः स्याद् ; याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य [illegible]ति करोत्यस्मिन्नेव लोके प्रतितिष्ठति"—इति (सं० ६. [illegible]. १.) । व्यतिषङ्गवेदनं प्रशंसति—"प्रतितिष्ठति य एवं वेद"—इति ॥

योऽयं प्रथमखण्डे (६२ पृ०) प्रायणीयोदयनीययोरदितिदेवताकश्चरुर्विहितः, त मिमं प्रशंसति—"आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य बर्सनध्यै यज्ञस्याप्रस्रंसाय"—इति । सोमयागस्यादौ प्रायणीयेष्टिः, अन्ते चोदनीयेष्टिः ; तयोरुभयोरदितिदेवताकः 'चरुः'; सोऽयं तस्य 'यज्ञस्य' धारणाय ;

मण्याकारो ग्रन्थिविशेषः तस्य बन्धनम्, तत्सिध्यर्थं सुभयत्रादित्य-
चरुकरणम् ; बन्धनस्थानीयेन चरुणा 'यज्ञस्य' धारणं सिध्यति।
सति च धारणे यज्ञाङ्गं किञ्चिदपि स्रस्तं लुप्तं न भवति। ततो
'यज्ञस्याप्रस्रंसाय' उभयतश्चरुः। अत्र दृष्टान्त माह—"तद्यथैवाद
इति ह स्माह तेजन्या उभयतोऽन्तयोरप्रस्रंसाय बसौं नह्यत्येव
मेवैतद्यज्ञस्योभयतोऽन्तयोरप्रस्रंसाय बसौं नह्यति यदादित्यश्चरुः
प्रायणीयो भवत्यादित्य उदनीयः"-इति। 'अदः' वक्ष्यमाणं निद-
र्शनं यथा भवति तथा दार्ष्टान्तिकम्—'इति' एवं कश्चिद्ब्रह्मवद्
'आह स्म'—'तेजन्या'-इत्यादिना। तावेव दृष्टान्तदार्ष्टान्तिकौ स-
स्पष्टीक्रियेते—'तेजनिः' रज्जुः, तस्या उभयोः 'अन्तयोः' ... इत्
साय' विश्लेषनिवारणाय लौकिकः पुरुषो 'बसौं नह्यति', ...
कारी ग्रन्थी बध्नाति, 'एव मेव' चरुद्वयं 'यद्' अस्ति, तद्
द्यज्ञस्य' उपक्रमोपसंहाररूपयोः 'उभयोरन्तयोः' अग्रे ...
मण्याकारबन्धनस्थानीयं भवति॥

येयं प्रायणीये पथ्याख्या प्रथमा देवतास्ति, उदयनी...
उत्तमात्व मर्थवादेनोन्नयति—"पथ्ययैवेतः स्वस्त्या प्रयन्ति ...
स्वस्ति मभ्युद्यन्ति, स्वस्त्यैवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्तु..."
-इति। 'इतः'-शब्दः षष्ठ्यर्थे वर्त्तते। आसा माज्यह... उच्यते ...
देवतानां मध्ये 'पथ्ययैव स्वस्त्या' एतच्छब्दद्वयाभिहितयैव ...
तया 'प्रयन्ति' प्रारभन्ते ; प्रायणीये तां देवतां प्रथमं यजन्ती-
त्यर्थः। 'पथ्यां स्वस्ति मभि' शब्दद्वयाभिहितां देवता मभिलक्ष्य
'उद्यन्ति' समापयन्ति ; उदयनीये तां देवता मुत्तमां यजन्ती-
त्यर्थः। स्वस्त्याख्याया देवताया आद्यन्तयोर्यागे सति यजमानाः
'इतः' अस्मिन् कर्मणि 'स्वस्तेरव' चेमे एव यथा भवति तया

'प्रयन्ति' प्रारभन्ते, तथा 'स्वस्त्युद्यन्ति' क्रमेण समापयन्ति। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

अथ मीमांसा। एकादशाध्यायस्य द्वितीयपादे (जै० सू० ६४—६६. अधि० १५.) चिन्तितम्—

"प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म्म तत्।
निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥
उताद्यः पूर्ववन्नैवं मुख्यस्य प्रकृतत्वतः।
मध्योऽस्तु नोपयोक्तव्यः संस्कारस्य गुरुत्वतः ॥

[illegible]तिष्टोमे श्रूयते—"प्रायणीयस्य निष्कास उदयनीय मभि-[illegible]"-इति (तै० सं० ६.१.५.५.)। अत्र पूर्वन्यायेन निष्कास-[illegible]मुदयनीय मवसानधर्म्मक मन्यत् अर्थकर्मेत्याद्यः पक्षः। [illegible]वोदयनीयस्य प्रकृतत्वाद्भिन्नप्रकरणाम्नातावभृथधर्म्मातिदे-[illegible]दनीयस्य धर्म्मातिदेशस्याप्यसम्भवान्नार्थकर्म्मत्वम्। यदि 'न' ए[illegible]निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु, सोऽपीत्थं न [illegible]तन; उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात्। [illegible]यनीयस्य संस्कारः"-इति ॥ ५ ॥

[illegible]ति[illegible]मत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेय-[illegible]"-स्य प्रथमपञ्चिकायां द्वितीयाध्याये पञ्चमखण्डः ॥५(११)॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः द्वितीयोऽध्यायः ॥

---

# ॥ अथ तृतीयाध्यायः ॥

( तत्र )

## ॥ प्रथमः खण्डः ॥

॥ ॐ ॥ प्राच्यां वै दिशि देवाः सोमं राजान-
मक्रीणंस्तस्मात्प्राच्यां दिशि क्रीयते तं त्रयोदशान्मा-
सादक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते न [illegible]
सोमविक्रय्यनुविद्यते पापो हि सोमविक्र[illegible]
क्रीतस्य मनुष्यानभ्युपावर्त्तमानस्य दिशो वी[illegible]
न्द्रियाणि व्युदसीदंस्तान्येकयर्चाऽवारुरुत्सन्त [illegible]
नाशक्नुवंस्तानि द्वाभ्यां तानि तिसृभिस्तानि [illegible]
सृभिस्तानि पञ्चभिस्तानि षड्भिस्तानि सप्तभि[illegible]
वारुन्धत तान्यष्टाभिरवारुन्धताष्टाभिराश्नुवत, [illegible]
ष्टाभिरवारुन्धताष्टाभिराश्नुवत तदष्टाना मष्टत्वं, [illegible]
यद्यत्कामयते य एवं वेद तस्मादेतेषु कर्म्मस्वष्टा[illegible]
वनूच्यन्त इन्द्रियाणां वीर्याणा मवरुध्यै ॥ १ (१२) ॥

प्रायणीया तदङ्गं च देवतादिक मीरितम् ।
तथैवोदयनीया च तद्विशेषाश्च वर्णिताः * ॥

* द्वितीयाध्यायार्थसङ्ग्रह श्लोक एषः। तत्र पञ्चसु खण्डेषु क्रमात् ( १ ) प्रायणीयेष्टिः, ( २ ) प्रयाजाहुतिरूपं प्रायणीयाङ्गकर्म्म, ( ३ ) प्रायणीयदेवतादिकम्, ( ४ ) उदयनीया तुष्टेयविशेषाश्चेति पञ्चार्था उपदिष्टा इत्यर्थः।

अथ सोमप्रवहणाङ्गमन्त्रादयो वक्तव्याः । तत्रादौ सोमक्रयणस्य दिशं विधत्ते—"प्राच्यां वै दिशि देवाः सोमं राजानमक्रीणंस्तस्मात्प्राच्यां दिशि क्रीयते"–इति । प्राचीनवंशात् पूर्वस्यां 'दिशि' देवैः पुरा सोमस्य क्रीतत्वादृत्विग्भिरपि तथा सोमः क्रेतव्यः इत्यर्थः * । प्रसङ्गात्सोमविक्रयिणः प्रत्यवायं दर्शयति—"तं त्रयोदशान्मासादक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते ; न वै सोमविक्रय्यनुविद्यते ; पापो हि सोमविक्रयी"– इति । पुरा संवत्सरस्य त्रयोदश मासाः ; सन्ति नेदानीम् ; देवाः त्रयोदशमासाभिमानिनः पुरुषाः 'तं' सोमं क्रीतवन्तः । यस्मात्तदभिमानी पुरुषः सोमविक्रयी, तस्माल्लोके तदीयः 'त्रयोदशो मासो नानुविद्यते' शुभकर्मानुकूलो नास्ति । मेषादिसंक्रान्त्यादिरहितत्वेन मलमास इत्यभिप्रेत्य तस्मिन्मासे शिष्टाः शुभकर्माणि वर्जयन्ति । अतएवेदानीमपि 'सोमविक्रयी' शिष्टाचारस्यानुकूलो 'न' एव 'विद्यते' । सोमविक्रयिनः पापरूपत्वे श्रुत्यन्तरप्रसिद्धिद्योतनार्थो 'हि'-शब्दः । अत एव श्रुत्यन्तरे तद्विषयो मन्त्र एवं व्याख्यायते—"अस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ; ज्योतिरेव यजमाने दधाति ; तमसा सोमविक्रयिण मर्पयति"–इति ( तै० सं० ६. १. १०. ४. † ) । अत्र 'तमः'-शब्दः पापवाची ॥

---

* सोमक्रयाख्यायिकादिकं तु पञ्चमे वक्ष्यति; सोमक्रयप्रकारादयस्त्वाध्वर्यवेषु विशेषतः श्रुताः ।

† 'अस्मे ज्योतिः'–इत्येकः, 'सोमविक्रयिणि तमः'–इत्यपरः; तैत्तिरीयके श्रूयेते ( सं० १. २. ७. ) । तयोरेव व्याख्यानायेदं ब्राह्मणम् । तत्रादस्य विनियोग एवं प्रोक्त आपस्तम्बेन —'अस्मे ज्योतिरिति शुक्ला मूर्णास्तुकां यजमानाय प्रयच्छति'–इत्यादि ( १०. २६. ११. ), द्वितीयस्य चैवम्—'कृष्णा मूर्णास्तुका मह्निः क्षिं दयित्वेद महं सर्पाणां दन्दशूकानां ग्रीवा उप-

क्रयादूर्ध्वं प्राचीनवंशं प्रति नीयमाने सोमे पठितव्याना मृचा मष्टसङ्ख्या मादौ प्रशंसति—'तस्य क्रीतस्य मनुष्यानभ्युपावर्त्तमानस्य दिशो वीर्याणीन्द्रियाणि व्युदसीदंस्तान्येकयर्चाऽवारुरुत्सन्त तानि नाशक्नुवंस्तानि द्वाभ्यां तानि तिसृभिस्तानि चतसृभिस्तानि पञ्चभिस्तानि षड्भिस्तानि सप्तभिर्नैवावारुन्धत तान्यष्टाभिरवारुन्धताष्टाभिराश्नुवत; यदष्टाभिरवारुन्धताष्टाभिराश्नुवत, तदष्टाना मष्टत्वम्"-इति। क्रीतः सोमो यदा 'मनुष्यान्' यजमानादीन् 'अभि' लक्ष्य आगच्छति, तदानीं 'तस्य' ... दिगादीनि 'व्युदसीदन्' विशेषेणोत्सन्नान्यभवन्। दिशो ... नाधिष्ठान मुपलक्ष्यते। सोमं नेतुं यदधिष्ठानम्, य... सोमनिष्ठम् बलप्रदान सामर्थ्यम्, यच्चेन्द्रियं चक्षुरादिपाटवहे... तत्सर्वं विनष्टम्। तदानीं ते यजमाना ये मनुष्याः, 'तानि' ...गादीनि 'एकयर्चा' अवरोद्धुं स्वाधीनं कर्त्तुम् ऐच्छन्, ततः ... नाशक्नुवन्' अवरोद्धुं 'नाशक्नुवन्'। एवं द्वित्वादिसप्तपर्यन्ततया मन्त्रसङ्ख्यया नैवावरोधं कृतवन्तः; अष्टसङ्ख्यया त्ववरोधं कृत्वा तानि दिगादीनि प्राप्तवन्तः। तस्मादवरुध्यन्त एभिर्नश्यन्त एभिरिति वा व्युत्पत्त्या अष्टशब्दो निष्पन्नः। एतद्वेदनं प्रशंसति—"अश्नुते यद्यत्कामयेत य एवं वेद"-इति। तत्कामस्य मश्नुत इति योज्यम्। इति ... मष्टसङ्ख्यां विधत्ते—"तस्मादेतेषु कर्मस्वष्टावष्टावनूच्यन्त दिशामिन्द्रियाणां वीर्याणा मवरुध्यै"-इति *। इदानीं प्रस्तुतं सोमप्रवहणाख्यं यत्कर्म, तत्र करिष्यमाणं कर्मान्तरम्, तथाविधेषु प्रत्येकम् 'अष्टौ'

---

यद्यामीतुरपयश्य तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इति'-इति (१४. )। 'अविलोमभिर्निर्मिता तनुः, ऊर्णास्तुका'-इति तै॰ सा॰ भा॰।

* तत्र सोमप्रवहण्यो नामाष्टौ ऋच उत्तरस्मिन्नेव खण्डे विधास्यन्ते।

अष्टौ ऋचो होतानुब्रूयात् । तथाष्टसङ्ख्यया इन्द्रियाणि वीर्याणि चावरुद्धानि भवन्ति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
प्रथमः खण्डः ॥ १ ( १२ ) ॥

---

त[illegible]

॥ अथ द्वितीयः खण्डः ॥

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्यु-
[illegible]भि श्रेयः प्रेहीत्यन्वाहायं वाव लोको भद्र-
[illegible]सावेव लोकः श्रेयान्त्स्वर्ग मेव तं लोकं यज-
[illegible]गमयति बृहस्पतिः पुर एता ते अस्त्विति
[illegible]वै बृहस्पतिर्ब्रह्मैवास्मा एतत्पुरोगव मकर्न वै
ब्रह्म[illegible] [illegible]द्रिष्यत्यथेमवस्य वर आ पृथिव्या इति
देवयजनं वै वरं पृथिव्यै देवयजन एवैनं तदवसाय-
यत्यारे शत्रून् कृणुहि सर्ववीर इति द्विषन्त मेवास्मै
तत्पाप्मानं भ्रातृव्य मपबाधते ऽधरं पादयति सोम
यास्ते मयोभुव इति तृचं सौम्यं गायत्र मन्वाह
सोमे राजनि प्रोह्यमाणे स्वयैवैनं तद्देवतया स्वेन

छन्दसा समर्धयति सर्वे नन्दन्ति यशसागतेनेत्यन्वाह
यशो वै सोमो राजा सर्वो ह वा एतेन क्रीय-
माणेन नन्दति यश्च यज्ञे लप्स्यमानो भवति यश्च
न सभासाहेन सख्या सखाय इत्येष वै ब्राह्मणानां
सभासाहः सखा यत् सोमो राजा किल्बिषस्पृ-
दित्येष उ एव किल्बिषस्पृद् यो वै भवति यः श्रेष्ठता-
मश्नुते स किल्बिषं भवति तस्मादाहुर्मा न
मा प्रचारीः किल्बिषन्नु मा यातयन्निति पितु
रित्यन्नं वै पितु दक्षिणा वै पितु ता मेनेन सनं
सनि मेवैनं तत् करोत्यरंहितो भवति वाजि
तीन्द्रियं वै वीर्यं वाजिन माजरसं हास्मै व
नापच्छिद्यते य एवं वेदागन्देव इत्यन्वाह स्थिता
स तर्हि भवत्वृतुभिर्वर्धतु क्षय मित्यृतवो वै शद वै
राज्ञो राजभ्रातरो यथा मनुष्यस्य तैरेवैनं वषट्
गमयति दधातु नः सविता सुप्रजा मिष मित इति
माशास्ते स नः क्षपाभिरहभिश्च जिन्वत्वित्याह
अहानि रात्रयः क्षपा अहोरात्रैरेवास्मा एता माशिष
माशास्ते प्रजावन्तं रयि मस्मे समिन्वत्वित्याशिष
मेवास्ते या ते धामानि हविषा यजन्तीत्यन्वाह ता
ते विश्वा परिभूरस्तु यज्ञं गयस्फानः प्रतरणः सुवीर

इति गवां नः स्फावयिता* प्रतारयितेत्येवैतदाह
हावीरहा प्र चरा सोम दुर्यानिति गृहा वै दुर्या
बिभ्यति वै सोमाद्राज्ञ आयतो यजमानस्य गृहाः
स यदेता मन्वाह शान्त्यैवैनं तच्छमयति सोऽस्य
शान्तो न प्रजां न पशून् हिनस्तीमां धियं शिक्ष-
माणस्य देवेति वारुण्या परिदधाति वरुणदेवत्यो वा
एष त[illegible]वद्यावदुपनद्धो यावत्परिश्रितानि प्रपद्यते
स्वयै[illegible] तद्देवतया स्वेन छन्दसा समर्द्धयति शिक्ष-
मा[illegible] देवेति शिक्षते वा एष यो यजते क्रतुं दक्षं
[illegible] संशिशाधीति वीर्यं प्रज्ञानं वरुण संशिशाधी-
[illegible]ाह ययाति विश्वा दुरिता तरेम सुतर्माण
[illegible] [illegible] कृषाा-
[illegible]दर्यां रुहेमेति यज्ञो वै सुतर्मा ना.
[illegible]नं जुवहुतर्मा नौर्वाग्वै सुतर्मा नौर्वाच मेव यास्ते
[illegible] तयां स्वर्गं लोक मभि सन्तरति ता एता अष्टा
[illegible]वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद्रूप-
समृद्धं यत्कर्म क्रियमाण मृगभिवदति तासां त्रिः
प्रथमा मन्वाह त्रिरुत्तमां ता द्वादश सम्पद्यन्ते
द्वादश वै मासाः संवत्सरः संवत्सरः प्रजा[illegible]
प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद ॥

* 'न स्फावयिता'—इति निर्विसर्गपाठः ख, ग, घ।

**प्रथमां त्रिरुत्तमा मन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ २ ( १३ ) ॥**

मन्त्रगतां सङ्ख्यां विधाय मन्त्रान् त्रिधातु मादौ प्रैषमन्त्र विधत्ते—"सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्युः" इति। यः सोमः क्रीतः, सः क्रयदेशात् प्राचीनवंशं प्रति प्रोह्य नीयते ; तदर्थ मनुकूला ऋचो हे होतः ! अनुक्रमेण ब्रूहि । मेवं प्रैषमन्त्र मध्वर्युः पठेत् । अथ होतुः प्रथमा मृचं "भद्रादभि श्रेयः प्रेहीत्यन्वाह"-इति । सेय मृक् शाखाया मेव माम्नाता * —"भद्रादभि श्रेयः प्रेहि बृहस्पतिः एता ते अस्तु । अथे मवस्य वर आ पृथिव्या आरे शत्रून् सर्ववीरः"-इति ( सं० १. २. ३. ३. )। तस्याय मर्थः— 'भद्रात्' मङ्गलात्, भूलोकरूपात् तस्मात् क्रयदेशात् 'श्रेयः' स्वर्गलोकस्थानीयं ... इत्यन्तस्थितं ... स तर्हि भवतु ... प्राचीनवंशदेशम् 'अभि' लक्ष्य 'प्रेहि' ... । तथागच्छतः 'ते' 'बृहस्पतिः' 'पुरः एता' ... गन्ता ... । 'अथ' गमनादूर्ध्वम्, 'पृथिव्याः' सम्बन्धिनि 'आ' सम... त् 'वरे' श्रेष्ठे देवयजने 'ईम् अवस्य' इदं तवावस्थानयोग्यं ... स्थानं निश्चिनु । सर्वेभ्यः 'वीरः' शूरस्त्वं 'शत्रून्' पापरूपान् यज्ञ... विद्वेषिणः 'आरे कृणुहि' दूरे कुरु, निराकुर्वित्यर्थः । तस्या ऋचो विशिष प्रथमपादं व्याचष्टे—"अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान्त्स्वर्ग मेव तल्लोकं यजमानं गमयति"-इति । 'तत्' तेन

---

* न तु स्वशाखीयेति यावत् । अतएवाश्वलायनेन प्रपठ्य विहितः, न तु प्रतीकग्रहणमात्रेणेति द्रष्टव्यम् ( आश्व० श्रौ० ४, ४, २, ) । एषा शैली कल्पसूत्रकाराणां प्रायः सर्वत्रैव ।

प्रथमपादपाठेन *। स्पष्ट मन्यत् । द्वितीयपाद मनूद्य व्याचष्टे — "बृहस्पतिः पुर एता ते अस्त्विति ; ब्रह्म वै बृहस्पतिर्ब्रह्मै-वास्मा एतत् पुरोगव मकर्ण वै ब्रह्मण्वद्रिष्यति"-इति । बृहस्पतेः ब्रह्मत्वं ब्राह्मणजातिमत्त्वम् "ब्रह्म वै देवानां बृहस्पतिः"-इत्यादि-श्रुत्यन्तरे प्रसिद्धम् (तै॰सं॰ २.२.९.१. †)। 'एतत्' एतेन द्वितीय-पादपाठेन 'अस्मै' यजमानार्थम् 'ब्रह्म एव' ब्राह्मण मेव 'पुरो-गवम्' पुरोगन्तारम् 'अकः' करोति ; 'ब्रह्मण्वत्' ब्राह्मणसहायोपेतं यएम्स 'न वै रिष्यति' सर्वथा नाशं न प्राप्नोति । तृतीयपाद मनूद्य [illegible]न्धोष-"अथे मवस्य वर आ पृथिव्या इति, देवयजनं वै वरं [illegible]'ान देवयजन एवैनं तदवसाययति ; आरे शत्रून् कृणुहि सर्व-[illegible] : द्विषन्त मेवास्मै तत्पाप्मानं भ्रातृव्य मपबाधते ऽधरं [illegible]यति [illegible]नि । देवयजनाख्यस्य यागदेशस्य पृथिवीसम्बन्धि-[illegible] [illegible] तिच 'एव' 'एनं' सोमं 'तत्' तेन तृतीयपादपाठेन 'अस्मै' [illegible]ानाय द्वेषं कुर्वन्तं पापरूपं शत्रुम् 'अपबाधते', 'अधरं पादयति' निकृष्टं पदं प्रापयतीत्यर्थः ॥

[illegible] होत्र नुवक्तव्या द्वितीयाद्यास्तिस्र ऋचो विधत्ते—"सोम यास्ते [illegible]भुव इति तृचं सौम्यं गायत्र मन्वाह ; सोमे राजनि प्रोह्य-[illegible] स्वयैवैनं तद्देवतया स्वेन छन्दसा समर्धयति"-इति। तिसृणा[illegible]ां सङ्घातस्तृचः ‡। स च सोमदेवताको गायत्रीच्छन्दस्कश्च । [illegible]ोमानयनकाले तं तृच मनुब्रूयात् §। 'तत्' तेनानुवचनेन स्वात्म-

---

* 'तन्नीकं'-इति ख, ग ( ९५ पृ॰ १० पं॰ ) ; तत्पाठ मवलम्ब्यैवैतद्भाष्यम् ।

† इहाप्युपरिष्टात् 'ब्रह्म वै बृहस्पतिः, क्षत्रं सोम आसीत्'-इति २. ५. ६ ।

‡ 'ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि'-इति पा॰ ६. १. ३४. वा॰ ।

§ स च तृचः ऋ॰ सं॰ १.९१.९,१०,११ । आश्वलायनेनाप्यत्र विहितः (४.४.४.)।

रूपया 'देवतया' स्वकीयच्छन्दसा च 'एनं' सोमं समृद्धं करोति। अत्र नीयमानद्रव्यविशेषः सोमः; मन्त्रदेवताप्यसावेव। तस्मात् स्वात्मरूपत्वम्। गायत्री द्युलोकात्सोम मानीतवती। तैत्तिरीयाः कद्रुश्चेत्यनुवाके समामनन्ति (सं० ६. १. ६. १.)*। तस्मात् छन्दसः स्वकीयत्वम्॥

पञ्चमी मृचं विधत्ते—"सर्वे नन्दन्ति यशसागतेनेत्यन्वाह"-इति। सा च संहिताया मेव माम्नाता—"सर्वे नन्दन्ति ... गतेन सभासाहेन सख्या सखायः। किल्बिषस्पृत्पितुष ... मरं हितो भवति वाजिनाय"-इति (१०. ७१. १०.) ... ऋचोऽय मर्थः—'सर्वे सखायः' यजमानप्रभृतयः 'सख ... रूपेण 'नन्दन्ति' तुष्यन्ति। कीदृशेन सख्या? 'यश ... हेतुना 'आगतेन' समीपं प्राप्तेन, 'सभासाहेन' ... प्रसङ्गेन सहते अभिभवति सभासाहः, तादृशेन ... सोमरूपः सखा, 'एषाम्' ऋत्विग्यजमानानां 'कि ... किल्बिषात् पापात् स्पृणोति पालयति किल्बिषस्पृत् ... शब्दोऽन्नवाची †, तस्य सनिर्दानं येन सोमेन लभ्यते ... 'पितुषणिः'। सोमस्य पापनिवारकत्व मन्नप्रदानेन। ... प्रसिद्धिद्योतनार्थो 'हि' शब्दः। तथायं सोमो वाजि ... धेयायेन्द्रियाय वीर्याय वा 'अरं हितः' अलम् अत्यन्तं ... तीति। तस्या ऋचः प्रथमं पादं व्याचष्टे—"यशो वै सोमो ... सर्वो ह वा एतेन क्रीयमाणेन नन्दति, यश्च यज्ञे लप्स्य ... भवति, यश्च न"-इति। यशःकारणात् सोमस्य यशस्त्वम्।

* तथा शतपथेऽपि द्रष्टव्यम्—'दिवि वै सोम आसीत्'-इत्यादिः ३. २. ४।

† 'पितुरित्यन्ननाम; पातेर्वा पिबतेर्वा प्यायतेर्वा'-इत्यादि निरु० ९. ३. ३।

पुमान् ऋत्विग् भूत्वा 'यज्ञे' धनं लप्स्यते, 'यश्च' द्रष्टु मागतः 'न' तु धनार्थी; 'सर्वः' अप्यसौ सोमक्रयणं दृष्ट्वा तुष्यति। द्वितीय-पाद मनूद्य व्याचष्टे—"सभासाहेन सख्या सखाय इत्येष वै ब्राह्मणानां सभासाहः सखा, यत् सोमो राजा"-इति। योऽयं राजमानः सोमः, सोऽयं ब्राह्मणसभा मतिभवति, सर्वे ब्राह्मणाः सोमाधीना भवन्तीत्यर्थः। तृतीयपादे प्रथमं पद मनूद्य व्याचष्टे —"किल्बिषस्पृदित्येष उ एव किल्बिषस्पृद्"-इति। योऽयं यज्ञ... ...मोऽस्ति, 'एष उ एव' किल्बिषात् पालयति; सर्वकामहेतोः ...यामस्य पापक्षयायानुष्ठातुं शक्यत्वात्। यज्ञानुष्ठाने च ...णां ऋत्विग्यजमानानां कः किल्बिषप्रसङ्गः? इत्याशङ्क्याह ...र्यो वै भवति, यः श्रेष्ठता मश्नुते, स किल्बिषं भवति"-इति। ...नि प्रौढ़े यज्ञे प्रवृत्तो 'भवति', तत्रापि 'यः' 'श्रेष्ठतां' ...भिमानम् 'अश्नुते' प्राप्नोति, 'सः' तादृशः पुरुषः कर्म्म-...स्य ...तया पण्डितम्मन्यत्वेन वाग्वैकल्यं कुर्वन् 'किल्बिषं' ...पापं प्राप्नोति। त मेतं पापप्रसङ्गं विस्पष्टयति—"तस्मा-...नु वोचो मा प्रचारीः; किल्बिषन्नु मा यातयन्निति"-... यस्मादृत्विजां किल्बिषं सम्भाव्यते, 'तस्माद्' यजमानाः ...आहुः'—हे होतः! त्वम् 'मा नु वोचः' अन्यचित्तः सन् ...नुवाक्यां मा पठ। हे अध्वर्यो! 'मा प्रचारीः' व्यग्रतया ...र मन्यथानुष्ठानं ...कार्षीः। 'नु' क्षिप्रं कुर्वन्तो भवन्तः ...किल्बिष" 'म... ...मा प्राप्नुवन्तः। 'इति' शब्दो यज-मानाना मुक्तिसमाप्तौ। इत्थं सम्भावितात् किल्बिषात् सोमः पालयति। तृतीयपादे द्वितीयपद मनूद्य व्याचष्टे—"पितुषणि-रित्यन्नं वै पितु; दक्षिणा वै पितु; ता मेनेन सनोत्यन्नसनि-

मेवैनं तत्करोति"-इति। अन्नवाची पितुशब्दो लब्धव्यत्व-साम्यात् दक्षिणा मप्युपलक्षयति। 'तां' दक्षिणा मेतेन सोमेन निमित्तभूतेन 'सनोति' ऋत्विग्भ्यो ददाति। 'तत्' तेन, पितुशब्द-पाठेन 'एनं' सोमम् 'अन्नसनिम्' अन्नदाननिमित्तभूतम् 'एव करोति'। चतुर्थ पाद मनूद्य तत्र वाजिनशब्दं व्याचष्टे—"अरं हितो भवति वाजिनायेतीन्द्रियं वै वीर्यं वाजिनम्"-इति। वेदनं प्रशंसति—"आजरसं हास्मै वाजिनं नापच्छिद्यते य ए...
-इति। जरासमाप्तिपर्यन्तं वेदितुरिन्द्रियवीर्ययोरपच्छे... भवति॥

षष्ठी मृचं विधत्ते—"आगन्देव इत्यन्वाह"-इति। ... मन्त्रः संहिताया माम्नातः—"आगन् देव ऋतुभिर्वर्धतु ... दधातु नः सविता सुप्रजा मिषम्। स नः क्षपाभि... जिन्वतु प्रजावन्तं रयि मस्मे समिन्वतु"-इति (४. ... तस्याय मर्थः। सोमो 'देवः' 'आगन्' इह कर्मणि ... आगत्य च 'ऋतुभिः' सह 'क्षयं' निवासस्थानं 'वर्धतु' ... यतु। 'नः' अस्माकं 'सविता' प्रेरकः स देवः 'सुप्रजां' ... पत्यम्, 'इषम्' अन्नं च 'दधातु' सम्पादयतु। 'सः' दे... अस्मान् 'क्षपाभिः' रात्रिभिः, अहोभिः च 'जिन्वतु' प्री... तथा 'प्रजावन्तं रयिम्' प्रजोपेतं धनम् 'अस्मे समिन्वतु' ... सम्यक् प्रापयत्विति।

अस्या ऋचः प्रथमपादे पूर्वभागं व्याचष्टे—"आगतो हि स... तर्हि भवति"-इति। 'तर्हि' तस्मिन् क्रयोत्तरकाले 'सः' सोम... 'आगतो भवति'-इति प्रसिद्धम्। उत्तरभाग मनूद्य व्याचष्टे—"ऋतुभिर्वर्धतु क्षय मित्यृतवो वै सोमस्य राज्ञो राजभ्रातरो यथा

मनुष्यस्य ; तैरेवैनं तत्सहागमयति"–इति। यथा लोके कस्यचिन्मनुष्यस्य भ्रातरोऽपि मनुष्यजातीयाः, तथा राजजातीयस्य सोमस्य भ्रातरोऽपि राजजातीयाः। 'तत्' तेन मन्त्रभागपाठेन 'तैः' ऋतुभिः भ्रातृभिः 'सह' 'एनं' सोम मस्मिन् कर्म्मणि 'आगमयति'। द्वितीयपाद मनूद्य व्याचष्टे—"दधातु नः सविता सुप्रजा मिष मित्याशिष माशास्ते"–इति। आशासनीयोऽपेक्षणीयः [illegible]—"क्विपदार्थ आशीः ; ताम्, अनेन पादपाठेन 'आशास्ते'। तृतीय[illegible]मोऽनूद्य व्याचष्टे—"स नः क्षपाभिरहभिश्च जिन्वत्वित्य[illegible]पयाश्चा अहानि, रात्रयः क्षपाः, अहोरात्रैरेवास्मा एता माशिष म[illegible]ग्व्हानो, प्रजावन्तं रयिं मस्मे समिन्वत्वित्याशिष मेवाशास्ते" [illegible] लोकप्रसिद्धानि 'अहानि' एवात्र मन्त्रोक्तानि 'अहानि'; [illegible]रिति वक्तव्ये वर्णविकारेणाहभिरित्युक्तत्वात् *। शब्दा[illegible] गतु मिदं व्याख्यानम् ;—एव मत्र व्याख्यातव्यः [illegible] नास्ति, किन्तु आशीः-प्रार्थनरूपं तात्पर्य मेवेत्यभिप्रेत्य [illegible]: प्रयुक्तः॥

तत्रादौ[illegible]मी ऋचं विधत्ते—"या ते धामानि हविषा यजन्तीत्य-प्रयन्ति-इति। सेय मृक् संहिताया माम्नाता—"या ते धामानि [illegible]णीयाख यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रत-सामीर्[illegible]ोरो ऽवीरहा प्र चरा सोम दुर्यान्"-इति (१. ९१. १९.)। [illegible] सम्पन्न! 'ते' तव 'धामानि' यान्युत्तरवेद्यादिस्थानानि, यजमानाः [illegible]षा यजन्ति', 'ते' तव, 'ता विश्वा' तानि सर्वाणि स्थानानि [illegible] शेषः। ततो भवान् 'यज्ञ' 'परिभूरस्तु' परितः प्राप्तवान् भवतु। किञ्च त्वं 'गयस्फानः' गयानाम् अस्मदीयानां गवां वर्ध-

* 'कालहलचस्वरकर्तृयङाश्च व्यत्यय मिच्छति'–इति पा० ३. १. ८५. वा०।

यिता, 'प्रतरणः' प्रतारयिता सर्वापदुत्तारणहेतुः, 'सुवीरः' शोभन-पुत्रपौत्रादिप्रदो भवेति शेषः। हे सोम! 'अवीरहा:' अस्मदीयानां वीरपुरुषाणां हनन मकुर्वाणो 'दुर्यान्' अस्मदीयगृहान् प्रति 'प्र चर' प्रकर्षेणागच्छ।

अत्र प्रथमपादस्य स्पष्टार्थत्वबुध्या व्याख्यान मुपेक्ष्य द्वितीय-पाद मपि स्पष्टार्थाभिप्रायेणैव पठति—"ता ते विश्वा परिभू-रस्तु यज्ञम्"-इति। तृतीयपाद मनूद्य व्याचष्टे—"गय प्रतरणः सुवीर इति; गवां नः स्फावयिता प्रतारयित तदाह"-इति। 'स्फावयिता' वर्धयिता। चतुर्थपाद व्याचष्टे—"अवीरहा प्र चरा सोम दुर्यानिति; गृहा वै बिभ्यति वै सोमाद्राज्ञ आयतो यजमानस्य गृहाः; स मन्वाह शान्त्यैवैनं तच्छमयति; सो ऽस्य शान्तो न प्रजां न हिनस्ति"-इति। 'आयतः' आगच्छतः 'सोमात् मानस्य' 'गृहाः' गृहवर्त्तिनो वीरपुरुषाः। कोनाि वैकल्येन राजा कोपं करिष्यतीति मत्वा, तस्मात् सर्वे तदानीं 'सः' होता यदि 'एताम्' अवीरहेतिपदयुक्त 'अन्वाह', 'तत्' तेनानुवचनेन 'शान्त्या' शान्तिहेतुभूतया पदोक्त्यैवैतं राजानं 'शमयति' शान्तं करोति, 'सः' च 'शान्तः' सन् 'अस्य' यजमानस्य पुत्रादिकाम् 'प्रजां' गवा 'न हिनस्ति'॥

अष्टमो मृचं विधत्ते—"इमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति"-इति। इय मृक् वरुणदेवताका; तया 'परिदधाति' अनुवचनं समापयेदित्यर्थः। सेय मृक् संहिताया मेव माम्नाता—"इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं

शिशाधि । ययाति विश्वा दुरिता तरेम सुतर्माण मधि नावं रुहेम''–इति ( ८. ४२. ३. ) । तस्याय मर्थः—हे 'वरुण !' देव ! 'इमां' 'धियं' यज्ञानुष्ठानविषयां बुद्धिं 'शिक्षमाणस्य' अभ्यस्यतो यजमानस्य 'क्रतु'' यज्ञविषयं वीर्यम्, 'दक्षं' कौशलं यज्ञविषयप्रज्ञानं 'सं शिशाधि' सम्यगुपदिश । 'यया' वाग्रूपया नावा 'विश्वा दुरिता' सर्वाणि पापानि 'अति तरेम', तादृशीं 'सुतर्माणं' सुष्ठु-तरण-प्रजादिरूपां 'नावम्' 'अधि रुहेम' आधिक्येनारोहणं कुर्म इति । पाद म[ख्या] समापने कारण माह—"वरुणदेवत्यो वा एष तावद्धानि व[द्धो] यावत्परिश्रितानि प्रपद्यते, स्वयैवैनं तद्देवतया स्वेन माशास्[ते]न समर्द्धयति''–इति । 'यावत्' कालं सोमः 'उपनद्धः' –इति [व]स्त्रा वद्धः स्यात्, 'यावत्' च 'परिश्रितानि' प्राचीनवंशोप[ल]क्षितस्थानानि 'प्रतिपद्यते', तावत् 'एषः' सोमो वरुणदेवताकः; य[तो] [बन्ध]न[स्य] [वरुण]पाशाधीनत्वात्*, आवरणस्यापि वरुणाधीनत्वात्† । '[त]स्[मात्] [अ]स्व मति वारुण्या परिदधानो होता 'स्वयैव' सोमसम्बन्धिन्यैव [दे]वतया' 'स्वेन' सम्बन्धिना 'छन्दसा' तम् 'एनं' सोमं 'समृद्धं' करोति ‡ ।

अस्या ऋचस्त्रिष्टुप् छन्दः । सा च त्रिष्टुप्, सोम माहर्तुं द्युलोकं गत्वा दक्षिणां तपश्चाहृतवती । तथाच शाखान्तरे श्रूयते —"सा दक्षिणाभिश्च तपसा चागच्छति''–इति ( तै॰ सं॰ ६. १. ६. २. ) । तस्मादिदं छन्दः सोमस्य स्वकीयम् ।

---

* 'उदुत्तमं वरुण पाशम् ( ऋ॰ सं॰ १. २४. १५. )'–इत्यादि च तत्र मन्त्रलिङ्गम् ।

† 'वरुणो वृणोतीति सतः'–इति निरु॰ १०. १. ३ ।

‡ "वारुणो वै क्रीतः सोम उपनद्धः''–इत्यादि, वारुण्यर्चा परिचरति स्वयैवैनं देवता परिचरतीत्यन्तम् ब्राह्मणम् तै॰ सं॰ ६. १. ११ ; एतदीयमन्त्रास्तु १. २. ७—९ ।

प्रथमपादे शिक्षमाणस्येति पदं व्याचष्टे— "शिक्षमाणस्य देवेति शिक्षते वा एष यो यजते"-इति। पुनःपुनरभ्यासः शिक्षा। यजनशीलस्य सोऽस्ति। द्वितीयपाद मनूद्य व्याचष्टे— "क्रतुं दक्षं वरुण सं शिशाधीति, वीर्यं प्रज्ञानं वरुण सं शिशाधीत्येव तदाह"-इति। द्वितीयार्द्ध मनूद्य व्याचष्टे— "ययाति विश्वा दुरिता तरेम, सुतर्माण मधि नावं रुहेमेति; यज्ञो वै सुतर्मा नौः; कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौः[illegible] मेव तदारुह्य तया स्वर्गं लोक मभि सन्तरति"-इति। य[illegible] वा कृष्णाजिनस्य वा प्रस्तावः, तत्र तत्परत्वेन सुतर्मशब्दो [illegible] इह तु मन्त्ररूपा वाक् विवक्षिता। 'तत्' तेन मन्त्रपा[illegible] रूपा मेव नावम् 'आरुह्य' 'तया' नावा 'स्वर्गम्' 'अ[illegible] सम्यक् स्वर्गं 'तरति'॥

उक्ताः सर्वा ऋचः प्रशंसति— "ता एता अष्ट[illegible] समृद्धाः"-इति। विवक्षितार्थप्रतिपादकेन रूपेण [illegible] ता मेव समृद्धिं विशदयति— "एतद्वै यज्ञस्य सम[illegible]द्यद् रूप समृद्धम्; यत्कर्म क्रियमाण मृगभिवदति"-इति। पूर्ववद् व्याख्येयम् (४५ पृ० ११ पं०)। आद्यन्तयोः ऋचोरावृत्तिं विधत्ते— "तासां त्रिः प्रथमा मन्वाह, त्रिरुत्तमाम्"-इति। आवृत्तिसहितानामृचां सङ्ख्यां प्रशंसति— "ता द्वादश सम्पद्यन्ते; द्वादश वै मासाः संवत्सरः; संवत्सरः प्रजापतिः"-इति। वेदनं प्रशंसति— "प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद"-इति। आवृत्ति[illegible]

* एता एवाष्टावृचः सोमप्रवहणस्य उच्यन्ते। आश्वलायनेन तु विहिता विशेष[illegible] (४.४.१, ४, ६.), तथा कात्यायनेनापि ७.९.३२—३४। तत्र सोमस्योपोत्याना[illegible] मन्त्रास्तु तै० सं० १.२.८ अनु०। तद्ब्राह्मणं च ६.१.११ अनु०।

प्रशंसति—"त्रिः प्रथमां त्रिरुत्तमा मन्वाह, यज्ञस्यैव तद् बर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय"–इति । 'तत्' तेनावर्त्तनेन 'बर्सौ' रज्वाः उभयोरन्तयोः स्थितौ मण्याकारौ ग्रन्थी । तद्-द्वयं 'नह्यति' बध्नाति । तच्च बन्धनं 'स्थेम्ने' स्थैर्याय भवति । तस्यैवान्वयव्यतिरेकाभ्यां व्याख्यानं प्राबल्य मविस्रंसनं च ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
द्वितीयः खण्डः ॥ २ ( १२ ) ॥

---

नानां 'प्रजानां
युक्तः', 'तत्' '
यद्वा, [illegible] म
शकट [illegible]

॥ अथ तृतीयः खण्डः ॥

[illegible] ऽनड्वान् युक्तः स्यादन्यतरो विमुक्तो
[illegible] मुपावहरेयुर्यदुभयोर्विमुक्तयोरुपावहरेयुः
[illegible] राजानं कुर्युर्यद्युक्तयोरयोगक्षेमः प्रजा
"यदु[illegible] ताः प्रजाः परिप्लवेरन् यो ऽनड्वान्विमुक्तस्त-
यथा[illegible]सदां प्रजानां रूपं यो युक्तस्तच्चक्रियाणां ते ये
युक्ते [illegible] विमुक्ते ऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ
कल्पय[illegible] (१.) देवासुरा वा एषु लोकेषु समयतन्त त
[illegible] प्राच्यां दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्ते
[illegible] अथा[illegible] दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्ते
[illegible] देवासुरा दिश्ययतन्त तांस्ततो ऽसुरा अजयंस्त

उदीच्यां दिश्ययतन्त तांस्ततो ऽसुरा
उदीच्यां प्राच्यां दिश्ययतन्त ते ततो न प
सैषा दिगपराजिता तस्मादेतस्यां दिशि यतेत
यातयेद्वेश्वरो हान्टणा कर्त्तोस्ते देवा अब्रुवन्नराज
वै नो जयन्ति राजानं करवामहा इति तथे
सोमं राजान मकुर्वंस्ते सोमेन राज्ञा सर्वा
जयन्नेष वै सोमराजा * यो यजते प्राचि
त्यादधति तेन प्राचीं दिशं जयति तंपा
वहन्ति तेन दक्षिणां दिशं जयति तं
यन्ति तेन प्रतीचीं दिशं जयति त
उपावहरन्ति तेनोदीचीं दिशं जयति
सर्वा दिशो जयति य एवं वेद ॥ ३ ( १४

सोमप्रवहणीॠचो विधाय सोमस्य शकटादवरोहर
—"अन्यतरोऽनड्वान् युक्तः स्यादन्यतरो विमुक्तोऽथ राजा
हरेयुः"-इति । क्रयदेशे सोमं शकटे प्रक्षिप्य प्राचीनवं
समानीय शकटबद्धयोरनडुहोर्मध्ये कञ्चिदनड्वाहं विमु
मविमुच्य 'राजानं' शकटादधस्तादृत्विजः 'उपावहरे
शकटे बद्धः । 'विमुक्तः' शकटाद्वियोजितः । उभ
विमोचने दोष मुद्भावयति † —"यदुभयोर्विमुक्तयोरु
पितृदेवत्यं राजानं कुर्युः"-इति । राज्ञः सोमस्य पितृ

* 'सोमो राजा' क

† ...मुपन्यस्यति' ग, घ ।

प्रशंसति—"... सोमो देवयोग्यो न भवेत् । उभयोरनडुहोः शकटयोगे- नह्यति, दोष माह—"यद् युक्तयोरयोगक्षेमः प्रजा विन्देत्, ताः प्रजाः 'वसूँरिप्लवेरन्"—इति । अप्राप्तस्य धनादेः सम्पादनं योगः, प्राप्तस्य रक्षणं क्षेमः ; योगसहितः क्षेमो योगक्षेमः, तदभावः ; 'प्रजाः' तस्यैवा...दिकाः 'विन्देत्' लभेत, प्राप्नुयात् । "यो ऽनड्वान् विमुक्त- ...च्छालासदां प्रजानां रूपं, यो युक्तस्तच्चक्रियाणां, ते ये युक्ते ... विमुक्ते ऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति"— ...। 'यः अनड्वान् विमुक्तः', 'तत्' एतत् 'शालासदां' गृहावस्थि- तानां 'प्रजानां' पुत्रादीनां 'रूपम्' ; 'यः' अनड्वान् अधस्ताच्छकटे युक्तः', 'तत्' 'च' 'क्रियाणां' लौकिकानां वैदिकानां च स्वरूपम् । यद्वा, चक्र मस्यास्तीति चक्रि शकटम्, तेन चक्रिणा यान्तीति, शकट... गच्छन्त्यः प्रजाः चक्रियाः, तासां रूपम् । एवं सति 'ते' ... मध्ये 'ये' केचिद् बुद्धिमन्तो यजमानाः 'अन्ये युक्ते' ...स्व डुहि शकटबद्धे, 'अन्ये विमुक्ते' इतरस्मिन्ननडुहि शक- ...द्वियोजिते सति सोमम् 'उपावहरन्ति' । 'ते' बुद्धिमन्तः 'उभावेव' ...मं योगं च सम्पादयन्ति । त मिम मर्थं तैत्तिरीयाश्चामनन्ति— "यदुभौ विमुच्यातिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्याद्यदुभावविमुच्य यथानागतायातिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्य- विमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य सन्तत्यै"-इति ( सं० ६. १. )। नन्वेकत्र सोमावरोहणकाल उच्यते, इतरत्राति- ...ल इति न समानविषयत्वम् ? इति चेत्, न ; उभयो- रेककालीनत्वात् ॥

अथाख्यायिकामुखेन सोमोपावहरणस्यैशानीं दिशं विधत्ते— "देवासुरा वा एषु लोकेषु समयतन्त, त एतस्यां प्राच्यां दिश्य-

यतन्त, तांस्ततो ऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त, तांस्ततो ऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त, तांस्ततो ऽसुरा अजयंस्त उदीच्यां दिश्ययतन्त, तांस्ततो ऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त; ते ततो न पराजयन्त; सैषा दिगपराजिता; तस्मादेतस्यां दिशि यतेत वा यातयेद्वेश्वरो हानृणा कर्त्तोः"— इति। 'समयतन्त' सङ्ग्राम मकुर्वन्। प्राच्यादिषु चतसृ... ति; यज्ञेषु दिक्षु देवानां पराजय आसीत्, ऐशान्यां दिशि नास्ति प[राजयः]; तस्मात्तस्यां 'दिशि' सोमोपावहरणाय 'यतेत' प्रयत्नं कुर्यात्। ... 'यातयेत्' प्रयत्नं कारयेद् 'वा'। एवमेव वैकल्यराहित्य... प्रभुर्भवति। अथवा सोमस्य राज्ञो विजयित्वेनोत्तरत्र प्रश्न... देवासुरा वा इत्यादिना लौकिकस्य राज्ञ ऐशान्यां दिशि ... भृत्यप्रेरणं प्रतिपादितम्॥

इदानीं सोमस्य जयहेतुत्वं दर्शयति—"ते देवा ... राजतया वै नो जयन्ति, राजानं करवामहा इति; ... सोमं राजान मकुर्वंस्ते सोमेन राज्ञा सर्वा दिशो जयन्नेष वै सोम-राजा, यो यजते, प्राचि तिष्ठत्यादधति; तेन प्राचीं दिशं जयति; तं दक्षिणा परिवहन्ति, तेन दक्षिणां दिशं जयति; तं प्रत्यञ्चम् आवर्तयन्ति, तेन प्रतीचीं दिशं जयति; त मुदीचस्तिष्ठत उपावहरन्ति, तेनोदीचीं दिशं जयति; सोमेन राज्ञा"—इति। 'ते राजा... देवाः' परस्पर मेवम् 'अब्रुवन्'— अस्माकं राजाभावात् प्राच्यादि... दिक्षु पराजय आसीत्, असुराणां जय आसीत्,; ततो 'राजानं' सम्पादयामः 'इति' विचार्य 'सोमम्' एव 'राजानं' कृत्वा प्राच्यादि... दिक्षु जयम् प्राप्ताः। एवं सति 'यः' यजमानः सोमयागं करोति 'एषः' एव। सोमो राजा यस्येति बहुव्रीहिः। अतः सोमाख्यस्वामि...

प्रसादादयं यजमानः सर्वत्र 'जयति'। तत्कथ मिति चेत्, तदुच्यते —सोमवाहनार्थे शकटे 'प्राचि तिष्ठति' प्राङ्मुखेऽवस्थिते सत्यृत्विजस्तत्र सोमम् 'आदधति' प्रक्षिपन्ति, 'तेन' सोमसम्बन्धिशकटस्य प्राङ्मुखत्वेन यजमानः प्राच्यां दिशि जयं प्राप्नोति। शकटस्थितं सोमं 'दक्षिणा परिवहन्ति' शकटं दक्षिणाभिमुखत्वेन पर्यावृत्य वहन्ति, तेन दक्षिणस्यां दिशि जयः। ततः शकटं प्रत्यङ्मुखम् 'आवर्त्तयन्ति', 'तेन' प्रतीच्यां दिशि जयः। 'उदीचस्तिष्ठतः' उदङ्मुखेनावस्थितात् शकटात् 'तं' सोमम् 'उपावहरन्ति', 'तेन' उदङ्मुखत्वेन उदिच्यां दिशि जयः। एवं सोमराजप्रसादात् यजमानः सर्वा दिशो जयति। अत्रार्थवादेन विधेया उन्नेयाः *; —प्राङ्मुखे शकटे सोम मादध्युः, ततो दक्षिणाभिमुखत्वेन परि[illegible] ततः प्रत्यङ्मुखत्वेनावर्त्तयेयुः, तत उदङ्मुखात् शकटात् सोम[illegible]मुपावहरेयुरिति॥ एतत् सर्व मभिप्रेत्यापस्तम्बः सञ्जग्राह— 'वा'. 'वस्व भुवस्पत इति प्राञ्चो ऽभिप्रयाय प्रदक्षिण मावर्तन्ते"–इति ०—० "अग्रेण प्राग्वंशं प्रागीष मुदगीषं वा शकट मवस्थाप्य"-इति (१०. २९. १—११.)। वेदनं प्रशंसति—"सर्वा दिशो जयति य एवं वेद"-इति। अन्त्यशब्दादेकश्रुतस्यापि 'सर्वा दिशो जयति'-इतिवाक्यस्य द्विरावृत्तिः कर्तव्या ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
तृतीयः खण्डः ॥ ३ ( १४ ) ॥

---

* विधेयास्त्विह चत्वारः ; त एव प्रदर्श्यन्ते प्राङ्मुख इत्यादिना।

॥ अथ चतुर्थः खण्डः ॥

हविरातिथ्यं निरुप्यते सोमे राजन्यागते सोमो वै राजा यजमानस्य गृहानागच्छति तस्मा एत * द्धविरातिथ्यं निरुप्यते तदातिथ्यस्यातिथ्यत्वं नवकपालो भवति नव वै प्राणाः प्राणानां क्लृप्त्यै प्राणानां प्रतिप्रज्ञात्यै वैष्णवो भवति विष्णुर्वै यज्ञः स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्द्धयति सर्वाणि वाव च्छन्दांसि च पृष्ठानि च सोमं राजानं क्रीत मन्वायन्ति यावन्तः खलु वै राजान मनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियतेऽग्निं मन्थन्ति सोमे राजन्यागते तद्यथैवादो मनुष्यराज आगते † ऽन्यस्मिन् वार्हत्युक्षाणं ‡ वा वेहतं वा क्षदन्त एव मस्मा एतत् क्षदन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः ॥ ४ ( १५ ) ॥

सोमोपावहरणं विधायातिथ्येष्टिरूपं कर्म्म विधत्ते—"हविरातिथ्यं निरुप्यते सोमे राजन्यागते"–इति। प्राचीनवंशसमीपे 'सोमे राजनि' समागते सति, तस्यातिथिरूपत्वात् तदीय मातिथ्याख्यकर्म्मसम्बन्धि हविर्निर्वपेत्। यद्यप्यस्य हविषोऽतिथिर्देवता न भवति, विष्णुदेवताया वक्ष्यमाणत्वात्, तथापि सोमस्यातिथिरूपस्य उपचाराय क्रियमाणत्वादातिथ्य मिति कर्म्मनाम युक्तम्।

* 'तस्मादेत' क। † 'मनुष्यराजन्यागते' क। ‡ 'वार्हतुरचाणं' क, ख, ग।

एत मेवाभिप्रायं विस्पष्टयति—"सोमो वै राजा यजमानस्य गृहा-नागच्छति, तस्मा एतद्धविरातिथ्यं निरुप्यते; तदातिथ्यस्यातिथ्य-त्वम्"-इति। तिथिविशेष मनपेक्ष्य भोजनार्थं कस्यचिद् गृहं प्रति अकस्माद्यः समागतः, सोऽतिथिः। सोमोऽपि तथाविधत्वादतिथि-रित्युच्यते। तत्सम्बन्धित्वात् 'आतिथ्यम्' इति नामधेयम् *।

हविर्विशेषं विधत्ते—"नवकपालो भवति, नव वै प्राणाः, प्राणानां क्लृप्त्यै, प्राणानां प्रतिप्रज्ञात्यै"-इति। नवसु कपालेषु संस्कृतः पुरोडाशो 'नवकपालः'। पुरुषस्य शिरोगतेषु सप्तसु छिद्रेषु वर्त्तमानाः सप्त प्राणाः, अधोभागावस्थितयोर्वर्तमानौ द्वौ; एवं नवसङ्ख्याकाः प्राणाः। तथा चान्यत्र श्रूयते—"सप्तेमे शीर्षण्याः प्राणा द्वाववाञ्चौ"-इति। एवं सति कपालगता नवसङ्ख्या 'प्राणानां क्लृप्त्यै' स्वव्यापारसामर्थ्याय भवति। सामर्थ्ये च [illegible] इति सर्वे प्राणाः प्रज्ञाता भवन्ति॥

'वा', 'वस्व [illegible]धाय देवतां विधत्ते—"वैष्णवो भवति विष्णुर्वै यज्ञः स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्द्धयति"-इति। विष्णुर्देवता यस्य पुरोडाशस्य सोऽयं वैष्णवः। विष्णोर्व्यापित्वात् सर्वयज्ञस्वरूप-त्वम्। तथा सत्यातिथ्येष्टेरपि यज्ञत्वात् 'विष्णुः' स्वकीया देवता भवति। तया 'देवतयैनं' समृद्धं करोति। यद्यप्यत्र मन्त्राविहित-

* "अथ यस्मादातिथ्यं नाम। अतिथिर्वा एष एतस्यागच्छति यत् सोमः क्रीतस्तस्मा एतद्, यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्, तदह मानुषं, हविर्देवाना मेव मस्मा एतदातिथ्यं करोति। तदाहुः। पूर्वोऽतीता गृह्णीयादिति यत्र वा अर्हन्त मागतं नापचायन्ति क्रुध्यति वै स तत्र तथा ह्यपचितो भवति"-इत्यादि शत० ब्रा० ३.४.१.२,३। 'क्रीतं सोमं शकटे संस्थाप्य प्राचीनवंशं प्रति आनीयमानेऽभिमुखे या मिष्टिं निर्वपति, सेय मातिथ्या'-इति मी० अधि० टी० ४. २. १४।

विहितत्वाद्याज्यानुवाक्ययोरवश्यम्भावेन छन्दोऽर्थसिद्धम्। तेन स्वकीयेन 'छन्दसा' यज्ञं समृद्धं करोति। ते च याज्यानुवाक्ये आश्वलायनेन दर्शिते—"इदं विष्णुर्विचक्रमे, तदस्य प्रिय मभिपाथो अश्याम्"-इति (औ० ४. ५. ३.)। तयोश्च गायत्री त्रिष्टुप् चेति छन्दोद्वयम्। तेन छन्दोद्वयेनास्य यज्ञस्य समृद्धिः। अत्र शाखान्तरोक्तान् "अग्नेरातिथ्य मसि विष्णवे त्वा"-इत्यादिकांश्च निर्वापमन्त्रान् * हृदि निधाय तत्प्रशंसारूप मर्थवादं दर्शयति—"सर्वाणि वाव च्छन्दांसि च पृष्ठानि च सोमं राजानं क्रीत मन्वायन्ति; यावन्तः खलु वै राजान मनुयन्ति, तेभ्यः सर्वेभ्य आतिथ्यं क्रियते"-इति। गायत्रीत्रिष्टुबित्यादीनि सर्वच्छन्दांसि, बृहद्रथन्तरवैरूपादिसा[illegible]साध्यानि पृष्ठस्तोत्राणि, तदुभयाभिमानिनो देवा अनुचराः सन्तो 'राजानम् अनुयन्ति' यजमानगृहं प्रत्यागच्छन्ति। अतो राज्ञा [illegible] 'सर्वेभ्यः' सह 'आतिथ्यम्' कर्तव्यम्। तथा सति 'अग्ने[illegible] मसि'-इत्यादिभिः मन्त्रैः (तै० सं० १.२.१०. १—५.)। सर्व[illegible] मनुचराणां गायत्र्यादीनां तृप्तिर्भवतीत्यर्थः। तथा च तैत्तिरीया आमनन्ति—"यावद्भिर्वै राजानुचरैरागच्छति, सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते; छन्दांसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्य मसि विष्णवे त्वेत्याह, गायत्रिया एवैतेन करोति; सोमस्यातिथ्य मसि विष्णवे त्वेत्याह, त्रिष्टुभ एवैतेन करोति"-इत्यादि (तै० सं० ६. २. १. १.)॥

---

* अग्नेरातिथ्य मसीति पञ्च निर्वापमन्त्राः तै० सं० प्रथमे काण्डे (१. २. १०. १—५.) श्रुताः; षष्ठे (६. २. १.) च ते व्याख्याताः; आपस्तम्बेन विहिताश्च 'अग्ने रातिथ्य मसीत्येतैः प्रतिमन्त्रम्'-इति (१०. ३०. ८.)।

अत्रातिथेरिष्टिमध्येऽग्निमन्थन मापस्तम्ब आह—"चतुर्होत्राऽतिथ्य मासाद्य सम्भारयजूंषि व्याचष्टे । यजमानं वाचयतीत्येके । पशुवन्निर्मन्थ्यः सामिधेन्यश्च"-इति ( श्रौ० १०.३१.१०—१२. ) । आश्वलायनोऽप्याह—"अयातिथ्यःक्रान्ता । तस्या अग्निमन्थनम्" -इति ( श्रौ० ४. ५. १, २. ) । तदिद मग्निमन्थनं विधत्ते— "अग्निं मन्थन्ति सोमे राजन्यागते तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वार्हत्युक्षाणं वा वेहतं वा क्षदन्त एव मेवास्मा एतत् क्षदन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः"-इति । लोके 'यथैव' 'अदः' अतिथिसत्करणम्, तथैव सोमस्यापि 'तत्' सत्करणं द्रष्टव्यम् । तावेतौ दृष्टान्तदार्ष्टान्तिकौ मनुष्यराज इत्यादिना स्पष्टीक्रियते*। महति मनुष्यभूपतौ वा, 'अन्यस्मिन्' चिद् विद्यावृत्तादिसम्पन्ने वा 'अर्हति' पूज्ये महति ब्राह्मणे वा † गृहं प्रत्यागते सति [illegible]थिसत्कारार्थं शास्त्रकुशलाः शिष्टाः कश्चित् 'उक्षाणं' वृषभं 'वा', 'वेहतं' गर्भघातिनीं वृद्धां गां 'वा', 'क्षदन्ते' हिंसन्ति । अयं सत्कारः स्मृतिषु प्रसिद्धो युगान्तरधर्मो द्रष्टव्यः ‡ । 'एव मेव' अत्रापि 'अग्निं मन्थन्ति'-इति 'यद्' अस्ति, 'एतद्' 'अस्मै' सोमायातिथिसत्कारार्थं 'क्षदन्ते' ; अग्नेर्देवपशुत्वाद् ;—यथानड्वान् हव्यं वहति, तथा अग्निरपि हव्यं वहति, तस्मादग्नेः पशुसाम्यम् ॥

---

* शतपथे च श्रुत मेव मेव ( ११२ पृ० '*' ) ।

† 'षडर्घ्या भवन्ति । आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति'-इति गौ० गृ० ४. १०. २२, २३ ।

‡ शत० ब्रा० ३. ४. १. २ । गौ० गृ० ४. १०. १ । 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्'-इति याज्ञ० सं० १. १. ९ । "दाश्नगोघ्नौ सम्प्रदाने"-इति पा० ३. ४. ७३ । 'गोघ्नोऽतिथिः' सि० कौ० । अथोत्तररामचरिते (४) च—'श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा निर्वपन्ति गृहमेधिनः'-इति ।

अत्र मीमांसा। सप्तमाध्याये तृतीयपादे (जै० सू० १७. अधि० ६.) चिन्तितम्—

"वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः।
धर्मातिदेशः स्यान्नो वा विद्यतेऽत्राग्निहोत्रवत् ॥
श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः।
स गौणवृत्ति माश्रित्य धर्मान्नातिदिशत्यतः ॥

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः। तत्र श्रुतौ वैष्णवशब्दो राजसूयगते वैष्णवे त्रिकपाले प्रयुज्यमानोऽग्निहोत्रशब्दवन्नवकपालधर्मानतिदिशतीति पूर्वपक्षः। विष्णुर्देवता यस्येति विग्रहे विहिततद्धितप्रत्ययो * देवता मभिधत्ते, न तु धर्मान्; तस्मान्नातिदिशति"–इति ॥ ४ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्र[काशे]
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
चतुर्थः खण्डः ॥ ४ (१५) ॥

---

॥ अथ पञ्चमः खण्डः ॥

अग्नये मथ्यमानायानुब्रूहीत्याहाध्वर्युरभि त्वा देव सवितरिति सावित्री मन्वाह तदाहुर्यदग्नये मथ्यमानायानु वाचाहाथ कस्मात्सावित्री मन्वाहेति

* 'सास्य देवता'–इति पा० ४. २. २४.।

सविता वै प्रसवानामीशे सवितृप्रसूता एवैनं तन्म-न्थन्ति तस्मात्सावित्री मन्वाह मही द्यौः पृथिवी च न इति द्यावापृथिवीया मन्वाह तदाहुर्यदग्नये मथ्यमानायानु वाचाहाथ कस्माद् द्यावापृथिवीया मन्वाहेति द्यावापृथिवीभ्यां वा एतं जातं देवाः पर्य-गृह्णंस्ताभ्या मेवाद्यापि परिगृहीतस्तस्माद् द्यावा-पृथिवीया मन्वाह त्वा मग्ने पुष्करादधीति तृच माग्नेयं गायत्र मन्वाहाग्नौ मथ्यमाने स्वयैवैनं तद्देवतया स्वेन छन्दसा समर्द्धयत्यथर्वा निरमन्थतेति रूपसमृद्ध मेतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म [illegible]माण मृगभिवदति स यदि न जायेत यदि चिरं [illegible] रक्षोघ्नो गायत्र्यो ऽनूच्या अग्ने हंसि न्यत्रिण मित्येता रक्षसा मपहत्यै रक्षांसि वा एनं तर्ह्यालभन्ते यर्हि न जायते यर्हि चिरं जायते स यद्येकस्या मेवा-नूक्तायां जायेत यदि द्वयोरथोत ब्रुवन्तु जन्तव इति जाताय जातवती मभिरूपा मनुब्रूयाद्यद्यज्ञेऽभिरूपं तत्समृद्धं मा यं हस्ते न खादिन मिति हस्ताभ्यां ह्येनं मन्थन्ति शिशुं जात मिति शिशुरिव वा एष प्रथमजातो यदग्निर्नं बिभ्रति विशा मग्निं स्वध्वर मिति यद्वै देवानां नेति तदेषा मो३मिति प्र देवं

देववीतये भरता वसुवित्तम मिति प्रक्रियमाणा याभिरूपा यद्यज्ञे ऽभिरूपं तत्समृद्ध मा स्वे योनौ निषीदत्वित्येष ह वा अस्य स्वो योनिर्यदग्निरग्ने रा जातं जातवेदसीति जात इतरो जातवेदा इतरः प्रियं शिशीतातिथि मित्येष ह वा अस्य प्रियोऽथिति-र्यदग्निरग्नेः स्योन आ गृहपति मिति शान्त्या मेवैनं तद्दधात्यग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा हव्यवाड् जुह्वास्य इत्यभिरूपा यद्यज्ञे ऽभिरूपं तत् समृद्धं त्वं ह्यग्ने अग्निना विप्रो विप्रेण स त्सतेति विप्र इतरो विप्र इतरः सन्नितरः सन्नितरः सखा सख्या समिध्यस इत्येष ह वा अस्य स्वः सख्यै[illegible] ग्निरग्नेस्तम्मर्जयन्त सुक्रतुं पुरो यावान[illegible] [illegible]सु स्वेषु क्षयेषु वाजिन मित्येष ह वा अस्य स्वः क्षयो यदग्निरग्नेर् यज्ञेन यज्ञ मयजन्त देवा इत्युत्तमया परिदधाति यज्ञेन वै तद्देवा यज्ञ मयजन्त यदग्नि-नाग्नि मयजन्त ते स्वर्गं लोक मायंस्तानि धर्माणि प्रथमान्यासन् ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवा इति छन्दांसि वै साध्या देवास्ते ऽग्रे ऽग्निनाग्नि मयजन्त ते स्वर्गं लोकमाय-न्नादित्याश्चैवेहासन्नङ्गिरसश्च तेऽग्रेऽग्निनाग्नि मयजन्त

ते स्वर्गं लोकमायंस्तैषा स्वर्ग्याहुतिर्यदग्न्याहुति-र्यदि ह वा अप्यब्राह्मणोक्तो यदि दुरुक्तोक्तो यजते ऽथ हैषाहुतिर्गच्छत्येव देवान् न पाप्मना संसृज्यते गच्छत्यस्याहुतिर्देवान् नास्याहुतिः पाप्मना संसृज्यते य एवं वेद ता एतास्त्रयोदशान्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म्म क्रियमाणमृगभि-वदति तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः सप्त-दश सम्पद्यन्ते सप्तदशो वै प्रजापतिर्द्वादशमासाः पञ्चर्तवस्तावान्त्संवत्सरः संवत्सरः प्रजापतिः प्रजा-पत्यायतनाभिरेवाभी राध्नोति य एवं वेद त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने ऽविस्रंसाय ॥ ५ ( १६ ) ॥

अग्निमन्थनं विधाय तत्रत्या ऋचो विधातुं प्रैषमन्त्रं विधत्ते —"अग्नये मथ्यमानायानुब्रूहीत्याहाध्वर्युः"–इति। तत्र प्रथमा मृचं विधत्ते—"अभि त्वा देव सवितरिति सावित्रीमन्वाह"–इति। सविता देवता गायत्र्या ऋचः, सा सावित्री। अत्र च अभि त्वा देव सवितरिति सविता मन्त्रदेवत्वेन श्रूयते, तस्मादिय मृक् ( सं० १. २४. ३. ) सावित्री। अत्र प्रैषानुवचनमन्त्रयो-र्वैयधिकरण्यरूपं चोद्य मुद्भावयति—"तदाहुर्यदग्नये मथ्यमाना-यानु वाचाहाथ कस्मात्सावित्रीमन्वाहेति"–इति। 'तत्' तत्र ब्रह्म-वादिनश्चोद्यम् 'आहुः'। 'यद्' यस्मात्कारणादध्वर्युः 'अग्नये मथ्य-

मानाय'-इति अग्नये 'अनु'कूलया 'वाचा' प्रैषमन्त्रम् 'आह', 'तत्' तस्मात् कारणात् आग्नेयी होत्रानुवक्तव्या ; तां परित्यज्य, 'अथ' अनन्तरं 'कस्मात्' कारणाद्धोता 'सावित्रीम्' ऋचम् 'अनु'ब्रूते ? 'इति'-शब्दश्चोद्यसमाप्त्यर्थः। तस्य चोद्यस्योत्तर माह—"सविता वै प्रसवाना मीशे, सवितृप्रसूता एवैनं तन्मन्थन्ति ; तस्मात्-सावित्री मन्वाह"-इति। योऽयं 'सविता' देवः, स एव 'प्रसवानां' कर्म्मस्वनुज्ञातानाम् 'ईशे' स्वामी भवति। तथा सति 'तत्' तेन मन्त्रपाठेन सवित्रानुज्ञाताः 'एव' सन्तः 'एनम्' अग्निं 'मन्थन्ति' ; 'तस्मात्' कारणात् 'सावित्रीम्' ऋचम् 'अनु'ब्रूयात् ॥

द्वितीया मृचं विधत्ते—"मही द्यौः पृथिवी च न इति द्यावापृथिवीया मन्वाह"-इति ( सं० १. २२. १३. ) [illegible] द्यौ स पृथिवी च देवते यस्या ऋचः, सेयं द्यावापृथिवीया [illegible] पूर्ववच्चोद्यपरिहारौ दर्शयति—"तदाहुर्यदग्नये म[illegible] वाचाहाथ कस्माद् द्यावापृथिवीया मन्वाहेति ? द्य[illegible]ं वा एतं जातं देवाः पर्यगृह्णंस्ताभ्या मेवाद्यापि परिगृ[illegible]स्माद् द्यावापृथिवीया मन्वाह"-इति। पुरा कदाचिद्देवा उत्पन्न मग्निं द्यावापृथिवीभ्यां परिगृहीतवन्तः, 'अद्यापि ताभ्या मेव परिगृहीतः' दृश्यते ;—पावकोऽग्निर्भूम्या परिगृहीतः, प्रकाशकः सूर्यरूपोऽग्निर्दिवा परिगृहीतः। 'तस्माद्' अग्निपरिग्रहाय द्यावापृथिवीदेवताकाया ऋचोऽनुवचनं युक्तम् ॥

तृतीयाद्यास्तिस्र ऋचो विधत्ते—"त्वा मग्ने पुष्करादधीति (सं० ६.१६.१३—१५.) तृच माग्नेयं गायत्र मन्वाहाग्नौ मथ्यमाने स्वयैवैनं तद् देवतया स्वेन च्छन्दसा समर्द्धयति"-इति। अस्य तृचस्य अग्निदेवताकत्वेन वैय्यधिकरण्यचोद्यानुदयात् स्वयैवेत्या-

दिना प्रशंसैव क्रियते। गायत्रीच्छन्दोऽग्नेः स्वकीयम्; उभयोः प्रजापतिमुखजन्यत्वात् (१९ पृ०)। प्रथमाया मृचि द्वितीयपाद मनूद्य प्रशंसति—"अथर्वा निरमन्थतेति रूपसमृद्ध मेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं; यत् कर्म्म क्रियमाण मृगभिवदति"-इति। अथर्वाख्य ऋषिः निःशेषेण मन्थनं कृतवानित्युच्यते। तदेतद्वचन मग्निमन्थनस्यानुकूल्येन रूपेण समृद्धम्॥

इत्य मुक्तास्वग्निमन्थनास्वृत्तु पञ्चसु, अनुक्तासु षष्ठप्रभृतीना मृचा मनुवचनात् पूर्वं नैमित्तिकाः काश्चिदृचो विधत्ते—"स यदि न जायेत, यदि चिरं जायेत, राक्षोघ्नी गायत्री ऽनूच्याः"-इति। ...त्वाना मृचा मनुवचने सति तस्मिन् काले 'यदि' 'सः' अग्निः न उत्पद्येत, तत उत्पत्तिलिङ्गं धूमादिरूपं यदि न दृश्येत; दृश्य... ...पि...ा लिङ्गे 'यदि' सहसा नोत्पद्यते, किन्तु विलम्बेन; तदानीं ...त्पत्त्यर्थं रक्षोहननलिङ्गोपेता गायत्रीच्छन्दस्का राक्षोघ्न्... प्रतीकग्रहणेन ता ऋचो दर्शयति—"अग्ने हंसि न्यत्रिण मित्येताः"-इति (सं० १०.११८. १—९.)। अग्ने हंसीत्यादिके ...के नवर्चो विद्यन्ते; एता रक्षोहननलिङ्गकाः *। तासा मनुवचने प्रयोजन माह—"रक्षसा मपहत्यै"-इति। कः प्रसङ्गो रक्षसा मित्याशङ्क्याह—"रक्षांसि वा एनं तर्ह्यालभन्ते,—यर्हि न जायते यर्हि चिरं जायते"-इति। यस्मिन् काले मथ्यमानस्य वह्नेः सर्वथानुत्पत्तिः, विलम्बो वा भवेत्, तदानीम् 'एनं'

---

* तथाचानुक्रम्यते—'अग्ने हंसुरुक्षय आमहीयव आग्नेयं राक्षोघ्नं गायत्रं तु'-इति। आश्वलायनेनापि सूचितम्—'अजायमाने त्वं तस्मिन्नावसःनेऽग्ने हंसि न्यत्रिण मिति सूक्त मावपेत'-इति श्रौ० २. १६. ३, ४।

वह्निं 'रक्षांसि' एव 'आलभन्ते' संस्पृशन्ति, प्रतिबध्नन्तीत्यर्थः । ततो रक्षोहननाय ता ऋचः पठनीयाः ॥

नैमित्तिका ऋचो विधाय प्रकृता मेव षष्ठी मृचं विधत्ते— "स यद्येकस्या मेवानूक्तायां जायेत, यदि द्वयोरथोत ब्रुवन्तु जन्तव इति; जाताय जातवती मभिरूपा मनुब्रूयाद्"–इति । रक्षोघ्नीना मृचां मध्ये 'यद्येकस्या मेव' पठितायां 'सः' वह्निः 'जायेत', 'यदि' वा 'द्वयोः' पठितयोरुत्पद्येत । एवं तृतीयादीना मुपलक्षणम् । 'अथ' इदानी मुत्पत्तिक्षणे एव 'उत ब्रुवन्तु'–इत्येताम् ( सं० १. ७४. ३. ) 'अनुब्रूयात्' । सा च 'जातायाभिरूपा' जातस्याग्नेरनुकूला । तदेवानुकूल्यं 'जातवतीम्'–इति-शब्देन स्पष्टीक्रियते । जातं जन्मवाचि पदं तदस्या मस्तीति जातवती । तस्या ऋचो द्वितीयः पाद एवं पठ्यते, "उदग्नि-र्वृत्रहाजनि"–इति । तस्मिन् अजनीति जन्मवाचकं पद मस्ति । अस्या ऋचोऽभिरूपत्वं प्रशंसति—"यद्यज्ञेऽभिरूपं तत्समृद्धम्"–इति ॥

सप्तमी मृचं विधत्ते—"आ यं हस्ते न खादिनम्"–इति । अनुब्रूयादिति शेषः । सा च संहितायां पठिता—"आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति । विशा मग्निं स्वध्वरम्"–इति । ( सं० ६. १६. ४०. ) । तस्या अय मर्थः—'यं'-शब्दः प्रसिद्धवाची, 'न'-शब्द उपमार्थः । 'यं' मन्थनेन प्रसिद्धम् 'अग्निं' 'हस्ते न' हस्ते इव ऋत्विजः 'आ बिभ्रति' समन्ताद्धारयन्ति, तत्तदृत्विजां हस्ताभ्यां मन्थनं हस्तधारणसदृशं 'शिशुं' जातम् न'-इत्यनेन दृष्टान्तोऽभि-धीयते,—जातं शिशु मिव; यथा सद्यः समुत्पन्नं शिशुं हस्ताभ्यां धारयन्ति, तद्वत् । कीदृश मग्निम् ? 'विशां स्वध्वरं' शोभनाध्वरो

यागो यस्याग्नेः सोऽयं 'स्वध्वरः', 'विशां' प्रजानाम् ऋत्विग्-यजमान-रूपाणा मध्वरनिष्पादकम् । पुनरपि कीदृशम् ? 'खादिनं' हविरादीनां भक्षक मिति । अस्या ऋचि प्रथमपादे हस्तशब्देन विवक्षित मर्थं दर्शयति—"हस्ताभ्यां ह्येनं मन्थन्ति"-इति । 'हि' यस्माद् 'एनम्' अग्निं 'हस्ताभ्यां मन्थन्ति', तस्माद्धस्ते धारण मुपपद्यते । द्वितीयपादे पूर्वभाग मनूद्य तात्पर्यं दर्शयति—"शिशुं जात मिति शिशुरिव वा एष प्रथमजातो यदग्निः"-इति । योऽग्निर्मन्थनेन प्रथम मुत्पन्नः, एष शिशुना सदृश इत्येतस्य भागस्य तात्पर्यम् । द्वितीयपादस्योत्तरभागं तृतीयपादं चानुवदति—"न बिभ्रति विशा मग्निं स्वध्वरम्"-इति । अत्र नेति [illegible] व्याचष्टे—"यद्वै देवानां नेति तदेषा मोमिति"-इति । 'देवानां' सम्बन्धिनि मन्त्रे क्वचित् क्वचित् 'न इति' पदं 'यद्' [illegible]स्ति, [illegible] 'एषां' देवप्रतिपादकानां मन्त्राणां 'नेति' पदम्, 'ओ३म्'-इत्येतस्मिन्नर्थे वर्त्तते*। लोके प्रतिषिद्धवाची नेति शब्दः, वेदेऽङ्गीकारवाची†; 'न', 'ओम्'-इत्यस्य पदस्यार्थे वर्त्तते । तया सति लोकवैपरीत्यस्य दृष्टत्वात् उपमार्थोऽपि वक्तुं शक्यते । तदेतदुभयं निरुक्तकारेणोक्तम्—"नेति प्रतिषेधार्थीयो भाषायाम्" -इति, "उपरिष्टादुपाचार उपमार्थीयः"-इति च (निरु० १.२.१.)। अयं च नेतिशब्दः 'शिशुं जातं न'-इत्युपमेयादुपरिष्टात्प्रयुज्यते, तस्मादुपमार्थीयः । 'देवानाम्'-इत्यत्र देवप्रतिपादकानां मन्त्राणां सम्बन्धीति व्याख्यातम् ; यद्वा, दकारवकारयोर्विपर्यासेन वेदानां सम्बन्धीति व्याख्येयम् ॥

---

* 'यद्वै नेत्याचि ओ मिति तत्'-इति च शत० ब्रा० १.४.१.३।

† वक्ष्यति च परस्तात्—'ओ मिति वै दैवं तथेति मानुषम्'-इति ७.३.६।

अष्टमो ऋचं विधत्ते—"प्र देवं देववीतये भरता वसुवित्तममिति प्रक्रियमाणायाभिरूपा"-इति। अनुवक्तव्येति शेषः *। आहवनीये प्रक्षिप्यमाणोऽयं मथितोऽग्निः प्रक्रियमाणः। तस्येय मृगनुरूपा। कथ मिति चेत्, तदुच्यते;—'देववीतये' देवानां कामायाभिलाषाय 'वसुवित्तमम्' अतिशयेन हविर्लक्षणधनाभिज्ञं 'देवं' मथित मग्निम्, हे ऋत्विजः! 'प्र भरत' आहवनीये प्रहरत, प्रक्षिपत; तस्मात् प्रक्रियमाणानुरूपत्वम्। अत्र 'जातायानुब्रूहि'† -इत्यध्वर्युणा प्रेषितो होता, पूर्वोक्ताम् 'उत ब्रुवन्तु जन्तवः'-इतेग्ता मनुब्रूयात्। तथा 'प्रक्रियमाणायानुब्रूहि'-इत्येवं प्रेषित 'प्र देवम्'-इत्यादिका मृचं ब्रूयात्। एव सुतरा अपि। तदेतत्सर्वं तैत्तिरीयाः सङ्गृह्यामनन्ति—"अग्नये मथ्यमानायानुब्रूहीत्याह, सावित्री मृच मन्वाह, सवितृप्रसूत एवैनं मन्थति; जातायानुब्रूहि द्र प्रक्रियमाणायानुब्रुहीत्याह, काण्डे काण्ड एवैनं क्रियमाणे समिन्द्धेर्य गायत्रीः सर्वा अन्वाह"-इति (सं० ६. ३. ५. ३.)। प्र देव मित्यस्या ऋचः प्रक्रियमाणयाभिरूपत्वे यज्ञाङ्गसमृद्धिरूपं प्रयोजनं दर्शयति—"यद्यज्ञेऽभिरूपं तत् समृद्धम्"-इति। अस्या ऋच स्तृतीयपाद मनुवदति—"आ स्वे योनौ निषीदत्विति"-इति। अयं मथितोऽग्निरागत्य 'स्वे योनौ' स्वकीयस्थाने आहवनीयाख्ये नितरा मुपविशत्विति पादस्यार्थः। तस्मिन् पादे योनिपदं व्याचष्टे—"एष ह वा अस्य स्वो योनिर्यदग्निरग्नेः"-इति। आहवनीयाख्यो यः 'अग्निः' अस्ति, 'एष वा' 'अस्य' मथितस्य 'अग्नेः' स्वकीयं स्थानम्॥

---

* 'प्र देवं देववीतय इति (सं० ६. १६. ४१.) द्वे'-इति आश्व० श्रौ० २. १६. ७।

† 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः'-इति (पा० ८. २. ९१.) प्लुतिः।

नवमी मृचं विधत्ते—"आ जातं जातवेदसीति"-इति। अनुब्रूयादिति शेषः। सा चैवं संहितायां माम्नाता—"आ जातं जातवेदसि प्रियं शिशीतातिथिम्। स्योन आ गृहपतिम्"-इति (सं० ६. १६. ४२.)। अस्याय मर्थः—हे ऋत्विजः! इदानीं 'जातम्' एन मग्निम्, पूर्व मेव स्थिते 'जातवेदसि' आहवनीयेऽग्नौ 'शिशीत' शाययत, स्थापयत। कीदृशम्? 'प्रियम्' आहवनीयस्य प्रीतिहेतुम्, 'अतिथिम्' इदानी मागतत्वादतिथिरूपम्, 'स्योने' सुखकरे आहवनीये 'आ गृहपतिम्' आगत्य गृहस्वामित्वेन वर्त्तमानम्। तस्या मृचि प्रथमपादे पदद्वयं व्याचष्टे—"जात इतरो जातवेदा इतरः"-इति। 'इतरः' इदानीं मथितोऽग्निः, सद्यः समुत्पन्नत्वात् 'जातः'-इत्युच्यते; 'इतरः' पूर्वसिद्धाहवनीयोऽग्निरि[illegible]ीं जात मिम मग्निं वेत्तीति 'जातवेदाः'-इत्युच्यते। [illegible] मनूद्य व्याचष्टे—"प्रियं शिशीतातिथि मितैष ह [illegible]ोऽ अस्य प्रियोऽतिथिर्यदग्निरग्नेः"-इति। यः 'अग्निः' मथनोत्पन्नः, 'एषः' एव 'अस्य' पूर्वसिद्धस्याहवनीयस्य 'अग्नेः' 'प्रियः' च 'अतिथिः' च। तृतीयपाद मनूद्य व्याचष्टे—"स्योन आ गृहपति मिति, शान्त्या मेवैनं तद्दधाति"-इति। 'स्योने' सुखरूपे पूर्वाग्नौ स्थापनं यदस्ति, 'तत्' तेन स्थापनेन नूतन मेव मग्निं 'शान्त्या मेव' स्थापयति; पूर्वाग्नेः सुखनिवासहेतुत्वात् शान्तित्वम्॥

दशमी मृचं विधत्ते—"अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा, हव्यवाड् जुह्वास्य इत्यभिरूपा; यद्यज्ञे अभिरूपं तत्समृद्धम्"-इति। अनूच्येति शेषः। अस्याय मर्थः—'अग्निना' आधारभूतेनाहवनीयेनानुगृहीत इदानीं प्रहृतः 'अग्निः' सम्यग् दीप्यते।

कीदृशोऽग्निः ? 'कविः' विद्वान्, आकूताभिज्ञः; अतएव 'गृहपतिः' यजमानस्य गृहस्य पालकः, 'युवा' नूतनः, देवेभ्यो हव्यं वहतीति 'हव्यवाट्', होमसाधनभूतः। जुहूरेवास्यं मुखं यस्यासौ 'जुह्वास्यः'। सेय मृक् ( सं० १. १२. ६.) प्रक्रियमाणाग्निगुणकीर्त्तनात् तस्याग्नेरनुरूपा। तदेतदानुरूप्यं प्रशंसति—'यद् यज्ञे ऽभिरूपं तत् समृद्धम्'-इति॥

एकादशी मृचं विधत्ते—"त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता"-इति। अनुब्रूयादिति शेषः। हे नूतन! 'अग्ने!' 'त्वं' सिद्धेन आहवनीयेन 'अग्निना', 'समिध्यसे'-इति तृतीयपादगतेन* पदेन योज्यम्। उभयोरग्न्योर्विद्यमानत्वात् सम्यगनुष्ठाननिर्वाहकत्वाद् वा सच्छब्दवाच्यत्वम्। "अग्ने महाँ असि ब्राह्मण भारत" -इति-( तै० ब्रा० ३.५.३.)-श्रुतिः ब्राह्मणजात्यभिमानित्व [illegible] विप्रत्वम्। तदेतदुभयं विशदयति—"विप्र इतरो विप्र इतर [illegible] तरः सन्नितरः"-इति। तृतीयपाद मनूद्य व्या[illegible] सख्या समिध्यस इत्येष ह वा अस्य स्वः सखा य[illegible] [illegible]:' -इति। यः अग्निः आहवनीयाख्यः 'एषः' एव 'अस्य अग्नेः' मथितस्य स्वकीयः 'सखा'॥

द्वादशी मृचं विधत्ते—"तं मर्जयन्त सुक्रतुं पुरोयावान माजिषु, स्वेषु क्षयेषु वाजिन मिति"-इति ( सं० ८. ८४. ८.)। अनुब्रूयादिति शेषः। हे ऋत्विजः! 'तं' नूतन मग्निं 'मर्जयन्त' शोधयन्त। कीदृशम्? शोभनस्य क्रतोः निर्वाहकम्, 'आजिषु' सङ्ग्रामेषु 'पुरोयावानं' पुरोगन्तारम्, 'स्वेषु क्षयेषु' स्वकीयेषु गृहेषु आहवनीयादिषु 'वाजिनम्' अन्नवन्तं गच्छन्तं वा; क्षयशब्देन

* स एष तृतीयपादः—"सखा सख्या समिध्यसे"—इति सं० ८. ४३. १४।

अत आहवनीयाग्निरूपस्येहविवक्षां दर्शयति— "एष ह वा अस्य स्वः क्षयो यदग्निरग्नेः"-इति ॥

त्रयोदशी मृचं विधत्ते—"यज्ञेन यज्ञ मयजन्त देवा इत्युत्त-मया परिदधाति"-इति। ( सं० १. १६४. ५०; १०. ९०. १६. )। 'उत्तमया' चानया 'परिदधाति' अनुवचनं समापयेत्। यदाहाश्व-लायनः—"यज्ञेन यज्ञ मयजन्त देवा इति परिदध्यात्। सर्वत्रो-त्तमाम् परिधानीयेति विद्याद्"-इति ( आ० २. १६. ७, ८. )। उदाहृत मृचः पादं व्याचष्टे—"यज्ञेन वै तद्देवा यज्ञ मयजन्त यद-ग्निनाग्नि मयजन्त ते स्वर्गं लोक मायन्"-इति। 'अग्निना' क्रिय-माणेन नूतनेन, पूर्वसिद्ध माहवनीयम् 'अग्निम्' 'अयजन्त' पूजितवन्तः इति 'यद्' अस्ति, तेन कारणेन 'यज्ञेन वै देवा यज्ञ मयजन्त' [illegible]त्युच्यते। उभौ यज्ञशब्दौ स्वकारणभूत मग्निद्वय मुप-[illegible] देवशब्देनेदानीं देवत्वेन वर्त्तमानाः पूर्वसिद्धा ऋत्विजो [illegible] अस्य [illegible] 'ते' च पूर्वं मनुष्ठितेन 'स्वर्गं लोकं' प्राप्ताः। अवशिष्ट' पादत्र'एषः' ति—"तानि धर्माणि प्रथमान्यासन्, ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति देवाः"-इति। इदानीं देवत्वेन वर्त्तमानैः पूर्वसिद्धैः ऋत्विग्-यजमानैः यानि ज्योति-ष्टोमादीनि कर्माण्यनुष्ठितानि, 'तानि' सर्वाणि 'प्रथमानि' 'धर्माणि' आदिसृष्टिकालीनानि सुकृतिसाधनानि 'आसन्'। 'ते ह' ते चानुष्ठातारः 'महिमानः' महत्त्वोपेताः 'नाकं सचन्त' कं सुखम्, अकं दुःखम्, तद्रहितो भोगो नाकः, सम्प्राप्तवन्तः। 'यत्र' यस्मिन् लोके 'पूर्वे' साध्याः पूर्वसृष्टिगताः यज्ञादिसाधकाः, इदानीं यज्ञादिभिः साध्यत्वेन वर्त्तमानाः, 'देवाः' 'सन्ति' वर्तन्ते; तं नाकं सचन्तेति पूर्वत्रान्वयः। चतुर्थपादस्य तात्पर्यं दर्शयति—

"छन्दांसि वै साध्या देवास्ते ऽग्रे ऽग्निनाग्नि मयजन्त, ते स्वर्गं लोक मायन्"-इति । 'छन्दांसि वै' गायत्र्यादिच्छन्दोऽभिमानिन एव 'साध्याः' इदानीं जनैः पूज्याः 'देवाः' । 'ते' एव पूर्वसृष्टेन 'अग्निना' मथितेनाग्निना आहवनीयम् 'अग्निम्' अयजन्त, पूजितवन्तः । 'ते' च तेन यागेन 'स्वर्गं' प्राप्ताः । न केवलं छन्दोदेवा एव चतुर्थपादे विवक्षिताः, किन्तु अन्येऽपीत्याह—'आदित्याश्चैवेहासन्नङ्गिरसश्च ते ऽग्रे ऽग्निनाग्नि मयजन्त ते स्वर्गं लोक मायन्"-इति । इदानी मादित्यशब्देनाभिधेया ये देवाः, अङ्गिरःशब्देनाभिधेया ये च ऋषयः, ते द्विविधा अपि 'इहैवासन्' भूमावेव पूर्वसृष्टौ मनुष्यरूपेणावस्थिताः । 'तेऽग्रे'-इत्यादि पूर्ववत् । तदेवं चतुर्थपादतात्पर्यद्वय मुक्तम् । यद्वा, छन्दांसीत्यादिक मेव चतुर्थपादतात्पर्यम्, आदित्यादिक मितरपादतात्पर्य मिति द्रष्टव्यम् * ॥

येय माहवनीयेऽग्नौ मथिताग्निप्रक्षेपलक्षणा आहुतिः, तां प्रशंसति—"सैषा स्वर्ग्याहुतिर्यदग्न्याहुतिर्यदि ह वा अप्यब्राह्मणोक्तो यदि दुरुक्तोक्तो यजते ऽथ हैषाहुतिर्गच्छत्येव देवान्, न पाप्मना संसृज्यते"-इति । अग्निरूपद्रव्याहुतिर्या विद्यते, 'सैषा' स्वर्गाय हिता † । 'यदि ह' इत्यादिना स्वर्गत्व मेव स्पष्टीक्रियते । ब्राह्मणं विधायकं वाक्यम्, तेन प्रेरितो ब्राह्मणोक्तः,—तद्विपरीतः; पण्डितम्मन्यः स्वबुद्धैव यत् किञ्चिद् योऽनुष्ठति, सोऽयम् 'अब्राह्म-

* एष मन्त्रः सायणेन संहिताभाष्ये पञ्चधा व्याख्यातः ; यास्केन च स्वमते आख्यानमते चेति द्विधा व्याख्यातः ( १२. ४. ६, ७. ) । आदित्यादीना मप्यर्था नैरुक्तमते विभिन्ना एव ( २. ४. १ ; ११. २. ४. ) ।

† स्वर्ग्या । 'तस्मै हितम्'-इति ( पा० ५. १. ५. ) ।

णोक्तः । 'पौरुषेयार्थविरुद्धं' विधिवाक्यं दुरुक्तम्, तेन प्रेरितो दुरुक्तोक्तः । अथवा स्मृतिषु अब्राह्मणत्वेन प्रतिपादितो यो ऽस्ति, सोऽय मब्राह्मणोक्तः । तद्यथा,—

"अब्राह्मणास्तु षट् प्रोक्ता इति शातातपोऽब्रवीत् ।
आद्यस्तु राजभृत्यः स्याद् द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्याख्यश्चतुर्थोऽश्रौतयाजकः ।
पञ्चमो ग्रामयाजी च षष्ठो ब्रह्मबन्धुः स्मृतः ॥"-इति * ।

यद्यपि याजनाध्यापनप्रतिग्रहा ब्राह्मणस्य जीवनहेतुत्वेन विहितत्वाद् † अनिषिद्धाः, तथापि यावता जीवनं निष्पद्यते, तावदेव याजनं शास्त्रेणाङ्गीकृतम् ; यस्तु सत्यपि जीवने धनाधिक्यवाञ्छया याजनशीलः, सोऽत्र बहुयाजी विवक्षितः । यः पुमान् श्रौत-कर्मण्य[illegible]कृतः, अनादरेण स्वयं श्रौतं नानुतिष्ठति, अन्यानपि [illegible], किन्तु स्मार्तकर्मपरः सन्ननुतिष्ठत्यनुष्ठापयति च, सोऽय मश्रौतयाजकः । ग्रामे नगरे च योग्या अयोग्याश्च यावन्तः सन्ति, धनाभिलाषेण तावतां सर्वेषां याजको ग्रामनगरयाजी । यः पुमान् प्रातः सूर्योदयात्प्राक् सन्ध्यां नोपास्ते, सायं चास्तमयात्प्राक् नोपास्ते, सोऽयं ब्रह्मबन्धुः । एते षडब्राह्मणत्वेन स्मृतिषूक्ताः । दुष्टान्यपवादरूपाणि वचनानि दुरुक्तानि, तैरभिग्रस्तो दुरुक्तोक्तः । 'अब्राह्मणोक्तः' वा 'दुरुक्तोक्तः' वा यद्यपि 'यजेत', 'अय' अपि

---

* 'अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववादिना । आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी । तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः । पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च । अनागतान्तु यः पूर्वां सादित्यां चैव पश्चिमाम् । नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः'-इति पाठः आ० त० धृतः ।

† 'षण्णां तु कर्मणा मस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥'-इति म० सं० १०. ७६ ।

'एषा' आहवनीये हुता मथिता अग्न्याहुतिः 'देवान्' प्राप्नोत्येव। ततो यजमानस्य पापसंसर्गो 'न' भवति ॥

वेदनं प्रशंसति—"गच्छत्यस्याहुतिर्देवान् नास्याहुतिः पाप्मना संसृज्यते य एवं वेद"-इति। उक्तार्थवेदिता यद्यपि यत्किञ्चित् कर्म्म विकल मनुतिष्ठति, तथापि तत्सर्वं सकलं भवति ॥

न्यूनाधिकसङ्ख्याभ्रमव्युदासाय विहितानामृचां सङ्ख्यां दर्शयति—"ता एतास्त्रयोदशान्वाह रूपसमृद्धाः"-इति। राद्धोघ्नीनां नैमित्तिकत्वात् (१२१पृ० ७पं०) परित्यागेनेतरास्त्रयोदशसङ्ख्याकाः *। ताश्च मथ्यमानस्य जायमानस्य प्रक्रियमाणस्याहवनीयेन संसृज्यमानस्य च प्रतिपादनेनानुकूलेनैव रूपेण समृद्धाः। ता मेतां समृद्धिं प्रशंसति—"एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म्म क्रियमाण मृगभिवदति"-इति। आद्यन्तयोः ऋचोः आवृत्तिविधिम्, आवृत्तानां सङ्ख्याप्रशंसाम्, वेदनप्रशंसाम्, अपतातप्र...ं च दर्शयति—"तासां त्रिः प्रथमा मन्वाह, त्रिरुत्तमां,ताः सप्तदश सम्पद्यन्ते, सप्तदशो वै प्रजापतिर्द्वादशमासाः पञ्चर्तवस्तावान्त्संवत्सरः, संवत्सरः प्रजापतिः, प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद, त्रिः प्रथमां त्रिरुत्तमा मन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय"-इति। पूर्ववद् व्याख्येयम् (१०६ पृ०)॥ ५

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
पञ्चमः खण्डः ॥ ५ ( १६ ) ॥

---

* एतास्त्रयोदशर्चं तैत्तिरीयसंहितायामनुक्रमेणैवैकत्राम्नाताः (३. ५. ११.)। वस्तुतोऽत्र नैमित्तिकसहिताः साकल्येनेह द्वाविंशतिः ऋचो विहिताः।

॥ अथ षष्ठः खण्डः ॥

समिधाग्निं दुवस्यताप्यायस्व समेतु त इत्याज्यभागयोः पुरोनुवाक्ये भवत आतिथ्यवत्यौ रूपसमृद्धे एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति सैषाग्नेय्यतिथिमती न सौम्यातिथिमत्यस्ति यत्सौम्यातिथिमती स्याच्छश्वत्सा स्यादेतत् त्वेवैषातिथिमती यदापीनवती यदा वा अतिथिं परिवेविषत्यापीन इव वै स तर्हि भवति तयोर्जुषाणेनैव यजतीदं विष्णुर्विचक्रमे तदस्य प्रियमभिपाथो अश्यामिति वैष्णव्यौ त्रिपदामनूच्य चतुष्पदया यजति सप्त पदानि भवन्ति शिरो वा एतद्यज्ञस्य यदातिथ्यं सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत्प्राणान् दधाति होतारं चित्ररथमध्वरस्य प्र प्रायमग्निर्भरतस्य शृण्व इति स्विष्टकृतः संयाज्ये भवत आतिथ्यवत्यौ रूपसमृद्धे एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति त्रिष्टुभौ भवतः सेन्द्रियत्वायेळान्तम् भवतीळान्तेन वा एतेन देवा अराध्नुवन्यदातिथ्यं तस्मादिळान्तमेव कर्त्तव्यम् प्रयाजानेवात्र यजन्ति नानुयाजान् प्राणा वै प्रयाजानुयाजास्ते य इमे शीर्षन् प्राणास्ते प्रया-

जा येऽवाञ्चस्तेऽनुयाजाः स योऽचानुयाजान्यजेद्यथे-मान् प्राणानालुप्य शीर्षन्धित्सेत्तादृक्तदतिरिक्तं तत् स मु वा इमे प्राणा विद्रे ये चेमे ये चेमे तद्यदेवात्र प्रयाजान्यजन्ति नानुयाजांस्तत्र स काम उपाप्तो योऽनुयाजेषु योऽनुयाजेषु ॥ ६ ( १७ ) ॥

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां तृतीयोध्यायः ॥३॥

आतिथेय्यष्टिमध्ये कर्त्तव्य मग्निमन्थन मुक्त्वा तदिष्टिशेषं विधत्ते—"समिधाग्निं दुवस्यताप्यायस्व समेतु त इत्याज्यभागयोः पुरोनुवाक्ये भवत आतिथ्यवत्यौ रूपसमृद्धे; एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाण मृगभिवदति"-इति। "समिधाग्निम्"-इति ( सं ८. ४४. १. ) प्रथमाज्यभागस्य पुरोनुवाक्या। "आप्यायस्व समे तु ते"-इति ( सं १. ९१. १६. ) द्वितीयस्य। प्रथममन्त्रस्य द्वितीयपादे 'घृतैर्बोधयतातिथिम्'-इतिश्रूयमाणत्वात् 'आतिथ्यवत्यौ'। तदेतदाक्षिपति—"सैषाग्नेय्यतिथिमती, न सौम्यातिथिमत्यस्ति,यत्सौम्यातिथिमती स्याच्छश्वत्सा स्यात्"-इति। सौम्या तु अतिथिशब्दोपेता नास्ति; आप्यायस्वेत्यस्या मृचि अतिथिशब्दस्याश्रवणात्। यदि सौम्यातिथिशब्दोपेता 'स्यात्', तदानीं 'शश्वत्' अवश्यं 'सा' सौम्या पुरोनुवाक्या भवेत्, न त्वसावतिथिमती; तस्मादातिथ्यवत्याविति द्विवचन मयुक्त मित्यर्थः। आक्षेपं समाधत्ते—"एतत्त्वेवैषातिथिमती यदापीनवती"--इति। 'तु' शब्दः आक्षेपनिवारणार्थः। आपीन मभिवृद्धिः, तद्वाचकस्य 'आप्यायस्व'-इतिशब्दस्य विद्यमानत्वादियं

सौम्यापीनवती ; यदापीनवत्त्व मस्ति, 'एतत् एव' एतेनापीनवत्त्वेन एव 'एषा' सौम्या 'अतिथिमती' सम्पद्यते ; आपीनत्वस्यातिथ्युपलक्षकत्वात् *। तदेवोपलक्षकत्वं विशदयति— "यदा वा अतिथिं परिवेविषत्यापीन इव वै स तर्हि भवति"-इति। तम् 'अतिथिं' गृहस्वामी 'यदा' एव 'परिवेविषति' परिवेषणेन पात्रे भोज्यप्रक्षेपेण भोजयति, 'तर्हि' तस्मिन् भोजनोत्तरकाले 'सः' अतिथिः 'आपीनः इव' उदरपूर्त्या वृद्धिं प्राप्त इव 'भवति' एव ; तस्माद्वृद्धिवाचक आप्यायस्वेतिशब्दोऽतिथिलक्षकः, अतो द्विवचनं पुरोऽनुवाक्यात्वं च युक्तम् ॥

आज्यभागयोर्याज्यां विधत्ते— "तयोर्जुषाणेनैव यजति"-इति। ऋग्वाम्नातौ "जुषाणोऽग्निराज्यस्य वेतु"-इति, "जुषाणः सोम आज्यस्य हविषो वेतु"-इति च। तेनैव † मन्त्रेण यजेत। अग्निर्वृत्राणीत्यादिके प्रकृतिगते ( ४४ पृ० ) पुरोनुवाक्ये चोदकप्राप्ते अपोद्य, यथा समिधाग्नि मित्यादिके विहिते ( १३२ पृ० ) तद्वद्याज्यान्तरप्रसक्तिं वारयितुं विधिः ॥

प्रधानस्य हविषो याज्यानुवाक्ये विधत्ते—"इदं विष्णुर्विचक्रमे, तदस्य प्रिय मभि पाथो अश्या मिति वैष्णव्यौ"-इति। याज्यानुवाक्ये कुर्यादिति शेषः ‡। तयोर्विभागं विधत्ते— "त्रिपदा मनूच्य चतुष्पदया यजति"-इति। "इदं विष्णुः"-इति ( सं० १.२२.१७. ) त्रिपदा, तां पुरोनुवाक्यारूपेणानुब्रूयात् ;

---

* अतएवाह चाश्वलायनः—'धाय्ये, अतिथिमन्तौ,— समिधाग्निं दुवस्यताप्यायस्व समेतु त इति'—इति श्रौ० ४.५.३।

† 'जुषाणः'—इतिपदयुक्तमन्त्रद्वयेनेति भावः। तौ मन्त्रौ तै० ब्रा० ३.५.६. आम्नातौ।

‡ आश्व० श्रौ० ४.५.३। ११४ पृ० ४ पं०।

"तदस्य प्रियम्"-इति ( सं० १.१५४.५. ) चतुष्पदा, तया 'यजेत' याज्यारूपेण तां पठेत्। ऋग्द्वयगतां पादसङ्ख्यां प्रशंसति—"सप्त पदानि भवन्ति ; शिरो वा एतद्यज्ञस्य यदातिथ्यं, सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत्प्राणान् दधाति"-इति। आतिथ्येष्टे-र्यज्ञशिरोरूपत्वाच्छिरसि छिद्रवर्त्तिनां प्राणानां सप्तत्वादत्र पाद-सङ्ख्यया यज्ञस्य शिरसि सप्त प्राणाः स्थापिता भवन्ति ॥

संयाज्ये विधत्ते—"होतारं चित्ररथ मध्वरस्य, प्र प्राय मग्निर्भरतस्य शृण्व इति स्विष्टकृतः संयाज्ये भवत आतिथ्य-वत्यौ रूपसमृद्धे ; एतद्वै यज्ञस्य समृद्धं, यद्रूपसमृद्धं, यत्कर्म्म क्रिय-माण मृगभिवदति"-इति। "होतारम्"-इति ( सं० १०.१.५. ) पुरोनुवाक्या, "प्र प्रायम्"-इति ( सं० ७.८.४. ) याज्या। प्रथ-मायां ऋचः चतुर्थपादे 'श्रिया त्व१ग्नि मतिथिं जनानाम्'-इति-श्रूयमाणत्वादातिथ्यवत्त्वम् ; द्वितीयस्या अपि चतुर्थपादे 'दुस्तानो दैव्यो अतिथिः'-इति। मन्त्रद्वयगतं छन्दः प्रशंसति—"त्रिष्टुभौ भवतः सेन्द्रियत्वाय"-इति। "इन्द्रियं वै त्रिष्टुप्"-इतिश्रुत्यन्त-रात् * त्रिष्टुभ इन्द्रियहेतुत्वम् ॥

अत्र इड़ाभक्षणादूर्द्ध्वभावि कर्तव्य मपि चोदकेन प्राप्तम्, तदे-तद् वारयति—"इळान्तं भवतीळान्तेन वा एतेन देवा अराध्नु-वन्यदातिथ्यं ; तस्मादिळान्त मेव कर्त्तव्यम्"-इति। पुरोडाश-सम्बन्धि यदेतदिड़ाभागभक्षणम्, तदन्त मेवातिथ्येष्टिरूपं कर्म्म भवेत् ; तावतैव समृद्धिसिद्धेः। द्विविध मिड़ाभक्षणम्,—अनु-याजयागात् पूर्वं मुत्तरकालीनं च। तयोः पूर्वकालीन मन्तत्वेन दर्शयितु मनुयाजान् निषेधति—"प्रयाजानेवात्र यजन्ति, नानु-

* तै० सं० २.४.११.२ ; ३.२.९.३ ; तै० ब्रा० १.७.९.२. ( ४६ पृ० )।

याजान्''-इति । अनुयाजानां यजने दोषं प्रकटयति—''प्राणा वै प्रयाजानुयाजास्ते य इमे शीर्षन् प्राणास्ते प्रयाजा येऽवाञ्चस्ते ऽनुयाजाः ; स यो ऽत्रानुयाजान्यजेद्यथेमान् प्राणानालुप्य शीर्षन् धित्सेत्, तादृक् तत्''-इति । प्र-शब्दसाम्यात् प्रयाजानां प्राणत्वम्, तदनुवर्त्तित्वसाम्यादनुयाजाना मपि प्राणत्वम् । तथासति 'ते य इमे शीर्षन् प्राणाः' शिरस्यवस्थिताः श्वासादिकारिणः प्राणाः ये केचित् सन्ति, 'ते' प्रयाजरूपाः प्रकृष्टत्वसाम्यात् । उत्तमाङ्गवर्त्तित्वेन प्राणानां प्रकृष्टत्वम् ; प्रयाजानां च प्रथमानुष्ठानत्वेन प्रकृष्टत्वम् । 'ये [illegible]ञ्चः' नाभेरधस्ताद्वर्तमाना अपानवाय्वादयः, 'ते' अनु-रूपायाः प्रा[illegible] निकृष्टत्वसाम्यात् । अपानवाय्वादीनां मध्याङ्गवर्त्तित्वेन [illegible]न्तत्वं च वि[illegible] ; अनुयाजानां च पश्चाद्भावित्वेन निकृष्टत्वम् । एवं प्रतीते[illegible]ः पुमान् 'अत्र' आतिथ्येष्टौ 'अनुयाजान् यजेद्,'— लोके [illegible]थावत् [illegible] 'इमान्' अर्वाग्देशवर्तिनोऽपानवाय्वादीन् 'आलुप्य' जा[illegible]त्वा 'शीर्षन् धित्सेत्' शिरसि स्थापयितु मिच्छेत्, तथैव 'सः' व[illegible]न् 'तत्' कर्तुं मिच्छेत् । अधोदेशवर्त्तिप्राणस्थानीयानुयाजानां यज्ञशिरःस्थानीयातिथ्यकर्मण्यनुष्ठान मयुक्तम् । तथा पुत्रादिप्रजा-स्थानीयाना मनुयाजानां शिरःस्थानीयेऽनुष्ठान मयुक्त मित्यपि द्रष्टव्यम् * ॥

दोषान्तर माह—''अतिरिक्तं तत्स मु वा इमे प्राणा विद्रे ये चेमे ये चेमे''–इति । 'ये चेमे' शिरसि योग्याः प्राणाः, येऽप्यमी नीचदेशे स्थिताः प्राणाः, ते सर्वे 'समु विद्रे' सम्भूयैकत्र शिरसि

---

* 'प्राणा वै प्रयाजा अपाना अनुयाजा इति ब्राह्मणम्'–इति निरु० ८. ३. ७ । 'प्राणा वै प्रयाजाः अपाना अनुयाजास्तस्मात् प्रयाजाः प्राञ्चो ह्रयन्ते तद्धि प्राणरूपम् प्रत्यञ्चोऽनु-याजास्तदपानरूपम्'–इति शत० ब्रा० ११. २. ७. २७ ।

अतिष्ठेरन्। 'तत्' च 'अतिरिक्त' योग्यस्थानीयादधिकं शिरोरूप मातिथ्यं कर्म। चक्षुरादीना मेव प्राणानां योग्यस्थानम्; न त्वधोदेशवर्त्तिनां अपानादीनां तत्रावकाशोऽस्तीत्यर्थः॥

नन्वनुयाजाना मनुष्ठानाभावे कर्म्माङ्गसाकल्यलक्षणः फल-विशेषो न प्राप्येतेत्याशङ्क्याह— "तद्यदेवात्र प्रयाजान्यजन्ति नानुयाजांस्तत्र स काम उपाप्तो यो ऽनुयाजेषु यो ऽनुयाजेषु"-इति। 'तत्' तस्मिन्नातिथ्यकर्म्मणि यदि 'प्रयाजान्' एव 'यजन्ति', 'न' तु 'अनुयाजान्', 'अनुयाजेषु' 'यः' 'कामः' फलविशेषः, 'सः' सर्वोऽपि 'तत्र' कर्म्मणि प्राप्तो भवति। यथा लोके व क्रिय-लिकादिभारं वहत्सु बहुषु मध्ये कस्यचिदशक्तौ सत्या(१.५,) एव वहन्ति, तद्वदित्यर्थः। द्विरभ्यासोऽध्यायसमाप्त्यर्थः मवशिष्टा अत्र मीमांसा। दशमाध्यायस्य सप्तमपादे (जै० सू* ॥ अधि० १२.) चिन्तितम्— ३८, ३९.

"प्रायणीयातिथ्ययोः किं विकल्पे शंयुिळान्त[illegible]
अनियतेर्विकल्पः स्यान्निषेधपरिसंख्ययोः॥
शंयुिळान्तत्ववाक्याच्च नियतेर्विधिमात्रतः।
नित्यानुवादो 'न' वाक्यं दोषबाहुल्य मन्यथा॥

---

* 'शिरो वै यज्ञस्यातिथ्यम्०—० नवकपालः पुरोडाशो भवति०—० अग्निं मन्थति०—० अग्नये मथ्यमानायानुब्रूहीति०—० अग्निमभिजुहोति०—० तदिळान्तं भवति०—० नानुयाजान् यजन्ति'-इति शत० ब्रा० ३. ४. १. १—२६। 'यदुभौ विमुच्यातिथ्यं गृह्णीयाद्०—० शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति०—० अग्निं मन्थति०—० यथायजुरेवैतत्'-इति तै० सं० ६. २. १. २; १. २. १०। 'अथातिथ्येळान्ता'-इत्यादि आश्व० श्रौ० ४. ५. १—७। 'आतिथ्यम्'-इत्यादि, 'इळान्तं भवति प्रौवं व्रतप्रदाने गृह्णात्यापतय इति'-इत्यन्तम् कात्या० ८. १. १—१८। 'अथातिथ्यायास्तन्वं प्रक्रमति'-इत्युपक्रम्य 'इळान्ता सन्तिष्ठते धारयति प्रौव माज्य माज्यम्'-इति यावत् आप० श्रौ० १०. ३०, २१।

ज्योतिष्टोमे श्रूयते—"शंय्वन्ता प्रायणीया सन्तिष्ठते ; न पत्नीः संयाजयन्ति,-इति, ( शत० ब्रा० ३.२.३.२३. ), "इळान्तातिथ्या सन्तिष्ठते ; नानुयाजान् यजन्ति"-इति च ( शत०ब्रा०३. ४. १. २. ६. * ) । प्रकृतौ यदा होता "तच्छंयोः"-इति ( तै०ब्रा०३.५. ११.१. ) जपति †, तदानीं मध्वर्युः परिधीनग्नौ प्रक्षिपति ‡ । तदाह कल्पसूत्रकारः—"अनूच्यमाने शंयुवाक आहवनीये परिधीन् प्रहरति"-इति ( १२.६.७. ) । ततो हविःशेषेषु भक्षितेषु पत्नीः संयाजयन्तीति क्रमः । पत्नीसंयाजाना मुपरि फलीकरण-प्रायश्चित्तहोम-कपालोद्वासनैरिष्टिः समाप्यते । एवं स्थिते विकृतिरूपायाः प्रायणीयेष्टेः शंयुवाकान्तत्वम्,—आतिथ्येष्टेरिडाभक्षणान्तत्वं च विकल्पितं स्यात् । कुतः ? निषेधवाक्याभ्यां प्रकारद्वयप्रतीतेः । तथाहि,—शंय्वन्तत्वेडान्तत्वविधिनैवोपरितनपत्नीसंयाजानुयाजनिषेधे पुनर्निषेधवचनं परिसंख्यार्थम् । पत्नीसंयाजानुयाजव्यतिरिक्तं नास्ति निषेधपरिसंख्या । तेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्व मनयोरिष्ट्योः प्रतीयते ; विधिवाक्येन शंय्विड़ान्तत्वम् । तेन व्रीहियववद्विकल्पः ? इति प्राप्ते ब्रूमः ;—विधिमात्रस्यात्र प्रवृत्तेः शंय्वन्तत्व मिडान्तत्वं च तयोः प्रति नियतम्, पत्नीसंयाजाद्यभावस्त्वर्थसिद्धः ; ततो नञ्पदयुक्त मुपरितनं प्रतिषेधवाक्यं नित्यानुवादः § ; अन्यथा बहवो दोषाः

---

* आप० श्रौ० १०. २१. १३, १४ ; ११. १४, १५ । आश्व० श्रौ० ४. ३. २ ; ५. १ । कात्या० श्रौ० ७. ५. २२—२७ ; ८. १. १८ ।

† शंयुवाकमन्त्रव्याख्या तु तै० सं० २. ६. १०. द्रष्टव्या ।

‡ 'परिधीन् परिदधाति०—० गन्धर्वं इति (वा० सं० २.३.)'-इति कात्या० श्रौ० ९.८.१ ।

§ 'नित्यप्राप्त मनुवदति । यथा नान्तरिक्षे न दिवि अग्निश्चेतव्य इति'-इति शबरः ।

प्रसज्येरन्। विकल्पे तावदष्टौ दोषाः प्रसिद्धाः *, परिसंख्यायां च त्रयो दोषाः †; विधिपरिसंख्याभ्यां वाक्यभेदोऽपरो दोषः ‡। ततः शंय्विडान्तत्वं नियतम्"—इति ॥

तत्रैवान्यच्चिन्तितम् ( जै॰ सू॰ ४०—४२. अधि॰ १२. )—

"तत्रैव शंय्विडे पूर्वेऽपरे वा स्वेच्छयाथवा।
परे एवाथवा पूर्वे एवाद्यो द्विविधः श्रुतेः ॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगौः।
पूर्वैकवाक्यतायाति पूर्वे एवाविरोधतः ॥

प्रायणीयातिथ्ययोः निर्णीते शंय्विडे, पुनः सन्दिह्येते;— प्रकृतौ द्विविधे शंय्विडे,— पत्नीसंयाजेभ्यः पुरस्तादुपरिष्टाच्च; विहिते चात्र चोदकप्राप्ते। तत्र द्विविधश्रुतेरर्थे चोदकेनातिदिष्टे सति विशेषनियामकाभावादिच्छया स्वीकार्ये;—इ[illegible] पक्षः। यदि प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडान्ता [illegible], तदानीं मन्त्रत्वविधिनैव ताभ्यां शंय्विडाभ्या मूर्द्ध्वप्राप्तानां पत्नीसंयाजानां अनुयाजानां च वारितत्वान्न निषेधो व्यर्थः स्यात्; परयोः शंय्विडयोरन्तत्वे तु ताभ्यां शंय्विडाभ्यां पूर्वप्राप्तानां तेषा मनिवारणात्

---

* विकल्पश्च द्विविधः। व्यवस्थितः ऐच्छिकश्च। तत्र इच्छाविकल्पेऽष्टौ दोषाः। 'प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना। प्रत्युज्जीवनहानिभ्यां प्रत्येक मष्टदोषता'-इति। 'व्रीहिभिर्यजेत', 'यवैर्यजेत'—इति चैतदुदाहरणम्। कात्यायनसूत्रे तद्व्याख्यायां तत्पद्धतौ चैष विचारः कृतः (श्रौ॰ १. ४. १३—१९.)। मीमांसाया द्वादशाध्यायीयतृतीयपादे तु विकल्पविचारा बहव उपदिष्टाः; तत्र 'एकार्थास्तु विकल्पेरन्, समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य'—इति कृतं गुणविकल्पलक्षणम् ( १२. ३. १०. )।

† 'विधिरत्यन्त मप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते'—इति, 'श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाध इत्येवं परिसङ्ख्या त्रिदूषणा'—इति च, एतयोरुदाहरणादीनि च मीमांसार्थसङ्ग्रहे द्रष्टव्यानि।

‡ 'य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः, स एवाश्रुतकल्पनायाम्'—इत्येवाहाच शबरः।

तन्निवारणाय सार्थको निषेधः । तस्मात्परे एव शंयुविडे ग्राह्ये ;— इति द्वितीयः पक्षः । निषेधोऽयं नित्यानुवाद इत्युक्तम् (१३७पृ०), स च पूर्वयोः शंयुविड्योरन्तत्वेऽपि एकवाक्यता मापद्यानुवादकत्वे-नोपदिश्यते; असञ्जातविरोधिन्यौ हि पूर्वे; तस्मात् ते एव ग्राह्ये इति राद्धान्तः ॥ ६ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां तृतीयाध्याये
षष्ठः खण्डः ॥ ६ ( १७ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थाध्यायः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

---

॥ ॐ ॥ यज्ञो वै देवेभ्य उदक्रामन् न वोऽह मन्नं भविष्यामीति नेति देवा अब्रुवन्नन्न मेव नो भविष्यसीति तं देवा विमेथिरे स हैभ्यो विहृतो न प्रबभूव ते होचुर्देवा न वै न इत्थं विहृतोऽन्नम्भविष्यति हन्तेमं यज्ञं सम्भरामेति तथेति तं सञ्जभ्रुस्तं सम्भृत्योचुरश्विनाविमम् भिषज्यत मित्यश्विनौ वै देवानां भिषजावश्विनावध्वर्यू तस्मादध्वर्यू घर्मं सम्भरतस्तं सम्भृत्याहतुर्ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहीति ॥ १ ( १८ ) ॥

सोमप्रवाहिका अग्निमन्थनीया ऋचस्तथा ।

आतिथ्यास्तद्विशेषाश्च तृतीयाध्याय ईरिताः ॥

अथ प्रवर्ग्यादयो वक्तव्याः । तदर्थ मादावाख्यायिका माह—"यज्ञो वै देवेभ्य उदक्रामन्न वोऽह मन्नं भविष्यामीति नेति देवा अब्रुवन्नन्न मेव नो भविष्यसीति, तं देवा विमेथिरे, स हैभ्यो विहृतो न प्रबभूव ते होचुर्देवा न वै न इत्थं विहृतोऽन्नम् भवि-

ष्यति, हन्तेमं यज्ञं सम्भरामेति तथेति तं सञ्जभ्रुः"-इति । यज्ञ-शब्देनात्र प्रवर्ग्यो विवक्षितः । तदभिमानी देवः केनापि निमित्ते-नापरक्तोऽन्येभ्यो 'देवेभ्यः' उत्क्रान्तवान् । हे देवाः ! युष्माक महम् 'अन्नं न भविष्यामि' इत्येव मुत्क्रमणकाले प्रोक्तवान् । ततो 'देवाः' तदुत्क्रमणं 'नेति' प्रतिषिध्य सर्वथा त्व मस्माक मन्नं भवेति प्रार्थि-तवन्तः । प्रवर्ग्याख्ये कर्मणि यद्धविस्तद्देवाना मन्नं, तदभिमानी च पुरुषो देवैः प्रार्थितं तदन्नत्वं नाङ्गीचकार । 'तम्' अनङ्गी-कुर्वाणं प्रवर्ग्यं पुरुषं 'देवाः' 'विमेथिरे' ताड़नभर्त्सनादिभिर्हिंसि-तवन्तः । 'स' च प्रवर्ग्यो देवैर्विशेषेण वाधितः 'एभ्यः' देवेभ्यो 'न प्रबभूव' प्रभूतो नाभूत्, अन्नत्वेनावस्थातुं न शक्त इत्यर्थः । ततो 'देवाः' परस्पर मेवं विचारितवन्तः । एवं 'विहृतः' विशेषेण वाधितः प्रवर्ग्यो 'नः' अस्माक मन्नं नैव भविष्यतीति सम्पूर्ण मन्नं 'न भविष्यति' । त मिमं प्रवर्ग्याख्यं यज्ञं 'सम्भरामः' उचितैः साधनैः सम्यक् पोषयाम इति । सम्पूर्तिहेतुदर्शननिमित्तजन्यहर्ष-द्योतनार्थो 'हन्त'-शब्दः । 'तथेति' परस्पर मङ्गीकृत्य 'तं' प्रवर्ग्यं 'सञ्जभ्रुः' साधनसम्पादनेन सम्यक् पोषितवन्तः ॥

अथ सम्भाराणां साधनानां सम्पादनं विधत्ते—"तं सम्भृत्यो-चुरश्विनाविमं भिषज्यत मित्यश्विनौ वै देवानां भिषजावश्वि-नावध्वर्यू, तस्मादध्वर्यू घर्मं सम्भरतः"-इति । देवाः प्रवर्ग्य-कर्मोपयुक्तं महावीरादि सम्भारं 'सम्भृत्य' स्वकीयावश्विनौ, प्रत्येव मूचुः । हे अश्विनौ ! 'इमं' प्रवर्ग्यपुरुषदेहं अस्माभिः हिंसितं युवां 'भिषज्यतम्' औषधैः एतस्य समाधानं कुरुत मिति । 'देवानां' मध्ये 'भिषजावेवाश्विनौ', तस्मात् तत्प्रार्थनं युक्तम् । किञ्च देवानां यज्ञकर्मण्यश्विनौ 'अध्वर्यू' । अतएवान्यत्र कस्यचिन्मन्त्रस्य

ब्राह्मणे पठ्यते—"अश्विनोर्बाहुभ्या मित्याह, अश्विनौ हि देवाना मध्वर्यू आस्ताम्"-इति *। अतोऽपि कारणादश्विनोर्यज्ञसमाधानकारणं युक्तम्। तस्मात्कारणादध्वर्यू उभाभ्या मश्विभ्यां यज्ञशरीरं चिकित्सितम्। तस्मादिदानी मप्यध्वर्यू 'घर्म्मं सम्भरत:' प्रवर्ग्यसाधनं सम्पादयेताम्। तदेतत्तैतिरीया: "देवा वै सत्र मासत"-इत्यस्मिन्ननुवाके (तै० आ० ५. १.) प्रवर्ग्यविषय मुपाख्यानं प्रपञ्चयन्ति। तस्मिन्नाख्याने यज्ञस्य प्रवर्ग्यरूपं शिरो धनुष: कोट्या छिन्न मित्युक्त्वा पश्चादेतदाम्नायते—"तेनापशीर्ष्णा यज्ञेन यजमाना:। नाशिषोऽवारुन्धत; न सुवर्गं लोक मभ्यजयन्। ते देवा अश्विना वब्रुवन्। भिषजौ वै स्थ:। इदं यज्ञस्य शिर: प्रतिधत्त मिति। तावब्रूतां वरं वृणावहै। ग्रह एव नावत्रापि गृह्यता मिति। ताभ्या मेत माश्विन मगृह्णन्। तावेतद् यज्ञस्य शिर: प्रत्यधत्ताम्। यत्प्रवर्ग्य:। तेन सशीर्ष्णा यज्ञेन यजमाना:। अवाशिषोऽरुन्धत। अभि सुवर्गं लोक मजयन्। यत्प्रवर्ग्यं प्रवृणक्ति। यज्ञस्यैव तच्छिर: प्रतिदधाति"-इति (तै० आ० ५.१.५—७.)।

प्रवर्ग्यसाधनानि सम्पादितवतोस्तयोरनुज्ञापनमन्त्रं प्रैषमन्त्रं च विधत्ते—"तं सम्भृत्याहतुर्ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहीति"-इति। 'तं' प्रवर्ग्यकर्मोपयुक्तं साधनसमूहं 'सम्भृत्य' सम्पाद्य चतुर्णा मध्वर्यूणां मध्ये अध्वर्यु: प्रतिप्रस्थाता चेत्येतावुभाध्वर्यू ब्रह्माणं होतारं च प्रत्येवं ब्रूयाताम्। हे ब्रह्मन्! वय मृत्विज: सर्वे प्रवर्ग्याख्येन कर्म्मणा 'प्रचरिष्याम:' अनुष्ठास्याम:। सोऽय

* अश्विनोर्बाहुभ्या मिति मन्त्रस्तु, तैत्तिरीयाम्नाये संहितायां (१. ३. १. १.); तस्य ब्राह्मण मपि तत्रैवाम्रे (२. ६. ४. १); ब्राह्मणग्रन्थेऽपि बहुत्र (३. २. २. १; ९. १,); आरण्यकेऽपि च (५. २. ५.)।

मनुज्ञापन मन्त्रः ( तै० आ० ४. ४. १. ) । हे 'होतः !' त्वम् 'अभिष्टुहि' प्रवर्ग्यस्तुतिरूपाः सर्वा ऋचः पठ । सोऽयं प्रैषमन्त्रः ( तै० आ० ४. ४. २ ) । 'इति'-शब्दो मन्त्रद्वयसमाप्त्यर्थः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
प्रथमः खण्डः ॥ १ ( १८ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रतिपद्यते ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यतीयम् पित्रे राष्ट्र्-त्यग्र इति वाग्वै राष्ट्री वाचमेवास्मिंस्तद्दधाति महा-न्मही अस्तभायद्विजात इति ब्राह्मणस्पत्या ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद् भिषज्यत्यभि त्यं देवं सवि-तारमोण्योरिति सावित्री प्राणो वै सविता प्राण-मेवास्मिंस्तद्दधाति संसीदस्व महाँ असीत्येवैनं समसादयन्नञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्य-मानायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धं पतङ्गमक्त-मसुरस्य मायया यो नः सनुत्यो अभिदासदग्ने भवा

नो अग्ने सुमना उपेताविति द्वे द्वे अभिरूपे यद्यज्ञे ऽभिरूपं तत्समृद्धं कृणुष्व पाजः प्रसितिं न पृथ्वी मिति पञ्च राक्षोघ्नो रक्षसा मपहत्यै परि त्वा गिर्वणो गिरो ऽधि द्वयोरदधा उक्थ्यं वचः शुक्रं ते अन्यद्यजतं ते अन्यदपश्यज्ञोपा मनिपद्यमानमिति चतस्र एकपातिन्यस्ता एकविंशतिर्भवन्त्येकविंशो ऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मै-कविंशस्त मिम मात्मान मेकविंशं संस्कुरुते ॥२(१९)

होतुरभिष्टवार्थास्वृक्षु प्रथमा मृचं विधत्ते— "ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रतिपद्यते; ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यति"-इति। 'प्रतिपद्यते' तेन मन्त्रेण होताभिष्टवं प्रारभते इत्यर्थः। अस्मिन्मन्त्रे ब्रह्मशब्देन देवानां मध्ये ब्राह्मणजाति-रूपो बृहस्पतिरुच्यते; तस्मादनेन मन्त्रेणोपक्रमे सति 'ब्रह्मणैव' ब्राह्मणजात्यैव 'एनं' प्रवर्ग्यं' 'तद्' 'भिषज्यति' चिकित्सते ॥

द्वितीया मृचं विधत्ते—"इयं पित्रे राष्ट्रयेत्यग्र इति, वाग्वै राष्ट्री, वाच मेवास्मिंस्तद्दधाति"-इति। अस्मिन्मन्त्रे तृतीयान्तो राष्ट्रीशब्दो वाचं ब्रूते, 'तत्' तेन मन्त्रपाठेन 'अस्मिन्' प्रवर्ग्ये 'वाच मेव' सम्पादयति ॥

तृतीया मृचं विधत्ते—"महान्मही अस्तभायद्विजात इति ब्राह्मणस्पत्या, ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यति"-इति। अस्य मन्त्रस्य चतुर्थपादे बृहस्पतिर्देवतेति श्रूयमाणत्वात्, बृहस्पतेश्च ब्राह्मणस्वामित्वादियं मृक् 'ब्राह्मणस्पत्या' ॥

चतुर्थीं मृचं विधत्ते—"अभि त्यं देवं सवितार मोण्योरिति सावित्री ; प्राणो वै सविता प्राण मेवास्मिंस्तद्दधाति"-इति । सवितारमितिश्रुतत्वादिय मृक् 'सावित्री'; पठनीयेति शेषः । प्राणस्य देहेन्द्रियप्रेरकत्वात् सवितृत्वम् । 'तत्' तेन मन्त्रेण 'अस्मिन्' प्रवर्ग्ये 'प्राण मेव' सम्पादयति ॥

ता एतास्चतस्रः शाखान्तरगता आश्वलायनेन पठिता द्रष्टव्याः (श्रौ० ४.६.३.१—४.) ॥

पञ्चमी मृचं विधत्ते—"संसीदस्व महाँ असीतिरवैनं समसादयन्"-इति । अनेन (सं० १. ३६, ६.) मन्त्रेण 'एनं' प्रवर्ग्याख्यं महावीरं खरशब्दाभिधेये सन्तापनस्थाने 'समसादयन्' स्थापयेयुरित्यर्थः * ॥

षष्ठी मृचं विधत्ते—"अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमानायाभिरूपा ; यद्यज्ञेऽभिरूपं तत्समृद्धम्"-इति । अस्मिन्मन्त्रे (सं० ५. ४३. ७.) अञ्जन्तीतिपदस्य श्रुतत्वादाज्येन 'अज्यमानाय' महावीराख्याय श्रूयमाणत्वात् येय मृक् 'अभिरूपा' भवति † ॥

सप्तमी मारभ्य द्वादशीपर्यन्ताः षडृचो विधत्ते—"पतङ्ग मक्त मसुरस्य मायया, यो नः सनुत्यो अभिदासदग्ने, भवा नो अग्ने सुमना उपेताविति द्वे द्वे अभिरूपे यद्यज्ञेऽभिरूपं तत्समृद्धम्"-इति । पतङ्ग मिति संहितायां माम्नातयोर्द्वयोः ‡ प्रतीके (सं० १०. १७७. १, २.) । यो नः सनुत्य इति द्वयोः § प्रतीके (सं० ६. ५. ४, ५.) । भवा नो अग्न इति द्वयोः ‖ (सं० ३. १८. १, २.) ।

---

* 'संसीदस्व महाँ असीति संसाद्यमाने'-इति कल्पः (आश्व० श्रौ० ४. ६. ३.) ।

† 'अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने'-इति कल्पः (४. ६. ३.) ।

‡, §, ‖ 'पतङ्ग०—० उपेताविति द्वृचाः'-इति कल्पः (४. ६. ३.) ।

एतासां सर्वासा मभिष्टूयमानार्थप्रतिपादकत्वादभिरूपत्वम्। तच्चा-
वेतास्वृक्षु बुद्धिमता योजनीयम् ॥

त्रयोदशी मारभ्य सप्तदशीपर्यन्ताः पञ्चर्चीं विधत्ते—"कृणुष्व पाजः प्रसितिं न पृथ्वी मिति पञ्च राक्षोघ्नी रक्षसा मपहत्यै"-इति ( सं०४.४.१—५. ) ॥

अष्टादशी मारभ्यैकविंश्यन्ताश्चतस्र ऋचो विधत्ते—"परि त्वा गिर्वणो गिरो,ऽधि द्वयोरदधा उक्थ्यं वचः, शुक्रं ते अन्यद्यजतं ते अन्यद्, अपश्यं गोपा मनिपद्यमान मिति चतस्र एकपातिन्यः" -इति। एकस्य मन्त्रस्य पातः प्रतीकम्, एकपातः, सोऽयं यासु ऋक्षु, ता 'एकपातिन्यः'। "परि त्वा गिर्वणः"-इति ( सं०१.१०.१२. ) यत् प्रतीकम्, तत् संहितायां क्रमेणाम्नातानां चतसृणां प्रतीक मित्याशङ्क्येत ; 'चतस्रः'-इति ब्राह्मणेऽभिधानात्। एवम् "अधि द्वयोः" ( सं०१.८३. ३. ), "शुक्रं ते" ( सं० ६. ५८. १. ), "अपश्य गोपाम्" ( सं० १. १६४. ३१ ; १०. १७७. ३. )-इति त्रिषु शङ्कोदियात्, एतद्व्यावृत्त्यर्थम् 'एकपातिन्यः'--इत्युच्यते। एकैकस्य ऋचः प्रतीकान्येतानि मिलित्वा 'चतस्रः' इति तात्पर्यार्थः ॥

संख्यान्तरभ्रमव्युदासायोक्तमन्त्रगतां संख्यां प्रशंसति—"ता एकविंशतिर्भवन्ति"-इति। तां संख्यां प्रशंसति—"एकविंशोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्त मिम मात्मान मेकविंशं संस्कुरुते"-इति। 'अयं पुरुषः' मनुष्य-देहो जीवनोपेतः, एकविंशतिसंख्याना मवयवानां समूहरूप-त्वाद् 'एकविंशः'-इत्युच्यते। 'दश हस्त्याः'-इत्यादिना तदेव स्पष्टीक्रियते। आत्मशब्देन मध्यदेहो जीवात्मा वा

अभिधीयते। तैर्मन्त्रैः 'आत्मानम्' एव संख्यासामान्यात् 'संस्कुरुते' ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
द्वितीयः खण्डः ॥ २ ( १९ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

स्रक्के द्रप्सस्य धमतः समस्वरन्निति नव पावमान्यो नव वै प्राणाः प्राणानेवास्मिंस्तद्दधात्ययं वेनश्चोदयत्पृश्निगर्भा इत्ययं वै वेनोऽस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्त्यवाञ्चो ऽन्ये तस्माद्वेनः प्राणो वा अयं सन्नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम् प्राणमेवास्मिंस्तद्दधाति पवित्रं ते विततं ब्रह्मणस्पते तपोष्पवित्रं विततं दिवस्पदे वियत्पवित्रं धिषणा अतन्वतेति पूतवन्तः प्राणास्त इमे ऽवाञ्चो रेतस्यो मूत्र्यः पुरीष्य इत्येतानेवास्मिंस्तद्दधाति ॥ ३ ( २० ) ॥

अथैकसूक्तगताः काश्चिदृचो विधत्ते—"स्रक्के द्रप्सस्य धमतः समस्वरन्निति नव पावमान्यो नव वै प्राणाः प्राणानेवास्मिंस्तद्दधाति"-इति। अस्मिन् स्रक्के द्रप्सस्येतिसूक्ते ( सं० ९. ७३. )

पवमानदेवताका ऋचो नवसंख्याका: ; अत: संख्यासाम्यात् तत्पाठेन 'अस्मिन्' प्रवर्ग्याभिमानिनि पुरुषे नवच्छिद्रवर्त्तिन: 'प्राणान्' स्थापयति ॥

अथैका मृचं विधत्ते—"अयं वेनश्चोदयत् पृश्निगर्भा इति"-इति। एतन्मन्त्रगतस्य वेनशब्दस्य नाभिपरत्व मभिप्रेत्य प्रशंसति—"अयं वै वेनोऽस्माद्वा ऊर्द्ध्वा अन्ये प्राणा वेनन्त्यवाञ्चोऽन्ये ; तस्माद्वेन: प्राणो वा अयं सन्नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम् प्राणमेवास्मिंस्तद्दधाति"-इति। शरीरमध्येऽवस्थितं नाभिं हस्तेनाभिनीय प्रदर्शयन् 'अयं वै वेन:'--इत्युच्यते। तस्य नाभेर्वेनत्वं कथम् ? इति चेत्, उच्यते ;—'अस्मात्' नाभे: 'ऊर्द्ध्वा:' 'अन्ये प्राणा:' चक्षुरादय: केचित् प्राणविशेषा: 'वेनन्ति' चरन्ति, तथा नाभे: 'अवाञ्च:' अपानवाय्वादय: केचिद् 'वेनन्ति' चरन्ति। 'तस्माद्' वेनन्त्यस्मादवधिभूतान्नाभेरितिव्युत्पत्त्या वेनशब्दवाच्यो 'नाभि:'। नाभिशब्दवाच्यत्वं कथम् ? इति चेत्, तदुच्यते ;— 'अयं' नाभि: प्राणाधारत्वेन स्वयं प्राणरूप: 'सन्' इतरानूर्द्ध्ववर्त्तिनोऽधोवर्त्तिनश्च प्राणानुद्दिश्य प्रत्येकं 'नाभे:' नाभैषीरित्येवं वदन्निव मर्यादारूपत्वेनावस्थित:। 'तस्माद्' अयं देहमध्यवर्त्ती 'नाभि:' भवति। नैव भीतिं कुर्वित्यभिप्रेत्य मर्यादात्वेनावस्थान मेव 'नाभे:' नाभिशब्दप्रवृत्तिनिमित्तम्। तस्मादयंवेनइति-मन्त्रपाठेन 'प्राण मेव' 'अस्मिन्' प्रवर्ग्ये स्थापयति ॥

अथैकत्र समाम्नात मृगद्वयम्, अन्यत्र समाम्नाता मेका मृचं विधाय सह प्रशंसति—"पवित्रं ते विततं ब्रह्मणस्पते, तपोष्पवित्रं विततं दिवस्पदे, वियत्पवित्रं धिषणा अतन्वतेति पूतवन्त: ; प्राणास्त इमे ऽवाञ्चो रेतस्यो मूत्र्य: पुरीष्य इत्येतानेवास्मिं-

स्तद्दधाति"-इति (सं० ९.८३.१,२.)। अत्र "वियत्पवित्रम्"-इत्येषा शाखान्तरगता सूत्रकारेण पठिता ( आश्व० श्रौ० ४. ६. ३. )। त्रिष्वप्येतेषु मन्त्रेषु शुद्धिवाचिनः पवित्रशब्दस्य विद्यमानत्वादेते 'पूतवन्तः' यज्ञपुरुषस्य प्राणस्थानीयाः। पूर्वमुदाहृताः (१४७ पृ० नव ) मन्त्रविशेषा यज्ञपुरुषस्य नाभेरूर्ध्वभाविप्राणस्थानीयाः। पवित्रं ते विततमित्याद्यास्त्रयो मन्त्रा ये सन्ति, 'ते इमे' नाभेः 'अवाञ्चः' अधोदेशप्राणस्थानीयाः। तेषु रेतसे हित एकः प्राणः *, मूत्राय हितो ऽपरः प्राणः। तयोरुभयोर्गोलकद्वारस्यैकत्वेऽपि स्वरूपेणेन्द्रियभेदात् पृथङ् निर्देशः। द्वारान्तरसञ्चारी पुरीषाय हितस्तृतीयः प्राणः। 'इति' उक्तान् 'एतानेव' त्रीन् प्राणान् मन्त्रत्रयपाठेन 'अस्मिन्' प्रवर्ग्ये स्थापयति ॥ ३ ॥

'इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ( २० ) ॥

———

॥ अथ चतुर्थः खण्डः ॥

**गणानां त्वा गणपतिं हवामह इति ब्राह्मणस्पत्यं ब्रह्म वै बृहस्पति र्ब्रह्मणैवैनं तद्भिषज्यति प्रथश्च यस्य सप्रथश्च नामेति घर्मतन्वः सतनु मेवैनं तत्**

* ( रेतसः ) 'तस्मै हितम्'-इति पा० ५. १. ५।

 


सरूपं करोति रथन्तर माजभारा वसिष्ठः भरद्वाजो बृहदाचक्र अग्नेरिति बृहद्रथन्तरवन्त मेवैनं तत्करोत्यपश्यं त्वा मनसा चेकितान मिति प्रजावान् प्राजापत्यः प्रजा मेवास्मिंस्तद्दधाति काराधद्वोत्वाश्विना वा मिति नव विच्छन्दसस्तदेतद्यज्ञस्यान्तस्त्यं विक्षुद्र मिव वा अन्तस्त्यं मणीय इव च स्थवीय इव च तस्मादेता विच्छन्दसो भवन्त्येताभिर्ह्याश्विनो: कक्षीवान् प्रियं धामोपागच्छत् स परमं लोक मजयदुपाश्विनोः प्रियं धाम गच्छति जयति परमं लोकं य एवं वेदा भात्यग्निरुषसा मनीक मिति सूक्तं पीपिवांस मश्विना घर्म मच्छेत्यभिरूपं यद्यज्ञे ऽभिरूपं तत्समृद्धं तदु त्रैष्टुभं वीर्यं त्रिष्टुब् वीर्यं मेवास्मिंस्तद्दधाति ग्रावाणेव तदिदर्थं जरेथे इति सूक्त मक्षी इव कर्णाविव नासेवेत्यङ्गसमाख्या य मेवास्मिंस्तदिन्द्रियाणि दधाति तदु त्रैष्टुभं वीर्यं वै त्रिष्टुब् वीर्यं मेवास्मिंस्तद्दधातीळे द्यावापृथिवी पूर्वचित्तय इति सूक्त मग्निं घर्मं सुरुचं यामन्निष्टय इत्यभिरूपं यद्यज्ञे ऽभिरूपं तत्समृद्धं तदु जागतं जागता वै पशवः पशूनेवास्मिंस्तद्दधाति याभिरमु मावतं याभिरमु मावत मित्येतावतो ह्यत्राश्विनौ कामान् ददशतु-

स्तानेवास्मिंस्तद्दधाति तैरेवैनं तत् समर्द्धयत्यरुरुच-दुषसः पृश्निरग्रिय इति रुचितवती रुच मेवास्मिं-स्तद्दधाति द्युभिरक्तुभिः परिपात मस्मानित्युत्तमया परिदधात्यरिष्टेभिरश्विना सौभगेभिः तन्नो मित्रो वरुणो मा महन्ता मदितिः सिन्धुः पृथिवी उत द्यौरित्येतैरेवैनं तत् कामैः समर्द्धयतीति नु पूर्वं पटलम् ॥ ४ ( २१ ) ॥

अथ सूक्तविशेषा विधातव्याः; तत्रैकोनविंशत्यृचं सूक्तं विधत्ते—"गणानां त्वा गणपतिं हवामह इति ब्राह्मणस्पत्यम्, ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद्भिषज्यति"-इति । तस्मिन् सूक्ते ( सं० २. २३. ) प्रथमाया ऋचः तृतीयपादे 'ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते'—इतिश्रूयमाणत्वादिदं सूक्तं ब्रह्मणस्पतिदेवताकम्* । 'ब्रह्म वै'-इत्येयदेकं पूर्ववद् व्याख्येयम् ( १४४ पृ० १२ पं० ) ॥

तृचात्मकं सूक्तान्तरं विधत्ते—"प्रथश्च यस्य सप्रथश्च नामेति घर्म्मतन्वः सतनु मेवैनं तत् सरूपं करोति"-इति । अस्मिन् सूक्ते ( सं १०.१८. ) पठिताः प्रथश्चेत्यादयस्तिस्र ऋचो (१—३) 'घर्म्म-तन्वः' प्रवर्ग्यस्य शरीरस्थानीयाः । 'तत्' मन्त्रपाठेन 'एनं' प्रवर्ग्यं 'सतनु' शरीरोपेतं 'करोति' । सतनु मित्यस्यैव व्याख्यानं 'सरूपम्' इति । यद्वा, तस्मिन् शरीरे शोभनरूपसहितं प्रवर्ग्यं करोति । अस्मिन् सूक्ते प्रथमद्वितीययोः ऋचोर्यौ चतुर्थौ पादौ, ताव-

* सेयमृक्—"गणानां त्वा गणपतिं हवामहे कविं कवीना मुपमश्रवस्तमम् । ज्येष्ठ-राजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥"-इति ।

नूद्य प्रशंसति—"रथन्तर माजभारा वसिष्ठः, भरद्वाजो बृहदाचक्रे अग्नेरिति ; बृहद्रथन्तरवन्त मेवैनं तत्करोति"-इति। सामद्वयवाचिनोः रथन्तरशब्दबृहच्छब्दयोरत्र श्रूयमाणत्वात्तत्पाठेन प्रवर्ग्यं सामद्वयोपेतं करोति * ॥

तृचात्मकं सूक्तान्तरं विधत्ते—"अपश्यं त्वा मनसा चेकितान मिति प्रजावान् प्राजापत्यः ; प्रजा मेवास्मिंस्तद्दधाति"-इति। एतत्-सूक्तगतानां तिसृणा मृचां (सं० १०. १८३. १—३) पृथग्विनियोग माश्वलायन आह—"अपश्यं त्वेत्येतस्याद्यया यजमान मीक्षते, द्वितीयया पत्नीं, तृतीययाऽऽत्मानम्"-इति (आ० ४.६.३.)। अस्य च सूक्तस्य ऋषिः 'प्रजावान्'-इत्येतन्नामकः। स च प्रजापतेः पुत्रः। तदीयपाठेन 'प्रजां' सम्पादयति ॥

सूक्तान्तरे नवसङ्ख्या ऋचो विधत्ते—"काराधद्घोत्रा[illegible]ना दा मिति नव विच्छन्दसस्तदेतद्यज्ञस्यान्तस्त्यं विद्रुद्र मिव वा अन्तस्य मणीय इव च स्थवीय इव च तस्मादेता विच्छन्दसो भवन्ति"-इति। काराधदित्यस्मिन् सूक्ते विद्यमाना ऋचो नवसङ्ख्याकाः (सं० १.१२०.)। ताश्च विविधेन छन्दसा युक्ताः। तच्च विविधत्व मनुक्रमणिकाया मुक्तम्—"आद्या गायत्री, द्वितीया ककुप्, तृतीया-चतुर्थ्यौ काविराण्नष्टरूप्यौ, पञ्चमी तनुशिरा †,

---

* तच्च सामद्वयं सामगाना मारण्यके २. १. २१ ; १. १. २७। तयोर्योन्यृचौ तु छ० आ० ३. १. ५. १, २। तयोर्विधायकवचनानि च ता० ब्रा० ७. ६. ६, ५।

† 'प्रथमं छन्दस्त्रिपदा गायत्री'-इति (१. ६.), 'मध्यमश्चेत् ककुप्'-इति (३. २.), 'नवकयोर्मध्ये जागतः काविराट्'-इति (४.५.), 'नव वैराजत्रयोदशे नष्टरूपी'-इति (४.६.), 'एकादशिनी: परः षट्कस्तनुशिरा'-इति (३. ३.) च का० छ० श०।

षष्ठ्यक्षरैरुष्णिग् *, विष्टारबृहती, कृतिः, विराट् †, तिस्रो गायत्राः ‡"-इति । यद्यप्येतद् द्वादशर्चं सूक्तम्, तथापि नवैवर्चोऽत्रापेक्षिता इति नवेत्युक्तम् । 'तदेतत्' सूक्तम्, प्रवर्ग्याख्यस्य 'यज्ञस्य' 'अन्तस्त्यम्' उदरगतावयवस्वरूपम् । लोकेऽपि 'अन्तस्त्यं' शरीरगतमध्यस्थावयवजातं, 'विक्षुद्र मिव वै' विविधत्वेन तारतम्येन स्वल्प मेव भवति । तद्यथा,—किञ्चिन्मांसनाड्यादिकम् 'अणीय इव च' अत्यन्तं सूक्ष्म मेव भवति ; अन्यच्च मांसनाड्यादिकं 'स्थवीय इव च' अत्यन्तं स्थूल मेव भवति । यस्मादुदरगत मवयवजात मीदृशम्, 'तस्मात्' तत्स्थानीया 'एताः' ऋचो 'विच्छन्दसो भवन्ति' । उत्तमलोकप्राप्तिहेतुत्वेन ता ऋचः प्रशंसति—"एताभिर्ह्याश्विनोः कक्षीवान् प्रियं धामोपागच्छत्, स परमं लोक मजयद्"-इति । 'कक्षीवान्' इत्येतन्नामकः कश्चिदृषिः । स च काराधदिति- 'एतैरताभिः' ऋग्भिर्जयं कृत्वा 'अश्विनोः' यत् 'प्रियं' 'धाम' स्थानं तत्प्राप्नोत् । ततस्ताभ्या मनुगृहीतः ततोऽप्युत्तमं लोकं जितवान् । एतद्-वेदनं प्रशंसति—"उपाश्विनोः प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद"-इति ॥

पञ्चर्चं सूक्तान्तरं विधत्ते—"आ भात्यग्निरुषसा मनीक मिति सूक्तम्"-इति ( सं० ५. ७६. १—५. ) । अभिष्टवार्थं पठेदिति सर्वत्र द्रष्टव्यम् । प्रथमाया ऋचश्चतुर्थपादं पठित्वा

---

* षष्ठी ऋक् यद्यपि पादसङ्ख्ययोष्णिक् न भवति, तथाप्यक्षरसङ्ख्ययोष्णिगित्यर्थः ।

† 'अष्टिनोर्मध्ये दशकौ विष्टारबृहती'-इति ( ५. ५. ), 'जागतावष्टकश्च कृतिः'-इति ( ४. ३. ), 'दशकास्त्रयो विराडेकादशका वा'-इति ( ४. ७. ) च का० छ० अ० ।

‡ दशस्याद्यास्तिस्रो गायत्राः ; परं नेह विनियोज्याः ।

तन्मुखेन सूक्तं प्रशंसति—"पीपिवांस मश्विना घर्म्म मच्छेत्यभि-रूपं, यद्यज्ञे ऽभिरूपं तत्समृद्धम्"-इति। हे अश्विनौ! 'पीपि-वांसम्' अभिप्रवृद्धं 'घर्म्मम् अच्छ' प्रवर्ग्य मभिलक्ष्येतत्रैव मस्मिन् पादेऽवगम्यते। एतत् सूक्तं प्रवर्ग्यस्यानुरूपम्। सूक्तगतं छन्दः प्रशंसति— "तदु त्रैष्टुभं वीर्यं वै त्रिष्टुब् वीर्य मेवास्मिंस्तद्दधाति"-इति। 'तदु' तच्च सूक्तम्॥

अष्टर्चं सूक्तान्तरं विधत्ते—"ग्रावाणेव तदितथं जरेथे इति सूक्त मक्षी इव कर्णाविव नासेवेत्यङ्गसमाख्याय मेवास्मिंस्तदि-न्द्रियाणि दधाति"-इति (सं० २. ३९. १—८.)। तस्य सूक्तस्य पञ्चम्या मृचि द्वितीयपाद एव माम्नातः—"अक्षी इव चक्षुषा यात मर्वाक्"-इति। षष्ठ्या मृचुत्तरार्द्ध मेव माम्नातम्—"नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूत मस्मे"-इति। एवं च सति 'अङ्गसमाख्याय मेव' अक्षिकर्णनासादिरूपाण्य-ङ्गानि पुनः पुनः कथयन्नेव 'अस्मिन्' घर्म्मे 'इन्द्रियाणि' स्थाप-यति। सूक्तगतं छन्दः प्रशंसति—"तदु त्रैष्टुभं वीर्यं वै त्रिष्टुब् वीर्य मेवास्मिंस्तद्दधाति"-इति॥

पञ्चविंशत्यृचं सूक्तान्तरं विधत्ते—"ईळे द्यावापृथिवी पूर्व-चित्तय इति सूक्तम्" (सं०१.११२.१—२५.) इति। प्रथमाया ऋचो द्वितीयपाद मुदाहृत्य तद्द्वारा सूक्तं प्रशंसति—"अग्निं घर्म्मं सुरुचं यामन्निष्टय इत्यभिरूपं यद्यज्ञे ऽभिरूपं तत्समृद्धम्"-इति। अग्नि मित्यादिके द्वितीयपादे 'सुरुचं घर्म्मम्'-इति शोभन-दीप्तियुक्तः प्रवर्ग्यः पठितः; तस्मादिदं सूक्त मनुरूपम्। तत्सूक्तगतं छन्दः प्रशंसति—"तदु जागतं जागता वै पशवः पशूनेवास्मिंस्तद्द-धाति"-इति। पुरा कदाचित् सोम माहर्त्तुं द्युलोके गता

जगती ; त माहर्त्तुं मशक्ता सती पशून् दीक्षां च आहृतवती ; तस्मात् 'पशवः' 'जागताः'। एतच्च कद्रूश्चेत्यनुवाके तैत्तिरीयैः समाम्नातम्—"सा पशुभिश्च दीक्षया चागच्छत् ; तस्माज्जागती छन्दसां पशव्यतमा"-इति ( सं० ६. १. ६. २. )। अतस्तदीय-पाठेन पशून् सम्पादयति। सूक्तगतास्वृक्षु सर्वासु विद्यमान मर्थ मुपजीव्य सूक्तं प्रशंसति—"याभिरसु मावतं याभिरसु मावत मितीशतावतो ह्याचाश्विनौ कामान् ददृशतुस्तानेवास्मिंस्तद्-धाति ; तैरेवैनं तत्समर्द्धयति"-इति। अस्य सूक्तस्य प्रथमाया मृचि द्वितीयार्द्ध मेव माम्नातम्—"याभिर्भरे कारं मंशाय जिन्वथ-स्ताभिरू षु ऊतिभिरश्विना गतम्"-इति। तस्याय मर्थः—हे अश्विनौ ! युवां 'अंशाय' तन्नाम्नः पुरुषस्योपकाराय 'भरे' युद्धे 'कारं' विजयङ्कृत्वा 'याभिः' 'ऊतिभिः' पालनैः अंशनामकं तं पुरुषं 'जिन्वथः' प्रीणयथः, 'ताभिरू षु' तादृशीभिरेवोतिभिः पालनैः 'आगतम्' इह कर्म्मणि समागच्छत मिति। द्वितीयस्या मृचि द्वितीयार्द्ध मेव माम्नातम्—"याभिर्धियो ऽवथः कर्म्म-न्निष्टये ताभिरू षु ऊतिभिरश्विना गतम्"-इति। तस्याय मर्थः—हे अश्विनौ ! 'इष्टये' अभीष्टसिद्ध्यर्थं कर्म्मण्यनुष्ठीयमाने, लौकिके वैदिके वा सर्वस्मिन् 'कर्म्मणि' 'याभिरूतिभिः' 'धियः' प्राणिनां बुद्धीः 'अवथः' रक्षथः, 'ताभिः' एवोतिभिः आगच्छत मिति। एवं सर्वास्वप्यृक्षु अर्थोऽनुसन्धेयः। त मर्थं सर्वं सामान्य-वाचिना सर्वनामशब्देन परामृश्य श्रुतिर्याभिरितीशकेन वाक्येन सङ्गृह्णाति। 'याभिः' 'ऊतिभिः' 'असुम्' ईदृशम् 'आवतं' युवां रक्षितवन्ताविति। सर्वेषा मृगर्थानां सङ्ग्राहिकां वीप्सा मभिप्रेत्य "याभिरसु मावतम्"-इति द्विः पठ्यते। तास्वृक्षु यावन्तः कामाः

स्रूयन्ते, तावन्तः कामाः इह कर्म्मणि 'अश्विनौ' 'दद्दशतुः' कटाक्षेणानुगृहीतवन्तौ। तत्सूक्तपाठेन तानेव सर्वान् कामान् अस्मिन् प्रवर्ग्ये यजमाने वा सम्पादयति। ते च कामाः समृद्धाः सम्पद्यन्ते।

अन्यां काञ्चिदृचं विधत्ते—"अरूरुचदुषसः पृश्निरग्रियइति रुचितवती ; रुच मेवास्मिंस्तद्दधाति"-इति ( सं० ८. ८३. ३. )। अस्या मृचि अरूरुचदिति श्रुतत्वात् रुचितम्, अभीष्टकान्तिर्वा अस्या मस्तीत्यसौ 'रुचितवती' ; सा पठनीया। तस्याः पूर्वोक्तसूक्ते* स्थानविशेष आश्वलायनेन दर्शितः—"प्रागुत्तमायाः† अरूरुचदुषसः पृश्निरग्रिय इत्यावपेतोत्तरेणार्द्धर्चेन पत्नी मीक्षेत"-इति ( श्रौ० ४.६.३. )। तन्मन्त्रपाठेन यजमाने कान्तिं सम्पादयति।

सूक्तस्यान्तिमयर्चाभिष्टवेन पूर्वभागस्य समापनं विधत्ते—"द्युभिरक्तुभिः परि पात मस्मानित्युत्तमया परिदधाति"-इति। तस्या ऋचो ऽवशिष्टं पादत्रय मनूद्य कृत्स्नं मन्त्रतात्पर्यं दर्शयति— "अरिष्टेभिरश्विना सौभगेभिः, तन्नो मित्रो वरुणो मामहन्ता मदितिः सिन्धुः पृथिवी उत द्यौरितिएतैरेवैनं तत्कामैः समर्द्धयति"-इति। तस्या ऋचोऽय मर्थः—हे अश्विनौ! 'द्युभिः' दीप्तिभिः, द्युलोकोचितभोगैर्वा, 'अक्तुभिः' अञ्जनसाधनद्रव्यैः आज्यतैलादिभिः, 'अरिष्टेभिः' हिंसापरिहारैः 'सौभगेभिः' सर्वभोगसम्पत्तिलक्षणैः सौभाग्यैश्च अस्मान् 'पातं' रक्षतम्। 'तत्' तयासत्यनन्तरं 'नः' अस्मान् मित्रावरुणादितिसमुद्रपृथिवीद्युदेवताः सर्वा अपि 'मामहन्ताम्' अतिशयेन पूजयन्त्विति।

---

* 'तस्याः' अरूरुचदित्येतस्याः, 'पूर्वोक्तसूक्ते' ईळेद्यावेतिसूक्ते ( १५४ पृ० )।

† 'उत्तमायाः' पञ्चविंशतितमायाः अन्तिमायाः 'प्राक्' पूर्वम् ; चतुर्विंशतितमाया ऊर्द्धमिति यावत्। 'द्युभिरक्तुभिः'-इत्येषैव ऋक् ईळेद्यावेतिसूक्तस्यान्त्या।

तन्मन्त्रपाठेन 'एनं' यजमानम् 'एतैरेव कामैः' द्युभिरक्तुभिरि-त्यादिशब्दोक्तैः फलैः समृद्धं करोति। अभिष्टवस्य * पूर्वभाग मुपसंहरति— "इति नु पूर्वं पटलम्"-इति। 'ब्रह्मजज्ञानम्'-इत्यारभ्य ( १४३ पृ० ) 'पृथिवी उत द्यौः'-इत्यन्तेनोक्तप्रकारेण अभिष्टवस्य पूर्वो भागो वर्णितः †। अत्र भागद्वयकल्पन मेकै-कस्मिन् भागे प्रथमोत्तमयोः ऋचोरावृत्त्यर्थम्। अतएवोक्तम्—

"आद्यान्त्यत्रित्वसिद्ध्यर्थं पटलद्वितयं कृतम्।
अन्यथाभिष्टवस्यैक्यात् त्रित्वं तत्रैव वै भवेत्"-इति ‡ ॥ ४ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
चतुर्थः खण्डः ॥ ४ ( २१ ) ॥

---

* 'अभिष्टवनं नाम घर्मस्य संस्कारोऽभिधानरूपः। एतच्च "घर्म मभिष्टुहि"-इति सम्प्रैषादवगतम्। तत्र यत् क्रियान्तर मीक्षमाणादि तदानुषङ्गिकम्, तदपि वचनात् कर्त्तव्य मेव'-इति आश्वलायनवृत्तौ नारायणः। एतदभिष्टवनं च अध्वर्युप्रेषितेन होत्रा ऋगावानं यथा स्यात्तथा कर्त्तव्यं भवति ( आश्व० श्रौ० ४. ६. १. )। 'ऋच मृच मनवान मुक्त्वा प्रणुत्यावसेत्'-इति च तत्रैव ऋगावानलक्षणम् ( ४. ६. २. )।

† आश्वलायनोऽप्याह—'इति नु पूर्वं पटलम्'-इति ४. ६. ३।

‡ ऋक्प्राति० ४. ७ ; ६. ४।

॥ अथ पञ्चमः खण्डः ॥

अथोत्तर मुपह्वये सुदुघां धेनु मेतां हिङ्कृण्वती वसुपत्नी वसूना मभि त्वा देव सवितः स मी वत्सन्न मातृभिः सं वत्स इव मातृभिर्यस्ते स्तनः शशयो यो मयोभूर्गौरमीमेदनु वत्सं मिषन्तं नमसेदुप सीदत सञ्जानाना उप सीदन्नभिज्ञु दशभिर्विवस्वतो दुहन्ति सप्तैकां समिद्धो अग्निरश्विना समिद्धो अग्निर्वृषणारतिर्दिवस्तदु प्रयक्षतम मस्य कर्म्मात्मन्वन्नभो दुह्यते घृतं पय उत्तिष्ठ ब्रह्मणस्पते ऽधुक्षत् पिप्युषी मिष मुप द्रव पयसा गोधुगोष मा सुते सिञ्चत श्रिय सा नून मश्विनोरृषिः स मु त्ये महतीरप इत्येकविंशतिरभिरूपा यद्यज्ञे ऽभिरूपं तत्समृद्धं सु दु ष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठति प्रैतु ब्रह्मणस्पतिरित्यनुप्रैति गन्धर्व इत्था पद मस्य रक्षतीति खर मवेक्षते नाके सुपर्ण मुपयत्पतन्त मित्युपविशति तप्तो वां घर्मो नक्षति स्वहोताभा पिबत मश्विनेति पूर्वाह्णे यजत्यग्ने वीहीत्यनुवषट्करोति स्विष्टकृद्भाजनं यदुस्रिया स्वाहुतं घृतं पयो ऽस्य पिबत मश्विनेत्यपराह्णे यजत्यग्ने वीहीत्यनुवषट्करोति स्विष्टकृद्भाजनं त्रयाणां ह वै हविषां

स्विष्टकृतेन समवद्यन्ति सोमस्य घर्म्मस्य वाजिनस्येति स यदनुवषट् करोत्यग्नेरेव स्विष्टकृतो ऽनन्तरित्यै विश्वा आशा दक्षिणसादिति ब्रह्मा जपति स्वाहाकृतः शुचिर्देवेषु घर्मः समुद्रादूर्मि मुदियर्त्ति वेनो द्रप्सः समुद्र मभि यज्जिगाति सखे सखाय मभ्याववृत्स्वोर्ड्व ऊ षु ण ऊतय ऊर्द्ध्वो नः पाह्यंहसस्तं घे मित्था नमस्विन इत्यभिरूपा यद्यज्ञे ऽभिरूपं तत्समृद्धं पावक शोचे तव हि क्षयं परीति भक्ष माकाङ्क्षते हुतं हविर्मधुहविरिन्द्रतमे ऽग्नावश्याम ते देव घर्म मधुमतः पितुमतो वाजवतो ऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसीरिति घर्मस्य भक्षयति श्येनो न योनिं सदनं धियाकृत मा यस्मिन्त्सप्त वासवा इति संसाद्यमानायान्वाह हविर्हविष्मो महि सद्म दैव्य मिति यदहरुत्सादयिष्यन्तो भवन्ति सूयवसाद्भगवती हि भूया इत्युत्तमया परिदधाति तदेतद्देवमिथुनं यद् घर्मः स यो घर्मस्तच्छिश्नं यौ शफौ तौ शफौ योपयमनी ते * श्रोणिकपाले यत्पयस्तद्रेतस्तदिद मग्नौ देवयोन्यां प्रजनने रेतः सिच्यते ऽग्निर्वै देवयोनिः सो ऽग्नेर्देवयोन्या आहुतिभ्यः सम्भवत्यृङ्मयो

* 'योपयमनी पीते' घ ।

यजुर्मयः सामममयो वेदमयो ब्रह्ममयो ऽमृतमयः सम्भूय देवता अप्येति य एवं वेद यश्चैवं विद्वानेतेन यज्ञक्रतुना यजते ॥ ५ ( २२ ) ॥

पटलान्तरं प्रतिजानीते—"अथोत्तरम्"-इति *। पटल मुच्यत इति शेषः। पटलशब्दः समूहवाची "समूहे पटलं न ना"—इत्यभिधानकारैरुक्तत्वात् ( अम० ३.३.२००. )। उत्तरभागस्थो मन्त्रसमूहः कथ्यते इत्यर्थः ॥

तत्रैकविंशतिसङ्ख्याका ऋचः तत्तत्प्रतीकग्रहणेन विधत्ते—"उपह्वये सुदुघां धेनु मेतां ; हिङ्कृण्वती वसुपत्नी वसूनाम् ; अभि त्वा देव सवितः ; स मी वत्सन्न मातृभिः ; सं वत्स इव मातृभिः ; यस्ते स्तनः शशयो यो मयोभूः ; गौरमीमेदनु वत्सं मिषन्तं ; नम-सेदुप सीदत ; सञ्जानाना उप सीदन्नभिज्ञु ; आ दशभिर्विवस्वतो ; दुहन्ति सप्तैकां ; समिद्धो अग्निरश्विना ; समिद्धो अग्निर्वृषणारति-र्दिवस् ; तदु प्रयक्षतम मस्य कर्म ; आत्मन्वन् नभो दुह्यते घृतं पयः ; उत्तिष्ठ ब्रह्मणस्पते ; ऽधुक्षत् पिप्युषी मिषम् ; उप द्रव पयसा गोधुगोषम् ; आ सु ते सिञ्चत श्रियम् ; आ नून मश्विनोर्ऋषिः ; स मु त्ये महतीरप इत्येकविंशतिरभिरूपाः ; यद्यज्ञे ऽभिरूपं, तत्स-मृद्धम्"-इति। विहितास्वृक्षु ;—'उप ह्वये'-इति ( सं० १.१६४.२६. ) प्रथमा, 'हिङ्कृण्वति'-इति ( सं० १.१६४.२७. ) द्वितीया, 'अभि त्वा'-इति ( सं० १.२४.३. ) तृतीया, 'स मी वत्सम्'-इति ( सं०

* आश्वलायनोऽप्यत्र मेवाह 'अथोत्तरम्'-इति। अत्रापि ऋगावानं प्रयोजनीयम् ; अपिच 'अनभिहिङ्कृत्य ( ४. ७. ३. )'-इत्यधिकम्।

९.१०४.२.) चतुर्थी, 'सं वत्स इव'-इति ( सं०९.१०५.२.) पञ्चमी, 'यस्ते स्तनः'-इति ( सं०१.१६४.४९.) षष्ठी, 'गौरमीमेत्'-इति ( सं० १. १६४. २८.) सप्तमी, 'नमसेत्'-इति ( सं०९.११.६.) अष्टमी, 'सञ्जानानाः'-इति ( सं०१.७२.५.) नवमी, 'आ दशभिः'-इति ( सं०८.७२.८.) दशमी, 'दुहन्ति सप्तैकाम्'-इति ( सं० ८.७२.७.) एकादशी; 'समिद्धो अग्निरश्विना'-इति द्वादशी, 'समिद्धो अग्निर्वृषणा रतिर्दिवः'-इति त्रयोदशी, एतदुभयं शाखान्तरगत माश्वलायनेन पठितम् ( औ० ४. ७. ४.); 'तदु प्रयक्षतमम्'-इति ( सं० १. ६२. ६.) चतुर्दशी, 'आत्मन्वन्'-इति ( सं०९.७४.४.) पञ्चदशी; 'उत्तिष्ठ' -इति ( सं० १. ४०. १.) षोड़शी, तस्या विनियोग माश्वलायन आह—"उत्तिष्ठ ब्रह्मणस्पत इत्येता मुक्तावतिष्ठते"-इति ( औ० ४. ७. ४.); 'अधुक्षत्'-इति ( सं० ८. ७२. १६.) सप्तदशी, तद्विनियोग माह—'दुग्धाया मधुक्षत्'-इति ( औ० ४. ७.४.); 'उप द्रव'-इत्यष्टादशी, तद्विनियोगं चाह—"आह्रियमाण उप द्रव"-इति; सेयं शाखान्तरगता आश्वलायनेन पठिता ( औ०४.७.४.); 'आ सुते'-इति ( सं०८.७२.१३.) एकोनविंशी, 'आ नूनम्'-इति ( सं०८.९.७.) विंशी; अनयोर्व्यत्ययेन प्रयोग माह—"आसिच्यमान आ नून मश्विनोर्ऋषिरिति गव्ये, आ सुते सिञ्चत श्रिय मित्याजे"-इति ( औ० ४. ७. ४.); 'स सु त्ये'-इति ( सं० ८. ७. २२.) एकविंशी, तद्विनियोगं चाह—"आसिक्तयोः स सु त्ये"-इति ( औ० ४. ७. ४.)। सेय मृचा मेकविंशतिः घर्मदुहो धेनोर्दोहनस्यानुरूपाः; तास्वृक्षु दोहनोचितानां दृश्यमानत्वात् ॥

अथ षसा मृचां प्रतीकानि क्रमेणादाय तद्विनियोगं दर्श-यति—"उदु ष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठति ; प्रैतु ब्रह्मण-स्पतिरित्यनुप्रैति ; गन्धर्व इत्था पदमस्य रक्षतीति* खर मवेक्षते; नाके सुपर्ण मुप यत्पतन्तमितुपविशति† ; तप्तो वां घर्मो नक्षति स्वहोतोभा पिबत मश्विनेति पूर्वाह्णे यजति"-इति। महावीर मादायोत्तिष्ठत्सु अन्येषु होता 'उदु ष्य देवः'-इत्यनेन (सं० ६. ७१.४.) मन्त्रेणताननूत्तिष्ठेत्; तेषु गच्छत्सु 'प्रैतु ब्रह्मणस्पतिः'-इति (सं० १. ४०. ३.) मन्त्रेणानुगच्छेत्। 'खरः' प्रवृञ्जन-स्थानम्। 'तप्तो वाम्'-इत्येषा शाखान्तरगतत्वात् सूत्रकारेण पठिता (४. ७. ४.), 'उभा पिबतम्'-इति स्वशाखागता (सं० १. ४६.१५.) ; ताभ्या मुभाभ्यां 'पूर्वाह्णे यजति' तदुभयं याज्यारूपेण पाठेन पठेत्। प्रवर्ग्यस्य कालद्वये ऽप्यनुष्ठेयत्वात् पूर्वाह्ण इति विशिष्यते।

विनियोगसहितं मन्त्रान्तरं विधत्ते—"अग्ने वीहीत्यनुवषट्-करोति स्विष्टकृद्भाजनम्"-इति। पूर्वोक्तयोर्याज्ययोः पाठान्ते वौषडिति यदुच्चारणं सोऽयं प्रथमो वषट्कारः ; तत ऊर्ध्व मग्ने वीहीत्युच्चार्य वौषडिति यत्पठनं सोऽय मनुवषट्कारः। एतं मन्त्रं होता पठेत्। हे 'अग्ने!' 'वीहि' खाद, भक्षयेत्यर्थः‡। घर्मस्य यजेत्यध्वर्युणा प्रेषितो होता पूर्वोक्तं याज्याद्वयं सवषट्कारं यदा पठति, तदानी मध्वर्युरश्विना घर्म्मं पात मिति मन्त्रेण जुहोति। पुनरपि अग्ने वीहीति होत्रा पठिते सत्यध्वर्युः स्वाहेन्द्रावडिति जुहोति। तदेतत्सर्वं मापस्तम्ब आह—"आश्राव्यप्रत्याश्राविते सम्प्रे-

---

* सं० ९. ८३. ४। † सं० १०. १२३. ६।

‡ तथैव सूत्रकारस्य विधानात् (आश्व० श्रौ० ४. ७. ४.)।

ष्यति घर्मस्य यजेति; अश्विना घर्मं पात मिति वषट्कृते जुहोति; स्वाहेन्द्रावड़ित्यनुवषट्कृत:"-इति ( श्रौ० १५.१०.११. )। यदेतदनुवषट्कारेण यजनम्, तदेतत् 'स्विष्टकृद्भाजनं' स्विष्टकृत्स्थानीय मित्यर्थः ॥

यथा पूर्वाह्णे याज्यापाठः, तथा अपराह्णकालानुष्ठानेऽपि विधत्ते —"यदुस्रिया स्वाहुतं घृतं पयोऽस्य पिबत मश्विनेत्यपराह्णे यजत्यग्ने वीहीत्यनुवषट् करोति स्विष्टकृद्भाजनम्"--इति। 'यदुस्रिया स्वाहुतम्'-इत्येषा शाखान्तरगतत्वादाश्वलायनेन पठिता ( श्रौ० ४. ७. ४. ); 'अस्य पिबतम्'-इति स्वशाखागता ( सं० ८. ५. १४. )। अन्यत् सर्वं पूर्ववत् ( १६२ पृ० )। अत्र मुख्यस्विष्टकृद्रहितत्वात् तल्लोप माशङ्क्य परिहरति—"त्रयाणां ह वै हविषां स्विष्टकृते न समवद्यन्ति; सोमस्य, घर्मस्य, वाजिनस्येति; स यदनुवषट् करोत्यग्नेरेव स्विष्टकृतो ऽनन्तरित्यै"-इति। सोमो वल्लीरसः, घर्मः प्रवर्ग्यहविः, वाजिन मामिक्षानुनिष्पादि नीरम्; एतेषां स्विष्टकृदर्थ मवदानं न कुर्युः। न चैतावता तल्लोपः, 'सः' होता 'अनुवषट् करोति' इति 'यद्' अस्ति, तदेतत् स्विष्टकृन्नामकस्य 'अग्नेः' 'अनन्तरित्यै' अन्तरायो लोपः, तन्निवृत्त्यर्थं भवति॥

अथ ब्रह्मणः शाखान्तरप्रसिद्धेन मन्त्रेण जपं विधत्ते—"विश्वा आशा दक्षिणसादिति ब्रह्मा जपति"--इति। इय मृगाश्वलायनेन पठिता ( ४. ७. ४. )।

प्रासङ्गिकं ब्रह्मजपं विधाय होमादूर्ध्वं होत्रा पठनीया ऋचः सप्त विधत्ते—"स्वाहाकृतः शुचिर्देवेषु घर्मः; समुद्रादूर्मि मुदियर्ति वेनो; द्रप्सः समुद्र मभि यज्जिगाति; सखे सखाय मभ्या ववृत्स्व; ऊर्ध्व ऊ षु ण ऊतय; ऊर्ध्वो नः पाह्यंहसस्; तं घे मित्था नम-

श्विन इत्यभिरूपा ; यद्यज्ञे ऽभिरूपं तत् समृद्धम्"-इति। 'स्वाहा-कृत:'-इत्येषा प्रथमा। सा च शाखान्तरगतत्वादाश्वलायनेन पठिता (४.७.४.)। 'समुद्रादूर्मि:'-इति (सं० १.१२३.२.) द्वितीया, 'द्रप्स: समुद्रम्'-इति (सं० १०.१२३.८.) तृतीया, 'सखे सखायम्'-इति (सं० ४.१.३.) चतुर्थी, 'ऊर्ध्व ऊ षु ण:'-इति (सं० १.३६.१३.) पञ्चमी, 'ऊर्ध्वो न: पाहि'-इति (सं० १.३६.१४.) षष्ठी, 'तं घे मित्था'-इति (सं० ८.६९.१७.) सप्तमी। घर्मप्रकाशकत्वादेता: 'अभिरूपा:'।

होतुरेकयर्चा प्रवर्ग्यहवि:शेषभक्षणप्रतीक्षां विधत्ते—"पावक शोचे तव हि क्षयं परीति भक्ष माकाङ्क्षेत्"-इति। समन्त्रकं भक्षणं विधत्ते— "हुतं हविर्मधु हविरिन्द्रतमे ऽग्नावश्याम ते देव घर्म मधुमत: पितुमतो वाजवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसीरिति"-इति। अतिशयेनाय मैश्वर्यवानिन्द्रतम: ; तादृशे-ऽग्नौ प्रवर्ग्याख्यं 'हवि:' 'हुतं', तच्च 'मधु' माधुर्योपेतं, हे 'घर्म देव' प्रवर्ग्यरूपदेव ! 'ते' त्वदीयं हवि:शेषम् 'अश्याम' भक्षयेम। कीदृशस्य ते ? 'मधुमत:' माधुर्योपेतस्य, 'पितुमत:' अन्नवत: अन्नसाधनस्य, 'वाजवत:' गतिमत: स्वर्गप्राप्तिसाधनस्य, 'अङ्गिर-स्वत:' अङ्गिरोभिर्महर्षिभि: अनुष्ठानकाले भक्षितत्वेन तद्युक्तस्य, ईदृशाय 'ते' तुभ्यं 'नमोऽस्तु'। 'मा' मां भक्षयन्तं 'मा हिंसी:'। 'इति' अनेन मन्त्रेण घर्मस्य शेषं भक्षयेत्। अयं मन्त्रोऽन्येषा मपि भक्षयितॄणां साधारण:। अतएव तैत्तिरीयैरप्याम्नात: (आर० ४.१०.११. *)॥

---

* तत्रैव पञ्चमप्रपाठके एतन्मन्त्रस्य व्याख्यान मपि सार्थवादम् ( ८. ४०—४५।

अथ होतुर्मन्त्रद्वयं विधत्ते—"श्येनो न योनिं सदनं धिया कृतं मा यस्मिन्त्सप्त वासवा इति संसाद्यमानायान्वाह"-इति । 'श्येनो न योनिम्'-इति ( सं० ८.७१.६. ) पूर्वा, 'आ यस्मिन्त्सप्त'-इत्यपरा ; सेयं शाखान्तरगतत्वादाश्वलायनेन पठिता (श्रौ० ४.७.४.) यदा प्रवर्ग्यपात्राणि संसाद्यन्ते, तदा होता मन्त्रद्वय मिद मनुब्रूयात् ।

बहुषु दिनेषु पूर्वाह्नापराह्णयोः प्रवर्ग्याख्यं कर्म्मानुष्ठीयते, तत्रोत्तमदिने अपराह्णकालीने प्रवर्ग्याख्ये काचिदृच मधिकां विधत्ते—"हविर्हविष्मो महि सद्म दैव्य मिति यदहरुत्सादयिष्यन्तो भवन्ति"-इति । 'यदहः' यस्मिन्नहनि 'उत्सादयिष्यन्तः' प्रवर्ग्य मुद्वासयितु मुद्युक्ताः 'भवन्ति', तस्मिन्नहनि 'हविर्हविष्मः'-इत्येताम् (सं० ८.८३.५.) ऋच मधिका मुपोत्तमरूपा मावपेत ॥

अथ कयाचिदृचा अभिष्टवस्य समाप्तिं विधत्ते—"सूयवसाद्भगवती हि भूया इत्युत्तमया परिदधाति"-इति (सं० १.१६४.४०.)। अन्तिमात्प्राचीनेषु प्रवर्ग्येषु पूर्वोक्ता मधिका मप्रक्षिप्यैवानया परिदध्यात् । अन्तिमे तु तां प्रक्षिप्य पश्चादनया परिदध्यात् । तदाहाश्वलायनः—"सूयवसाद्भगवती हि भूया इति परिदध्यात्, उत्तमे प्रागुत्तमाया हविर्हविष्मो महि सद्म दैव्य मित्यावपेत"-इति ( श्रौ० ४.७.४,५. ) ।

अथ पूर्वोक्तस्य प्रवर्ग्यकर्म्मणः प्रशंसार्थं मिथुनव्यापाराकारेण रूपकं दर्शयति—"तदेतद्देवमिथुनं यद् घर्म्मः ; स यो घर्म्मस्तच्छिश्नं, यौ शफौ तौ शफौ, योपयमनी ते श्रोणिकपाले, यत्पयस्तद्रेतस्तदिद मग्नौ देवयोन्यां प्रजनने रेतः सिच्यते; ऽग्निर्वै देवयोनिः; सो ऽग्नेर्देवयोन्या आहुतिभ्यः सम्भवति"-इति । 'यद्घर्म्मः'

प्रवर्ग्याख्यं यत्कर्मास्ति, 'तदेतद्देवमिथुनं' देवसम्बन्धि मिथुन-व्यापारः। तत्कथ मिति चेत्, उच्यते—'स यो घर्मः' प्रवर्ग्याख्य-हविराश्रयभूतो महावीराख्यो मृन्मयपात्रविशेषो योऽसावस्ति *, 'तच्छिश्नं' प्रजननेन्द्रियरूपम्। तमस्य महावीरस्य हस्ताभ्यां गृहीतु मशक्यत्वात् तद्ग्रहणसमर्थौदुम्बरकाष्ठनिर्मितौ 'शफौ' शफ-नामानौ विद्येते, 'तौ' प्रजननेन्द्रियस्य पार्श्ववर्त्तिनौ शफाविव सन्दृश्येते च; उदुम्बरकाष्ठाभ्यां शफनामकाभ्यां महावीरस्य मध्यम-भागे धृतत्वात्। तस्याधस्तादाधारार्थ मुदुम्बरकाष्ठनिर्मिता 'उपयमनी'-शब्दवाच्या दर्वी 'या' विद्यते, सेयं शरीरसम्बन्धिनीति 'श्रोणिकपाले' श्रोणिद्वयमध्यगत मस्थिद्वयम्। उपयमन्या एकत्वे-ऽप्यधस्तान्महावीरस्य कदाचिद्दक्षिणभागे कदाचिद्वामभागे तद्धा-रणात् कपालद्वयरूपत्वम्। महावीरगते तप्ते आज्ये प्रक्षेप्तव्यं 'यत्पयः', 'तद्रेतः' स्वरूपम्। 'तदिदं' रेतोरूप माज्यमिश्रं पयः 'अग्नौ' देवयोनिरूपे 'प्रजनने' उत्पत्तिस्थाने 'रेतः सिच्यते' रेतो-रूपेण प्रक्षिप्यते। अग्नेर्देवयोनित्वप्रसिद्ध्यर्थो 'वै' शब्दः। अग्नेः कर्मण्यनुष्ठाय देवरूपेण जायमानत्वात् सा प्रसिद्धिर्द्रष्टव्या। सैव

---

* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः; स एव प्रक्षेपः प्रवृञ्जन मुच्यते; तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति। तत्र च घर्मपाकाय मृन्निर्मितः कटाहविशेष एव महावीरः। गौण्या तु वृत्त्या घर्मः, प्रवर्ग्यः, महावीरः'—इति त्रीण्येव पदानि समानार्थानीति विवेकः। 'यदा मृद्वराहविहतवल्मीकवपादिसम्भारैः सम्भ्रियमाणत्व-दशापन्नो भवति, तदा प्रजापतिरित्येवास्य नाम; सर्वात्मना सम्भृतत्वदशापन्नस्य सम्राडिति नाम; प्रवृञ्जनदशापन्नस्य घर्म इति नाम; उद्वासनदशापन्नस्य महावीर इति नाम; एताभि-र्दशाभिरवस्थावत् यत् स्वरूपम्, तेन रूपेणादित्य इति नाम; स प्रवर्ग्य एव सैतानि नामान्य-कुरुत'—इति तै० आर० सा० भा० ५. ११. १। तथा शत० ब्रा० १४. १. १. १०. ११। एवमादिकं तु सर्वं स्तुत्यर्थं बोध्यम्।

प्रसिद्धिः सोऽग्नेरित्यादिना स्पष्टीक्रियते। 'सः' यजमानो देवयोनिरूपादग्नेरनुष्ठिताभ्यः 'आहुतिभ्यः' देवतारूपः 'सम्भवति' उत्पद्यते।

उक्तार्थवेदनं तद्वेदनपूर्वक मनुष्ठानं च प्रशंसति—"ऋङ्मयो यजुर्मयः साममयो वेदमयो ब्रह्ममयो ऽमृतमयः सम्भूय देवता अप्येति य एवं वेद ; यश्चैवं विद्वानेतेन यज्ञक्रतुना यजते"–इति। वेदशब्देनाथर्ववेदः, सर्ववेदसमष्टियुक्तिर्वोच्यते। ब्रह्मशब्देन हिरण्यगर्भः। अमृतशब्देन परमात्मा। ता एकैकदेवताः सर्वाः 'सम्भूय' एकीकृत्य समष्टिरूपम् 'अप्येति' प्राप्नोति। वेदनमात्रेण शनैः ; तत्प्राप्तिवेदकपूर्वकानुष्ठानेन तु सहसेति विशेषो द्रष्टव्यः * ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
पञ्चमः खण्डः ॥ ५ ( २३ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

देवासुरा वा एषु लोकेषु समयतन्त ते वा असुरा इमानेव लोकान् पुरो ऽकुर्वत यथौजीयांसो बलीयांस एवं ते वा अयस्मयी मेवेमा मकुर्वत रजता मन्तरिक्षं

---

* 'अल्पप्रयाससाध्येन वेदनेन'–इत्यादि पूर्वोक्तं ( ४ पृ० ) संस्मृत्येदं सूक्तम्।

हरिणीं दिवं ते तथेमाँल्लोकान्* पुरोऽकुर्वत ते देवा अब्रुवन् पुरो वा इमेऽसुरा इमाँल्लोकानक्रत पुर इमाँल्लोकान् प्रति करवामहा इति तथेति ते सद एवास्याः प्रत्यकुर्वताग्नीध्र मन्तरिक्षाद्धविर्धाने दिवस्तथेमाँल्लोकान् पुरः प्रत्यकुर्वत ते देवा अब्रुवन्नुपसद उपायामोपसदा वै महापुरं जयन्तीति तथेति ते यामेव प्रथमा मुपसद मुपायंस्तयैवैनानस्माल्लोकादनुदन्त यां द्वितीयां तयान्तरिक्षाद्यां तृतीयां तया दिवस्तांस्तथैभ्यो लोकेभ्यो नुदन्त ते वा एभ्यो लोकेभ्यो नुत्ता असुरा ऋतूनश्रयन्त ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैका मुपायंस्ताः षट् समपद्यन्त षड् वा ऋतवस्तान् वा ऋतुभ्यो नुदन्त ते वा ऋतुभ्यो नुत्ता असुरा मासानश्रयन्त ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति त इमाः षट् सतीरुपसदो द्विर्द्विरेकैका मुपायंस्ता द्वादश समपद्यन्त द्वादश वै मासास्तान् वै मासेभ्यो नुदन्त ते वै मासेभ्यो नुत्ता

---

* 'तथेमान्लोकान्' ख, टी० ख, 'तथेमांल्लोकान्' ग, घ, 'तथेमाल्लोकान्' ङ, 'तथेमांल्लोकान्' टी० क। 'तथेमांन्लोकान्' टी० ग। एव मिह खण्डे सर्वत्रैव पदान्तस्य नस्याने सर्वो (पा० ८. ४. ६०) लिपिकरप्रमादजाः पाठाः।

असुरा अर्धमासानश्रयन्त ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति त इमा द्वादश सतीरुपसदो द्विर्द्विरेकैका मुपायंस्ताश्चतुर्विंशतिः समपद्यन्त चतुर्विंशतिर्वा अर्धमासास्तान्वा अर्धमासेभ्यो ऽनुदन्त ते वा अर्धमासेभ्यो नुत्ता असुरा अहोरात्रे अश्रयन्त ते देवा अब्रुवन्नुपसदावेवोपायामेति तथेति ते या मेव पूर्वाह्ण उपसद मुपायंस्तयैवैनानह्नो ऽनुदन्त या मपराह्णे तया रात्रेस्तांस्तथोभाभ्या महोरात्राभ्या मन्तरायंस्तस्मात्पूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्य मपराह्णे ऽपरया तावन्त मेव तद्द्विषते लोकं परिशिनष्टि ॥ ६ (२३) ॥

प्रवर्ग्याख्यं कर्म * परिसमाप्य, उपसदाख्यं कर्म वक्तु माख्यायिका माह—"देवासुरा वा एषु लोकेषु समयतन्त; ते वा असुरा इमानेव लोकान् पुरो ऽकुर्वत, यथौजीयांसो बलीयांस एवं ते वा अयस्मयी मेवेमा मकुर्वत, रजता मन्तरिक्षं, हरिणीं दिवं; ते तथेमाँल्लोकान् पुरो ऽकुर्वत, ते देवा अब्रुवन् पुरो वा इमे ऽसुरा इमाँ-

* तथा चेमानि प्रवर्ग्यकर्माणि ;—शान्तिपाठः, महावीरनिर्माणम्, तत्संस्काराः, प्रैषाः, महावीरस्थापनम्, तदभिमन्त्रणम्, अभिमन्त्रितस्य तस्यावेक्षणम्; महावीरस्थे तप्ते आज्ये पयःप्रक्षेपरूपं प्रवञ्जनम्, तथा प्रणीतस्य घर्मस्याहवनीये यागः, तच्छेषेणाग्निहोत्रहोमः, तत्रैव दध्यादिद्रव्यपूरणरूप मुद्वासनम्, विविधनैमित्तिकघर्मप्रायश्चित्तानि, घर्मभक्षणम्, मार्जनञ्चेति। तै० आर० ४, ५प्र०। कात्या० श्रौ० २६ अ०।

ल्लोकानक्रत, पुर इमाँल्लोकान् प्रतिकरवामहा इति, तथेति ; ते सद एवास्याः प्रत्यकुर्वताग्नीध्र मन्तरिक्षाद्धविर्धाने दिवस्तथे-माँल्लोकान् पुरः प्रत्यकुर्वत"-इति। देवाश्चासुराश्च लोकत्रय-विषये 'समयतन्त' परस्परं युद्धं कृतवन्तः। तदानीम् 'असुराः' 'इमानेव' भूरादीन् त्रीन् 'लोकान्' 'पुरोऽकुर्वत' प्राकारवेष्टितानि नगराणि कृतवन्तः ; 'यथा' लोके महान्तो राजानः, अभ्यधिकेन ओजसा शरीरशक्त्या सम्पन्नाः, अभ्यधिकेन सैन्यरूपेन बलेन च सम्पन्नाः, प्रौढ़ानि दुर्गाणि कुर्वन्ति, एव मेते कृतवन्तः। तत्र 'इमाम्' भूमिम् 'अयस्मयीं' लोहप्राकारयुक्ताम् 'अकुर्वत' ; 'अन्त-रिक्षं' लोकं च रजतप्राकारवेष्टितां पुरी मकुर्वत ; द्युलोकं 'हरिणीं' हिरण्मयीं सुवर्णप्राकारवेष्टितां पुरी मकुर्वत। 'तथा' उक्तनगरनिर्म्माणकृतस्योपसंहारः। त मिम मर्थं सर्वं तैत्तिरीया सङ्क्षिप्यामनन्ति—"तेषा मसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताथ हरिणी"-इति ( सं० ६. २. ३. १. )। ततः 'ते देवाः' विचारयन्तः परस्पर मिदम् 'अब्रुवन्'—'असुराः' इमे' भूरादीन् 'इमान् लोकान्' 'पुरो वै' स्वकीयनगराण्येव कृतवन्तः ; अतो वय मपि 'इमान्' भूरादीन् 'लोकान्' 'पुरः' अस्मदीयनगराणि 'प्रतिकरवामहै' असुराणां प्रतिकूलानि सम्पादयामः। 'इति' एवं विचारं परस्पर मङ्गीकृत्य त्रिषु लोकेष्वसुराः क्वचिद् देश-विशेषे यथा स्वकीयानि नगराणि कृतवन्तः, तथा देवाः 'अस्याः' पृथिव्याः सकाशात् 'सद एव' 'प्रत्यकुर्वत' सौमिकवेद्यां प्राचीन-वंशात्पूर्वभावि सदोनामकमण्डप मेवासुरप्रतिकूल मकुर्वत ; अन्त-रिक्षलोकादाग्नीध्रनामकं धिष्ण्य मकुर्वत * ; द्युलोकाद्धविर्धान-

* धिष्ण्य मिति सिकतोपकीर्णानां पुरीषस्थलानां नामधेयम्। तत्र 'आग्नीध्रीयं पूर्वम्,

नामके द्वे शकटे * अकुर्वत । 'ते तथा'-इत्यादिरुक्तार्थोपसंहारः । असुरनिर्म्मितपुरत्रयप्रतिकूलं सद-आग्नीध्र-हविर्धानरूपत्रयं कृतवन्तः । असुरैर्लोकत्रये प्रौढ़ासु तिसृषु दुर्गरूपासु पुरीषु निर्म्मितासु देवाश्च स्वरक्षार्थं सदःप्रभृतीनि त्रीणि दुर्गाणि कृत्वा विजयं प्राप्ताः ॥

तं विजयं † दर्शयति—"ते देवा अब्रुवन्नुपसद उपायामोपसदा वै महापुरं जयन्तीति तथेति ; ते या मेव प्रथमा मुपसद मुपायंस्तयैवैनानस्माल्लोकादनुदन्त ; यां द्वितीयां तयान्तरिक्षाद्यां तृतीयां तया दिवस्तांस्तथैभ्यो लोकेभ्यो ऽनुदन्त"-इति । विजयार्थिनः 'ते देवाः' परस्पर मिदम् 'अब्रुवन्',—उपसदाख्यान् होमान् 'उपायाम' अनुतिष्ठाम । लोकेषु 'उपसदा वै' परकीयदुर्गसमीपावस्थानेन दुर्गावरोधरूपेणैव महत्या सेनया दुर्गवेष्टनेन, सर्वे राजानो महतीं दुर्गरूपं पुरं 'जयन्ति' । अतो वय मप्युपसदनहेतुभूतान् होमान् करवामेति 'इति' विचार्य तिस्र उपसदो हुत्वा लोकत्रयनिर्म्मिताभ्यो दुर्गरूपाभ्यः पुरीभ्यः असुरान् निःसारितवन्तः । तत्र "या ते अग्ने ऽयाशया तनूः"-इत्यनेन ( वा० सं० ५. ८. १. ) मन्त्रेण साध्या उपसत् प्रथमदिनेऽनुष्ठितत्वात् प्रथमा ; "या ते अग्ने रजःशया

---

* * * ; षट् सदसि ;–प्रत्यङ्मुखद्वार मपरेण होतुः, दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य, होतृधिष्ण्य मुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छंसि-पोतृ-नेष्टृच्छावाकानाम् ; आग्नीध्राद दक्षिणं सम्प्रति वेद्यन्ते दक्षिणामुखी मार्जालीयम्'–इति ( कात्या० श्रौ० ८.६. १६—२२. ) अष्टौ धिष्ण्यानि विहितानि । तत्र निरूढ़े ऽग्निप्रणयनानन्तरं चाग्नीध्रीयधिष्ण्ये एव प्रथम मग्निग्रहणम्, ततो होतृधिष्ण्यादौ ( कात्या० श्रौ० ६. १०.१४. ) ।

* सोमरूपहविर्धारके द्वे शकटे हविर्धाने इत्युच्येते । सदोमण्डपाद् दक्षिणस्यां तयोर्मण्डपे भवतः ।

† 'विजयप्रकारं' ग ।

तनूः"-इत्यनेन ( वा०सं० ५.८.२. ) मन्त्रेण साध्या द्वितीयदिने ऽनुष्ठितत्वाद् द्वितीया ; "या ते अग्ने हरःशया"-इति ( वा० सं० ५. ८. ३ ) मन्त्रेण साध्या तृतीयदिनेऽनुष्ठेयत्वात् तृतीया * । युद्धेन ताः पुरीर्जेतु मशक्ता देवाः उपसद्धोमैर्जितवन्तः । तथाच शाखान्तरे श्रूयते—"ता देवा जेतुं नाशक्नुवन्, ता उपसदैवा-जिगीषन्"-इति ( सं० ६. २. ३. १. ) ।

लोकत्रयान्निःसारिताश्चासुराः यदा वसन्ताद्यृतुदेवान् शरणं प्राप्ताः, तदा तदानी मेवैकैकस्मिन् दिने द्विर्द्विरनुष्ठे याभिः षड्भिस्तान् असुरान् वसन्ताद्यृतुदेवताभ्यो निःसारितवन्तः । त मिम मर्थं दर्श-यति—"ते वा एभ्यो लोकेभ्यो नुत्ता असुरा ऋतूनश्रयन्त, ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति, त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैका मुपायंस्ताः षट् समपद्यन्त, षड् वा ऋतवस्तान् वा ऋतुभ्यो ऽनुदन्त"-इति । ततो मासान् शरणं प्राप्या[illegible]तॆ।ना मसुराणां षट्दिनेष्वनुष्ठिताभिरावृत्ताभिर्द्वादशोपस[illegible]निःसरणं कृतम्, तदिदं दर्शयति—"ते वा ऋतुभ्यो नुत्ता असुरा मासान-श्रयन्त, ते देवा अब्रुवन्नुपसद एवोपायामेति तथेति, त इमाः षट् सतीरुपसदो द्विर्द्विरेकैका मुपायंस्ता द्वादश समपद्यन्त, द्वादश वै मासास्तान् वै मासेभ्यो ऽनुदन्त"-इति । मन्त्रत्रयेण दिनत्रये ऽनु-ष्ठेयास्तिस्रः ; पुनरप्यावृत्त्यान्यस्मिन् दिनत्रये ऽनुष्ठिताः षट् भवन्ति ; एकैकस्मिन् दिने द्विरनुष्ठितत्वात् द्वादश सम्पद्यते ।

---

* तैत्तिरीयसंहितायान्त्वेवं पाठः—"या ते अग्ने ऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोऽग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा"-इति १. २. ११, २। 'अत्र या ते अग्ने ऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठेत्येतादृश आम्नातः ; तस्मिन्नया-शयादिपदत्रयेण त्रयो मन्त्रा भवन्ति'-इत्यादि च तत्र सायणः ।

अनेनैव न्यायेन द्वादशसु दिनेष्वनुष्ठिताभिश्चतुर्विंशतिभिरुपसद्भिरर्धमासदेवताभ्यो निःसारितवन्त इत्येतद्दर्शयति—"ते वै मासेभ्यो नुत्ता असुरा अर्धमासानश्रयन्त, ते देवा अब्रुवन्नुपसद एवोपाया-मेति तथेति, त इमा द्वादश सतीरुपसदो द्विर्द्विरेकैका मुपायंस्ता-श्चतुर्विंशतिः समपद्यन्त, चतुर्विंशतिर्वा अर्धमासास्तान्वा अर्धमा-सेभ्यो ऽनुदन्त"-इति । ततोऽहोरात्रदेवौ शरणं गताना मसुराणां कालविशेषद्वयानुष्ठानेन निःसारणं दर्शयति—"ते वा अर्धमासेभ्यो नुत्ता असुरा अहोरात्रे अश्रयन्त, ते देवा अब्रुवन्नुपसदावेवोपाया-मेति तथेति, ते या मेव पूर्वाह्ण उपसद मुपायंस्तयैवैनानह्नो ऽनुदन्त, या मपराह्णे तया रात्रेस्तांस्तयोभाभ्या महोरात्राभ्या मन्तरायन्"-इति । 'अन्तरायन्' अन्तरितान् कृतवन्तो निःसा-रितवन्त इत्यर्थः । एकैकस्मिन्दिने एकैकस्या उपसदो द्विरनु-ष्ठानाय कालद्वयविशेषं विधत्ते— "तस्मात् सुपूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यं स्वपराह्णे ऽपरया तावन्त मेव तद् द्विषते लोकं परिशिनष्टि"-इति । यस्मात् पूर्वाह्णापराह्णौ कालविशेषा वहोरात्राभ्यां शत्रूणां निःसारणहेतू, 'तस्मात्' तस्मिन्नेव कालद्वये ऽनुष्ठातव्यम् । एवं सति यावानहोरात्रयोः सन्धिकालः, 'तावन्त मेव' 'द्विषते' द्वेषिणे 'लोकं' स्थानविशेषं 'परिशिनष्टि',—तस्मात् कालात् निःसारितत्वेन सन्ध्याकाल एव असुराणां परिशिष्यते ॥

अत्र एकैकस्मिन्दिने द्विर्द्विरनुष्ठेया उपसदो ज्योतिष्टोमे त्रिषु दिनेष्वनुष्ठेयाः; अग्निचयने षट्सु दिनेषु; अहीन-सत्रयोर्द्वादशदिनेषु । तथाच तैत्तिरीयैराम्नातम्—"तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वाय"-इति ( सं० ६. २. ५. १. ) । तथा "षडुपसदोऽग्नेश्चित्यस्य भवन्ति"-इति च

श्रुत्यन्तरं द्रष्टव्यम्। आश्वलायनस्त्वेव माह—"एकाहानां तिस्रः, षड् वा, अहीनानां द्वादश, चतुर्विंशतिः संवत्सर इति सत्राणाम्"-इति (४.८.१३—१६.)। गवामयनाख्ये संवत्सर इत्यर्थः * ॥

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे (जै० सू० ३; अधि० २.) चिन्तितम्—

"आवृत्तिरुपसद्येषा सङ्ख्यैकैकशोऽथवा।
त्रिरध्यायं पठेत्यादाविव स्यात्समुदायगा॥
प्रथमामभ्यमान्त्येतिप्रकृतक्रमसिद्धये।
एकैकस्य द्विरभ्यासे षट् सङ्ख्यापि प्रसिध्यति॥

अग्नेश्चयने श्रूयते—"षडुपसदः"-इति। तत्र चोदकप्राप्तानां तिसृणा मुपसदां पूर्वन्यायेनावृत्त्या षट् सङ्ख्या सम्पादनीया; सा चावृत्तिर्दण्डकलितवत् समुदायस्य युक्ता। यथा दण्डेन भूप्रदेशं सम्मिमानः पुरुषः आमूलाग्रं कृत्स्नं दण्डं पुनःपुनः पातयति; न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति। यथा वा त्रिवारं रुद्राध्यायं जपतीत्यत्र कृत्स्न एवाध्याय आवर्त्तते; न त्वध्यायैकदेशः एकैकोऽनुवाकः पृथगेव त्रिः पठ्यते। तथा तिसृणा मुपसदां समुदाय आवर्त्तनीयः? इति चेत्, मैवम्; प्राकृतक्रमबाधप्रसङ्गात्। प्रकृतौ हि दीक्षानन्तरभाविदिने होतव्या प्रथमोपसत्, तत ऊर्ध्व-दिने द्वितीया, ततोऽप्यूर्ध्वदिने तृतीया; ता एताः सकृदनुष्ठाय पुनरुपरितनदिनेऽनुष्ठीयमानायां प्रथमात्व मपैति, चतुर्थीत्व मायाति। तस्मात् प्राकृतक्रमसिद्धये प्रथमां दिनद्वयेऽभ्यस्य ततो द्वितीयां द्विरभ्यसेदित्येवं स्वस्थानविवृद्ध्या तासा मावृत्तिः कार्या। न

---

* एव मेवाख्यायिकापूर्वक मुपसद्विधानं शतपथेऽपि ३.४.४.१—२७। तथा तैत्तिरीयकेऽपि सं० ६.२.३.४।

चाध्यायदृष्टान्तो युक्तः; अनुवाकसमुदायस्यैवाध्यायत्वादध्यायस्यैव चावृत्तिविधानात्। न त्विह समुदायस्योपसत्त्वम्; तस्मात् प्रत्येक मुपसदावर्त्तनीया ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
षष्ठः खण्डः ॥ ६ (२३) ॥

---

॥ अथ सप्तमः खण्डः ॥

जितयो वै नामैता यदुपसदो ऽसपत्नां वा एताभिर्देवा विजितिं व्यजयन्तासपत्नां विजितिं विजयते य एवं वेद यां देवा एषु लोकेषु या ऋतुषु यां मासेषु या मर्धमासेषु या महोरात्रयोर्विजितिं व्यजयन्त तां विजितिं विजयते य एवं वेद ते देवा अबिभयुरस्माकं विप्रेमाण मन्विद मसुरा आभविष्यन्तीति ते व्युत्क्रम्यामन्त्रयन्ताग्निर्वसुभिरुदक्रामदिन्द्रो रुद्रैर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्ते तथा व्युत्क्रम्यामन्त्रयन्त ते ऽब्रुवन् हन्त या एव न इमाः प्रियतमास्तन्वस्ता अस्य वरुणस्य राज्ञो गृहे सन्निदधा-

महै ताभिरेव नः स न सङ्गच्छातै यो न एतदतिक्रामाद्य आलुलोभविषादिति तथेति ते वरुणस्य राज्ञो गृहे तनूः सन्न्यदधत ते यद्वरुणस्य राज्ञो गृहे तनूः सन्न्यदधत तत्तानूनप्त्रमभवत्तत्तानूनप्त्रस्य तानूनप्त्रत्वं तस्मादाहुर्न सतानूनप्त्रिणे द्रोग्धव्य मिति तस्मादिद मसुरा नान्वाभवन्ति ॥ ७ ( २४ ) ॥

अथोपसदः प्रशंसति—"जितयो वै नामैता यदुपसदोऽसपत्नां वा एताभिर्देवा विजितिं व्यजयन्त"-इति। 'उपसदः' याः सन्ति, 'एताः' 'जितयो वै नाम' जयहेतुत्वात् जितय इत्येवं नाम प्रतिपद्यते। जयहेतुत्व मेवासपत्ना मित्यादिना स्पष्टीक्रियते। 'देवाः' 'एताभिः' उपसद्भिः 'असपत्नां' वैरिरहिता मेव 'विजितिं' विशिष्टं जयं 'व्यजयन्त' विशेषेण प्राप्तवन्तः। वेदनं प्रशंसति—"असपत्नां विजितिं विजयते य एवं वेद"-इति। सामान्याकारेण वेदनं प्रशंस्य पुनः पूर्वोक्तार्थवादानुक्रमेण विशेषाकारेण प्रशंसति—"यां देवा एषु लोकेषु, या मृतुषु, यां मासेषु, या मर्धमासेषु, या महोरात्रयोर्विजितिं व्यजयन्त, तां विजितिं विजयते य एवं वेद"-इति।

अथ तानूनप्त्रस्य नाम निर्वक्तु माख्यायिका माह—"ते देवा अबिभयुरस्माकं विप्रेमाण मन्विद मसुरा आभविष्यन्तीति; ते व्युत्क्रम्यामन्त्रयन्ताग्निर्वसुभिरुदक्रामदिन्द्रो रुद्रैर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः"-इति। असुरैः सह युद्धार्थ मुद्यताः 'देवाः' स्वसेनाया मध्ये परस्पर मेकैकस्य सेनानीत्वलक्षणं ज्यैष्ठ्य मभ्युप-

गच्छन्तः परस्परविरोधिनो भूत्वावस्थाय 'अबिभयुः' मनसि भीतिं प्राप्ताः। केनाभिप्रायेणेति तदुच्यते—'अस्माकं विप्रेमाण मनु' परस्परप्रेमराहित्य मनुवीक्ष्य असुरा इद मस्मदीयं राज्यम् 'आभविष्यन्ति' स र्वतः प्राप्स्यन्तीति। ततस्ते देवा व्युत्क्रम्य परस्परविभागेन तस्माद्देशादपसृत्य स्वसम्बन्धिभिर्मन्त्रिभिः सह 'असन्त्रयन्त' पर्यालोचनं कृतवन्तः। ततस्तत्र 'अग्निः' देवो 'वसुभिः' अष्टभिर्मन्त्रिभिः सहितः पृथक् 'उदक्रामत्'। एवम् 'इन्द्रः' 'रुद्रैः' सह, 'वरुणः' 'आदित्यैः' सह, 'बृहस्पतिः' 'विश्वैर्देवैः' सह पृथगुदक्रामत्। अत्र चतुर्विधैव विभाग उक्तः; शाखान्तरे तु पञ्चधा। तथा चाम्नायते—"देवासुराः संयत्ता आसन्, ते देवा मिथो विप्रिया आसन्, तेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः"-इति (तै० सं० ६. २. २. १.) * ॥

एवं परस्परं विभज्यावस्थितानां देवसमूहानां पर्यालोचनपूर्वकं कृत्यं दर्शयति—"ते तथा व्युत्क्रम्यामन्त्रयन्त, ते ऽब्रुवन् हन्त या एव न इमाः प्रियतमास्तन्वस्ता अस्य वरुणस्य राज्ञो गृहे सन्निदधामहै; ताभिरेव नः स न सङ्गच्छातै, यो न एतदतिक्रामाद्य आलुलोभयिषादिति तथेति, ते वरुणस्य राज्ञो गृहे तनूः सन्यदधत"-इति। स्वकार्यहानिनिमित्तदुःखपरिहारोपायदर्शननिमित्तहर्षद्योतनार्थो 'हन्त'-शब्दः। अस्माक मत्यन्तं प्रिया याः पुत्रकलत्रादिरूपाः 'तन्वः' सन्ति, 'ताः' सर्वाः 'अस्य वरुणस्य राज्ञो गृहे सन्निदधामहै' बन्दीरूपेण स्थापयामः। तथा सति 'नः' अस्माकं मध्ये 'यः' कोऽपि 'एतदतिक्रामात्' उल्लङ्घ-

---

* शतपथे तु मूले एव सूचितः शाखान्तरसंवादः 'एके आहुः'—इति ३. ४. २. १।

येत्, उल्लङ्घ्य च 'आलुलोभयिषात्' स्वपुत्रकलत्रादीनेव लोभयितु मिच्छेत्, गुप्तमनुष्यमुखेनानेतु मिच्छेत्, 'नः' अस्माकं मध्ये 'सः' तादृशः पुरुषः 'ताभिरेव' 'न सङ्गच्छाते' पुत्रकलत्रादिभिः न सङ्गच्छताम्। इत्येतं समयं सर्वेऽप्यङ्गीकृत्य वरुणगृहे स्वपुत्रादि-शरीराणि स्थापितवन्तः। परस्पराविरोधे सति वय मेवासुराणा मिदं लोकत्रयं साधयाम इति विचार्येमं समयं कृतवन्तः। सोऽयं शाखान्तरे स्पष्ट माम्नायते—"तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृ-व्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनु-वस्ताः समवद्यामहै। ताभ्यः सनिर्ऋच्छाद्यो नः प्रथमोऽन्यो-ऽन्यस्मै द्रुह्यादिति"-इति ( सं० ६. २. २. १. )॥

इदानीं निर्वचनं दर्शयति—"ते यद्वरुणस्य राज्ञो गृहे तनूः सन्न्यदधत, तत्तानूनप्त्र मभवत्तत्तानूनप्त्रस्य तानूनप्त्रत्वम्"-इति। यस्माद्वरुणगृहे पुत्रादितनूरवस्थाप्य, परस्परसख्याय शपथरूप माज्यस्पर्शनं कृतवन्त इति शेषः। तस्मादिद माज्यस्पर्शनाख्यं तानूनप्त्रं कर्म्म अभवत् *। इदं च कर्म्मापस्तम्बेन विस्पष्ट मभिहितम्—"आतिथ्याया ध्रुवात् स्रुचि चमसे वा तानूनप्त्रं समवद्यति। चतुरवत्तं पञ्चावत्तं वा। आपतये त्वा गृह्णामी-त्येतैः प्रतिमन्त्रम्। अनाधृष्ट मसीति यजमानसप्तदशा† ऋत्विज-

---

* अध्वर्युप्रभृतिषोड़शर्त्विजो यजमानश्च मिथो द्रोहशून्या भवन्त एकमतया यज्ञकार्यं सम्पादयितुं घृतस्पर्शनपूर्वकं समस्तं यत् शपथकरणं तदेव 'तानूनप्त्र' कर्म; परस्परेर्षा-द्वेषादिशून्या एव वयं यथाविधियागकार्यसम्पादनाय यतिष्याम इत्याकारः स्वीकार इति।

† "अध्वर्युं प्रतिप्रस्थातारं नेष्टार मुन्नेतार मितरध्वर्यून्।
ब्रह्माणं ब्राह्मणाच्छंसिन माग्नीध्रं पोतार मिति ब्रह्मणः।
होतारं मैत्रावरुण मच्छावाकं ग्रावस्तुत मिति होतॄन्।
उद्गातारं प्रस्तोतारं प्रतिहर्त्तारं सुब्रह्मण्य मितुद्गातॄन्।
सदस्यं सप्तदशं कौषीतकिनः समामनन्ति"—इति आप० श्रौ० १०.१.९,१०।

स्तानूनप्त्रं समवस्यन्ति । अनु मे दीक्षा मिति यजमानः”-इति ( श्रौ० ११. १. १—३. ) । तनूनां पुत्रादिशरीराणां नप्त्रं नपतन मतिशयितं निमित्तीकृत्य क्रियमाणत्वात् अस्य कर्म्मणः तानूनप्त्रं नाम सम्पन्नम् ॥

प्रसङ्गाल्लोकव्यवहारे कञ्चिद्धर्म्मं दर्शयति— “तस्मादाहुर्न सतानूनप्त्रिणे द्रोग्धव्य मिति”-इति । यस्माद्देवाः परस्परद्रोह-परिहाराय शपथं कृतवन्तः, ‘तस्माद्’ ब्रह्मवादिन एवम् ‘आहुः’— ‘सतानूनप्त्रिणे सह-शपथकारिणे ‘न द्रोग्धव्यम्’ । ‘इति’ शब्दः तदुक्तिसमाप्त्यर्थः । देवसम्बन्धिशपथविशेषवाचिना तानूनप्त्र-शब्देन शपथमात्र मुपलक्ष्यते । बहुभिः सह क्रियमाणं तानूनप्त्रं यस्यास्ति, सोऽयं सतानूनप्त्री ॥

प्रासङ्गिकं परिसमाप्य प्रकृत मनुसरति—“तस्मादिद मसुरा नान्वाभवन्ति”-इति । ‘तस्माद्’ तस्मादेव कारणाद्देवानां परस्परसख्यरूपात् ‘असुराः’ ‘इदं’ लोकत्रयं ‘नान्वाभवन्ति’ नैव समन्तात्प्राप्नुवन्ति ॥

यद्यप्येतत्तानूनप्त्रं कर्म्म उपसद्भ्यः पूर्व मनुष्ठेयम् *, तथाप्युपसत्प्रयुक्तविजयप्रसङ्गेन बुद्धिस्थत्वादत्राभिहितम् ॥ ७ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
सप्तमः खण्डः ॥ ७ ( २४ ) ॥

———

* अतएव कात्यायनेन ‘इडान्तं भवति’-इति ( ८. १. १८. ) आतिथ्यं समाप्य, प्रोव-

॥ अथ अष्टमः खण्डः ॥

शिरो वा एतद्यज्ञस्य यदातिथ्यं ग्रीवा उपसदः समानबर्हिषी भवतः समानं हि शिरोग्रीवं मिथुं वा एतां देवाः समस्कुर्वत यदुपसदस्तस्या अग्निरनीक मासीत् सोमः शल्यो विष्णुस्तेजनं वरुणः पर्णानि ता माज्यधन्वानो व्यसृजंस्तया पुरो भिन्दन्त आयंस्तस्मादेता आज्यहविषो भवन्ति चतुरोऽग्रे स्तनान् व्रत मुपैत्युपसत्सु चतुस्सन्धिर्हीषुरनीकं शल्यस्तेजनं पर्णानि त्रीन् स्तनान् व्रत मुपैत्युपसत्सु त्रिषन्धिर्हीषुरनीकं शल्यस्तेजनं द्वौ स्तनौ व्रत मुपैत्युपसत्सु द्विषन्धिर्हीषुः शल्यश्च ह्येव तेजनं चैकं स्तनं व्रत मुपैत्युपसत्स्वेका ह्येवेषु रित्याख्यायत एकया वीर्यं क्रियते परोवरीयांसो वा इमे लोका अर्वागंहीयांसः परस्तादर्वाचीरुपसद उपैत्येषा मेव लोकाना मभिजित्यै उपसद्याय मीळ्हुष इमां मे अग्ने समिधं मिमा मुपसदं वनेरिति तिस्रस्तिस्रः सामिधेन्यो रूपसम्पन्ना एतद्वै यज्ञस्य समृद्धं यद् रूप-

---

ग्रहणं च विधाय, शपथग्रहणं तानूनप्त्रं प्रोच्य, निह्नवादि सुब्रह्मण्याह्वानं च व्यवस्थाप्य सूत्रितम्—'प्रवर्ग्योपसदावतः'–इति ( ८. २. १५. )। 'अतः सुब्रह्मण्याह्वानादूर्ध्वं प्रवर्ग्योपसदौ भवतः। पूर्वं प्रवर्ग्यः तत उपसदिति। उपसदिति वक्ष्यमाणाया इष्टेः संज्ञा'–इति च तट्टीका। तथैवापस्तम्बोऽप्याह ( १०. २१. १५, १६ ; ११. १. १—१४ ; २. १—१२ )।

समृद्धं यत्कर्म क्रियमाणं मृगभिवदति जघ्निवतीर्याज्यानुवाक्याः कुर्यादग्निर्वृत्राणि जङ्घनद् य उग्र इव शर्यहा त्वं सोमासि सत्पतिर्गयस्फानो अमीवहेदं विष्णुर्विचक्रमे त्रीणि पदा विचक्रम इत्येता विपर्यस्ताभिरपराह्णे यजति घ्नन्तो वा एताभिर्देवाः पुरो भिन्दन्त आयन्यदुपसदः सच्छन्दसः कर्त्तव्या न विच्छन्दसो यद्विच्छन्दसः कुर्याद् ग्रीवासु तद् गण्डं दध्यादीश्वरो ग्लावो जनितोस्तस्मात् सच्छन्दस एव कर्त्तव्या न विच्छन्दसस्तदु ह स्माहोपाविर्जानश्रुतेय उपसदां किल वै तद् ब्राह्मणे यस्मादप्यश्लीलस्य श्रोत्रियस्य मुखं व्येव ज्ञायते तृप्त मिव रेभतीवेत्याज्यहविषो ह्युपसदो ग्रीवासु मुख मध्याहितं तस्माद्ध स्म तदाह ॥ ८ ( २५ ) ॥

अथातिथ्यकर्म्मण्यास्तीर्णस्यैव बर्हिष उपसत्स्वनुवृत्तिं विधत्ते —"शिरो वा एतद्यज्ञस्य यदातिथ्यं, ग्रीवा उपसदः, समानबर्हिषी भवतः; समानं हि शिरोग्रीवम्"-इति। आतिथ्यकर्म्मणो यज्ञशिरोरूपत्वादुपसदां च ग्रीवारूपत्वात्, तयोरवयवयोर्म्मध्ये लोके विच्छेदादर्शनादत्राप्यविच्छेदायातिथ्योपसत्कर्म्मणोः 'समानबर्हिषी' एकैकबर्हिषा युक्ते कर्त्तव्ये। आतिथ्यकर्म्मण्यास्तीर्णं बर्हिर्नाग्नौ प्रहृतम्; इडान्तत्वेन तत्र कर्म्मसमापनात्।

तच्चापस्तम्बेनोक्तम्—"इडान्ता सन्तिष्ठते ; धारयति ध्रौव माज्यम्"-इति (१०. ३१. १५, १६.)। शाखान्तरे च बर्हिषोरनुवृत्तिराम्नाता—"यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य"-इति।

अथोपसत्सु द्रव्यदेवताविधानार्थं प्रस्तौति—"इषुं वा एतां देवाः समस्कुर्वत ; यदुपसदस्तस्या अग्निरनीक मासीत्, सोमः शल्यो, विष्णुस्तेजनं, वरुणः पर्णानि, ता माज्यधन्वानो व्यसृजंस्तया पुरो भिन्दन्त आयन्"-इति। 'यदुपसदः' या उपसद्देवता अग्न्यादिकाः सन्ति, 'एताम्' अग्न्यादिरूपाम् 'इषुं वै' वाण मेव 'देवाः' 'समस्कुर्वत' संस्कृतवन्तः, अग्न्यादीन् वाणावयवरूपेण संयोजितवन्त इत्यर्थः। योऽयम् 'अग्निः', सोऽयं तस्या इषोः 'अनीकं' मुखम् 'आसीत्' ; पत्रयुक्तात्वाणमूलादूर्द्ध्ववर्त्ती भागो मुखम्, तस्योपरि वर्त्तमानो लोहविशेषः 'शल्यम्' ; तस्य लोहस्य तीक्ष्ण मग्रं 'तेजनम्' ; 'पर्णानि' वाणमूले स्थापितानि, पक्षिणां पत्राणि। शल्यादिरूपेण सोमविष्णुवरुणा योजिताः। वरुणोऽत्र प्रशंसार्थ मेवोपादीयते, न तु देवतात्वेन ; तदीययोर्याज्यानुवाक्ययोरनभिधास्यमानत्वात्। अतएव शाखान्तरे वरुणं परित्यज्याग्न्यादय आम्नायन्ते—"त इषुं समस्कुर्वताग्नि मनीकꣳ सोमꣳ शल्यं विष्णुं तेजनम्"-इति (तै० सं० ६.२.३.१.)। 'ताम्' एता मिषुं देवाः 'आज्यधन्वानः' सन्तो विसृष्टवन्तः, 'तया' विसृष्टयेष्वा तेषा मसुराणां 'पुरो भिन्दन्तः' विदारयन्तः 'आयन्' आगच्छन्॥

इदानीं द्रव्यदेवतां विधत्ते—"तस्मादेता आज्यहविषो भवन्ति"-इति। यस्मादग्न्यादयो वाणरूपाः, आज्यं च धनुःस्वरूपम्, तस्मादाज्यहविष्का एता अग्न्यादिदेवता उपसत्सु भवेयुः॥

उपसदङ्गभूतं व्रतोपायनं विधत्ते—"चतुरो ऽग्रे स्तनान् व्रत मुपेत्युपसत्सु, चतुस्सन्धिर्ह्रीषुरनीकं शल्यस्तेजनं पर्णानि"-इति। 'उपसत्सु' अनुष्ठीयमानासु 'अग्रे' प्रथमदिने सायङ्काले 'चतुरः स्तनान् व्रत मुपैति' व्रतशब्देनात्र पयःपान मुच्यते,—गोश्चतुर्षु स्तनेषु यावत्पयस्तावत्। पूर्वोक्तस्य बाणस्य चतुःसन्धित्वादनीकाद्यवयवचतुष्टयोपेतत्वात् स्तनानां चतुःसङ्ख्या युक्ता। अनेनैव प्रकारेण द्वितीयोपसद्दिने प्रातःसायङ्कालयोः, तृतीयदिनस्य प्रातःकाले चैकैकन्यूनां स्तनसङ्ख्यां विधत्ते—"त्रीन् स्तनान् व्रत-मुपेत्युपसत्सु, त्रिषन्धिर्ह्रीषुरनीकं शल्यस्तेजनं; द्वौ स्तनौ व्रत मुपेत्युपसत्सु, द्विषन्धिर्ह्रीषुः शल्यश्च ह्येव तेजनं; चैकं स्तनं व्रत मुपेत्युपसत्स्वेका ह्येवेषुरित्याख्यायत एकया वीर्यं क्रियते"-इति। एतासां स्तनसङ्ख्याना मुक्ताः कालविशेषाः आपस्तम्बेनोदाहृताः —"चतरः सायं दुह्युस्त्रीन् प्रातर्द्वौ साय मेक मुत्तमे"-इति (११. ४. १०.)। यथोक्तं सङ्ख्याविशेषं प्रशंसति—"परोवरीयांसो वा इमे लोका अर्वागंहीयांसः परस्तादर्वाचीरुपसद उपैत्येषा मेव लोकाना मभिजित्यै"-इति। 'इमे' पृथिव्यन्तरिक्षद्युसप्तलोकाः* 'परोवरीयांसः' परस्तादूर्द्ध्वभागे निवसन्तः अत्यन्तं विस्तृताः, 'अर्वाक्' अधोभागे 'अंहीयांसः' अतिशयेनाणुवत्सङ्कुचिताः; सत्यलोकादणुः द्युलोकः, तस्मादप्यणुरन्तरिक्षलोकः, तस्मादप्यणुः भूलोकः†। एवं सतुरुपसदोऽपि 'परस्ताद्' ऊर्द्ध्वलोकस्थानीयात् प्रथमदिनादारभ्य तत्तद्दिनान्तरदिनेषु स्तनसङ्ख्याह्रासेन 'अर्वा-

*, † पौराणिकमतेनेमौ लेखौ सायणस्य; वस्तुतस्त्रय एव लोकाः, द्युलोकनाम-सूर्यमण्डलात् पृथिव्या अतिक्षुद्रत्वं च श्रुतेस्तात्पर्य मिति दिक्।

चौरुपैति अनुतिष्ठतीति यदस्ति, तत् 'एषा मेव लोकानाम्' अभिजयाय भवति ॥

अथ पूर्वाह्णापराह्णयोर्व्यवस्थिताः सामिधेनीर्विधत्ते—"उपसद्याय मीळ्हुष* इमां मे अग्ने समिध मिमा मुपसदं वनेरिति तिस्रस्तिस्रः सामिधेन्यो रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म्म क्रियमाण मृगभिवदति"-इति। 'उपसद्याय'-इत्याद्या आम्नाताः 'तिस्रः' ऋचः ( सं० ७.१५.१—३. ) पूर्वाह्णे सामिधेन्यः। 'इमां मे अग्ने'-इत्यादिका आम्नाताः 'तिस्रः' ऋचः ( सं० २. ६. १—३. ) अपराह्णे सामिधेन्यः। मन्त्रान्तरशङ्काव्युदासेन 'वै'-शब्दार्थः कृत्स्नार्थपाठः। "उपसद्याय उपसदं वनेः"-इति उपशब्दयोगेन रूपसमृद्धिः† ॥

याज्यानुवाक्या विधत्ते—"जघ्निवतीर्याज्यानुवाक्याः कुर्यात्"-इति। हन्ति-धात्वर्थयुक्ताः 'जघ्निवतीः' तथाविधा ऋचः उदाहरति—"अग्निर्वृत्राणि जङ्घनत्; य उग्र इव शर्यहा; त्वं सोमासि सत्पति; गयस्फानो अमीवहा; इदं विष्णुर्विचक्रमे; त्रीणि पदा विचक्रम इत्येताः"-इति। 'अग्निर्वृत्राणि'-इति ( सं०६.१६.३४.) पुरोनुवाक्या, 'य उग्र इव'-इति (सं० ६. १६. ३९.) याज्या; त्वं सोमासि'-इति ( सं० १.९१.५. ) पुरोनुवाक्या, 'गयस्फानः'-इति ( सं० १.९१.१२. ) याज्या; 'इदं विष्णुः'-इति (सं० १.१२.१७.) पुरोनुवाक्या, 'त्रीणि पदा'-इति (सं० १.१२.१८.) याज्या। 'एताः'

---

* 'ळहकारता मेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्तो'-इति ऋक्-प्राति०।

† 'इम मे अग्ने समिधम्'-इति प्रतीकवानन्यपरोऽपि मन्त्रः ( सं० १०. ७०. १. ), परं 'उपसदं वनेः'—इत्यंशस्य उपसदद्रूपसमृद्धिहेतुभूतस्य तत्राश्रवणान्नाव तस्य ग्रहण-प्रसक्तिरिति भावः।

चाग्न्यादिदेवानां क्रमेण द्रष्टव्याः। पूर्वाह्णे पुरोनुवाक्या उक्ताः, तासा मपराह्णे याज्यात्वम्; तथा तत्रत्यानां याज्याना मपराह्णे पुरोनुवाक्यात्वं च विधत्ते—“विपर्यस्ताभिरपराह्णे यजति”-इति॥

यथोक्तयाज्यानुवाक्यायुक्ता उपसदः प्रशंसति—“घ्नन्तो वा एताभिर्देवाः पुरो भिन्दन्त आयन्यदुपसदः”-इति। या उक्तमन्त्रोपेताः ‘उपसदः’ सन्ति, ‘एताभिर्देवाः’ असुराणां तिस्रः ‘पुरः’ विदारयन्तः असुरांश्च हिंसन्त आगताः। उदाहृतासु याज्यानुवाक्यासु सर्वासु यदेकविधं छन्दो दृश्यते, न तु विलक्षणम्; तदन्वयव्यतिरेकाभ्यां विशदयति—“सच्छन्दसः कर्त्तव्या न विच्छन्दसः” -इति। समानं छन्दो यासां ताः ‘सच्छन्दसः’; विलक्षणं छन्दो यासां ताः ‘विच्छन्दसः’। वैलक्षण्ये बाध माह—“यद्विच्छन्दसः कुर्याद् ग्रीवासु तद् गण्डं दध्यादीश्वरो ग्लावो जनितोः”-इति। विलक्षणच्छन्दसा मनुष्ठाने ग्रीवास्थानीयासूपसत्सु, गण्डमालाख्यरोगस्थानीयं दोषं ‘दध्यात्’ उत्पादयेत्। तथा सति होता यजमानस्य ग्लानिविशेषान् ‘जनितोः’ उत्पादयितुम् ‘ईश्वरः’ समर्थो भवेत्। अ-स्वपक्षे बाध मुक्त्वा स्वपक्ष मुपसंहरति—“तस्मात् सच्छन्दस एव कर्त्तव्याः, न विच्छन्दसः”-इति।

उपसदा माज्यहविष्कत्वं प्रशंसति—“तदु ह स्माहोपाविर्जानश्रुतेय उपसदां किल वै तद् ब्राह्मणे यस्मादप्यश्लीलस्य श्रोत्रियस्य मुखं व्येव ज्ञायते तृप्त मिव रेभतीवेत्याज्यहविषो ह्युपसदो ग्रीवासु मुख मध्याहितं तस्माद्ध स्म तदाह”-इति। ‘तदु ह’ तस्मिन्नेवोक्तार्थे कश्चिद्वृत्तान्त उच्यते इति शेषः। ‘उपाविः’ नामकः कश्चिदृषिः, स तु ‘जानश्रुतेयः’ जनश्रुतायाः स्त्रियो ऽपत्यं पुमान्, ‘उपसदां किल वै’ उपसन्नामकानां कर्मणा मेव विधायके ‘ब्राह्मणे’, ‘तद्’

वाक्यम् 'आह स्म'। किं माहेति तदुच्यते,—'यस्मात्' कारणात् 'अश्लीलस्य' अपि कुरूपस्य 'श्रोत्रियस्य' वेदशास्त्रविदः 'मुखं' 'तृप्त मिव' दैन्यहीनतया तृप्तियुक्त मेव 'रेभतीव' वेदशास्त्रपाठोपेतत्वाच्छंसन्निव 'वि एव न्नायते' विशेषेणावश्यं प्रतीयते। 'इति' एतदृषेर्वचनम्। तस्य वचनस्याभिप्राय उच्यते—ग्रीवास्थानीयाः 'उपसदः' आज्यहविष्काः, अतएव शोभनाः ; लोकेऽपि शोभमानासु ग्रीवासु 'अध्याहितम्' आश्रितं 'मुखं' श्रोत्रियसम्बन्धि तृप्त्याद्युपेतं दृश्यते; 'तस्मात्' कारणात्, शोभनग्रीवाहितमुखसाम्य माज्यहविष्कत्व मित्यभिप्रेत्य स ऋषिः तद्वाक्यम् 'आह'॥

अथ मीमांसा। चतुर्थाध्यायस्य द्वितीयपादे (जै०सू०२९,३०, अधि० १४.) चिन्तितम्—

"यदातिथ्याबर्हिरेतदुपसत्स्वतिदेशनम्।
साधारण्यविधिर्वाध्यस्तदीयस्योपसंहृतेः॥
बर्हिःस्रुत्यैकताभानान्नातिदेशस्य लक्षणा।
आतिथ्ययोपसद्भिश्च बर्हिरेतत्प्रयुज्यते॥

ज्योतिष्टोमे श्रूयते—"यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य च"-इति। क्रीतं सोमं शकटे अवस्थाप्य प्राचीनवंशं प्रत्यानयनेऽभिमुखो या मिष्टिं निर्वपति, सेय मातिथ्या। ततः ऊर्ध्वं त्रिषु दिनेषु अनुष्ठीयमाना उपसदः। औपवसथ्ये दिने ऽनुष्ठेयः सोऽग्नीषोमीयः। तत्रातिथ्येष्टौ विहितं यद् बर्हिः, तद्यदि तस्या इष्टेः आच्छिद्योपसत्सु विधीयेत, तदानी मातिथ्याविधान मनर्थकं स्यात् ;—यदि तत्रोपयुक्त मितरत्र विधीयते, विनियुक्त-विनियोगरूपो विरोधः स्यात् ; तस्मादातिथ्याबर्हिषो ये धर्म्मा आश्ववालत्वादयः, ते धर्मा उपसत्सूपसंक्रियन्त इत्यतिदेशपरं वाक्य

मिति प्राप्ते, ब्रूमः ;—बर्हिःशब्दस्य धर्मातिदेशपरत्वे लक्षणा प्रसज्येत, श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेषु एकत्वं प्रतिभाति ; अतः साधारण्य मत्र विधेयम्। आतिथ्यार्थं यद् बर्हिरुपादीयते, तत् न केवल मातिथ्यार्थं, किन्तूपसदर्थ मग्नीषोमीयार्थं चोपादेय मिति विधिवाक्यस्यार्थः। तस्मादातिथ्योपसदग्नीषोमीयास्त्रयोऽप्यस्य बर्हिषः प्रयोजकाः"-इति ॥

द्वादशाध्यायस्य प्रथमपादे ( जै०सू०४२,४३. अधि० १९. ) चिन्तितम्—

"आतिथ्यादिगते बर्हिष्युक्षणादि पृथङ् न वा।
आद्यो ऽतन्त्रप्रसङ्गत्वान्न प्रसङ्गोऽनिवारणात् ॥

"यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य"-इति श्रुतम्। तत्र बर्हिस्त्रयाणां साधारण्य मिति चतुर्थे निरूपितम् (जै०सू०४.२. २०. अधि०१४. )। तस्मिन् साधारणे बर्हिषि प्रोक्षणादिसंस्काराः प्रतिकर्म्म पृथगनुष्ठेयाः। कुतः ? तन्त्रप्रसङ्गयोरत्रासम्भवात्। न तावत् तन्त्र मस्ति, दर्शगतयागत्रयवदेककालीनत्वाभावात् ; नापि प्रसङ्गः, एकस्य तन्त्रमध्येऽन्ययोरपठितत्वादिति प्राप्ते, ब्रूमः; —बर्हिष एकत्वात् सकृत्प्रोक्षणादिभिः संस्कारे पुनः प्रोक्षणाद्यपेक्षा नास्ति। ते च प्रोक्षणादयः प्राथम्यादातिथ्यायां कार्याः, तत उपसत्स्वग्नीषोमीये च प्रसङ्गसिद्धिर्न वारयितुं शक्यते"-इति ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये
अष्टमः खण्डः ॥ ८ ( २५ ) ॥

---

## ॥ अथ नवमः खण्डः ॥

देववर्म वा एतद्यत् प्रयाजाश्चानुयाजाश्चाप्रयाजमननुयाजं भवतीष्वै संशित्या अप्रतिशराय सकृदतिक्रम्याश्रावयति यज्ञस्याभिक्रान्त्या अनपक्रमाय तदाहुः क्रूरमिव वा एतत् सोमस्य राज्ञोऽन्ते चरन्ति यदस्य घृतेनान्ते चरन्ति घृतेन हि वज्रेणेन्द्रो वृत्रमहंस्तद्यदंशुरंशुष्टे देव सोमाप्यायता* मिन्द्रायैकधनविद आ तुभ्य मिन्द्रः प्यायता मा त्व मिन्द्राय प्यायस्वाप्याययास्मान्त्सखीन् सन्या† मेधया स्वस्ति ते देव सोम सुत्या मुदृच मशीयेति राजान माप्याययन्ति यदेवास्य तत् क्रूर मिवान्ते चरन्ति तदेवास्यैतेनाप्याययन्त्यथो एनं वर्द्धयन्त्येव द्यावापृथिव्योर्वा एष गर्भो यत्सोमो राजा तद्यदेष्टा राय एष्टा वामानि प्रेषे भगाय ऋत मृतवादिभ्यो नमो दिवे नमः पृथिव्या इति प्रस्तरे निह्नवते द्यावापृथिवीभ्या मेव तन्नमस्कुर्वन्त्यथो एने वर्द्धयन्त्येव वर्द्धयन्त्येव ॥ ९(२६)॥

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां चतुर्थोऽध्यायः ॥४॥

---

* 'सोम आप्यायता' क।

† 'नसन्या'-इति सै० सं०, ता सं० पाठः।

अथोपसत्सु प्रयाजानुयाजांश्च निषेधति— "देववर्म्म वा एतद्यत्प्रयाजाश्चानुयाजाश्चाप्रयाज मननुयाजं भवतीष्वै संशित्या अप्रतिशराय"-इति । ये प्रयाजा ये चानुयाजाः सन्ति, तदुभयं देवानां 'वर्म्म वै' कवचस्थानीयम् । अतएव शाखान्तरे समामनन्ति —"यत्प्रयाजानूयाजा इज्यन्ते, वर्मैव तद्यज्ञाय क्रियते, वर्म्म यजमानाय भ्रातृव्याभिभूत्यै"-इति ( तै० सं० २. ६. १. ५. )। एवं सत्युपसदाख्यं कर्म्म प्रयाजानुयाजरहितं कर्त्तव्यम् ; कवच-स्यानुपयुक्तत्वात् । परकीयप्रहाराद्रक्षार्थं हि कवचं सम्पाद्यते, नात्र प्रहारः सम्भवति ; पूर्वोक्ताया इषोस्तीक्ष्णत्वेन सकृत्प्रयोगादेव मारितेषु शत्रुषु प्रहर्तृणा मभावात् । एवं सति यदि कवचं सम्पाद्यते, तदानीं स्वकीयाया इषोरतीक्ष्णत्वं शङ्केत, स्वस्य च शत्रुभिः सम्पादिता प्रतिहिंसा शङ्केत ; तच्चायुक्तम् । तस्मात् 'इष्वै संशित्यै' स्वकीयस्य वाणस्य सम्यक् तीक्ष्णत्वार्थम् 'अप्रति-शराय स्वेषु शत्रुकर्त्तृकप्रतिहिंसायाः शङ्कापरिहारार्थं च प्रयाजा-नुयाजवर्जनं युक्तम् । तथा चाश्वलायन आह—"स्विष्टकृदादि लुप्यते, प्रयाजा आज्यभागौ च"-इति ( श्रौ० ४.८.८. )। स्विष्ट-कृदादिष्वन्तर्भावादनुयाजलोपो युक्त एव ॥

अत्राग्नीषोमविष्णुरूपाणां देवानां बहुत्वेनाश्रवणार्थ मुत्त-रस्माद्देशादाहवनीयस्य दक्षिणदेशं प्रत्यसकृदतिक्रमणं प्राप्तम्, तद्वा-रयितु माह—"सकृदतिक्रम्याश्रावयति, यज्ञस्याभिक्रान्त्या अनप-क्रमाय"-इति । वेद्याहवनीययोर्मध्ये सकृदेवातिक्रम्य दक्षिण-दिश्यवस्थितेषु बहुषु यागेषु प्रत्येक माश्रावणं कुर्यात् । एवं प्रत्युप-सद्यज्ञस्य सर्वत आक्रमणं भवति, स्थैर्यं भवति । अन्यथा पुनः-पुनरुत्तरस्यां दिशि गमने, लब्धावसरः सन् यज्ञोऽप्यपक्रमेत् ।

तस्मात्सकृदेवातिक्रमणं युक्तम्। तदाहापस्तम्बः—"ध्रौवादष्टौ जुह्वां गृह्णाति, चतुरुपभृति। घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत्प्रचरति"-इति (श्रौ० ११.३.८,१०.)॥

अथ समन्त्रकं सोमाप्यायनं विधातुं प्रस्तौति—"तदाहुः क्रूर मिव वा एतत्सोमस्य राज्ञोऽन्ते चरन्ति; यदस्य घृतेतान्ते चरन्ति; घृतेन हि वज्रेणेन्द्रो वृत्र महन्"-इति। 'तत्' तत्र ब्रह्मवादिनः एवम् 'आहुः'—'सोमस्य राज्ञः' 'अन्ते' समीपे 'घृतेन' द्रव्येण तानूनप्त्रसञ्ज्ञकं कर्म्म 'चरन्ति' अनुतिष्ठन्तीति 'यद्' अस्ति, तत् 'एतत्' सोमस्य राज्ञः समीपे 'क्रूर मिव वै' उग्र मिव कर्म्म 'चरन्ति'; 'हि' यस्मात्कारणात् घृतरूपेण 'वज्रेण' 'इन्द्रः' 'वृत्र' हतवान्, तस्मात् घृतकर्म्म क्रूरम्। तच्छाखान्तरे विस्पष्ट माम्नातम्—"घृतं वै देवा वज्रं कृत्वा सोम मघ्नन्नन्तिक मिव खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचरन्ति"-इति (तै० सं० ६. २. २. ४.)।

तस्य क्रूरकर्म्मणः परिहाराय विधत्ते—"तद्यदंशुरंशुष्टे देव सोमाप्यायता मिन्द्रायैकधनविद आ तुभ्य मिन्द्रः प्यायता मा त्व मिन्द्राय प्यायस्वाप्याययास्मान्त्सखीन् सन्या मेधया स्वस्ति ते देव सोम सुत्या मुदृच मशीयेति राजान माप्याययन्ति; यदेवास्य तत् क्रूर मिवान्ते चरन्ति, तदेवास्यैतेनाप्याययन्त्यथो एनं वर्द्धयन्त्येव"-इति। 'यद्' यस्मात्कारणात् सोमस्य राज्ञः समीपे घृतसाधनकं तानूनप्त्रं कर्म्म क्रूरम्, 'तत्' तस्मात् कारणात्, क्रौर्यपरिहाराय 'अंशुरंशुः'-इति मन्त्रेण * सोमं राजान माप्याययेयुः।

* तैत्तिरीयसंहितायामप्ययं मन्त्रः श्रूयते (१.२.११.१.); परं तत्र इमे पाठा इती

जलेन प्रोक्षण माप्यायनम्। एवं सति 'यत्' क्रूर माचरितं, 'तत्' सर्वम् 'एतेन' प्रोक्षणेन 'आप्यायन्ति' शमयन्ति ; अपिच 'एनं' सोमं 'वर्द्धयन्त्येव'। मन्त्रस्याय मर्थः—हे 'सोम! देव!' इन्द्रार्थं 'ते' त्वदीयः 'अंशुः' त्वदवयवः 'आप्यायताम्' वर्धताम्। कीदृशायेन्द्राय ? 'एकधनविदे' सोमरूपं यदेकं धनं तद्वेत्ति विन्दते वेति एकधनवित्, तस्मै एकधनविदे, 'तुभ्य'' त्वदर्थम् 'इन्द्रः' वर्धताम्, इन्द्रार्थं च 'त्वं' वर्धस्व। 'सखीन् अस्मान्' 'सन्या' क्षेमेण, 'मेधया' यज्ञप्रतिपादकग्रन्थधारणशक्त्या च 'आप्यायय' वर्धय। हे 'सोम! देव!' 'ते' 'स्वस्ति' क्षेमोऽस्तु। यस्यां क्रियायां सोमः 'सूयते' अभिषूयते सा सुत्या। 'उत्' उत्तमा समाप्तिविषया ऋक् यस्यां सुत्यायां सेयम् 'उदृक्'। तां 'सुत्याम् उदृचम्' 'अशीय' प्राप्नुयाम् ; विघ्न मन्तरेण समाप्तिपर्यन्त मनुतिष्ठेय मिति ( वा० सं० ५,७,१, )। अतः 'इति'-शब्दो मन्त्र-समाप्त्यर्थः॥

समन्त्रकं निह्नवं विधत्ते—"द्यावापृथिव्योर्वा एष गर्भो यत् सोमो राजा, तद्यदेष्टा राय एष्टा वामानि प्रेषे भगाय ऋत मृत-वादिभ्यो नमो दिवे नमः पृथिव्या इति प्रस्तरे निह्नवते ; द्यावा-पृथिवीभ्या मेव तन्नमस्कुर्वन्त्यथो एने वर्धयन्त्येव वर्धयन्त्येव"-इति। यः 'सोमो राजा एषः' 'द्यावापृथिव्योः' एव 'गर्भः' ; 'यद्' यस्मा-देवं 'तत्' तस्मात् गर्भरक्षार्थं 'प्रस्तरे' एतन्नामके दर्भमुष्टौ 'निह्न-वते' सम्प्रणयन्ति, नमस्कारोपचारं कुर्युरित्यर्थः। तदेतत् द्यावा-पृथिवीभ्या मित्यादिना स्पष्टीक्रियते। अपिच 'एने' द्यावापृथिव्यौ

---

विभिन्नाः—'अ॰ शुर॰ शुष्टे', '॰प्यायय सखीन्', 'सुत्या मशीय'-इति। "आशिष मेवैता माशास्ते"-इति च तद्ब्राह्मणम् ( तै॰सं॰१.२.२. )। वाजसनेयिनाञ्च 'सुत्या मशीय'-इत्येव।

'वर्धयन्त्येव' उत्साहयुक्तं कुर्वन्त्येव ॥ निह्नवप्रकार आपस्तम्बेन दर्शितः—"अथ निह्नुवते—दक्षिणे वेद्यन्ते प्रस्तरं निधाय दक्षिणान् पाणीनुत्तानान् कृत्वा सव्यान् नीच एष्टा रायः प्रेषे भगायेति"-इति ( श्रौ०११.१.१२. )। अस्मादभ्युदय मिच्छतीतिरष्टा प्रस्तरः सोमो वा। देहीति पद मध्याहर्त्तव्यम्। हे 'एष्टः!' 'इषे' अन्नार्थं 'भगाय' सौभाग्यार्थं च 'रायः' धनानि 'प्र'देहि। यद्वा 'एष्टा'-इति प्रथमान्तम्; तदानीं 'प्र'ददात्वित्यध्याहारः। किञ्च, 'एष्टा' 'वामानि' अन्यानपि कामान् प्रददातु। 'ऋतवादिभ्यः' सत्यवादिभ्यो देवेभ्यः, ऋत्विग्यजमानेभ्यो वा 'ऋतं' सत्यं वदामीति शेषः। तदेव सत्यवचनं स्पष्ट मुच्यते—'दिवे' द्युलोकदेवतायै 'नमः' अस्तु, 'पृथिव्यै' भूलोकदेवतायै 'नमः' अस्त्विति ( वा० सं०५.७.२. * )। श्रौतः 'इति'-शब्दो मन्त्रसमाप्त्यर्थः॥ वर्द्धयन्त्येवेत्यभ्यासोऽध्यायसमाप्त्यर्थः॥

अत्र मीमांसा। दशमाध्यायस्य सप्तमे पादे (जै० सू० ४३.४६. अधि० १४.) चिन्तितम्—

"उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं समाचरेत्।
यावदुक्तोऽथवाद्यस्तु चोदकस्याविचारणात्॥
स्रौवाघारे पुनःश्रुत्या शिष्टस्य परिसङ्ख्यया।
अपूर्वार्थत्वतो वाद्यो ऽनुवादः प्रतिषेधगीः॥

ज्योतिष्टोमे विहितासूपसत्सु पठ्यते—"अप्रयाजास्ता अननुयाजाः"-इति (कात्या० श्रौ० ६.१०.२२,२३. †)। तत्र निषिद्धान्

---

* एष च मन्त्रः श्रूयते तैत्तिरीयसंहितायामपि ( १.२.११.२. ), परं न तत्र 'एष्टा वामानि'-इति; तथा वाजसनेयिनाञ्च। "द्यावापृथिवीभ्या मेव नमस्कृत्यास्मिन् लोके प्रतितिष्ठन्ति"-इति च तद्ब्राह्मणम् ( तै० सं० ६.२.२. )।

† इह त्वस्ति 'अप्रयाज मननुयाजम्'-इति ( १८८ पृ० )।

प्रयाजानुयाजान् वर्जयित्वा अवशिष्टं चोदकप्राप्त मङ्गजातं सर्व्व माचरणीय मिति प्राप्ते, ब्रूमः ;—प्रकृतौ विहित एव स्रौवाघारः पुनरिह विधीयते, स च चोदकप्राप्त मन्यत् सर्व्व मङ्गजातं परिचष्टे; अन्यथा पुनर्विधानवैयर्थ्यात्। ननु पुनर्विधानं प्रतिप्रसवार्थम् ;— अतएव श्रुतिरत्र स्रौवाघार मभावशङ्कानिराकरणपूर्व्वकं विदधाति—"नान्या माहुतिं पुरस्ताज्जुहुयाद्यदन्या माहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् स्रुवेणाघार माघारयति"-इति *। अय मर्थः—स्रौवाघारः सर्व्वत्र यज्ञस्य मुखम्, तथा सति, यदि कश्चिन्मन्द उपसत्प्रयोगादौ स्रौवाघार मकृत्वा, तस्य स्थाने काञ्चिदन्या माहुतिं जुहुयात्, तदा मुखव्यत्यासेन प्रत्यवायं प्राप्नुयात्; तस्मात् स्रौवाघार आदौ कर्त्तव्य इति ? न एतद् युक्तम्; चोदकप्राप्तस्याघारस्याकस्मादभावशङ्काया अयुक्तत्वात्। तस्मात्परिसङ्ख्यार्थ एव पुनर्विधिः। आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः। यदि परिसङ्ख्या, सापि त्रिदोषेत्युच्येत; तर्हि "गृहमेधीयवदपूर्व्वकर्म्मासु †,—प्रयाजादिनिषेधो नित्यानुवादः; सर्व्वथा यावदुक्त मत्रानुष्ठेयम्"-इति ‡ ॥ ९ ॥

---

* 'स्रुवेणाघार माघारयति यज्ञस्य प्रज्ञात्यै'-इति तै० सं० ६. २. ३. ३।

† जै० मी० द० १० अ० ७ पा० २४—३३ सू० ; ९ अधि०।

‡ उपसदिष्टेरङ्गभूतानि तानूनप्त्रादीनि कर्म्माणि शतपथब्राह्मणे द्वितीयकाण्डस्य चतुर्थाध्याये विहितानि ; तैत्तिरीयके सं० १ का० २ प्र० ११ अनुवाके, ६ का० २ प्र० २—६ अनुवाकेषु च ; तथा कल्पसूत्रेषु च,—आश्वलायनश्रौते 'संस्थिताया माज्यं तानूनप्त्रम्'-इत्यादीनि 'नमः पृथिव्या इति'-इत्यन्तानि ( ४. ५. ३—८. ) ; आपस्तम्बश्रौते 'आतिथ्याया ध्रौवात् स्रुचि चमसे वा तानूनप्त्रं समवद्यति'-इत्यादि ११ प्र० १ क० १—१२ सू० ; कात्यायनश्रौते च 'तानूनप्त्र मेतत्'-इति-( ८. १. २४. )-सूत्रस्याद्यन्तसूत्राणि द्रष्टव्यानि। तत्रैव च वृत्तौ 'अथ सौकर्याय उपसदः प्रयोग उच्यते'-इत्यादिन'

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां चतुर्थाध्याये नवमः खण्डः ॥ ९ ( २६ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः चतुर्थोऽध्यायः ॥

---

उपसदिष्टिप्रयोगः समन्ताद् वर्णितः । अथातिथ्येष्टौ प्रकृतिवत् कुशमयः प्रस्तरो भवति ; उपसदिष्टौ तु आश्ववालः प्रस्तरः ( तै० सं० ६.२.१ ; कात्या० सू० ८.१.१२. ) । 'आश्व- वाल।. प्रतिनिहाखाः काशाख्या दर्भविशेषाः'—इति सत्रोक्तं सायणेनेति ॥

† इह ।

## ॥ अथ पञ्चमाध्यायः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

॥ ॐ ॥ सोमो वै राजा गन्धर्वेष्वासीत्तं देवाश्च ऋषयश्चाभ्यध्यायन् कथ मय मस्मान्त्सोमो राजा गच्छेदिति सा वागब्रवीत् स्त्रीकामा वै गन्धर्वा मयैव स्त्रिया भूतया पणध्व मिति नेति देवा अब्रुवन् कथं वयं त्वदृते स्यामेति साब्रवीत् क्रीणीतैव यर्हि वाव वो मयार्थो भविता तर्ह्येव वो ऽहं पुनरागन्तास्मीति तथेति तया महानग्न्या * भूतया सोमं राजान मक्रीणंस्ता मनुकृति मस्कन्नां वत्सतरी माजन्ति सोमक्रयणीं तया सोमं राजानं क्रीणन्ति तां पुनर्निष्क्रीणीयात्पुनर्हि सा तानागच्छत्तस्मादुपांशु वाचा चरितव्यं सोमे राजनि क्रीते गन्धर्वेषु हि तर्हि वाग् भवति साग्नावेव प्रणीयमाने पुनरागच्छति ॥ १ ( २७ ) ॥

* 'महाणग्न्या' ख, ग।

अभिष्टवोपसत्तानूनप्त्राप्यायननिह्नवा: ।
कथिता धर्म्मसम्भारा व्रतोपायन मेव च ॥

अथ सोमक्रयाद्या वक्तव्या: ; तत्र क्रयं वक्तु माख्यायिका माह —"सोमो वै राजा गन्धर्वेष्वासीत् ; तं देवाश्च ऋषयश्चाभ्यध्यायन्, —कथ मय मस्मान्त्सोमो राजा गच्छेदिति ? सा वागब्रवीत्,— स्त्रीकामा वै गन्धर्वा:, मयैव स्त्रिया भूतया पणध्व मिति ; नेति देवा अब्रुवन्,—कथं वयं त्वदृते स्यामेति ? साब्रवीत्,—क्रीणी-तैव ; यर्ह्हि वाव वो मयार्थो भविता, तर्ह्येव वो ऽहं पुनराग-न्तास्मीति ; तथेति ; तया महानग्न्या भूतया सोमं राजान मक्रीणन्"-इति । स्वानभ्राजेत्यादिनामधारिणो गन्धर्वा: द्युलोके सोमस्य रक्षका: । तच्च शाखान्तरे मन्त्रव्याख्यानब्राह्मणे श्रूयते —"स्वान भ्राजेत्याह, एते वा अमुष्मिंल्लोके सोम मरक्षन्"-इति ( तै० सं० ६. १. १०. ५. )* । अथवा विश्वावसुप्रभृतय: सोमस्यापहर्त्तारो गन्धर्वा: । तदपि तत्रैव श्रुतम् । "तꣳ सोम माह्रियमाणं गन्धर्वो विश्वावसु: पर्यमुष्णात् ; स तिस्रो रात्री: परिमुषितो ऽवसत्"-इति (तै० सं० ६.१.६.५. ) । तेषु 'गन्धर्वेषु' य: 'सोम आसीत्', 'तं' सोमं मित्रादयो 'देवा:' वसिष्ठादय: 'ऋषयश्च' केन प्रकारेण सोमोऽस्मान् प्राप्नुयादिति विचारित-वन्त: । तदानीं गन्धर्वहृदयाभिज्ञा, 'वाग्' देवी देवान् 'अब्रवीत्' —'गन्धर्वा:' सर्वेऽपि स्त्रीलम्पटा:, अहं च स्त्री भूत्वा तिष्ठामि, अतो 'मया पणध्व" सोममूल्यत्वेन तां गन्धर्वाणा मग्रे कुरुतेति । ततो 'देवा:' अनङ्गीकृत्य 'त्वदृते' त्वां वाचं विना 'वयं कथं स्याम'

---

* 'स्वान भ्राज'-इति मन्त्रस्तु तैत्तिरीयसंहिताया माम्नात: ( १. २. ७. )।

मन्त्ररूपवाग्राहित्ये सति कर्म्मणा मप्रवृत्तेः केन प्रकारेण वयं जीवाम ? इति वाचम् 'अब्रुवन्'। ततो वाक् देवान् 'अब्रवीत्' सन्देहं मा कुरुत, अवश्यं मया मूल्येन 'क्रीणीत', यदैव 'मया' युष्माकं प्रयोजनं भविष्यति, तदैवाहं पुनरपि युष्मान् प्राप्स्यामीति। ततो देवा अङ्गीकृत्य 'तया' वाचा 'सोम मक्रीणन्'। कीदृश्या ? 'महानग्न्या' महती चासौ नग्नी च महानग्नी, तया। रूपसम्पत्तिविवक्षया महत्त्व मुच्यते, बाल्यविवक्षया नग्नत्वम्। 'भूतया' तदानी मेव कुमारीरूपेण निष्पन्नया। तदेतच्छाखान्तरे स्पष्ट माम्नातम्— "ते देवा अब्रुवन्, स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति ; ते वाचं स्त्रिय मेकहायनीं कृत्वा तया निरक्रीणन्"-इति ( तै० सं० ६. १. ६. ५. ) ॥

इदानीं सोमक्रयं विधत्ते—"ता मनुकृति मस्कन्नां वत्सतरी माजन्ति सोमक्रयणीं, तया सोमं राजानं क्रीणन्ति"-इति। 'ता मनुकृति" तां स्त्रीरूपां वाचम्, अनुक्रियमाणां निष्पन्नां तत्सदृशी मित्यर्थः। 'अस्कन्नां' वीर्यस्कन्दनरहिताम् अप्राप्तयौवनाम्, 'वत्सतरीम्' अतिशयेन बालां, सोमक्रयसाधनभूतां काञ्चिद्गाम् 'आजन्ति' सम्पादयेयुरित्यर्थः। 'तया' सादृश्या गवा 'सोमं राजानं' 'क्रीणन्ति' क्रीणीयुः ; तां गां मूल्यरूपेण दत्त्वा सोमं स्वीकुर्युः। मूल्यत्वेन सोमविक्रयणे दत्ताया गोः तस्याः पुनर्मूल्यान्तरदानेन स्वीकरणं विधत्ते—"तां पुनर्निष्क्रीणीयात्पुनर्हि सा तानागच्छत्"-इति। यस्मादियं वाक् गन्धर्वेभ्यो निष्क्रम्य पुनस्तान् देवान् प्राप्नोत्, तस्मात् सोमक्रयण्याः पुनरादानं युक्तम्॥

वाचो वृत्तान्तः शाखान्तरे स्पष्ट माम्नातः—"सा रोहिद्रूपं कृत्वा गन्धर्वेभ्यो ऽपक्रम्यातिष्ठत्तद्रोहितो जन्म ; ते देवा अब्रुवन्नप

युष्मदक्रमीन्नास्मानुपावर्त्तते विह्वयामहा इति; ब्रह्म गन्धर्वा अवदन्नगायन् देवाः ; सा देवान् गायत उपावर्त्तत ; तस्माद्गायन्तं स्त्रियः कामयन्ते"-इति ( तै० सं० ६. १. ६. ५, ६. ) ॥

मन्त्राणां मन्द्रध्वनिं विधत्ते—"तस्मादुपांशु वाचा चरितव्यं, सोमे राजनि क्रीते गन्धर्वेषु हि तर्हि वाग्भवति, साग्नावेव प्रणीयमाने पुनरागच्छति"-इति । सोमक्रयादूर्ध्वकाले मूल्यरूपा 'वाग्' देवी 'गन्धर्वेषु' तिष्ठति, 'पुनः' अपि 'अग्नौ प्रणीयमाने देवान् 'आगच्छति' ; यस्मादेवं 'तस्मात्' सोमक्रयादूर्ध्वं अग्निप्रणयनात् प्राक् 'वाचा उपांशु चरितव्यम्' यथा परैर्ध्वनिर्न श्रूयते, तथा मन्त्रपाठादिकं कर्त्तव्य मित्यर्थः ॥

अत्र मीमांसा । द्वादशाध्यायस्य चतुर्थपादे ( जै०सू०४,५. अधि० ३. ) चिन्तितम्—

"क्रयणेषु विकल्पः स्यात् साहित्यं वाग्रिमो यतः । प्र
कार्यैक्य मानतेर्लाभाद्दशोक्तेश्च समुच्चयः ॥

"अजया क्रीणाति, हिरण्येन क्रीणाति, वाससा क्रीणाति"-इत्यादीनि बहूनि सोमक्रयसाधनद्रव्याण्याम्नातानि ( तै०सं०६.१. ६—१०. ) । तेषां कार्यैक्याद् विकल्प इति चेत्, मैवम् ;—बहुभिर्द्रव्यैः विक्रेतुरानतेः सौलभ्याद्, "दशभिः क्रीणाति"-इतिसङ्ख्योक्तेश्च * समुच्चयः"-इति ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां पञ्चमाध्याये
प्रथमः खण्डः ॥ १ ( २७ ) ॥

---

* तथाहि 'एकहायन्या ( सोमक्रयण्या ) क्रीणाति' 'अजया क्रीणाति', 'हिरण्येन

॥ अथ द्वितीयः खण्डः ॥

अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः प्र देवं देव्या धिया भरता जातवेदसं हव्या नो वक्षदानुषगिति गायत्रीं ब्राह्मणस्यानुब्रूयाद् गायत्रो वै ब्राह्मणस्तेजो वै ब्रह्मवर्चसं गायत्री तेजसैवैनं तद् ब्रह्मवर्चसेन समर्द्धयतीमं महे विदथ्याय शूष मिति त्रिष्टुभं राजन्यस्यानुब्रूयात् त्रैष्टुभो वै राजन्य ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजसैवैनं तदिन्द्रियेण वीर्येण समर्द्धयति शश्वत्कृत्व ईड्याय प्रजभ्रुरिति स्वाना मेवैनं तच्छ्रैष्ठ्यं गमयति शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्र इत्याजरसं हास्मिन्नजस्रो दीदाय य एवं वेदायं मिह प्रथमो धायि धातृभिरिति जगतीं वैश्यस्यानुब्रूयाज्जागतो वै वैश्यो

---

क्रीणाति', धेन्वा ( सवत्सया ) क्रीणाति', 'ऋषभेण क्रीणाति', 'अनडुहा क्रीणाति', 'मिथुनाभ्यां क्रीणाति', 'वाससा क्रीणाति'-इति च दश सोमक्रयसाधनानि द्रव्याण्याम्नातानि ( तै० सं० ६. १. ६—१०. )। 'मिथुनाभ्या मिति वत्सतरी वत्सतरी च' आप० श्रौ० १०. २५. १५। 'धेनोः सवत्साया विवक्षितत्वाद् दशद्रव्यसम्पत्तिः'-इति तै० सं० ६. १. १०. सा० भा०। दशभिः ( क्रीणाति ) चतुर्भिः, एकया, तिसृभिः, चतुर्विंशत्या, त्रिंशता, शतेन, द्वाभ्याम् ( शताभ्याम् ), सहस्रेणेति विधानवैविध्यात् ( आप० श्रौ० १०. २६. ) यद्यपि द्रव्याणां दशाधिकतापि प्रतीयेत, परं न हि क्वचिदपि उक्तेभ्यो दशद्रव्येभ्योऽन्यदस्ति किञ्चित् क्रयसाधनम्। तद्यथा सहस्रदक्षिणस्य यागस्य त्रिंशता सोमक्रयं विधाय प्रोक्तम् 'सप्तविंशतिर्गा हिरण्यं छागी वास इति त्रिंशत्'-इति ( आप० श्रौ० १०. २६. ७. )। सर्वत्र चाद्या सोमक्रयणी ( आरुण्यादिलक्षणा एकहायनी गौः ) ग्राह्येति ॥

जागता: पशव: पशुभिरेवैनं तत्समर्द्धयति वनेषु चित्रं विभ्वं विशे विश इत्यभिरूपा यद्यज्ञे ऽभिरूपं तत् समृद्ध मय मु ष्य प्र देवयुरित्यनुष्टुभि वाचं विसृजते वाग्वा अनुष्टुब् वाच्येव तद्वाचं विसृजते ऽय मु ष्य इति यदाहाय मु ष्यागमं या पुरा गन्धर्वेष्ववात्स मित्येव तद्वाक् प्रब्रूते ऽय मग्निरुरुष्यतीत्ययं वा अग्निरुरुष्यत्यमृतादिव जन्मन इत्यमृतत्व मेवास्मिंस्तद्दधाति सहसश्चित्सहीयान् देवो जीवातवे कृत इति देवो ह्येष एतज्जीवातवे कृतो यदग्निरिळायास्त्वा पदे वयं नाभा पृथिव्या अधीत्येतद्वा इळायास्पदं यदुत्तरवेदीनाभिर्जातवेदो निधीमहीति निधास्यन्तो ह्येनं भवन्त्यग्ने हव्याय वोळ्हव इति हव्यं हि वक्ष्यन् भवत्यग्ने विश्वेभि: स्वनीक देवैरूर्णावन्तं प्रथम: सीद योनि मिति विश्वैरेवैनं तद्देवै: सहासादयति कुलायिनं घृतवन्तं सवित्र इति कुलाय मिव ह्येतद्यज्ञे क्रियते यत् पैतुदारवा: परिधयो गुग्गुलूर्णास्तुका: सुगन्धितेजनानीति यज्ञं नय यजमानाय साध्विति यज्ञ मेव तदृजुधा प्रतिष्ठापयति सीद होत: स्व उ लोके चिकित्वानित्यग्निर्वै देवानां होता तस्यैष स्वो लोको यदुत्तरवेदीनाभि:

सादया यज्ञं सुकृतस्य योनाविति यजमानो वै यज्ञो यजमानायैवैता माशिष माशास्ते देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धा इति प्राणो वै वयः प्राण मेव तद्यजमाने दधाति नि होता होतृषदने विदान इत्यग्निर्वै देवानां होता तस्यैत-द्धोतृषदनं यदुत्तरवेदीनाभिस्त्वेषो दीदिवाँ असदत् सुदक्ष इत्यासन्नो हि स तर्हि भवत्यदब्धव्रत-प्रमतिर्वसिष्ठ इत्यग्निर्वै देवानां वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रम्भरता यदेन मेकं सन्तं बहुधा विहरन्ति प्र ह वै साहस्रं पोषं माप्नोति य एवं वेद त्वं दूतस्त्व मु नः परस्पा इत्युत्तमया परिदधाति त्वं वस्य आ वृषभ प्रणेता अग्ने तोकस्य नस्तने तनूना मप्रयुच्छन् दीद्यद् बोधि गोपा इत्यग्निर्वै देवानां गोपा अग्नि मेव तत्सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च यत्रैवं विद्वानेतया परिदधात्यथो संवत्सरीण मेवैतां स्वस्तिं कुरुते ता एता अष्टावन्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाण मृगभिवदति तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां ता द्वादश सम्पद्यन्ते द्वादश वै मासाः संवत्सरः

**संवत्सरः प्रजापतिः प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ २ ( २८ ) ॥**

सोमक्रय मभिधाय अग्निप्रणयनीया ऋचो विधातु मादौ प्रैषमन्त्रं विधत्ते—"अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः"–इति। प्राचीनवंशगते आहवनीये ऽवस्थितस्याग्नेः सौमिक्या मुत्तरवेद्यां नयनं यदस्ति, तदेतदत्राग्निप्रणयनम् *, तत् कुर्वन् 'अध्वर्युः' 'अग्नये प्रणीयमानायानुब्रूहि'–'इति' प्रैषमन्त्रं होतार मुद्दिश्य पठेत् † ॥

तत्र होत्रनुवक्तव्यास्वष्टासु ऋक्षु प्रथमा मृचं विधत्ते—"प्र देवं देव्या धिया भरता जातवेदसं हव्या नो वक्षदानुषगिति ( सं० १०.१७६.२. ) गायत्रीं ब्राह्मणस्यानुब्रूयाद्"–इति। हे ऋत्विजः! 'जातवेदसं' देवं 'देव्या' तद्रूपप्रकाशिकया तद्भावनायुक्तया 'धिया' 'प्रभरत' प्रकर्षेणोत्तरवेदिं प्रति हरत, नयत। अयं च जातवेदाः 'आनुषक्' उत्तरवेद्या मनुषक्तः सन् 'नः हव्या' अस्मदीयानि हवींषि 'वक्षत्' देवान् प्रति वहतु 'इति' ऋगेषा गायत्रीच्छन्दस्का

* 'उक्तम् ( २. १७. ) अग्निप्रणयनम्'–इति ( ३. १. ७. ), 'पश्वर्थं ह्यग्निप्रणयनम्; तस्य च श्वःसुत्यानिमित्तम्'–इति ( १२. ४. १३. ), 'सदोहविर्धानान्याग्नीध्रीयाग्नीषोमप्रणयनवसतीवरीग्रहणानि पश्वर्थानि भवन्ति, सुत्यार्थान्येके'–इति ( १२. ४ १५. ), इत्याद्याश्वलायनीयसूत्राणि पर्यालोच्यानि। 'अत्र प्रवर्ग्यं मुद्वास्य पशुबन्धवदग्निं प्रणयति'–इत्यादि आप० श्रौ० ११. ५. ९।

† तथाहि कल्पसूत्रम्—'पश्चाद् दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितो ऽग्निप्रणयनीयाः प्रतिपद्यते'–इति आश्व० श्रौ० २. १७. ९।

तां 'ब्राह्मणस्य' यजमानस्य होता अनुब्रूयात्। तदेतत्प्रशंसति— "गायत्रो वै ब्राह्मणस्तेजो वै ब्रह्मवर्चसं गायत्री तेजसैवैनं तद् ब्रह्मवर्चसेन समर्द्धयति"-इति। ब्राह्मणस्य प्रजापतिमुखजन्यत्वसाम्येन गायत्रीसम्बन्धः ( १९ पृ० ५ पं० )। 'तेजो वै'-इत्यादिकं पूर्ववद् व्याख्येयम् ( ४९ पृ० )॥

क्षत्रियस्य यजमानस्य यागे ऽन्या ऋचं विधत्ते—"इमं महे विदथ्याय शूष मिति ( सं०३. ५४. १. ) त्रिष्टुभं राजन्यस्यानुब्रूयात्"-इति। तदेतत् प्रशंसति—"त्रैष्टुभो वै राजन्य ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजसैवैनं तदिन्द्रियेण वीर्येण समर्द्धयति"-इति। त्रिष्टुप्-राजन्ययोः प्रजापतिबाहुजन्यत्वेन सम्बन्धः। एतदपि गायत्री-ब्राह्मणयोरिव सप्तमकाण्डे तैत्तिरीयैराम्नातम्— "उरसो बाहुभ्यां पञ्चदशं निरमिमीत, त मिन्द्रो देवतान्वसृज्यत, त्रिष्टुप् छन्दो, बृहत्साम, राजन्यो मनुष्याणाम्"-इति ( सं०७.१.१.४. )। 'ओजो वै'-इत्यादिकं पूर्ववद् व्याख्येयम् ( ५२ पृ० )। तस्या ऋचो द्वितीयपादं पठति—"शश्वत्कृत्व ईड्याय प्रजभ्रु-रिति"-इति। उक्तस्य पादद्वयस्याय मर्थः—'शूषं' सुखहेतुम् 'इमम्' अग्निम् 'महे विदथ्याय' महते वेदनाय लाभाय, तत्सिद्ध्यर्थं 'शश्वत्कृत्वः' बहुकृत्वः 'ईड्याय' प्रजाभिः स्तुत्याय राजन्याय यागसिद्ध्यर्थं 'प्रजभ्रुः' प्रकर्षेण हृतवन्तः, उत्तरवेद्यां नीतवन्त इति। श्रौतः 'इति'-शब्दो द्वितीयपादस्य समाप्त्यर्थः। तत्पादपठनेन ज्ञातीनां मध्ये यजमानस्य श्रैष्ठ्यं दर्शयति—"स्वाना मेवैनं तच्छ्रैष्ठ्यं गमयति"-इति। तस्या ऋच उत्तरार्द्धं पठति— "शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्र इति"-इति। 'दम्येभिः' परकीयसेनां दमयितु मर्हैः 'अनीकैः' स्वकीयैः सैन्यैः

सह अयं प्रणीयमानः 'अग्निः' 'नः' अस्मान् 'शृणोतु' एते यजमानाः सम्यगनुतिष्ठन्तीत्येवं स्वकीयदूतमुखादवगच्छतु। यद्वा दमो गृहं, तद्योग्यैर्दम्यैः, गृहरक्षणार्थ मवस्थापितैरित्यर्थः। किञ्चाय मग्निः 'दिव्यैः' देवलोकयोग्यैर्भोगैः सह 'अजस्रः' निरन्तरम् अस्मद्गृहे वर्त्तमानः, अस्मदीयां स्तुतिं 'शृणोतु'-इति। श्रौतः 'इति'-शब्द उत्तरार्द्धसमाप्त्यर्थः। उक्तं वेदनं प्रशंसति—"आजरसं हास्मिन्नजस्रो दीदाय य एवं वेद"-इति। वेदितुर्जरासमाप्तिपर्यन्तम् 'अस्मिन्' एतदीये गृहे 'अजस्रः' नैरन्तर्येण वर्त्तमानोऽग्निः 'दीदाय' दीप्यते॥

वैश्यस्य यजमानस्यान्या मृचं विधत्ते—"अय मिह प्रथमो धायि धातृभिरिति (सं० ४.७.१.) जगतीं वैश्यस्यानुब्रूयाद्"-इति। तदेतत्प्रशंसति—"जागतो वै वैश्यो जागताः पशवः, पशुभिरेवैनं तत् समर्द्धयति"-इति। प्रजापतिमध्यदेशजन्यत्वसाम्येन जगतीसम्बन्धः। एतदपि शाखान्तरे समाम्नातम्—"मध्यतः सप्तदशं निरमिमीत, तं विश्वेदेवा देवता अन्वसृज्यन्त, जगतीच्छन्दो, वैरूपं साम, वैश्यो वै मनुष्याणाम्"-इति (तै० सं० ७. १. १. ५.)। 'जागताः'-इत्यादिकं पूर्ववद् व्याख्येयम् (५२ पृ०)। चतुर्थपाद मनूद्य प्रशंसति—"वनेषु चित्रं विभ्वं विशेविशे इत्यभिरूपा; यद्यज्ञेऽभिरूपं तत्समृद्धम्"-इति। अत्र तत्तद्वैश्यवाचिनी वीप्सायुक्तस्य विट्शब्दस्य श्रूयमाणत्वात् वैश्यं प्रत्यनुरूपत्वम्॥

इत्थं जातिभेदेन प्रथमाया ऋचो व्यवस्था मभिधाय जातित्रयसाधारणभूतां द्वितीया मृचं विधत्ते—"अय मु ष्य प्र देवयुरित्यनुष्टुभि (सं० १०. १०६. ३) वाचं विसृजते"-इति। सोमक्रयणकाले यद्वाच उपांशुत्वं विहितम् (१९८ पृ०), तस्यास्मिन्

काले विसर्गं विधत्ते—अनुष्टुभीति । 'अय सु ष्य'-इत्येतस्या मृचि उपांशुरूपां 'वाचं' विसृजेत् । तदेतत्प्रशंसति—"वाग्वा अनुष्टुब् वाचैव तद्वाचं विसृजति"-इति । 'अय सु ष्य'-इत्यस्या अनुष्टुप्-च्छन्दस्कत्वात् अनुष्टुभो वाग्रूपत्वस्य सर्वश्रुतिप्रसिद्धत्वादनुष्टुब्-रूपायां 'वाचि एव' उपांशुध्वनिरूपं 'वाचं' तन्मन्त्रपाठेन 'विसृजति'*। एतन्मन्त्रगतप्रथमपादस्य पूर्वभाग मनूद्य व्याचष्टे—"अय सु ष्य इति यदाहाय सु स्यागमं या पुरा गन्धर्वेष्ववात्स मित्येव तद्वाक् प्रब्रूते"-इति। ब्राह्मणगतः 'अयं'-शब्दोऽत्र स्त्रीलिङ्गत्वेन परिणेयः; तच्छब्दपर्यायस्य त्यच्छब्दस्य टाबन्तस्याकारान्तः 'स्य:'-इति रूपं भवति । एवं सत्यय सु ष्य इति मन्त्रो 'यदाह' तत्र 'वाक्' देवतेत्थं 'ब्रूते' । कथ मिति तदुच्यते—'पुरा गन्धर्वेषु' याऽहं 'वाक्' 'अवात्सं' स्थितास्मि, 'स्यागमं' सेय मेवागमम्, इदानीं मागतास्मीति । अतो वाग्देवताया एव सुच्यमानत्वात् अत्राद्यर्चो वाग्विसर्गेऽभि-युक्त इत्यर्थः ॥

तृतीया मृचं विधत्ते—"अय मग्निरुरुष्यतीत्ययं वा अग्नि-रुरुष्यत्यमृतादिव जन्मन इत्यमृतत्व मेवास्मिंस्तद्दधाति"-इति । 'अनुब्रूयात्'-इति, अनुक्तस्थलेष्वनुवर्त्तते । एतत्पदार्थप्रसिद्धं 'वै'-शब्देन दर्शयति—अय मिति (सं०१०.१७६.४.) । 'अयं' प्रणीय-मानः 'अग्निः' यजमानम् 'उरुष्यति' कर्म्मनिष्पादनेन रक्षतीत्येतत् प्रसिद्धम् । द्वितीयपाद मनूद्य तात्पर्यं दर्शयति—अमृतादिति । 'अमृतात्' मरणरहिताद् देवतारूपात् 'जन्मनः' यथा रक्षा सम्पद्यते;

* आश्वलायने तु अग्निप्रणयनीयाना मासां सर्वासा मेव पाठादनन्तरं वाग्विसर्गो विहितः । तथाहि तत् सूत्रम्—'० परिधाय, तस्मिन्नेवासन उपविश्य, भूर्भुवःस्वरिति वाचं विसृजेत'-इति २. १७. १० ।

न हि मरणराहित्यादधिका रक्षा क्वचिदस्ति, तद्वदिय मग्नि-कर्तृका रक्षेत्यर्थः। 'तत्' तेन मन्त्रपाठेन 'अमृतत्व मेव' देवत्व मेव 'अस्मिन्' यजमाने सम्पादयति। द्वितीयार्द्ध मनुवदति—"सहसश्चित्सहीयान् देवो जीवातवे कृत इति; देवो ह्येष एतज्जीवातवे कृतो यदग्निः"-इति। 'देवः' अग्निः 'जीवातवे' अस्माकं जीवनौषधाय 'सहसश्चित्' प्रबलादपि पुरुषात् 'सहीयान्' अतिशयेन प्रबलीकृतो निष्पादित इत्युत्तरार्द्धस्यार्थः। त मिम मर्थं विस्पष्टयति—देवो ह्येष इति। योऽग्निरस्ति, 'एषः देवः' एतेनोत्तरार्द्धपाठेन जीवनौषधाय सम्पादितो भवति॥

चतुर्थ्या ऋचः पूर्वार्द्धं पठति—"इळायास्त्वा पदे वयं नाभा पृथिव्या अधीति"-इति ( सं० ३.२९.४. )। 'पृथिव्याः नाभा' भूमिस्थानात् प्रागुत्तरवेद्यां नाभिस्थानीये धिष्ण्ये। हे अग्ने! त्वां निधीमहीति वक्ष्यमाणपादेन सम्बन्धः। नाभिरेव विशिष्यते—'इळायाः पदे' इति। इळाशब्दो गोवाची; इळाख्यां प्रकृत्य 'गौर्वा अस्यै शरीरम्'-इति श्रुतत्वात्। "इळे ऽनन्ते सरस्वति"-इति वाङ्नामसु श्रुतत्वात्*। तस्याः पदं घृतनिष्पीडनेन प्रशस्तम्; "सा यत्र यत्र न्यक्रामत्, ततो घृत मपीड्यत"-इति ( तै०सं०२.६.७.१.† ) श्रुतेः। तत्पदरूपत्वविशेषेणोत्तरवेदिनाभिः

* निघण्टौ पृथिवी-वाक्-अन्न-गोनामसु आम्नात मिडा पदं ( १.१.१५; ११.३; २.७.१३; ११.७. )। निरुक्ते ( ८.२.१०. ) 'तिस्रो देव्यः'= भारतीडासरस्वत्यः। 'इळा यूथस्य माता'-इत्यस्य ( ऋ०सं०५.४१.१९. ) भाष्ये "'इळा' भूमिः, 'यूथस्य' गोसङ्घस्य 'माता' निर्मात्री। यद्वा 'इळा' गोरूपधरा मनोः पुत्रीत्याहुः। यद्वा 'यूथस्य' मरुद्गणस्य निर्मात्री 'इळा' माध्यमिकी वाक्"-इत्याह सायणः। मनोः पुत्रीत्यैतिहासिकविवरणन्तु वाजसनेयिनस्तैत्तिरीयाश्चामनन्ति ( शत० ब्रा० १.८.१.७—११; तै० सं०२.६.७.१. )।

† 'घृतपदीत्याह यदेवास्यै पदा घृत मपीड्यत, तस्मादेव माह'-इति च तै० सं० २.

प्रशस्यते। यद्वा, सोमक्रयण्या गोः पदपांशुरस्यां नाभौ प्रक्षिप्यत इति तत्पदरूपत्वम्। नाभेः पदरूपत्वं विशदयति—"एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः"-इति। तृतीयं पाद मनूद्य व्याचष्टे—"जातवेदो निधीमहीति निधास्यन्तो ह्येनं भवन्ति"-इति। 'एनम्' अग्निं वेदिनाभौ 'निधास्यन्तः' स्थापयितु मुद्युक्ता भवन्ति ऋत्विजः; तस्मात् 'निधीमहि'-'इति' उपपन्नम्। चतुर्थपाद मनूद्य व्याचष्टे—"अग्ने हव्याय वोळ्हव इति हव्यं हि वक्ष्यन् भवति"-इति। हे 'अग्ने!' हविर्वोढुं त्वां निधीमहीति पूर्वेणान्वयः। 'हव्य' 'वक्ष्यन्' वोढु मुद्युक्तो भवन् अग्निः; तस्माद् 'वोढव इति' एतदुचितम्॥

पञ्चम्या ऋचः पूर्वार्द्धं पठति—"अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनि मिति (सं० ६.१५.१५.) विश्वैरेवैनं तद्देवैः सहासादयति"-इति। 'स्वनीक' शोभनसैन्योपेत! हे 'अग्ने!' 'विश्वेभिः' सर्वैः 'देवैः' सह 'प्रथमः' मुख्यः सन् 'ऊर्णावन्तम्' ऊर्णायुक्त मुत्तरवेदि-नाभिस्थानं 'सीद' प्राप्नुहि। तत्पाठेनोक्तार्थसिद्धिं दर्शयति—विश्वैरेवैनं तदिति। तृतीयचतुर्थपादौ क्रमेणानूद्य व्याचष्टे—"कुलायिनं घृतवन्तं सवित्र इति कुलायमिव ह्येतद्यज्ञे क्रियते, यत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानीति यज्ञं नय यजमानाय साध्विति यज्ञ मेव तदृजुधा प्रतिष्ठापयति"-इति। कुलायो नीड़ं पक्ष्यादिनिवासस्थानसदृशं तत्स्थानीयम्, यज्ञो घृतवान् तं 'घृतवन्तं' यज्ञं 'सवित्रे' प्रेरकायानुष्ठात्रे यजमानाय तदुपकारार्थं 'साधु नय' सत्यं निष्पा-

६.७.४। 'यदेवासौ घृतं पदे समतिष्ठत, तस्मादाह घृतपदीति'-इति शत० ब्रा० १.८.१.२६। 'हवींषीळा देवी घृतपदी जुषन्त'-इति च ऋ० सं० १०.७०.८; अथ० सं० ७.२७.१।

दय। यत् कुलायित्वं तृतीयपादेऽभिहितम्, तत् 'कुलाय मिव' इत्यादिना स्पष्टीक्रियते। पितुदारुः खदिरवृक्ष इत्येके, देवदारुवृक्ष इत्यन्ये; तत्सम्बन्धिनः 'पैतुदारवाः' 'परिधयः' अस्या मुत्तरवेद्यां स्थाप्यन्ते। गुग्गुलु प्रसिद्धं धूपसाधनम्। ऊर्णास्तुकाः अविसम्बन्धिरोमविशेषाः। सुगन्धितेजनं तृणविशेषः; यस्य मूलानि घर्म्मकाले पानीयमध्ये स्थाप्यन्ते। एते उत्तरवेद्यां स्थापिताः सम्भाराः *। यथा कुलायः काष्ठतृणादिभिर्निष्पाद्यते तद्वदत्र यज्ञे परिधिकाष्ठादिसद्भावात् कुलायित्वम्। 'यज्ञं नय०—०इति' चतुर्थपादे यद्युक्तम्, तेन यज्ञ मेव 'तत्' 'ऋजुधा' ऋजुप्रकारेण प्रतिष्ठितं करोति॥

षष्ठ्या ऋचः प्रथमं पादं पठित्वा व्याचष्टे—"सीद होतः स्व उ लोके चिकित्वानित्यग्निर्वै देवानां होता तस्यैष स्वो लोको यदुत्तरवेदीनाभिः"-इति (सं० ३. २९. ८.)। हे 'होतः' होमनिष्पादकाग्ने! 'चिकित्वान्' विज्ञानवान् त्वं 'स्व उ लोके' स्वकीये एव स्थाने, उत्तरवेदिनाभिरूपे 'सीद' उपविश। अग्नेर्देवहोतृत्वात् उत्तरवेदिनाभेस्तदीयस्थानत्वाच्च प्रथमपादार्थः उपपन्नः। द्वितीयं पाद मनूद्य तत्रत्यस्य यज्ञशब्दस्य यजमानपरत्वं दर्शयति—"सादया यज्ञं सुकृतस्य योनाविति यजमानो वै यज्ञो यजमानायैवैता माशिष माशास्ते"-इति। 'यज्ञ" यष्टारं 'सुकृतस्य योनौ' पुण्यकर्म्मणां स्थाने 'सादय' हे अग्ने! स्थापय। इज्यते इति व्युत्पत्त्या यज्ञशब्दः सर्वत्र यागवाची, इह तु यजतीति व्युत्पत्त्या यष्टार माचष्टे; अतस्तदर्थ मेवाशीः प्रार्थिता भवति। उत्तरार्द्ध मनूद्य तत्रत्यस्य वयः-शब्दस्य प्राणवाचित्वं

* इमा एवाग्निसम्भारास्तैत्तिरीयसंहितायां च साख्यायिकाः समाम्नाताः (६.२.८.)।

दर्शयति—"देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धा इति ; प्राणो वै वयः, प्राण मेव तद्यजमाने दधाति"-इति । देवान् वेति कामयते इति 'देवावीः' देवप्रियः । हे 'अग्ने!' त्वं देवप्रियत्वात् 'देवान् हविषा' 'यजासि' पूजयसि । 'यजमाने' 'वयः' प्राणं 'बृहत्' अधिकं यथा भवति तथा 'धाः' धेहि स्थापय । अत्र 'वयः'-शब्देन प्राण उपलक्ष्यते ; बाल्यादिवयोविशेषहेतोरायुषो निमित्तत्वात् । "यावदस्मिन् शरीरे प्राणो वसति, तावदायुः"--इति श्रुतेः * । तस्मादुत्तरार्द्धपाठेन प्राण मेव यजमाने स्थापयतीति ॥

सप्तम्या ऋचः प्रथमपाद मनूद्य व्याचष्टे—"नि होता होतृषदने विदान इति ( सं०२.९.१. ) ; अग्निर्वै देवानां होता, तस्यैतद्धोतृषदनं यदुत्तरवेदीनाभिः"-इति । 'होता' होमनिष्पादकः 'अग्निः' ; तादृशस्य स्वस्य होतुः सदने योग्यस्थाने उत्तरवेदिनाभिरूपे 'विदानः' क्रियमाणं कर्म्म विचारयन्, असददिति वक्ष्यमाणेनान्वयः । 'अग्निर्वै'-इत्यादिव्याख्यानं विस्पष्टम् । द्वितीयं पाद मनूद्यासददिति पदं व्याचष्टे—"त्वेषो दीदिवाँ असदत् सुदक्ष इत्यासन्नो हि स तर्हि भवति"-इति । कीदृशोऽग्निः ? 'त्वेषः' स्वयं दीप्यमानः, 'दीदिवान्' अन्येषामपि दीपकः, 'सुदक्षः' सुष्ठु कुशलः । तादृशोऽग्निः 'आसन्नः' वेदिता भवति । 'स तर्हि' तस्मिन् प्रणयनकाले सोऽग्निः, यस्मादुत्तरवेदिनाभेः 'आसन्नः', तस्माद् 'असदत्'-इत्युचितम् । तृतीयपाद मनूद्य वसिष्ठशब्दार्थं दर्शयति—"अदब्धव्रतप्रमतिर्वसिष्ठ इत्यग्निर्वै देवानां वसिष्ठः"-इति । अदब्धे हिंसारहिते व्रते कर्म्मणि प्रकृष्टा मतिर्यस्याग्नेः सोऽयम् 'अदब्धव्रतप्रमतिः', 'वसिष्ठः' अतिशयेन निवासहेतुः । हविर्वहनेन देवानां

* 'प्राणो हि भूताना मायुः'-इत्यादि तै० आर० ८. ३. ।

स्वस्वस्थाने निवासहेतुत्वाद् अग्नेर्वसिष्ठत्वम् । चतुर्थं पाद मनूद्य व्याचष्टे—"सहस्रम्भरः शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रम्भरता, यदेन मेकं सन्तं बहुधा विहरन्ति"-इति । अयम् 'अग्निः' बहुषु धिष्ण्येषु विहितः सन्, अनेकस्वरूपभरणात् 'सहस्रम्भरः'। मन्त्रपूतहविःस्वीकारेण 'शुचिजिह्वः'; शुचिः शुद्धा जिह्वा यस्यासौ शुचिजिह्वः। स्वरूपेणैक मेव सन्तं अग्नि मृत्विजो बहुधा विहरन्तीति यदस्ति, एषैवाग्नेः 'सहस्रम्भरता'। वेदनं प्रशंसति—"प्र ह वै साहस्रं पोष माप्नोति य एवं वेद"-इति । अत्र सहस्रसङ्ख्योपेतं 'पोषं' गोसुवर्णादिपुष्टिं वेदिता प्राप्नोति ॥

अष्टमी मृचं विधत्ते—"त्वं दूतस्त्व मु नः परस्पा इत्युत्तमया परिदधाति"-इति ( सं० २. ९. २. )। त्वं दूत इत्यनयान्तिमया अग्निप्रणयनीया ऋचः समापयेत् *। हे अग्ने! 'त्वं दूतः' असि "अग्निर्देवानां दूत आसीत्"-इतिश्रुतेः†। 'त्वम्' एव 'नः' अस्माकं 'परस्पाः' अतिशयेन पालयितासि। अवशिष्टं पादत्रयं पठति—"त्वं वस्य आ वृषभ प्रणेता, अग्ने तोकस्य नस्तने तनूना मप्रयुच्छन् दीद्यद् बोधि गोपा इति"-इति । हे 'वृषभ' श्रेष्ठाग्ने! 'त्वम्' 'आ' समन्तात् 'वस्यः' निवासहेतुः, 'प्रणेता' बहुषु कर्मसु प्रेरकः', 'नः' अस्माकं 'तोकस्य' अपत्यस्य 'तनूनां' शरीराणां च 'तने' विस्तारे 'अप्रयुच्छन्' प्रमाद मकुर्वन् 'दीद्यत्' प्रकाशयन् 'गोपाः' रक्षकः

---

* मूले यदस्ति 'परिदध्यात्'-इति, एतस्यैव व्याख्यानं समापयेदिति । 'सर्वत्रोत्तमां परिधानीयेति विद्यात्'-इति ( आश्व० २. १६. ८. ) कल्पशास्त्रात् ।

† तैत्तिरीयब्राह्मणे ( ३.५.२ ) 'प्रवोवाजाः'-इत्याद्या याः सामिधेन्य ऋचः आम्नाताः ; तत्र 'अग्निं दूतं वृणीमहे ( ऋ० सं० १. १२. १. )'-इतीयमष्टमी ; तस्या एव व्याख्यानपरं ब्राह्मण माम्नातं तैत्तिरीयसंहितायाम् ( २.५.८.५. ) 'अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणाम्'-इत्यादि ।

सन् 'बोधि' बुध्यस्व, सर्वदा चित्तेऽनुगृहाणेत्यर्थः । उक्तार्थां ऋचं प्रशंसति—"अग्निर्वै देवानां गोपा, अग्नि मेव तत् सर्वतो गोप्तारं परिदत्त ; आत्मनं च यजमानाय च यत्रैवं विद्वानेतया परिदधात्यथो संवत्सरीणा मेवैतां स्वस्तिं कुरुते"-इति । 'यत्र' यस्मिन् कर्म्मणि 'एवम्' उक्तमन्त्रमहिमानं 'विद्वान्', 'एतया' अन्तिमया समापयति, स होता अग्नेर्देवरक्षकत्व मभिप्रेत्य आत्मार्थं यजमानार्थं चाग्नि मेव 'सर्वतो' रक्षकं 'परिदत्ते' स्वीकरोति। किञ्च 'संवत्सरीणा मेव' अस्मिन् संवत्सरे निरन्तर मेव 'एतां' 'स्वस्ति' क्षेमं कुरुते ।

न्यूनाधिकसङ्ख्याभ्रमं व्युदसितु माह—"ता एता अष्टावन्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं, यत्कर्म क्रियमाण मृगभिवदति"-इति। प्रणीयमानस्याग्नेः प्रकाशकत्वादेतासां रूपसमृद्धिः * ।

आद्यन्तयोर्ऋचोरावृत्तिं विधत्ते—"तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां, ता द्वादश सम्पद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद; त्रिः प्रथमां त्रिरुत्तमा मन्वाह यज्ञस्यैव तद् बर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय"-इति । पूर्ववद् व्याख्येयम् ( १०६ पृ० ) ॥२॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां पञ्चमाध्याये
द्वितीयः खण्डः ॥ २ ( २८ ) ॥

---

* एतासा मष्टाना मृचां पाठप्रकारादयोऽपि उपदिष्टा आश्वलायनेन २.१७.३—१० ।

॥ अथ तृतीयः खण्डः ॥

हविर्द्धानाभ्यां प्रोह्यमाणाभ्या मनुब्रूहीत्याहाध्वर्यु- र्युजे वां ब्रह्म पूर्व्यं नमोभिरित्यन्वाह ब्रह्मणा वा एते देवा अयुञ्जत यद्धविर्द्धाने ब्रह्मणैवैने एतद्युङ्क्ते* न वै ब्रह्मण्वद्रिष्यति प्रेतां यज्ञस्य शम्भुवेति तृचं द्यावा- पृथिवीय मन्वाह तदाहुर्यद्धविर्द्धानाभ्यां प्रोह्यमा- णाभ्या मनु वाचाहाथ कस्मात्तृचं द्यावापृथिवीय मन्वाहेति द्यावापृथिवी वै देवानां हविर्द्धाने आस्तां ते उ एवाद्यापि हविर्द्धाने ते हीद मन्तरेण सर्वं हवि- र्यदिदं किञ्च तस्मात्तृचं द्यावापृथिवीय मन्वाह यमे इव यतमाने यदैत मिति यमे इव ह्येते यत- माने प्रवाहुगितः प्र वां भरन्मानुषा देवयन्त इति देवयन्तो ह्येने मानुषाः प्रभरन्त्यासीदतं स्व मु लोकं विदाने स्वासस्थे भवत मिन्दवे न इति सोमो वै राजेन्दुः सोमायैवैने एतद्राज्ञ आसदे ऽधीकृपदधि द्वयोरदधा उक्थ्यं वच इति द्वयोर्ह्येतत्तृतीयं छदिरधि निधीयत उक्थ्यं वच इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञ मेवैतेन समर्द्धयति यतस्रुचा मिथुना या सपर्यतः असंयत्तो व्रते ते क्षेति पुष्य-

* 'एतद् युङ्क्ते'-इति ग-पाठः ; सायणसम्मतोऽपि स्यात् ?

तीति यदेवादः पूर्वं यत्तवत्पद माह तदेवैतेन शान्त्या शमयति भद्रा शक्तिर्यजमानाय सुन्वत इत्याशिष माशास्ते विश्वा रूपाणि प्रतिमुञ्चते कविरिति विश्वरूपा मन्वाह स रराट्या मीक्षमाणो ऽनुब्रूयाद् विश्व मिव हि रूपं रराट्याः शुक्ल मिव च कृष्ण मिव च विश्वं रूप मवरुन्ध आत्मने च यजमानाय च यचैवं विद्वानेतां रराट्या मीक्षमाणो ऽन्वाह परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति स यदेव हविर्धाने सम्परिश्रिते मन्येताथ परिदध्यादनग्नम्भावुका ह होतुश्च यजमानस्य च भार्या भवन्ति यचैवं विद्वानेतया हविर्धानयोः सम्परिश्रितयोः परिदधाति यजुषा वा एते सम्परिश्रियेते यद्धविर्धाने यजुषैवैने एतत्परिश्रयन्ति तौ यदैवाध्वर्युश्च प्रतिप्रस्थाता चोभयतो मेथ्यौ निहन्याता मथ परिदध्यादत्र हि ते सम्परिश्रिते भवतस्ता एता अष्टावन्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म्म क्रियमाण मृगभिवदति तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां ता द्वादश सम्पद्यन्ते द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद त्रिः प्रथमां त्रिरुत्तमा मन्वाह

यज्ञस्यैव तद् वर्सौ नह्यति स्येम्ने बलायाविस्रंसाय॥ ३ ( २९ )॥

अथ हविर्धानप्रवर्त्तनीया ऋचो विधातु मादौ प्रैषं विधत्ते—"हविर्द्धानाभ्यां प्रोह्यमाणाभ्या मनुब्रूहीत्याहाध्वर्युः"-इति। हविः सोमरूपं धत्तो धारयत इति हविर्द्धाने, द्वे शकटे। तयोः स्वरूप मापस्तम्बो दर्शयति—"प्रयुक्तपूर्वे शकटे नद्धयुगे प्रतिहतशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान् ग्रन्थीन् विस्रस्य नवान् प्रज्ञातान् कृत्वाग्रेण प्राग्वंश मभितः पृष्ठ्या मव्यवनयन् परिश्रिते सच्छदिषी अवस्थापयति"-इति ( ११. ६. ३. )। तयोर्हविर्धानयोः प्राचीनवंशस्य पुरोभाग मुपक्रम्योत्तरदेशपर्यन्तं नयनं प्रवर्त्तनम्। तदपि स एवाह—"प्राची प्रेत मध्वर मितुरद्ग्टह्लन्तः प्रवर्त्तयन्ति"-इति ( ११. ६. ११ )। तत्प्रवर्त्तनकाले अध्वर्युः होतारं प्रति "हविर्द्धानाभ्याम्"-इत्यादि प्रैषमन्त्रं प्रब्रूयात्॥

होत्रा वचनीयाना मृचां मध्ये प्रथमा मृचं विधत्ते—"युजे वां ब्रह्म पूर्व्यं नमोभिरित्यन्वाह ( सं० १०. १३. १ ); ब्रह्मणा वा एते देवा अयुञ्जत यद्धविर्द्धाने, ब्रह्मणैवैने एतद् युङ्क्ते, न वै ब्रह्मण्वद्रिष्यति"-इति। हे 'हविर्द्धाने!' 'वां' युवां 'ब्रह्मयुजे' ब्रह्मणा युनक्तीत्येवं मन्त्रे यदुक्त मेतत्पाठेन ब्राह्मणमुखेनैव हविर्धाने युक्ते भवतः; पूर्वं देवैस्तथाकृतत्वात्। 'एतद्' उक्तं 'ब्रह्मण्वत्' ब्राह्मणोपेतं कर्म नैव विनश्यति; तस्माद् युक्तो ऽयं मन्त्रः॥

द्वितीयाद्यास्तिस्र ऋचो विधत्ते—"प्रेतां यज्ञस्य शम्भुवेति ( सं० २.४१.१९—२१. ) तृचं द्यावापृथिवीय मन्वाह"-इति।

मध्यमाया ऋचि 'द्यावा नः पृथिवी इमम्'-इति श्रूयमाणत्वादयं तृचो द्यावापृथिवीयः। अस्य तृचस्य हविर्धानप्रतिपादकत्वाभावाद् वैय्यधिकरण्य मित्याक्षिप्य समाधत्ते—"तदाहुर्यद्धविर्द्धानाभ्यां प्रोह्यमाणाभ्या मनु वाचाहाथ कस्मात्तृचं द्यावापृथिवीय मन्वाहेति ? द्यावापृथिवी वै देवानां हविर्द्धाने आस्तां, ते उ एवाद्यापि हविर्द्धाने, ते हीद मन्तरेण सर्वं हविर्यदिदं किञ्च ; तस्मात् तृचं द्यावापृथिवीय मन्वाह"-इति। यद्यप्यत्र हविर्धानयोरनुकूलया वाचा प्रैष माह, तथापि द्यावापृथिवीयस्तृचो न व्यधिकरणः; पुरा द्यावापृथिव्योरेव हविर्धानत्वात् 'अद्यापि' द्यावापृथिव्यावेव 'हविर्धाने'। तत्कथ मिति चेत्, उच्यते—यस्माल्लोके यत्किञ्चिद्ध-विरस्ति, तदिदं सर्वं 'ते अन्तरेण' द्यावापृथिव्योः मध्ये वर्त्तते। 'तस्मात्' द्यावापृथिव्योर्हविर्धानत्वात्, तदीयस्य तृचस्यानुवचनं युक्तम् ॥

पञ्चमी मृचं विधत्ते—"यमे इव यतमाने यदैत मिति (सं० १०.१३.२.); यमे इव ह्येते यतमने प्रबाहुगितः"-इति। यम-शब्द एकस्या मातुरुदरे सहोत्पन्नस्य शरीरद्वयस्य वाचकम्। 'यमे इव' यथा लोके तादृशौ द्वे कन्यके सह वर्तेते, तथेमे शकटे 'यत-माने' जगदुपकारार्थं प्रयत्नं कुर्वती ; यस्मात् कारणात् 'ऐतम्' आगतवती। 'इति' एतस्य पदस्यार्थः प्रसिद्ध इति 'हि'-शब्दो द्योतयति। युगपदुत्पन्नकन्यकाद्वयवदेव 'एते' 'प्रबाहुक्' परस्पर-सादृश्येन सहैव वर्तमाने 'इतः' प्रचरतः ; तदेतल्लोके प्रसिद्ध मेव दृश्यते। द्वितीयपाद मनूद्य व्याचष्टे—"प्र वां भरन्मानुषा देवयन्त इति देवयन्तो ह्येने मानुषाः प्रभरन्ति"-इति। यच्छब्दस्य पूर्वपादेऽभिहितत्वात् तच्छब्दोऽस्मिन् पादेऽध्याहर्तव्यः। यस्मात् प्राणप-

कारार्थं प्रयतमाने स्थिते, तस्मात्कारणात् 'देवयन्तः' यष्टव्यत्वेन देवानिच्छन्तः 'मानुषाः' ऋत्विग्-यजमानाः, हे हविर्धाने ! 'वां' युवां 'प्रभरन्' प्रकर्षेण सम्पादयन्ति। एतत्पदार्थस्य याज्ञिकप्रसिद्धिद्योतनार्थो 'हि'-शब्दः। द्वितीयार्द्ध मनूद्य व्याचष्टे—"आसीदतं स्व सु लोकं विदाने, स्वासस्थे भवत मिन्दवे न इति; सोमो वै राजेन्दुः, सोमायैवैने एतद्राज्ञ आसदेऽचीक्लृपत्"-इति। हे हविर्धाने ! उभे युवां प्रवर्त्तमाने सति 'स्व सु लोकं' स्वकीय मेव स्थानं 'विदाने' ज्ञातवती 'आसीदतं' तत्र स्थितिं प्राप्नुतम्। 'नः' अस्मदीयाय 'इन्दवे' सोमाय 'स्वासस्थे' सु शोभने आसने स्थितिं प्राप्ते 'भवतम्'। अत्रेन्दुशब्देन 'सोमो राजा' उच्यते। अत एव तत्पाठेन सोमराजार्थम् 'आसदे' आसादनायावस्थानाय 'अचीक्लृपत्' कल्पितवान् भवति॥

षष्ठी मृचं विधत्ते—"अधि द्वयोरदधा उक्थ्यं वच इति ( सं०१.८३.३. ); द्वयोर्ह्येतत् तृतीयं छदिरधि निधीयत उक्थ्यं वच इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञ मेवैतेन समर्द्धयति"-इति। हविर्धानाख्ययोः शकटयोरुपरि सोमस्यावस्थानाय गृहाकारेण परितो वेष्टन मुपर्याच्छादनं यत् क्रियते, तदेतदाच्छादनं 'छदिः'-शब्दवाच्यम्। तादृशे द्वे छदिषी द्वयोर्हविर्धानयोरवस्थाप्य, तयोश्छदिषो रुपरि तृतीयं छदिः हविर्धानयोरुदाहृतयोरवस्थाप्यते। तदेतत् तैत्तिरीया आमनन्ति—"दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाच्च मच्छिनद्यत् तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुध्यै"-इति ( सं० ६. २. ९. ४. )। तदेतत् तृतीयच्छदिरवस्थापन मेतन्मन्त्रप्रथमपादे प्रस्तूयते—यद् 'द्वयोः' छदिषोः 'अध्यदधाः' उपरि

तृतीयं छदिर्निधीयते ; तदिदम् 'उक्थ्यं वचः' उक्थ्यशस्त्रनामकं यज्ञियं कर्म्म, तद्योग्यं वचो मन्त्रपाठः। तद्रूप मिदं छदिरिति छदिषः प्रशंसा। अस्मिन् पादे पूर्वभागस्यार्थो याज्ञिकप्रसिद्ध मित्यभिप्रेत्य 'हि'-शब्दयुक्तेन वाक्येन व्याचष्टे—द्वयोरिति। उत्तर-भागं व्याचष्टे—उक्थ्यं वच इति। 'उक्थ्यं वचः'-इति यत् पद-द्वयं मन्त्रो ब्रूते, तेन पदद्वयेन शस्त्रपाठाख्यं यज्ञसम्बन्धि कर्मोच्यते ; तस्मादेतेन मन्त्रपाठेन यज्ञ मेव समृद्धं करोति। द्वितीयतृतीय-पादौ पठति—"यतस्रुचा मिथुना या सपर्यतः, असंयत्तो * व्रते ते क्षेति पुष्यतीति ; यदेवादः पूर्वं यत्तवत् † पद माह तदेवैतेन शान्त्या शमयति"-इति। यदा तृतीयं छदिर्निधीयते, तदानीं ये हविर्धाने स्तः, 'ते' उभे, 'यतस्रुचा' नियतस्रुग्युक्ते कृतहोमे हुतसोमे, 'मिथुना' मिथुनवत् परस्परयुक्ते, 'सपर्यतः' पूजिते भवतः। अय मर्थः—द्वयोरुपरि तृतीये छदिषि व्यवस्थापिते सति, विवाहहोमादूर्द्ध्वं परस्परसंयुक्तौ मिथुनरूपौ स्त्रीपुरुषौ यथा पूज्येते, तथा हविर्धाने हविषा पूजिते भवत इति। सम्पूर्वो यति-धातुः सङ्गामे वर्त्तते, तेन क्रौर्यगुणो लक्ष्यते। संयतः क्रूरः, असं-यतः शान्तः। अत्रेन्द्रसम्बोधन मध्याहर्तव्यम्। हे इन्द्र ! शान्तोऽध्वर्युः 'ते व्रते' त्वदीये कर्म्मणि 'क्षेति' निवसति, 'पुष्यति' तच्च कर्म्म पुष्टं करोति। एतस्य तृतीयपादस्य तात्पर्यं दर्शयति—यदेवाद इति। यत्तवत्पदवाच्यः तृतीयः पादः। अत्र व्रतपदात् 'पूर्वं' 'यदेवादः' यदिदं 'यत्तवत्पदं' यत्तशब्दोपेतं 'सयत्त'-इति

---

*, † मद्दृष्टेषु सर्वेष्वेव हस्तलिखित-मूलपुस्तकेषु टीकापुस्तकेषु च 'असंयत्तः'–इत्येव पाठः ; परं संहितापुस्तकदर्शनात् भाष्याचार्यानुभवाच्च 'असंयतः'–इत्येव पाठो युक्ततरो गम्यते। 'यत्तवत्', 'यतवत्'–इति पाठभेदश्च एतदनुगतो विचार्य एव।

पदम्, तेन युद्धवाचिना यत् क्रौर्यं द्योतितम्, तदेव क्रौर्यं 'संयत्तः पुष्यति'-इतिपदद्वयेन प्रतीतया 'शान्त्या' होता 'शमयति'। चतुर्थपाद मनूद्य व्याचष्टे—"भद्रा शक्तिर्यजमानाय सुन्वत इत्याशिष माशास्ते"-इति। 'सुन्वते' सोमाभिषवं कुर्वते यजमानाय 'भद्रा' कल्याणरूपा 'शक्तिः' भवतु इति शेषः। अनेन पादेन प्रार्थनीयं प्रार्थयते॥

सप्तमो मृचं विधत्ते—"विश्वा रूपाणि प्रति मुञ्चते कविरिति (सं ५.८१.२.) विश्वरूपा मन्वाह"-इति। 'कविः' मेधावी, मन्त्रप्रतिपाद्यो देवः 'सविता', 'विश्वा रूपाणि' शुक्लकृष्णादीनि बहूनि रूपाणि आभरणत्वेन 'प्रतिमुञ्चते' स्वशरीरे स्थापयति। अत्र रूपशब्दस्य विश्वशब्दस्य च विद्यमानत्वादिय मृग्विश्वरूपशब्दाभिधेया। तस्या अनुवचने होतुः किञ्चिदितिकर्त्तव्यता माह—"स रराट्या मीच्चमाणो ऽनुब्रूयाद्; विश्व मिव हि रूपं रराट्याः शुक्ल मिव च कृष्ण मिव च"-इति। हविर्धानमण्डपस्य चिकीर्षितस्य प्राच्यां द्वारि बन्धनीया दर्भमाला 'रराटी'; द्वितीयार्थे सप्तमी; तां दर्भमालां पश्यन् 'अनुब्रूयात्'। अस्या ऋचो रराट्यनुरूपत्वं दर्शयति—विश्व मिवेति। दर्भमालाया अत्यल्पशुष्कास्तृणविशेषाः शुक्ला दृश्यन्ते, अशुष्कास्तु कृष्णाः। अतो 'विश्व मिव' बहुविध मिव दर्भमालायाः स्वरूपम्। तेन "विश्वा रूपाणि"-इत्ययं मन्त्रोऽनुकूलः। होतुरेतद्वेदनं प्रशंसति—"विश्वं रूप मवरुन्ध, आत्मने च यजमानाय च यत्रैवं विद्वानेतां रराट्या मीच्चमाणो ऽन्वाह"-इति। विश्वं रूपं प्रजापश्वादिविविधवस्तुस्वरूपम्॥

अष्टम्या अनुवचनसमाप्तिं विधत्ते—"परि त्वा गिर्वणो गिर

इत्युत्तमया परिदधाति"-इति ( सं० १.१०.१२. )। परिधानस्य कालं विधत्ते—"स यदैव हविर्धाने सम्परिश्रिते मन्येताथ परिदध्यादनग्नम्भावुका ह होतुश्च यजमानस्य च भार्या भवन्ति; यत्रैवं विद्वानेतया हविर्धानयोः सम्परिश्रितयोः परिदधाति"-इति। यस्मिन्नेव काले प्रवर्त्तिते द्वे शकटे 'सम्परिश्रिते' स्वस्थाने ऽवस्थाप्य सम्यगाच्छादिते इति 'सः' होता 'मन्येत'। 'तत्' तदानीं समापयेत्। होतुरेतद्वेदनं प्रशंसति—अनग्नमिति। 'अनग्नम्भावुकाः' आच्छादनबाहुल्यसम्पत्त्या नग्नत्वरहिताः। 'हविर्धानयोः' परिश्रयणकालं ज्ञात्वा परिदध्यादित्युक्तम्। स कालः कथं ज्ञायत इत्याशङ्क्याह—"यजुषा वा एते सम्परिश्रियेते यद्धविर्धाने, यजुषैवैने एतत्परिश्रयन्ति; तौ यदैवाध्वर्युश्च प्रतिप्रस्थाता चोभयतो मेथ्यौ निहन्याताम थ परिदध्यादत्र हि ते सम्परिश्रिते भवतः"-इति। 'यद्' हविर्धाने' शकटे विद्येते, 'एते' 'यजुषा वै' यजुर्मन्त्रेणैव ( तै० सं० १. २. १३. २. ) सम्परिश्रिते भवतः। तदेव कथ मिति तदुच्यते—अध्वर्यवः 'एने' हविर्धाने 'यजुषैव परिश्रयन्ति' इत्येतत्प्रसिद्ध मिति शेषः। तदेतदापस्तम्बो दर्शयति—"विष्णोः पृष्ठ मसीति ( तै० सं० ६.२.९. ) तेषु मध्यमं छदिरध्यूहति त्वरत्निविस्तारं नवायामम्"-इति ( ११. ८. १. )। परिधानस्य कालं विधत्ते— तौ यदैवेति। 'अध्वर्युः' दक्षिणस्य हविर्धानस्य 'मेथीम्' ईषाग्रभागावस्थापनकाष्ठं स्थापयति। तदेतच्छाखान्तरे श्रूयते—"दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चा (तै० सं० १. २. १३. २.) दक्षिणस्य हविर्धानस्य मेथीं निहन्ति"-इति (तै० सं० ६.२.९.३.)। उत्तरस्य तु 'प्रतिप्रस्थाता' करोति। तदेतदुभय मापस्तम्बो दर्शयति—"दिवो वा विष्ण-

वित्यध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्द मनु मेथीं* निहन्ति ; तस्या मीषां निनह्यति"-इति, "एव मुत्तरस्य प्रतिप्रस्थाता विष्णोर्नु क मित्युत्तरं कर्णातर्द मनु"-इति च ( ११. ७. ३,४. )। प्रतिप्रस्थाता विष्णोर्नु क मित्युक्त्वा ( तै०सं०१.२.१३. ३. ) अस्य हविर्धानस्य 'उत्तरं कर्णातर्दम्' अपि तस्मिन् मेथीनिहननकाले परिदध्यादिति। यद्यप्ययं कालः परिश्रयणकालात् प्राचीनः, तथापि तत्समीपवर्त्तित्वात् पूर्वविधिना सह नात्यन्तं विरोध इत्येतद्दर्शयति—अत्र हि ते इति। 'अत्र' मेथीनिहननदेशे तत्समीपवर्त्तिनि काले परिश्रयणं क्रियते ॥

ऋक्सङ्ख्यादिकं दर्शयति—"ता एता अष्टावन्वाह रूपसमृद्धा, एतद्वै यज्ञस्य समृद्धं, यद्रूपसमृद्धं, यत्कर्म्म क्रियमाण मृगभिवदति; तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां; ता द्वादश सम्पद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद; त्रिः प्रथमां त्रिरुत्तमा मन्वाह यज्ञस्यैव तद्वर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय"-इति। पूर्ववद् व्याख्येयम् ( १०६ पृ० )† ॥ ३ ( २ ) ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां पञ्चमाध्याये
तृतीयः खण्डः ॥ ३ ( २९ ) ॥

---

* 'कर्णातर्दः कीलम्। तदनु तत्समीपे। मेथी मवष्टम्भनस्तम्भम्'-इति वृत्तिः।

† 'शिरो वा हविर्धानम्'-इत्यादि शत० ब्रा० ३. ५, ३। तैत्तिरीयकेऽपि तथैव विहितम् ( ६. २. ९—११. )। एतदीयमन्त्रा अपि तत्रैव श्रुताः ( १. २. १३. )। 'हविर्धाने प्रवर्त्तयन्ति'-इत्यादि आश्व० श्रौ० ४. ९. १—९। 'प्राचा बर्हिः'-इत्यादि आप० श्रौ० ११. ६—८। 'अग्निं प्रणीय सदोहविर्धानाग्नीध्रहोतृधिष्ण्यान् यथोक्तम्'-इत्यादि च कात्या० श्रौ० ६. १०. १४।

॥ अथ चतुर्थः खण्डः ॥

अग्नीषोमाभ्यां प्रणीयमानाभ्या मनुब्रूहीत्याहाध्वर्युः सावीर्हि देव प्रथमाय पित्र इति सावित्री मन्वाह तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्या मनु वाचाहाथ कस्मात्सावित्री मन्वाहेति सविता वै प्रसवाना मीशे सवितृप्रसूता एवैनौ तत्प्रणयन्ति तस्मात्सावित्री मन्वाह प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यामन्वाह तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्या मनु वाचाहाथ कस्माद् ब्राह्मणस्पत्या मन्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मैवाभ्या मेतत्पुरोगव मकर्न वै ब्रह्मण्वद्रिष्यति प्र देव्येतु सूनृतेति ससूनृत मेव तद्यज्ञं करोति तस्माद् ब्राह्मणस्पत्या मन्वाह होता देवो अमर्त्य इति तृच माग्नेयं गायत्र मन्वाह सोमे राजनि प्रणीयमाने सोमं वै राजानं प्रणीयमान मन्तरेणैव सदो हविर्द्धानान्यसुरा रक्षांसि जिघांसंस्त मग्निर्मायया त्यनयत् पुरस्तादेति मायेति मायया हि स त मत्यनयत् तस्मादस्याग्निं पुरस्ताद्धरन्त्युप त्वाग्ने दिवे दिव उप प्रियं पनिप्नत मिति तिस्रश्चैकां चान्वाहेश्वरौ ह वा एतौ संयन्तौ यजमानं हिंसितोर्यश्चासौ पूर्व उद्धृतो भवति य

मु चैन मपरं प्रणयन्ति तद्यत्तिस्रश्चैकां चान्वाह सञ्ज्ञानानावेवैनौ तत्सङ्गमयति प्रतिष्ठाया मेवैनौ तत्प्रतिष्ठापयत्यात्मनश्च यजमानस्य चाहिंसाया अग्ने जुषस्व प्रति हर्य तद्वच इत्याहुत्यां हूयमानाया मन्वाहाग्नय एव तज्जुष्टि माहुतिं गमयति सोमो जिगाति गातुविदिति तृचं सौम्यं गायत्र मन्वाह सोमे राजनि प्रणीयमाने स्वयैवैनं तद्देवतया स्वेन-च्छन्दसा समर्द्धयति सोमः सधस्थ मासददित्या-सत्स्यन् हि स तर्हि भवति तदतिक्रम्यैवानुब्रूया-त्पृष्ठत इवाग्नीध्रं कृत्वा त मस्य राजा वरुणस्त मश्विनेति वैष्णवी मन्वाह क्रतुं सचन्त मारुतस्य वेधसः दाधार दक्ष मुत्तम महर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुत इति विष्णुर्वै देवानां द्वारपः स एवास्मा एतद् द्वारं विवृणोत्यन्तश्च प्रागा अदितिर्भवासीति प्रपाद्यमाने ऽन्वाह श्येनो न योनिं सदनं धिया कृत मित्यासन्ने हिरण्यय मासदं देव एषतीति हिरण्मय मिव ह वा एष एत-द्देवेभ्यश्छदयति यत्कृष्णाजिनं तस्मादेता मन्वाहा-स्तभ्नाद् द्या मसुरो विश्ववेदा इति वारुण्या परि-दधाति वरुणदेवत्यो वा एष तावद्यावदुपनद्धो याव-

त्परिश्रितानि प्रपद्यते स्वयैवैनं तद्देवतया स्वेन-च्छन्दसा समर्द्धयति तं यद्युप वा धावेयुरभयं वेच्छेरन्नेवा वन्दस्व वरुणं बृहन्त मित्येतया परि-दध्याद्यावद्ध्यो ह्यभय मिच्छति यावद्ध्यो ह्यभयं ध्यायति तावद्भ्यो ह्यभयं भवति यश्चैवं विद्वानेतया परिदधाति तस्मादेवं विद्वानेतयैव परिदध्यात् ता एताः सप्तदशान्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाण मृगभिवदति तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां ता एकविंशतिः सम्पद्यन्त एकविंशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश उत्तमा प्रतिष्ठा तद् दैवं क्षत्रं सा श्रीस्तदाधिपत्यं तद् ब्रध्नस्य विष्टपं तत्प्रजापतेरायतनं तत् स्वाराज्य मृध्नोत्येत मेवैताभिरेकविंशत्यैकविंशत्या ॥ ४ ( ३० ) ॥

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां पञ्चमोध्यायः ॥५॥

अथाग्नीषोमप्रणयनीया ऋचो विधातु मादौ प्रैषमन्त्रं विधत्ते —"अग्नीषोमाभ्यां प्रणीयमानाभ्या मनुब्रूहीत्याहाध्वर्युः"—इति । योऽय मग्निः प्राचीनवंशाख्यायाः शालाया मुखे द्वारभागे पूर्व-सिद्धाहवनीयरूपेणावतिष्ठते, तस्माच्छालामुखीयादग्नेः सकाशात् कियानप्याग्नीध्रे धिष्ण्ये नेतव्यः। सोमश्च पूर्वं शालामुखीयसमीपे

ऽवस्थित: ; तेनाग्निना सहानीत: सन् पुनरपि हविर्धानमण्डपे नेतव्य: ; तदिद मग्नीषोमप्रणयनम् ; तदर्थं होतारं प्रत्यध्वर्यु: प्रैषमन्त्रं ब्रूयात्। तदेतत् सर्व मापस्तम्ब आह—"शालामुखीये प्रणयनीय मिध्म मादीप्य सिकताभिरुपयस्याग्नीषोमाभ्यां प्रणीयमानाभ्या मनुब्रूहीति सम्प्रेष्यति"-इति ( ११.१७.२. ), "अग्निप्रथमा: सोमप्रथमा वा प्राञ्चो ऽभिप्रव्रजन्त्याग्नीध्रीये ऽग्निं प्रतिष्ठाप्य"-इति ( ३. ४. ), स च "सोमो जिगाति गातुविदित्यपरया द्वारा * हविर्धानं राजानं प्रपादयति"-इति ( ८. ) च ॥

अग्नीषोमप्रणयनीयास्वृक्षु प्रथमा मृचं विधत्ते—"सावीर्हि देव प्रथमाय पित्र इति सावित्री मन्वाहेति"–इति। सेयं शाखान्तरगतत्वात् सूत्रकारेण पठिता † ( आश्व०श्रौ०४.१०.१. )। तस्यास्तृतीयपादे 'अस्मभ्यं सवित:'-इतिश्रुतत्वादियं सावित्री। अत्र वैय्यधिकरण्य माशङ्क्य समाधत्ते—"तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्या मनु वाचाहाथ कस्मात्सावित्री मन्वाहेति ? सविता वै प्रसवाना मीशे सवितृप्रसूता एवैनौ तत्प्रणयन्ति ; तस्मात्सावित्री मन्वाह"–इति। पूर्ववद् ( १२० पृ० ) व्याख्येयम् ॥

द्वितीयां विधत्ते— "प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्या मन्वाह"–इति (सं० १.४०.३.)। अत्रापि वैय्यधिकरण्य माशङ्क्य समाधत्ते— "तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्या मनु वाचाहाथ कस्माद् ब्राह्मणस्पत्या मन्वाहेति ? ब्रह्म वै बृहस्पतिर्ब्रह्मैवाभ्या मेतत्पुरोगव मकर्ण वै ब्रह्मण्वद्रिष्यति"–इति। 'पुरोगवं'

---

* 'उभयतोद्वारं हविर्धानं भवति'–इति शत० ब्रा० ३. ५. ३. ७।

† तद्यथा—"सावीर्हि देव प्रथमाय पित्रे वर्ष्माण मस्मै वरिमाण मस्मै।

अथास्मभ्यं सवित: सर्वताता दिवे दिव आसुव भूरिपश्व:"–इति।

ब्राह्मण मेव पुरोगन्तारम् 'अकः' करोति। ब्राह्मणोपेतस्य कर्मणो विनाशाभावात्तद् युक्तम्। द्वितीयपाद मुपजीव्य* ता मृचं प्रशंसति —"प्र देव्येतु सूनृतेति स-सूनृत मेव तद्यज्ञं करोति ; तस्माद् ब्राह्मणस्तया मन्वाह"-इति। 'सूनृता' प्रियवचनरूपा वाग् देवी 'प्रैतु' ब्रह्मणा सह पुरो गच्छतु, 'इति' द्वितीयपादे श्रूयते ; तत्पाठेन 'यज्ञ' 'स-सूनृत मेव' प्रियवचनयुक्त मेव 'करोति' ॥

तृतीयाद्यास्तिस्र ऋचो विधत्ते —"होता देवो अमर्त्य इति ( सं० ३. २७. ७. ) तृच माग्नेयं गायत्र मन्वाह"-इति। जुहोत्यस्मिन्नग्नाविति 'होता' अग्निः। अतो होतृशब्दश्रवणादिद माग्नेयम्। आग्नेयस्य सोमप्रणयनानुकूल्यं दर्शयति —"सोमे राजनि प्रणीयमाने सोमं वै राजानं प्रणीयमान मन्तरेणैव सदो-हविर्धानान्यसुरा रक्षांस्यजिघांसन्न मग्निर्मायययात्यनयत्"-इति। यदिदं सदोनामकं मण्डपं, शकटद्वयं च, तानि 'अन्तरेण' तेषां मध्ये 'असुराः' च 'रक्षांसि' च नीयमानं 'सोमं' हन्तु मैच्छन्। 'तं' भीतं सोमम् 'अग्निः' स्वकीयया 'मायया' तानसुरान्, तानि रक्षांसि च अतिक्रम्य नीतवान्। तस्मात् सोमप्रणयनेऽप्याग्नेयस्य योग्यत्व मस्ति। असुराणां रक्षसां चावान्तरजातिभेदो द्रष्टव्यः। प्रथमाया† ऋचो द्वितीय पाद मनूद्य व्याचष्टे —"पुरस्तादेति मायेति ; मायया हि स त मत्यनयत् ; तस्मादस्याग्निं पुरस्ताद्धरन्ति"-इति। मायया सहितोऽग्निः पुरस्ताद्गच्छतीति द्वितीयपादे श्रूयते। यस्मात् 'सः' अग्निः 'मायया' शक्त्या भीतिस्थानम् अतिलङ्घ्य 'तं' सोमम् 'अनयत्', 'तस्माद् उ' तस्मादेव कारणात्

* 'मनुजीव्य' ख।

† यदुक्तं 'तृतीयाद्यास्तिस्र ऋचः'-इति ( ७ पं० ) तत्र या प्रथमा, तस्या इति भावः।

'अस्य' सोमस्य 'पुरस्तात्' आग्नीध्रपर्यन्तम् 'अग्निम्' ऋत्विजो 'हरन्ति' ॥

षष्ठी मारभ्य चतस्र ऋचो विधत्ते—"उप त्वाग्ने दिवे दिव, उपप्रियं पनिप्नत मिति तिस्रश्चैकां चान्वाह"-इति। "उप त्वाग्ने"-इत्यादिका: क्रमेणाम्नातास्तिस्र: (सं॰ १. १. ७—९.), "उप प्रियम्"-इत्येका (सं॰ ९.६७.२९.)। उक्तस्य तृचस्य, उक्तायाश्चैकस्या:, अनुवचन मुपपादयति—"ईश्वरौ ह वा एतौ संयन्तौ यजमानं हिंसितोर्यश्चासौ पूर्व उद्धृतो भवति, य मु चैन मपरं प्रणयन्ति; तद्यत्तिस्रश्चैकां चान्वाह सञ्ज्ञानानावेवैनौ तत्सङ्गमयति; प्रतिष्ठाया मेवैनौ तत्प्रतिष्ठापयत्यात्मनश्च यजमानस्य चाहिंसायै"-इति। 'यश्चासौ' अग्नि: 'पूर्व उद्धृत:' पूर्वभावी सन्, उत्तरवेद्या मानीय स्थापित:, 'य मु' य मपि 'अपरम्' अग्नि मिदानी माग्नीध्रधिष्ण्यं प्रति 'प्रणयन्ति'; 'एनौ' उभावग्नी 'संयन्तौ' ममैवाहुतिरित्येवं सङ्ग्रामं कुर्वन्तौ 'यजमानं हिंसितो: ईश्वरौ' हिंसितुं समर्थौ। तथा सति, यदि 'तिस्रश्चैकां' चानुब्रूयात्, तदानीम् एनौ द्वावप्यग्नी 'सञ्ज्ञानानौ एव' परस्परैकमत्ययुक्ताविव कृत्वा 'सङ्गमयति' अन्योन्यं संयोजयति। तिसृष्वृक्षु 'नमो भरन्त एमसि'-इति पूर्वोद्धृतस्याग्नेर्नमस्कार: श्रूयते; एकस्या मृचि 'अगन्म बिभ्रतो नम:'-इति प्रणीयमानस्याग्नेर्नमस्कार: श्रुत:। तेन तुष्टौ परस्परं द्वेषं परित्यज्यत:। 'तत्' तथासत्येतावुभावग्नी 'प्रतिष्ठाया मेव' उत्तरवेद्या मग्नीध्रलक्षणस्वस्वोचितस्थाने एव 'प्रतिष्ठापयति'; तच्च होतु: 'आत्मनश्च' 'यजमानस्य च' हिंसापरिहाराय भवति ॥

दशमी मृचं विधत्ते—"अग्ने जुषस्व प्रति हर्य तद्वच इति

( सं० १. १४४. ७. ) आहुत्यां हूयमानाया मन्वाहाग्नय एव तज्जुष्टि माहुतिं गमयति"-इति। आहुतिस्तु यजुर्वेदविहिता— "नयवत्यृचाग्नीध्रे जुहोति*, सुवर्गस्य लोकस्याभिजित्यै"-इति ( तै०सं०६.६.१.१. )"-इति। सा चापस्तम्बेन स्पष्टीकृता— "आग्नीध्रीयेऽग्निं प्रतिष्ठाप्याग्ने नयेत्यर्द्ध माज्यशेषस्य जुहोति"-इति ( ११.१७.४. )। तदाहुतिकाले होता 'अग्ने जुषस्व'-इत्येता मनुब्रूयात्। ता मेतां प्रशंसति—अग्नय इति। 'जुषस्व'-इति मन्त्रे अभिधानाद् 'आहुतिम्' अग्नेः प्रियं सम्पादयति ॥

एकादशी मारभ्य तिस्र ऋचो विधत्ते—"सोमो जिगाति गातुविदिति ( सं०३.६२.३—५. )। तृचं सौम्यं गायत्र मन्वाह, सोमे राजनि प्रणीयमाने स्वयैवैनं तद्देवतया स्वेनच्छन्दसा समर्द्धयति"-इति मन्त्रे सोमदेवताया एव प्रतिपाद्यत्वात् सोमात्मकस्येयं स्वकीयदेवता ; गायत्र्या सोमस्य द्युलोकादाहृतत्वात्† छन्दोऽपि स्वकीयम्। अस्य तृचस्यान्तिमं पाद मादाय व्याचष्टे—"सोमः सधस्थ मासददित्यासत्स्यन् हि स तर्हि भवति"-इति। अयं 'सोमः' 'सधस्थं' हविर्धानाभ्यां सहावस्थानप्रदेशं प्राप्य 'आसदत्' आसन्नो-भूत्। यस्मात् 'सः' सोमः 'तर्हि' तत्पादपाठकाले 'आसत्स्यन् भवति' हविर्धानदेशस्यासन्नतां करिष्यन्वर्त्तते, तस्मात् सधस्थ मासददिति युक्तम्। अस्य तृचस्यानुवचनदेशं विधत्ते—"तदति-क्रम्यैवानुब्रूयात् पृष्ठत इवाग्नीध्रं कृत्वा"-इति। पूर्वोक्ताया माहुत्या मध्वर्युणा हूयमानायां होता तृच मुपक्रम्यानुब्रुवाणो

---

* 'अग्ने नय सुपथेति नयवती'-इति तत्र सायणः। सा च ऋक् ऋ० सं० १. ८९. १ ; तै० सं० १. ४. ४३. १ ; वा० सं० ५. ३६ ; ७. ४३ ; ४०. १६।

† 'तृतीयस्यामितो दिवि सोम आसीत्, तं गायत्र्याहरत्'-इति तै० ब्रा० ३.२.१.१।

गच्छन् 'तत्' आग्नीध्रस्थानम् 'अतिक्रम्येव' 'आग्नीध्रं पृष्ठतः इव कृत्वा' तं पादम् 'अनुब्रूयात्'। अतिक्रम्येत्यस्यैव पृष्ठतः कृत्वेति व्याख्यानम् ॥

चतुर्दशी मृचं विधत्ते—"त मस्य राजा वरुणस्त मश्विनेति (सं० १. १५६. ४.) वैष्णवी मन्वाह"-इति। 'व्रजं च विष्णुः'-इति चतुर्थपादे श्रुतत्वात्। अवशिष्टं पादत्रयं पठति *—"क्रतुं सचन्त मारुतस्य वेधसः, दाधार दक्ष मुत्तम महर्विदं, व्रजं च विष्णुः सखिवाँ अपोर्णुत इति"-इति। अस्या ऋचोऽय मर्थः—'अस्य' सोमस्य उपनद्धस्य 'राजा' स्वामी 'वरुणः', 'तम्' 'क्रतु' यागं 'सचत'—इत्यध्याहारः। 'अश्विना' उभावश्विनौ देवौ, 'मारुतः' वायुः, 'वेधाः' ब्रह्मा च 'क्रतु' 'सचन्त' समवयन्ति। "मारुतस्य वेधसः"-इति प्रथमार्थे षष्ठी। 'विष्णुः' देवो 'दक्षं' देवानां मध्ये कुशलम्, अतएव 'उत्तम महर्विदं' सुत्यादिनाभिज्ञं सोमं 'दाधार' प्रणयनकाले धृतवान्। तथा 'विष्णुः' 'सखिवान्' सोमरूपेण सख्या युक्ततया तद्वान्, 'व्रजं' सोमस्थानं हविर्धानम् 'अपोर्णुते' अपगताच्छादनं करोति। सोमस्य प्रवेशाय द्वारं विवृणोतीत्यर्थः। विष्णुः दाधार 'अपोर्णुते' चेति। समुच्चयार्थश्चकारः। उक्तमन्त्रतात्पर्यं विस्पष्टयति—"विष्णुर्वै देवानां द्वारपः; स एवास्मा एतद् द्वारं विवृणोति"-इति ॥

पञ्चदशी मृचं विधत्ते—"अन्तश्च प्रागा अदितिर्भवासीति (सं० ८. ४८. २.) प्रपाद्यमाने ऽन्वाह"-इति। सोमे हविर्धानं प्राप्यमाणे सति एता मृच मनुब्रूयात् ॥

* ऋगियं संहितायां न श्रुतेति समग्रैवेह पठिता। एवं सर्वत्र।

षोड़शी मृचं विधत्ते—"श्येनो न योनिं सदनं धिया कृत मित्यासन्ने"-इति (सं० ९. ७१. ६.)। 'आसन्ने' हविर्धानं प्रति सोमे समीपवर्त्तिनि सति एता मृच मनुब्रूयात्। 'न'कार उपमार्थः। यथा 'श्येनः' पक्षी, तत्र तत्र सञ्चारं कृत्वा 'योनिं' स्वस्थानं प्राप्नोति, तथा 'धिया' यजमानर्त्विग्-बुद्धया 'कृतं' सम्पादितं हविर्धानं प्रति सोमः 'एषति'-इति वक्ष्यमाणेन सम्बन्धः। द्वितीयं पाद मनुवदति—"हिरण्यय मासदं देव एषतीति"-इति। 'हिरण्ययं' सुवर्णसदृशं कृष्णाजिनम् 'आसदम्' उपवेशनयोग्यम्, सोमो 'देवः' 'एषति' प्राप्नोति। 'इष गतौ'-इति धातुः*। हिरण्ययशब्दं व्याचष्टे—"हिरण्मय मिव ह वा एष एतद् देवेभ्यश्छदयति यत् कृष्णाजिनम्"-इति। हविर्धानस्य शकटस्योपरि सोमस्थापनार्थं कृष्णाजिन मास्तृणन्ति। तथाच आपस्तम्ब आह—"दक्षिणस्य हविर्धानस्य नीड़े पूर्ववत् कृष्णाजिनास्तरणं राज्ञश्चासादनम्"-इति (११.१७.१०.)। 'यदेतत् कृष्णाजिनम्' अस्ति, तत् 'हिरण्मय मिव ह वै' सुवर्णनिर्म्मितासन मिव 'देवेभ्यः' देवार्थम् 'एषः' अध्वर्युः 'छदयति' आस्तृणाति। तस्मान्मन्त्रे हिरण्यय मितुग्रपपन्नम्। एतन्मन्त्रविधि मुपसंहरति—"तस्मादेता मन्वाह"-इति। यस्मादासन्नदेशस्यानुकूलेय मृक्, तस्मात् 'एताम्' ऋचम् अनुब्रूयात्॥

सप्तदश्या समापनं विधत्ते—"अस्तभ्नाद् द्या मसुरो विश्ववेदा इति (सं० ८.४२.१.) वारुण्या परिदधाति"-इति। चतुर्थपादे 'वरुणस्य व्रतानि'-इतिश्रवणादियं वारुणी। तस्याः सोमसम्बन्धं दर्शयति—"वरुणदेवत्यो वा एष तावद्यावदुपनद्धो याव-

* दिवादिः (२१)। छन्दसि विकरणव्यत्ययः (पा० ३. १. ८५.)।

त्यरिश्रितानि प्रपद्यते ; स्वयैवैनं तद् देवतया स्वेनच्छन्दसा समर्द्धयति"-इति। पूर्ववद् ( १०५ पृ० ) व्याख्येयम् ॥

अथात्र नैमित्तिक मृगन्तरं विधत्ते—"तं यदुप वा धावेयुरभयं वेच्छेरन्नेवा वन्दस्व वरुणं बृहन्त मित्येतया परिदध्याद्"-इति। 'तं' यजमान मितरे बन्धवो जीवनार्थिनो 'यदि उप वा धावेयुः' प्राप्नुयुः ; अथवा वैरिभ्यो भीताः 'अभयं' यजमानसमीपे यदि 'इच्छेरन्' तदानीम् "एवा वन्दस्व"-इति ( सं० ८.४२.२. ) 'एतया परिदध्याद्'। होतुरेतद्वेदनप्रशंसापूर्वक मेतद्विधि मुपसंहरति—"यावन्तो हाभय मिच्छति, यावन्तो हाभयं ध्यायति ; तावन्तो हाभयं भवति, यत्रैवं विद्वानेतया परिदधाति ; तस्मादेवं विद्वानेतयैव परिदध्यात्"-इति। 'यत्र' यागे यथोक्तार्थं 'विद्वान्' होता 'एतया' परिदध्यात्, तत्र यजमानो 'यावद्भ्यः' बन्धुभ्यो हृद्रोगपरिहाररूपम् 'अभय मिच्छति', अथवा वैरिभीतिपरिहाररूपम् 'अभयं ध्यायति', 'तावन्तः' सर्वेभ्यः, तादृशम् 'अभयं भवति'। 'तस्माद्' "एवा वन्दस्व"-इत्यनयैव 'परिदध्यात्' ॥

मन्त्रसङ्ख्यादि दर्शयति—"ता एताः सप्तदशान्वाह रूपसमृद्धा ; एतद्वै यज्ञस्य समृद्धं, यद्रूपसमृद्धं ; यत्कर्म्म क्रियमाण मृगभिवदति; तासां त्रिः प्रथमा मन्वाह, त्रिरुत्तमां, ता एकविंशतिः सम्पद्यन्ते; एकविंशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः"-इति। उक्तसङ्ख्याप्रशंसार्थ मेकविंशतिसङ्ख्यापूरणे आदित्ये बहून् गुणान् दर्शयति—"उत्तमा प्रतिष्ठा, तद् दैवं क्षत्रं, सा श्रीः, स्तदाधिपत्यं, तद् ब्रध्नस्य विष्टपं, तत्प्रजापतेरायतनं तत् स्वाराज्यम्"-इति। योय मादित्यः, असौ 'उत्तमा प्रतिष्ठा'; तल्लोकानां स्थैर्येणावस्थानात्। 'तद्' आदित्यस्वरूप मेव

दैवं क्षत्र" दैवसम्बन्धिनी क्षत्रजातिः; "आदित्यो वै दैवं क्षत्रम्" -इत्यन्यत्राभिधानात् ( ७. ४. २. )। 'सा श्रीः' आदित्यप्राप्तिरेव भोग्यवस्तुसम्पत्तिः। 'तद्' आदित्यमण्डलम् 'आधिपत्यं' स्वामित्व-प्रापकम्; "आदित्य एषां भूताना मधिपतिः"-इतिश्रवणात्। 'तद्' मण्डलं 'ब्रध्नस्य' आदित्यस्य 'विष्टपं' स्थानभूतम्। 'तत्' एव मण्डलं 'प्रजापतेः' अपि 'आयतनं' स्थानम्; आदित्यमण्डले प्रजापत्युपासनस्याभिधानात्। 'तत्' एव मण्डलं 'स्वाराज्यम्' पार-तन्त्र्याभावात्॥

उपसंहरति— "ऋध्नोतिरत मेवैताभिरेकविंशतैकविंशत्या"-इति। एकविंशतिसङ्ख्याभिः 'एताभिः' ऋग्भिः 'एतं' यजमानं समृद्धं करोति 'एव' * ॥ अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां पञ्चमाध्याये
चतुर्थः खण्डः ॥ ४ ( ३० ) ॥

---

* 'अग्नीषोमौ प्रणेषात्'-इत्यादीनीह कल्पसूत्राणि ( आश्व० ४.१०.१—१३. )। 'ग्रावाणः'-इत्युपक्रम्य 'अग्नीषोमाभ्यां प्रणीयमानाभ्या मनुब्रूहीति सम्प्रेष्यति'-इत्यादीनि आपस्तम्बसूत्राणि (११.१७.१—१०.)। तैत्तिरीयसंहितायान्तु तन्मूलानि (१.३.५ ; ६.३.२.)। कात्यायनेन तु 'अग्नये प्रक्रियमाणायानुवाचयति। सोमाय प्रणीयमानाय वा'-इति वैकल्पिक सुक्तम् (८. ७. ३, ४.)। 'प्रैषं ब्रूयात्, उभयोर्विकल्पेन श्रवणात्। शाखान्तरे त्वग्नीषोमाभ्यां प्रणीयमानाभ्या मित्येवंविधः प्रैष उक्तोऽस्ति'-इति च तत्र टीका ( या० दे० )। तच्च श्रवण मनुभूयते शतपथे—'अथाहाग्नये प्रक्रियमाणायानुब्रूहि, सोमाय प्रणीयमानायेति वाग्नये प्रक्रियमाणायानुब्रूहीति त्वेव ब्रूयात्'-इति ( ३. ३. ६, ९. )॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायाः पञ्चमोऽध्यायः ॥

अग्निर्वै षट्(१)। स्वर्गं वै पञ्च(२)। प्राच्यां वै षट्(३)। यज्ञो वै नव(४)। सोमो वै चत्वारि(५)॥१*॥

अग्निर्वै, प्रयाजवद्, गणानां त्वा, दश ॥१†॥

॥ इति प्रथमपञ्चिका समाप्ता ॥

---

* 'अग्निर्वै'–इत्यादीनि पञ्चाना मध्यायानां प्रतीकज्ञापनपूर्वक-खण्डसङ्ख्याबोधकानि वाक्यानि । तदेतत् खण्डसङ्ग्रहण मध्यायेषु खण्डानां निक्षेपप्रक्षेपनिबन्धनन्यूनाधिक्यवारणाय पूर्वाचार्यैः प्रोक्त मधीयते चाद्यापि स्वाध्यायवत् । अथैकदेशार्थः खण्डशब्दः पुन्नपुंसकलिङ्ग इति ( अम०को०१.३.१६. ) 'प्रथमः खण्डः', 'द्वितीयः खण्डः'–इत्यादिप्रयोगाः, 'चत्वारि' खण्डानि इत्येवमादयः प्रयोगाश्च, निरवद्या एवेति व्यक्त मेव ।

† एतच्च खण्डदशकसङ्ग्रहणं वाक्यम् । 'अग्निर्वै'–इत्यादीनि दशकप्रतीकानि, खण्डानां प्रक्षेपनिक्षेपदीपती रक्षणाय कोषाना मुपरि कोषरूपाणीति शम् ॥

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथ द्वितीयपञ्चिका ॥

( २ )

### ॥ प्रथमाध्यायस्य प्रथमः खण्डः ॥

॥ ॐ ॥ यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायंस्ते ऽबिभयुरिमन्नो दृष्ट्वा मनुष्याश्च ऋषयश्चानुप्रज्ञास्यन्तीति तं वै यूपेनैवायोपयंस्तं यद्यूपेनैवायोपयंस्तद्यूपस्य यूपत्वं त मवाचीनाग्रं निमित्योर्ध्वा उदायंस्ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन् यज्ञस्य किञ्चिदेषिष्यामः* प्रज्ञात्या इति ते वै यूप मेवाविन्दन्नवाचीनाग्रं निमितं ते विदुरनेन वै देवा यज्ञ मयूयुपन्निति त मुत्खायोर्ध्वन्यमिन्वंस्ततो वै ते प्र यज्ञ मजानन् प्र स्वर्गं लोकं तद्यद्यूप ऊर्ध्वो निमीयते यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै वज्रो वा एष यद्यूपः सोऽष्टाश्रिः

* 'किञ्चिदेषिष्यामः' ङ, टी० घ।

कर्त्तव्यो ऽष्टाश्रिर्वै वज्रस्तं तं प्रहरति द्विषते भ्रातृव्याय वधं यो ऽस्य स्तृत्यस्तस्मै स्तर्तवै वज्रो वै यूपः स एष द्विषतो वध उद्यतस्तिष्ठति तस्माद्धाप्येतर्हि यो द्वेष्टि तस्याप्रियं भवत्यमुष्यायं यूपो ऽमुष्यायं यूप इति दृष्ट्वा खादिरं यूपं कुर्वीत स्वर्गकामः खादिरेणैव वै यूपेन देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानः खादिरेण यूपेन स्वर्गं लोकं जयति बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः समां समां वै बिल्वो गृभीतस्तदन्नाद्यस्य रूप मामूलाच्छाखाभिरनुचितस्तत्पुष्टेः पुष्यति प्रजां च पशूंश्च* य एवं विद्वान् बैल्वं यूपं कुरुते यदेव बैल्वां३ † बिल्वं ज्योतिरिति वा आचक्षते ज्योतिः स्वेषु भवति श्रेष्ठः स्वानां भवति य एवं वेद पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशस्तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् पालाशं यूपं कुरुते यदेव पालाशां३ ‡ सर्वेषां वा एष वनस्पतीनां योनिर्यत्पलाशस्तस्मात्पलाशस्यैव पलाशेनाचक्षते ऽमुष्य पलाश ममुष्य पलाश मिति सर्वेषां हास्य वनस्पतीनां काम उपाप्तो भवति य एवं वेद ॥ १ ॥

---

* 'पशूँश्च' क, घ। †, ‡ 'बैल्वाँ३', 'पालाशाँ३' क।

राजक्रयब्राह्मण मुक्त मादौ, वक्ष्ः प्रणीतिप्रतिपादिकाश्च। तथा हविर्धानविवर्त्तनार्था, अग्नेश्च सोमस्य च या ऋचः स्युः *॥

अथ षष्ठाध्याये ऽग्नीषोमीयपशुर्वक्तव्यः। तत्रादौ यूपं वक्तु माख्यायिका माह—"यज्ञेन वै देवा ऊर्द्ध्वाः स्वर्गं लोक मायंस्ते ऽबिभयुरिमं नो दृष्ट्वा मनुष्याश्च ऋषयश्चानु प्रज्ञास्यन्तीति; तं वै यूपेनैवायोपयंस्तं यद्यूपेनैवायोपयंस्तद्यूपस्य यूपत्वं; त मवाचीनाग्रं निमित्योर्द्ध्वा उदायंस्ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन्, यज्ञस्य किञ्चिदेषिष्यामः प्रज्ञात्या इति; ते वै यूप मेवाविन्दन्नवाचीनाग्रं निमितं; ते विदुरनेन वै देवा यज्ञ मयूयुपन्निति; त मुत्खायोर्द्ध्वं न्यमिन्वंस्ततो वै ते प्र यज्ञ मजानन् प्र स्वर्गं लोकम्"-इति। पुरा कदाचिद् 'देवाः' ज्योतिष्टोमं यज्ञ मनुष्ठाय तत्फलभूतं 'स्वर्गं' प्राप्ताः। तत्र चावस्थाय भीतिं प्राप्ताः। केनाभिप्रायेणेति ? स उच्यते— ये 'मनुष्याः' वर्णाश्रमधर्म्मप्रवृत्ताः, ये च 'ऋषयः' तपसि प्रवृत्ताः, ते सर्वेऽपि अस्मदीयम् 'इमं' यज्ञं 'दृष्ट्वा' स्वय मप्यनुष्ठाय स्वर्गं समागत्यास्मान् 'प्रज्ञास्यन्ति',—ततोऽस्मत्समा भविष्यन्ति। ततस्ते देवा भीता मनुष्याणा मृषीणां च व्यामोहाय 'तम्' एव स्वकीयं यज्ञं यूपस्तम्भेनैव 'अयोपयन्' मिश्रितवन्तः; अन्यथानुष्ठानरूपं भ्रम मुत्पादितवन्त इत्यर्थः। यस्मात्कारणाद् 'यूपेनैव' 'तं' यज्ञम् 'अयोपयन्' अन्यथा कृतवन्तः, तस्माद्योपनसाधनत्वाद्यूपनामसम्पन्नम्। केन क्रमेण

* अथ पूर्वाध्यायार्थ संग्रह उच्यते राजक्रयेतिश्लोकेन। तथाच पञ्चमेऽध्याये ये चत्वारः खण्डाः श्रुताः, तत्र क्रमेण सोमक्रयायाख्यायिकाकथनपूर्वको वाग्विसर्गः, अग्निप्रणयनीया ऋचः, हविर्द्धानप्रोह्यमाणीया ऋचः, अग्नीषोमप्रणयनीया ऋचश्चेति चत्वारोऽर्था विहिता इति निष्पन्नम्।

व्यामोहितन्त इति ? उच्यते—'तं यूपं' पूर्वम् ऊर्द्ध्वाग्रं सन्त मिदानीम् 'अवाचीनाग्रम्' अधोमुखं 'निमित्य' निखाय ऊर्द्ध्वाभिमुखा उद्गताः। तदानीं 'मनुष्या ऋषयश्च' 'देवानां' 'यज्ञवास्तु' यज्ञभूमि मागत्य 'यज्ञस्य' सम्बन्धि चिह्नं यत्किञ्चिदवगमिष्यामः, तच्च देवानुष्ठितस्य 'प्रज्ञात्यै' सम्पद्यते ;—इत्यभिप्रेत्य यज्ञभूमिं सर्वतः परीक्ष्य यज्ञचिह्नं मिद मिति 'यूप मेव' 'अविन्दन्' अलभन्त। कीदृशं यूपम्? 'अवाचीनाग्रं निमितम्' अधोमुखत्वेन निखातम्। ततः 'ते' मनुष्या ऋषयश्चैवं 'विदुः'। कथ मिति? तदुच्यते—'अनेन' एवाधोमुखेन यूपेन 'देवाः' अस्मद्भ्रमाय स्वकीयं 'यज्ञं' मिश्रित-वन्तः 'इति'। ततः 'तम्' अधोमुखं निखातं यूपम् 'उत्खाय' पुनरूर्द्ध्वाभिमुखं 'न्यमिन्वन्' निखातवन्तः। ततो यथाशास्त्र मवस्थितेन यूपेन 'ते' मनुष्या ऋषयश्च देवैरनुष्ठितं 'यज्ञं' 'प्र' ज्ञाय 'स्वर्गं लोकं प्राजानन्'। तं यज्ञ मनुष्ठाय स्वर्गं गता इत्यर्थः। सोऽय मर्थः शाखान्तरे सङ्गृहीतः—"यज्ञेन वै देवाः सुवर्गं लोक मायन्; ते ऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ; ते यूपेन योपयित्वा सुवर्गं लोक मायन् ; त मृषयो यूपेनैवानुप्रजानन्; तद्यूपस्य यूपत्वम्"-इति (तै॰ सं॰ ६. ३. ४. ७.)॥

इदानीं यूपनिखननं विधत्ते—"तद्यदूर्ध्व ऊर्द्ध्वो निमीयते, यज्ञस्य प्रज्ञात्यै,—स्वर्गस्य लोकस्यानुख्यात्यै"-इति। 'निमीयते' निखातव्य इत्यर्थः॥

तस्य यूपस्य तक्षणेनाष्टाश्रित्वं विधीयते—"वज्रो वा एष यद्यूपः ; सोऽष्टाश्रिः कर्त्तव्यो ऽष्टाश्रिर्वै वज्रस्तं तं प्रहरति;—द्विषते भ्रातृव्याय वधं यो ऽस्य स्तृत्यस्तस्मै स्तर्तवै"-इति। यूपस्य वज्रांशत्वेन वज्रत्वम्। तच्च शाखान्तरे श्रूयते—"इन्द्रो वृत्राय

वज्रं प्राहरत्; स त्रेधा व्यभवत्,—स्फ्यस्तृतीयꣳ, रथस्तृतीयं, यूपस्तृतीयम्''-इति* (तै०सं०५.२.६.२.)। लोके वज्रस्याष्टकोणत्वात् तद्रूपस्य यूपस्य अष्टाश्रित्वं कुर्यात्। 'द्विषते भ्रातृव्याय वधं' द्वेषं कुर्वतः शत्रोर्वधहेतुं 'तं वज्रं', 'तं' यूपं च, पुरुषः 'प्रहरति' प्रहारार्थं प्रयुङ्क्ते। अतो वज्रवत्प्रहरणसामर्थ्याद्यूपस्याष्टाश्रित्वं युक्तम्। 'यः' शत्रुः 'अस्य' यजमानस्य 'स्तृत्यः' हिंस्यो भवति, 'तस्मै स्तर्तवै' तस्य शत्रोर्हिंसार्थ मिद मष्टाश्रित्वम्। अष्टाश्रित्वसिद्धये यूपस्य यद्वज्रत्व मुक्तम्, तदेव शत्रोरप्रियहेतुत्वेनोपपादयति—''वज्रो वै यूपः, स एष द्विषतो वध उद्यतस्तिष्ठति; तस्माद्वाप्येतर्हि यो द्वेष्टि तस्याप्रियं भवत्यमुष्यायं यूपो ऽमुष्यायं यूप इति दृष्ट्वा''-इति। यो 'यूपः' अस्ति, 'सः' एव शत्रोः 'वधे' निमित्तभूते सति, स्वयम् 'उद्यतस्तिष्ठति' उद्योगवानवतिष्ठते; अतो वज्रत्वम्। यस्मादेवं पुरासीत्, 'तस्मात्' इदानी मपि 'यः' शत्रुर्यजमानं 'द्वेष्टि', 'तस्य' शत्रोः विरोधियजमानानां यूपस्य दर्शनेन महद् 'अप्रियं भवति',—'अमुष्य' विरोधिनो 'यूपः' इति निश्चये सत्यप्रियम्; न तु यूपमात्रदर्शनेन॥

अथ कामनाविशेषेण यूपस्य प्रकृतिभूता वृक्षविशेषा वक्तव्याः; तत्रादौ खदिरवृक्षं विधत्ते—''खादिरं यूपं कुर्वीत स्वर्गकामः; खादिरेणैव वै यूपेण देवाः स्वर्गं लोक मजयंस्तथैवैतद्यजमानः खादिरेण यूपेन स्वर्गं लोकं जयति''-इति। फलद्वयार्थं बिल्व-

* वाजसनेयिभिस्तु तच्चतुर्धाकरण माम्नातम्। तथाहि—''इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार। स प्रहृतश्चतुर्धाभवत् ०—० ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति, द्वाभ्यां राजन्यबन्धवः संव्याधे;—यूपेन च स्फ्येन च ब्राह्मणाः, रथेन च शरेण च राजन्यबन्धवः''-इति शत० ब्रा० १. २. ४. २।

वृक्षं विधत्ते—"बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः समां समां वै बिल्वो गृभीतस्तदन्नाद्यस्य रूप मामूलाच्छाखाभिरनुचितस्तत् पुष्टेः"-इति। 'समां समां' तस्मिंस्तस्मिन् संवत्सरे बिल्ववृक्षो 'गृभीतः' फलैः गृहीतः; 'तत्' च फलग्रहण मदनयोग्यस्यान्नस्य 'रूपम्' बिल्वफलानि भुञ्जानैर्भक्ष्यन्ते। मूल मारभ्य 'शाखाभिः' अनुक्रमेणोपचितो बिल्ववृक्षः; तत्रोपचयनं 'पुष्टेः' स्वरूपम्, तस्मात् फलद्वयं युक्तम्। अध्वर्योर्वेदनं प्रशंसति—"पुष्यति प्रजां च पशूंश्च य एवं विद्वान् बैल्वं यूपं कुरुते"-इति। लोकप्रसिद्ध्या बिल्वस्य प्रशस्ततां दृढयति—"यदेव बैल्वां३ बिल्वं ज्योतिरिति वा आचक्षते"-इति। अत्र किं पद मध्याहृत्य योजनीयम्। हे अध्वर्यो! किमत्र 'बैल्वं' यूपं कृतवानसि? तत्सम्यग्भवता कृतम्; बिल्ववृक्षस्वरूपं हि वृक्षमध्ये 'श्रीवृक्ष'नामकत्वेन लक्ष्मीस्वरूपत्वात् पूज्यत्वेन 'ज्योतिः' भवति। प्लुतिस्तु प्रशंसाद्योतकध्वन्यभिनयार्था *। 'यदेव' यस्मादेव कारणात् ब्रह्मवादिन एवम् 'आचक्षते', तस्माद् बैल्वो यूपोऽतिप्रशस्त इत्यर्थः। एतद्वेदनं प्रशंसति—"ज्योतिः स्वेषु भवति, श्रेष्ठः स्वानां भवति य एवं वेद"-इति। 'स्वेषु' ज्ञातिषु 'ज्योतिः' तेजस्वी; 'श्रेष्ठः' श्रुतवृत्तसम्पन्नः। पुनः फलद्वयाय वृक्षान्तरं विधत्ते—"पालाशं यूपं कुर्वीत; तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः"-इति। 'तेजः' शरीरकान्तिः, 'ब्रह्मवर्चसं' श्रुताध्ययनसम्पत्तिः। पुष्पाणा मतिरिक्तत्वेन पलाशस्य तेजस्त्वम्, परब्रह्मत्वश्रवणाद् ब्रह्मवर्चसत्वम्। तथाच शाखान्तरे श्रूयते— "देवा वै ब्रह्मन्नवदन्त, तत्पर्ण उपाशृणोत्"-इति ( तै०सं०३.५.७.२. )।

---

* 'अनुदात्तं प्रश्नान्ताभिपूजितयोः'-इति पा० ८. २. १००।

एवमादि *। अध्वर्यौरितद्वेदनं प्रशंसति—"तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् पालाशं यूपं कुरुते"-इति। बिल्वात्पलाशं प्रशंसति—"यदेव पालाशां३ सर्वेषां वा एष वनस्पतीनां योनिर्यत्पलाशस्तस्मात्पलाशस्यैव पलाशेनाचक्षते,—ऽमुष्य पलाश ममुष्य पलाश मिति"-इति। हे अध्वर्यो! किं पालाशं यूपं कृतवानसि? तत् सम्यक् कृत मिति प्रशंसार्था प्लुतिः। किञ्च पलाशः सर्ववनस्पतीनां कारणभूतः; तस्माद्योनित्वात्पलाशाख्यस्यैव वृक्षस्य सम्बन्धिना पलाशशब्देन सर्ववृक्षाणां पत्रम् 'आचक्षते' व्यवहरन्ति;—'अमुष्य' न्यग्रोधस्य 'पलाशं' पत्रम्, 'अमुष्य' चूतवृक्षस्य 'पलाशं' पत्रम्। एवं सर्ववृक्षसङ्ग्रहार्था वीप्सा। पलाशशब्दः पुंलिङ्गो वृक्षविशेषवाची, नपुंसकलिङ्गः पत्रवाची। "पलाशे किंशुकः पर्णः"-"पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्"—इत्यभिधानकारैरुक्तत्वात् ( अम० २. ४. २९, १४. )। यस्मात् प्लुतिप्रयोगः, यस्माच्च सर्ववृक्षयोनित्वम्, तस्मात् पलाशयूपः प्रशस्त इत्यर्थः †। वेदनं प्रशंसति—"सर्वेषां हास्य वनस्पतीनां काम उपाप्तो भवति य एवं वेद॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
प्रथमः खण्डः ॥ १ ॥

---

* एतस्मिन्मन्त्रे लिङ्गमर्थं स्पष्टतरम्—"देवानां ब्रह्मवादं वदतां यत्। उपाशृणोः सुश्रवा वै श्रुतोऽसि। ततो मा माविशतु ब्रह्मवर्चसम्। तत् सम्भरंस्तदवरुन्धीय साक्षात्"-इति तै० ब्रा० १.२.१.६। एष चाग्न्याधाने पर्णाहरणाय विनियुज्यते। तथाहि—"गायत्रिया क्रियमाणस्य 'यत्ते पर्ण मपतत् ०—०', 'देवानां ब्रह्मवादं ०—०'-इत्येताभ्यां पर्णम् ( आहरति )"-इति आप० ५. २. ४।

† 'यूप्या वृक्षाः पलाशखदिरबिल्वरौहीतकाः'-इत्यादि आप० ७,१,१५,१६।

॥ अथ द्वितीयः खण्डः ॥

अञ्ज्मो * यूप मनुब्रूहीत्याहाध्वर्युरञ्जन्ति त्वा मध्वरे देवयन्त इत्यन्वाहाध्वरे ह्येनं देवयन्तोऽञ्जन्ति वनस्पते मधुना दैव्येनेत्येतद्वै मधु दैव्यं यदाज्यं यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थ इति यदि च तिष्ठासि यदि च शयासै द्रविण मेवास्मासु धत्तादित्येव तदाहोच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा यद्यज्ञे ऽभिरूपं तत्समृद्धं वर्ष्मन् पृथिव्या अधीत्येतद्वै वर्ष्म पृथिव्यै यत्र यूप मुन्मिन्वन्ति सुमिती मीयमानो वर्चो धा यज्ञवाहस इत्याशिष माशास्ते समिद्धस्य श्रयमाणः पुरस्तादिति समिद्धस्य ह्येष एतत्पुरस्ताच्छ्रयते ब्रह्मवन्वानो अजरं सुवीर मित्याशिष मेवाशास्त आरे अस्मदमतिं बाधमान इत्यशनाया वै पाप्मान मतिस्ता मेव तदाराम्नुदते यज्ञाच्च यजमानाच्चोच्छ्रयस्व महते सौभगायेत्याशिष मेवाशास्त ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति यद्वै देवानां नेति तदेषा मो३ मिति तिष्ठ देव इव सवितेत्येव तदाहोर्ध्वो वाजस्य सनितेति वाजसनि मेवैनं तद्धनसां

* 'ऐञ्ज्मो' क, ग। अँञ्ज्मो' ङ।

सनोति यदग्निभिर्वाघद्भिर्विह्वयामह इति छन्दांसि वा अग्नयो वाघतस्तैरेतद्देवान्यजमाना विह्वयन्ते मम यज्ञ मागच्छत मम यज्ञ मिति यदि ह वा अपि बह्वव इव यजन्ते ऽथ हास्य देवा यज्ञ मैव गच्छन्ति यत्रैवं विद्वानेता मन्वाहोर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दहेति रक्षांसि वै पाप्मा-त्रिणो रक्षांसि पाप्मानं दहेत्येव तदाह कृधी न ऊर्ध्वाञ्चरथाय जीवस इति यदाह कृधी न ऊर्ध्वाञ्चर-णाय जीवस इत्येव तदाह यदि ह वा अपि नीत इव यजमानो भवति परि हैवैनं तत्संवत्सराय ददाति विदा देवेषु नो दुव इत्याशिष मेवाशास्ते जातो जायते सुदिनत्वे अह्ना मिति जातो ह्येष एत-ज्जायते समर्य आ विदथे वर्द्धमान इति वर्द्धयन्त्ये-वैनं तत् पुनन्ति धीरा अपसो मनीषेति पुनन्त्येवैनं तद् देवया विप्र उदियर्ति वाच मिति देवेभ्य एवैनं तन्निवेदयति युवा सुवासाः परिवीत आगादित्युत्त-मया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः स उ श्रेयान् भवति जायमान इति श्रेयाञ्छ्रेयान् ह्येष एतद् भवति जायमानस्तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति

ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयन्ति ता एताः सप्तान्वाह रूपसमृद्धा एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ता एकादश सम्पद्यन्त एकादशाक्षरा वै त्रिष्टुप् त्रिष्टुबिन्द्रस्य वज्र इन्द्रायतनाभिरेवाभी राध्नोति य एवं वेद त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥ २ ॥

यूपं विधाय तस्याञ्जनादिमन्त्रान् विधातु मादौ प्रैषं विधत्ते —"अञ्ज्मो यूप मनुब्रूहीत्याहाध्वर्युः"-इति। 'यूप मञ्ज्मः' यूपस्य घृतेनाञ्जनं कुर्मः। हे होतः! तदनुरूपा मृचं 'ब्रूहीति' एवम् 'अध्वर्युः' प्रैषं ब्रूयात्। स च प्रैषो विकल्पेनापस्तम्बेन दर्शितः— "यूपायाज्यमानायानुब्रूहीति सम्प्रेष्यत्यज्यमानायानुब्रूह्यञ्ज्मो यूप मनुब्रूहीति वा"-इति (श्रौ० ७.१०.१.)। एव मध्वर्युणा प्रेषितो होता अञ्जनकाले वक्ष्यमाणा ऋचोऽनुब्रूयात्। अञ्जनं त्वापस्तम्बेन दर्शितम्—"अथैन मसंस्कृतेनाज्येन यजमानोऽग्रतः शकलेनानक्ति ऐन्द्र मसीति चषाल मक्त्वा, सुपिप्पलाभ्यस्त्वौषधीभ्य इति प्रतिमुच्य, देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सन्तत मविच्छिन्दन्नग्निष्ठा मश्रि मनक्ति"-इति (७. १०. २, ३.)॥

एतस्मिन्नञ्जनकालेऽनुवचनीया मृचं विधत्ते—"अञ्जन्ति त्वा मध्वरे देवयन्त इत्यन्वाहाध्वरे ह्येनं देवयन्तोऽञ्जन्ति"-इति (सं०३. ८.१.)। हे यूप! 'त्वां' 'देवयन्तः' देवान् पूजयितु मिच्छन्तः,

ऋत्विजः 'अंजन्ति' असंस्कृतेन घृतेनाक्तं कुर्वन्ति । एतत्पादार्थस्य याज्ञिकप्रसिद्धिं दर्शयति—अध्वरे हि एन मिति । द्वितीयपाद मनूद्य व्याचष्टे—"वनस्पते मधुना दैव्येनेत्येतद्वै मधु दैव्यं यदाज्यम्"-इति । हे 'वनस्पते' यूप ! मधुरेण देवयोग्येनाज्येन, त्वा मञ्जन्तीति पूर्वत्रान्वयः । द्वितीयार्द्ध मनूद्य व्याचष्टे—"यदूर्द्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थ इति ; यदि च तिष्ठासि, यदि च शयासे, द्रविण मेवास्मासु धत्तादित्येव तदाह"-इति । हे यूप ! त्वं यदूर्द्ध्वाग्रः सन् 'तिष्ठाः' अवटे स्थितो ऽभवः । 'यद्वा' जगन्मातुः 'अस्याः' पृथिव्याः 'उपस्थे' उपरि 'क्षयः' निवासः ते शयनं स्यात् । सर्वथापि 'इह' कर्म्मणि 'द्रविणा' धनानि अस्मदपेक्षितानि 'धत्तात्' सम्पादयतु । अथ मुत्तरार्द्ध-स्यार्थो यदि चेत्यादिना स्पष्टीकृतः ॥

द्वितीया मृचं विधत्ते—"उच्छ्रयस्व वनस्पत इति (सं० ३.८.३.) उच्छ्रीयमाणायाभिरूपा ; यद्यज्ञे ऽभिरूपं तत्समृद्धम्"-इति । हे 'वनस्पते' ! त्वम् 'उच्छ्रयस्व' शयनं परित्यज्योत्थितो भव । उच्छ्रयस्वेतुरुक्तत्वात् 'उच्छ्रीयमाणाय' यूपायेय मृक् 'अभिरूपा' । तदेतदुच्छ्रयण मापस्तम्बेन दर्शितम्—"यूपायोच्छ्रीयमाणायानु-ब्रूहीति सम्प्रेष्यतुरच्छ्रीयमाणायानुब्रूहीति वोद्दिवं स्तभानान्त-रिक्षं पृणेतुरच्छ्रयति"-इति (७. १०. ६, ७.) । अस्या ऋचो द्वितीयपाद मनूद्य व्याचष्टे—"वर्ष्मन् पृथिव्या अधीत्येतद्वै वर्ष्म पृथिव्यै यत्र यूप मुन्मिन्वन्ति"-इति । 'पृथिव्याः' सम्बन्धिनि 'वर्ष्मन्' शरीरवत्प्रधानभूते अस्मिन् देशे 'अधि' उपरि, उच्छ्रयस्वेति पूर्वत्रान्वयः । ऋत्विजो 'यत्र' वेदि-तत्पूर्वदेशयोरन्तराले 'यूपम्' 'उन्मिन्वन्ति' ऊर्द्ध्वतया निखनन्ति, सोऽयं देशः 'पृथिव्या वर्ष्म'-

इति । मन्त्रे तृतीयं पाद मनूद्य व्याचष्टे—"सुमिती मीयमानो वर्चोधा यज्ञवाहस इत्याशिष माशास्ते"-इति । 'सुमिती' सुमित्या शोभनेन प्रक्षेपेण स्थापनेन 'मीयमानः' स्थाप्यमानः, 'यज्ञवाहसे' यज्ञनिर्वाहकाय यजमानाय 'वर्चोधाः' वर्चसां दीप्तीनां धाता सम्पादयिता ; तेन यूपो विशिष्यते । 'वर्चोधाः'-इत्येतदाशीःप्रार्थना ॥

तृतीया मृचं विधत्ते—"समिद्धस्य श्रयमाणः पुरस्तादिति"-इति ( सं० ३. ८. २. ) । अन्वाहेत्यनुवर्त्तते । अयं यूपः 'समिद्धस्य' प्रदीप्तस्याहवनीयस्य 'पुरस्तात्' पूर्वस्यां दिशि 'श्रयमाणः' आश्रित्य वर्त्तमानः । एतत्पदार्थस्य याज्ञिकप्रसिद्धिं दर्शयति—"समिद्धस्य ह्येष एतत्पुरस्ताच्छ्रयते"-इति । अर्द्धं मन्त्रर्वेदि, अर्द्धं वहिर्वेदि, यूप स्थापनात् आहवनीयपूर्वदिगाश्रयणम् । द्वितीयमनूद्य व्याचष्टे—"ब्रह्म वन्वानो अजरं सुवीर मित्याशिष मेवाशास्ते"-इति । 'अजरम्' अविनाशं, 'सुवीरं' कल्याणपुत्रादिसमृद्धिकारणम्, 'ब्रह्म' परिवृढ मिदं कर्म्म 'वन्वानः' सम्भज्यमानो यूपः । अजरादिशब्दैः एतस्मिन् पादे प्रार्थनं शंसते । तृतीयपाद मनूद्य व्याचष्टे—"आरे अस्मदमतिं बाधमान इत्यशनाया वै पाप्मा ऽमतिस्ता मेव तदारान्नुदते यज्ञाच्च यजमानाच्च"-इति । 'अमतिः' बुद्धिभ्रंशः, 'ताम्' 'अस्मद्' यजमानलिंगभ्यः 'आरे' दूरे यथा भवति तथा 'बाधमानः' यूपः । एतत्पादगतेनामतिशब्देन क्षुधा वा पापं वाभिधीयते ; तयोः बुद्धिभ्रंशहेतुत्वात् । अस्मदित्यनेन यज्ञो यजमानश्च विवक्षितः । ताभ्यां दुर्बुद्धिः दूरे निराक्रियते । चतुर्थपाद मनूद्य व्याचष्टे—"उच्छ्रयस्व महते सौभगायेत्याशिष मेवाशास्ते"-इति । हे वनस्पते ! यजमानस्याधिकसौभाग्यसिद्ध्यर्थ मुच्छ्रितो भव । अस्मिन् पादे आशीर्विस्पष्टा ॥

चतुर्थीमृचं विधत्ते—"ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति"-इति (सं० ४.६.१.)। हे यूप! 'नः' अस्माकम् 'ऊतये' रक्षणाय 'ऊर्ध्वः' ऊर्ध्वाकार एव 'सुतिष्ठ' स्थितिं कुरु। तत्र दृष्टान्तः— 'सविता देवो न' सूर्यो देव इव;— स यथास्मद्रक्षणा-योर्ध्वस्तिष्ठति, तद्वत् त्व मपीत्यर्थः। एतत्पूर्वार्द्धगतस्य 'न'-शब्दस्य निषेधार्थत्वं परित्यज्याङ्गीकारवाचित्वात्तेनात्र उपमार्थो विवक्षित इत्येतद्दर्शयति—"यद्ध देवानां नेति तदेषा मोऽ मिति; तिष्ठ देव इव सवितेत्येव तदाह"-इति। 'देवानां' देवप्रतिपादकमन्त्राणां, वर्णव्यत्ययेन वा वेदानां, सम्बन्धि 'नेति' 'यत्' पद मस्ति, 'तदेषां' वेदानां सम्बन्धिनि प्रयोगे 'ॐ'-इतेरतस्मिन्नर्थे वर्त्तते। तथा सत्यङ्गीकार्यस्यार्थस्य विवक्षितत्वादत्रोपमार्थे विवक्षिते सति 'तिष्ठ देव इव'-इत्यादिवाक्यार्थो लभ्यते। तृतीयपाद मनूद्य व्याचष्टे—"ऊर्ध्वो वाजस्य सनितेति; वाजसनि मेवैनं तद्धनसां सनोति"—इति। अयं यूपः 'ऊर्ध्वः' सन् 'वाजस्य' अन्नस्य 'सनिता' दाता, 'तत्' तेन पादपाठेन 'एनं' यूपं 'वाजसनि मेव' 'सनोति' करोतीत्यर्थः। एतस्योपलक्षणत्वात् 'धनसां' सुवर्णादि-दातारं च करोति। चतुर्थपाद मनूद्य व्याचष्टे—"यदंजि-भिर्वाघद्भिर्विह्वयामह इति; छन्दांसि वा अञ्जयो वाघतस्तैरे-तद् देवान् यजमाना विह्वयन्ते, मम यज्ञ मागच्छत, मम यज्ञ मिति"-इति। 'यद्' यस्मात्कारणात् 'अंजिभिः' क्रत्वभिव्यक्ति-कारिभिः वाग्भिः, 'वाघद्भिः' क्रत्वनुष्ठानभारं वहद्भिः ऋत्विग्भिः सहिता यजमानाः 'विह्वयामहे' विशेषेण देवानाह्वयामः। तस्माद् यूप! त्व मूर्ध्वस्तिष्ठेति योज्यम्। अत्र 'अंजि'-'वाघत्'-शब्दाभ्या मृत्विग्रूप मापन्नाः छन्दोभिमानिनो देवा उच्यन्ते। एतत्पाद-

पाठेन छन्दोभिर्नानामन्त्रैः ऋत्विग्भिः पठ्यमानैस्तैस्तैर्यजमान-देवान् विशेषेणाह्वयन्ति। भो देवाः! ममैव यज्ञ मागच्छतेति एकः, एव मन्येऽपि; सर्वसङ्ग्रहार्थेयं वीप्सा। होतुरेतद्वेदनं प्रशंसति—"यदि ह वा अपि बहव इव यजन्ते ऽथ हास्य देवा यज्ञ मेव गच्छन्ति, यत्रैवं विद्वानेता मन्वाह"-इति। 'यद्यपि' एकस्मिन् काले 'बहवः' यजमानाः 'यजन्ते इव' यागं कुर्वन्त्येव, तथापि 'अस्य एव' विदुषः अन्नयुक्तस्यैव यजमानस्य यज्ञं प्रति 'देवाः आगच्छन्ति' ॥

पञ्चमीं ऋचं विधत्ते—"ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दहेति"-इति (सं०१.३६.१४.)। हे यूप! त्वम् ऊर्ध्वः सन् 'केतुना' प्रज्ञया 'नः' अस्मान् 'अंहसः' पापात् 'निपाहि' नितरां पालय। 'अत्रिणं' भक्षणशीलं राक्षसादि 'विश्वम्' अपि 'सन्दह' समूहीकृत्य भस्मीकुरु। तस्य पूर्वार्द्धस्य तात्पर्यं दर्शयति—"रक्षांसि वै पाप्मात्रिणो रक्षांसि पाप्मानं दहेत्येव तदाह"–इति। यानि 'रक्षांसि' सन्ति, यश्च 'पाप्मा' विद्यते, तत्सर्वम् 'अत्रिन्'-शब्देन विवक्षितम्। अत उभयदहनं मन्त्र-प्रार्थितं भवति। तृतीयपाद मनूद्य व्याचष्टे—"कृधी न ऊर्ध्वा-ञ्चरथाय जीवस इति यदाह, कृधी न ऊर्ध्वाञ्चरणाय जीवस इत्येव तदाह"-इति। 'च' शब्दः पूर्ववाक्येन समुच्चयार्थः। अपिच हे यूप! 'रथाय जीवसे' रथारोहणपूर्वकाय जीवनाय। यद्वा 'चरथाय'-इत्येक मेव पदम्; चरथं चरण माचारस्तस्मै; जीवनाय च 'नः' अस्मान् 'ऊर्ध्वान्' उच्छ्रितान् 'कृधि' कुरु। 'इति' अनेनपादेन मन्त्रो 'यदाह', 'तत्' तत्र चरणस्य विवक्षितत्वादस्म-दुक्त मेवार्थं मन्त्रः 'आह'। चरथायेतिशब्द माश्रित्य तात्पर्यं मभि-

धाय, जीवसे-इतिशब्द माश्रित्य तद्दर्शयति—"यदि ह वा अपि नीत इव यजमानो भवति, परि हैवैनं तत्संवत्सराय ददाति"-इति । 'यद्यपि यजमानः' मृत्युना 'नीतः इव भवति'; तथापि 'तत्' पादपाठेन मृत्युं 'परि'हृत्य 'एनं' 'संवत्सराय' आयुःप्रदाय कालात्मने 'ददाति'। चतुर्थपाद मनूद्य व्याचष्टे—"विदा देवेषु नो दुव इत्याशिष मेवाशास्ते"-इति । 'नः' अस्मदीयं 'दुवः' परिचरणं 'देवेषु' 'विदा' वेदय, कथयेत्यर्थः । अनेन स्वकर्म्मणां सफलत्वं प्रार्थयते ॥

षष्ठी मृचं विधत्ते—"जातो जायते सुदिनत्वे अह्ना मिति"-इति ( सं०३.८.५. ) । अयं यूपो 'जातः' नित्यप्रादुर्भूतोऽपि 'अह्नां' दिवसानां मध्ये 'सुदिनत्वे' यागयुक्तस्याह्नः सुदिनत्वाय जायते । एत मेवार्थं दर्शयति—"जातो ह्येष एतज्जायते"-इति । 'एतत्' एतेन पादपाठेन । द्वितीयपाद मनूद्य व्याचष्टे—"समर्य आ विदथे वर्द्धमान इति ; वर्द्धयन्त्येवैनं तत्"-इति । 'समर्ये' मनुष्यैर्यजमानादिभिर्युक्ते 'विदथे' यज्ञदेशे 'आ' समन्ताद् 'वर्द्धमानः' यूप आस्ते। 'तत्' पादपाठेन यूपं 'वर्द्धयन्त्येव'। तृतीयपाद मनूद्य व्याचष्टे—"पुनन्ति धीरा अपसो मनीषेति ; पुनन्त्येवैनं तद्"-इति । 'धीराः' धीमन्तो यजमानादयः 'अपसः' कर्म्मणो निमित्तभूतात् 'मनीषा' स्वकीयया मनीषया बुद्ध्या 'पुनन्ति' त मिमं यूपं शोधयन्ति । 'तद्' तेन तृतीयपादपाठेन । चतुर्थपाद मनूद्य व्याचष्टे—"देवया विप्र उदियर्त्ति वाच मिति ; देवेभ्य एवैनं तन्निवेदयति"-इति । 'विप्रः' ब्राह्मणः ऋत्विक्सङ्घः 'देवया' देवगामिनीं वाचं यूपस्तुतिं 'उदियर्त्ति' उद्गमयति, उच्चारयतीत्यर्थः । 'तत्' तेन चतुर्थपादपाठेन 'एनं' यूपं 'देवेभ्यः' कथयति ॥

सप्तम्या समापनं विधत्ते—"युवा सुवासाः परिवीत आगादिति ( सं० ३. ८. ४. ) उत्तमया परिदधाति"-इति। उक्तासृच्चु येय मन्तिमा, तयानुवचनं समापयेत्। यथा लोके 'सुवासाः' शोभनवस्त्रोपेतो 'युवा' यौवनयुक्तः पुरुषोऽग्रत आगच्छति, एव मयं यूपः परितो रशनया वेष्टितः 'आगात्' इह कर्म्मण्यायातः। यद्वा, युवशब्देन यूपस्य प्राणरूपत्वं विवक्ष्यते ; ता मेतां विवक्षां दर्शयति—"प्राणो वै युवा सुवासाः ; सोऽयं शरीरैः परिवृतः"-इति। कदाचिदपि जरारहितत्वात्प्राणस्य युवत्वम्। प्राणवेष्टनरूपत्वाच्छरीरावयवानां वस्त्ररूपत्वम्। ईदृशप्राणरूपत्वेन यूपः प्रशस्यते— द्वितीयपाद मनूद्य व्याचष्टे—"स उ श्रेयान् भवति जायमान इति ; श्रेयाञ्छ्रेयान् ह्येष एतद् भवति जायमानः"-इति। 'स उ' स एव यूपः जायमानः, कर्म्मणि निष्पाद्यमानः 'श्रेयान्' दिने दिने प्रशस्यतरो भवति। प्रथमतश्छेदनेन प्रशस्तत्वम्, तक्षणेन ततः प्रशस्तत्वम्, अंजनेन ततोऽपीत्येवंविधविवक्षया 'श्रेयान्-श्रेयान्'-इति वीप्सा प्रयुक्ता। उत्तरार्द्ध मनूद्य व्याचष्टे—"त धीरासः कवय उन्नयन्ति, स्वाध्यो मनसा देवयन्त इति ; ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयन्ति"-इति। 'तं' 'यूपं' धीराः बुद्धिमन्तः 'कवयः' अनूचानादयः 'उन्नयन्ति' स्तूयमानैर्गुणैरुच्छ्रितं कुर्वन्ति। कीदृशाः कवयः? 'स्वाध्यः' सुष्ठु 'आ' समन्तात्, ध्यायतीति स्वाधीः, तस्य बहुवचनम्, सुधिय इत्यर्थः। 'मनसा' स्वकीयेन 'देवयन्तः' देवानाम्रु मिच्छन्तः। उक्त एवार्थो 'ये वा अनूचानाः'-इत्यादिना स्पष्टीकृतः॥

अत्र प्रथमम् (२४२पृ०) "अञ्ज्मो यूप मनुब्रूहि"-इति प्रेषितो

यथा 'अजन्ति त्वाम्'-इति प्रथमा मन्वाह, तथा 'यूपायोच्छ्रीयमाणायानुब्रूहि'-इति ( आप० ७.१०.६. ) प्रेषितः, 'उच्छ्रयस्व'-इत्याद्याः ऋचः पश्चानुब्रूयात् ; तथा 'यूपाय परिवीयमाणायानुब्रूहि'-इति ( आप० ७.११.४. ) प्रेषितः, 'युवा सुवासाः'-इत्येतामनुब्रूयात् ॥

उक्तमन्त्रसङ्ख्यादिकं दर्शयति—"ता एताः सप्तान्वाह रूपसमृद्धा, एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं, यत्कर्म क्रियमाणं मृगभिवदति, तासां त्रिः प्रथमा मन्वाह त्रिरुत्तमां, ता एकादश सम्पद्यन्त, एकादशाक्षरा वै त्रिष्टुप्, त्रिष्टुबिन्द्रस्य वज्र इन्द्रायतनाभिरेवाभी राध्नोति य एवं वेद, त्रिः प्रथमां त्रिरुत्तमा मन्वाह ; यज्ञस्यैव तद् बर्सौ नह्यति, स्थेम्ने बलायाविस्रंसाय"-इति । त्रिष्टुभ इन्द्रस्य वज्रत्व मर्थवादान्तरे द्रष्टव्यम् ॥

अथ मीमांसा । द्वादशाध्यायस्य तृतीयपादे ( जै० सू० ३६—३८. अधि० १६. ) चिन्तितम्—

"उद्दिवंत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ।
विकल्पः स्मारकत्वैक्यात् प्रकारान्यत्वतोऽन्तिमः ॥

यूपस्योच्छ्रयणीकरण एष मन्त्रोऽध्वर्युणा पठ्यते *—"उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवी मुपरेण दृꣳह"-इति ( तै० सं० १.३.६.१. ); उच्छ्रीयमाणयूपाय प्रेषितेन होता अयं मन्त्रः पठ्यते †—"उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि"-इति ( ऋ० सं० ३.

---

* तथाचाध्वर्युवेदे एवं विहितः—'उद्दिवꣳ स्तभानान्तरिक्षम्पृणेत्याहैषां लोकानां विधृत्यै'-इति तै० सं० ६. ३. ४. । तथापस्तम्बोऽप्याह ( ७. १०. ७ ) ।

† तथाचात्र होतृवेदे विहितः—'उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा'-इति ( २४० पृ० ) । तथाश्वलायनोऽप्याह ( ३. १. ९. ) ।

८. ३.)। अनयोर्यूपोच्छ्रयणस्मरण मेक मेव कार्यम्। तस्माद् विकल्प इति चेत्, मैवम्;—करणमन्त्र उच्छ्रयणं करोमीत्येव स्मारयति; हौत्रस्तु क्रियमाण मुच्छ्रयण मनुवदन् अध्वर्यो: यूपोच्छ्रयणं कर्त्तव्य मित्येवंविधां स्मृतिं जनयति। तत्र स्वार्थस्योच्छ्रयणस्यैकत्वेऽपि कर्त्तव्य मित्यस्य करोमीत्यस्य च स्मृतिप्रकारस्यान्यत्वान्न कार्यैक्यम्; तेन समुच्चय:"-इति ॥

तत्रैवान्यच्चिन्तितम्—

"उच्छ्रयस्व समिद्धस्येत्यादीनां किं विकल्पना।
समुच्चयो वा कार्यैक्यादाद्योऽनुस्मृतयेऽन्तिम: ॥

'उच्छ्रयस्व'-इति (सं० ३. ८. ३.) एका, 'समिद्धस्य श्रयमाण:'-इति (सं० ३. ८. २.) द्वितीया, 'ऊर्द्ध्व ऊ षु ण:'-इति (सं० १. ३६. १३.) तृतीया, 'ऊर्द्ध्वो न: पाहि'-इति (सं० १. ३६. १४.) चतुर्थी; ता एता: क्रियमाण मनुवदन्त्यो होत्रा पठ्यन्ते *। तासां यूपोच्छ्रयणकर्त्ततास्मरणस्य कार्यस्यैकत्वात् विकल्प इति चेत्, मैवम्;—प्रथममन्त्रेणोत्पन्नाया: स्मृतेरुत्तरोत्तर मनुस्मृति: पृथक्प्रयोजनत्वात्। तस्मात् समुच्चय:"-इति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
द्वितीय: खण्ड: ॥ २ ॥

---

* तथानैव विहितत्वात् (२४० पृ०)। आश्वलायनीऽप्याहैव मेव (३. १. ९.)।

॥ अथ तृतीयः खण्डः ॥

तिष्ठेद्यूपा३ः अनुप्रहरे३दित्याहुस्तिष्ठेत् पशुकामस्य देवेभ्यो वै पशवो ऽन्नाद्यायालम्भाय नातिष्ठन्त तेऽपक्रम्य प्रतिवावदतो तिष्ठन्नास्मानालप्स्यध्वे नास्मानिति ततो वै देवा एतं यूपं वज्रमपश्यंस्त मेभ्य उदश्रयंस्तस्माद्बिभ्यत उपावर्तन्त त मेवाद्याप्युपावृत्तास्ततो वै देवेभ्यः पशवो ऽन्नाद्यायालम्भायातिष्ठन्त तिष्ठन्तेऽस्मै पशवो ऽन्नाद्यायालम्भाय य एवं वेद यस्य चैवंविदुषो यूपस्तिष्ठत्यनुप्रहरेत्स्वर्गकामस्य त मु ह स्मैतं पूर्वे ऽन्वेव प्रहरन्ति यजमानो वै यूपो यजमानः प्रस्तरो ऽग्निर्वै देवयोनिः सो ऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोक मेष्यतीत्यथ ये तेभ्यो ऽवर आसंस्त एतं स्वरु मपश्यन् यूपशकलं तं तस्मिन् कालेऽनुप्रहरेत्तत्र स काम उपाप्तो योऽनुप्रहरणे तत्र स काम उपाप्तो यः स्थाने सर्वाभ्यो वा एष देवताभ्य आत्मान मालभते यो दीक्षते ऽग्निः सर्वा देवताः सोमः सर्वा देवताः स यदग्नीषोमीयं पशु मालभते सर्वाभ्य एव तद्देवताभ्यो यजमान आत्मानं निष्क्रीणीते तदाहुर्द्विरूपो ऽग्नीषोमीयः

कर्त्तव्यो द्विदेवत्यो हीति तत्तन्नादृत्यं पीव इव कर्त्तव्यः पीवोरूपा वै पशवः कृशित इव खलु वै यजमानो भवति तद्यत्पीवा पशुर्भवति यजमान मेव तत् स्वेन मेधेन समर्द्धयति तदाहुर्नाग्नीषोमीयस्य पशोरश्नी-यात्पुरुषस्य वा एषो ऽश्नाति यो ऽग्नीषोमीयस्य पशोरश्नाति यजमानो ह्येतेनात्मानं निष्क्रीणीत इति तत्तन्नादृत्यं वार्त्तघ्नं वा एतद्धविर्यदग्नीषोमीयो-ऽग्नीषोमाभ्यां वा इन्द्रो वृत्र महंस्तावेन मब्रूतां मावाभ्यां वै वृत्र मवधीर्वरं ते वृणावहा इति वृणाथा मिति तावेत मेव वर मवृणातां श्वः सुत्यायां पशुं स एनयोरेषो ऽच्युतो वरवृतो ह्येनयोस्तस्मात्त-स्याशितव्यं चैव लीप्सितव्यं च ॥ ३ ॥

यूपाञ्जनादिसम्बद्धा ऋचो विधाय यूपविषयं किञ्चिद्विचार मवतारयति—"तिष्ठेद्यूपा३: अनुप्रहरे३दित्याहुः"-इति। कर्मणि समाप्ते सति पश्चादयं 'यूपः' किं स्वस्थाने 'तिष्ठेत्', किं वा तं यूपं वह्नौ 'प्रहरेत्' ? 'इति' एवं विचारं ब्रह्मवादिनः 'आहुः' विचारार्थं प्लुतिद्वयम् * ।

तत्र कामनाविशेषेण स्थितिपक्षं स्वीकरोति—"तिष्ठेत् पशु-कामस्य"-इति। तदेतदुपपादयितु माख्यायिका माह—"देवेभ्यो वै पशवो ऽन्नाद्यायालम्भाय नातिष्ठन्त; ते ऽपक्रम्य प्रतिवावदतो

* 'विचार्यमाणानाम्'-इति पा० ८. २. ९७।

तिष्ठन्नास्मानालप्स्यध्वे नास्मानिति ; ततो वै देवा एतं यूपं वज्र मपश्यंस्त मेभ्य उदश्रयंस्तस्माद्बिभ्यत उपावर्तन्त ; त मेवाद्याप्युपा-वृत्तास्ततो वै देवेभ्यः पशवो ऽन्नाद्यायालम्भायातिष्ठन्त"-इति । पुरा कदाचित् 'देवेभ्यः' देवानाम् 'अन्नाद्याय' पयोदध्याद्यन्न-भक्षणाय 'आलम्भाय' अग्नीषोमीयवायव्यादिपश्वालम्भनकर्म्मणि च 'पशवः' 'नातिष्ठन्त' नाङ्गीकृतवन्तः । अनङ्गीकृत्य 'ते' पशवो 'देवेभ्यः अपक्रम्य' 'प्रतिवावदतः' प्रत्युत्तरं पुनःपुनर्वदन्तो दूरे 'अतिष्ठन्' । किं तदुत्तर मिति, तदुच्यते—हे देवाः ! यूयं कदा-चिदपि 'न अस्मान् आलप्स्यध्वे' अस्मान् पशूनालब्धुं कर्म्मणि विशसितुं समर्था न भविष्यथ । पुनरपि 'नास्मान्'-इति वाक्या-वृत्तिरादरार्था । सर्वथैवास्मदीयालम्भो न घटिष्यते * । तत्प्रत्युत्तरं श्रुत्वा देवाः पशुभीतिहेतुम् 'एतं' 'यूपं' वज्ररूपम् 'अपश्यन्' । यूपस्य वज्रत्वश्रुतिः पूर्व मेवोदाहृतम् (२२२पृ०) । 'तं' यूपम् 'एभ्यः' पश्वर्थम् 'उदश्रयन्' ऊर्ध्व मवस्थापयन् । तस्मात् उच्छ्रितायूपाद् 'बिभ्यतः' पशवो देवान् 'उपावर्त्तन्त' । यस्मादेवं पूर्वं वृत्तम्, तस्मादिदानी मपि यागेषु त मेव यूप मुद्दिश्य पशव उपाकृता दृश्यन्ते । ततो देवानां दध्याद्यन्नाद्याय कर्म्मस्वालम्भाय च पशवोऽङ्गीकृतवन्तः । एतद्वेदनं यूपावस्थानं च प्रशंसति—"तिष्ठन्ते ऽस्मै पशवो ऽन्नाद्यायालम्भाय य एवं वेद, यस्य चैवंवि-दुषो यूपस्तिष्ठति"-इति । 'यस्य' यजमानस्येत्यर्थः ॥

अथ फलविशेषाय प्रहरणपक्ष मुपादत्ते—"अनुप्रहरेत् स्वर्ग-कामस्य"-इति । कर्म्मसमाप्ति मनु तं यूप मग्नौ प्रक्षिपेत् । तदेतदुपपादयति—"त मु ह स्मैतं पूर्वे ऽन्वेव प्रहरन्ति"-इति ।

---

* 'घटते' वा ।

'पूर्वे' यजमानाः स्वर्गकामाः कर्म्मसमाप्तिम् 'अनु' 'त मेतं' यूपं 'प्रहरन्ति' एव। तत्रैव युक्त्यन्तर माह—"यजमानो वै यूपो, यजमानः प्रस्तरो, ऽग्निर्वै देवयोनिः, सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोक मेष्यति"-इति। योऽयं यूपोऽस्ति, यश्च प्रस्तराख्यो दर्भमुष्टिः, तयोर्यजमानवत् कर्म्मणि मुख्यत्वाद्यजमानत्वोपचारः। अग्निश्च देवानां योनिः कारणम्; अग्निसाध्यकर्म्मणो देवजन्महेतुत्वात्। एवं सतिः 'सः' यजमानो 'देवयोन्याः' अग्नेः, तस्मिन् हुताद् यूपादाहुतिभिश्च 'सम्भूय' देव-जन्म प्राप्य सुवर्णमयशरीरः ऊर्द्ध्वाभिमुखः 'स्वर्गं लोकं' प्राप्स्यति। तस्मात् स्वर्गकामस्य यूपप्रहरणं युक्तम्॥

नन्विदानीन्तनैः स्वर्गकामैः क्रतोर्यूपो न प्रक्षिप्यते इत्याशङ्क्य तेषां प्रतिनिधिं दर्शयति—"अथ ये तेभ्यो ऽवर आसंस्त एतं स्वरु मपश्यन् यूपशकलं; तं तस्मिन् कालेऽनुप्रहरेत्; तत्र स काम उपाप्तो योऽनुप्रहरणे, तत्र स काम उपाप्तो यः स्थाने"-इति। पूर्व-सिद्धेभ्यो ऽनुष्ठातृभ्य ऋषिभ्यः 'अवरे' 'ये' केचिदर्वाचीना इदानी-न्तना यजमानाः 'आसन्', 'ते' सर्वे यूपस्य प्रतिनिधित्वेन 'यूपशकल मेतं' स्वरुनामकं स्वल्पं काष्ठखण्डम् 'अपश्यन्'। तस्मादिदानीन्तनो यजमानः 'तस्मिन्' यूपप्रहरणकाले 'तं' 'स्वरुम्' * 'अनुप्रहरेत्'। एतच्च शाखान्तरे श्रूयते—"देवा वै सᳪस्थिते सोमे प्र स्रुचो हरन् प्र यूपं ते ऽमन्यन्त यज्ञवेशसं वा इदं कुर्म्म इति,—ते प्रस्तरᳪ स्रुचां निष्क्रयण मपश्यन्त्स्वरुं यूपस्य सᳪस्थिते सोमे प्रस्तरᳪ हरति जुहोति स्वरु मयज्ञवेशसाय"-इति (तै० सं० ६. ३. ४. ९.)।

* 'अथ यस्मात् स्वरुर्नाम? एतस्माद्वै—एषोऽपच्छिद्यते, तस्मैतत् स मेवारुर्भवति, तस्मात् स्वरुर्नाम'-इति शत० ब्रा० ३. ७. १. २४।

तथा सति यूपप्रहरणे यः कामः उक्तः, 'स कामः' 'तत्र' स्वरुप्रहरणे प्राप्तो भवतीति ; यूपप्रतिनिधित्वेन स्वरोः प्रक्षिप्तत्वात् । यश्च यूपावस्थाने पशुप्राप्तिलक्षणः काम उक्तः, सोऽपि 'तत्र' प्रक्षेपणपक्षे प्राप्तो भवति ; यूपस्य स्वरुरूपेणावस्थितत्वात् । तदेतत् स्वरुप्रहरण मापस्तम्बेन दर्शितम्—"जुह्वां स्वरु मवधायानूयाजान्ते जुहोति द्यां ते धूमो गच्छतु"-इति ( ७. २७. ४. ) ॥

अथाग्नीषोमीयपश्वालम्भं विधत्ते—"सर्वाभ्यो वा एष देवताभ्य आत्मान मालभते, यो दीक्षते, ऽग्निः सर्वा देवताः, सोमः सर्वा देवताः ; स यदग्नीषोमीयं पशु मालभते, सर्वाभ्य एव तद्देवताभ्यो यजमान आत्मानं निष्क्रीणीते"-इति । 'यः' यजमानो 'दीक्षते' सोमयागे दीक्षां प्राप्नोति, स यजमानः सर्वदेवतार्थम् 'आत्मानम्' पशुत्वेनालब्धु मुपक्रमते । अत्र च योऽग्निर्यश्च सोमः, तावुभौ सर्वदेवतात्मकौ ; अग्नेराहुत्यधिकरणत्वेन, सोमस्य च होमद्रव्यत्वेन च, सर्वोपकारित्वात् । तथासत्यग्नीषोमदेवताकपश्वालम्भनेन सर्वदेवतानां सकाशाद् 'यजमानः' स्वात्मानं निष्क्रीणीतवान् भवति । तस्मादग्नीषोमीयः पशुरालब्धव्यः । सोऽय मर्थः श्रुत्यन्तरे सङ्गृहीतः—"पुरा खलु वावैष मेधायात्मान मारभ्य चरति, यो दीक्षितो यदग्नीषोमीयं पशु मालभत आत्मनिष्क्रयण मेवास्य सः"-इति ( तै० सं० ६. १. ११. ६. ) ।

अथ पूर्वोत्तरपक्षाभ्यां पशुशरीरस्य रूपविशेषं निश्चिनोति—"तदाहुर्द्विरूपो ऽग्नीषोमीयः कर्त्तव्यो, द्विदेवत्यो हीति ; तत्तन्नादृत्यं ; पीव इव कर्त्तव्यः ; पीवोरूपा वै पशवः, कृशित इव खलु वै यजमानो भवति ; तद्यत्पीवा पशुर्भवति, यजमान मेव तत् स्वेन मेधेन समर्द्धयति"-इति । 'तत्' तत्राग्नीषोमीयपशौ ब्रह्मवादिनः

पूर्वपक्षम् 'आहुः'— यस्मादस्य पशोरग्निश्च सोमश्चेत्येते द्वे देवते, तस्माद् तदनुसारेण यः पशुः 'द्विरूपः' शुक्लकृष्णादिवर्णद्वयोपेतः 'कर्त्तव्यः' इति। तदेतद्ब्रह्मवादिनो मत मनादरणीयम्। किन्तु 'पीव इव' शरीरपुष्ट्या स्थूल एव पशुः 'कर्त्तव्यः'; लोके हि 'पशवः पीवोरूपा वै' मेदवृद्धा वै प्रायेण स्थूलरूपा एव भवन्ति। 'यजमानः' तु पश्वनुष्ठानदिने 'कृशित: इव' उपवसद्दिनेषु स्वल्पक्षीराहारेण तदानीं कृश एव भवति। 'तत्' तथा सति यद्ययं 'पशुः' स्थूलो भवेत्, तेन पशुस्थौल्येन कृशशरीरं 'यजमान मेव' 'स्वेन मेधेन' स्वकीययज्ञसाधनरूपेण समृद्धं करोति॥

पुनरपि पूर्वोत्तरपक्षाभ्यां पशुलक्षणस्य हविषः शेषभक्षण मुपपादयितुं पूर्वपक्ष माह—"तदाहुर्नाग्नीषोमीयस्य पशोरश्नीयात्पुरुषस्य वा एषो ऽश्नाति यो ऽग्नीषोमीयस्य पशोरश्नाति, यजमानो ह्येतेनात्मानं निष्क्रीणीत इति"-इति। 'तत्' तत्र पशौ पूर्वपक्षिणः 'आहुः'— 'अग्नीषोमीयस्य पशोः' मांसं 'नाश्नीयात्'। यस्तद् भक्षयति, असौ 'पुरुषस्य' मांस मेव भक्षयति। यस्माद् 'यजमानः' 'एतेन' पशुना स्वात्मानं 'निष्क्रीणीते', तस्मात् तत्स्वरूपोऽयं पशुः। 'इति'-शब्दः पूर्वपक्षसमाप्त्यर्थः। तं निराकृत्य सिद्धान्त माह—"तत्तन्नादृत्यं; वार्त्रघ्नं वा एतद्धविर्यदग्नीषोमीयो,ऽग्नीषोमाभ्यां वा इन्द्रो वृत्र मह̐स्तावेन मब्रूताम्,आवाभ्यां वै वृत्र मवधीर्वरं ते वृणावहा इति। वृणाथा मिति; तावेत मेव वर मवृणातां,—श्वः सुत्यायां पशुं स एनयोरेषो ऽच्युतो वरवृतो ह्येनयोस्तस्मात्तस्याशितव्यं चैव लीप्सितव्यं च"-इति। 'तत्' पूर्वपक्षिभिरुक्त मनादरणीयम्। यः 'अग्नीषोमीयः' पशुरस्ति, 'एतद्वार्त्रघ्नं' वृत्रहत्यानिमित्तं 'हविः'। कथ मेतदिति, तदुच्यते

—'अग्नीषोमाभ्यां' निमित्तभूताभ्याम् 'इन्द्रो वृत्रं हतवान्'। अस्यार्थस्य श्रुत्यन्तरप्रसिद्धिद्योतनार्थो 'वै'-शब्दः। सोऽय मर्थः श्रुत्यन्तरे "त्वष्टा हतपुत्रः"-इत्यनुवाके (तै०सं०२.४.१२.१.) प्रपञ्चितः। वृत्रे हते सतीन्द्रं प्रत्यग्नीषोमाविवम् 'अब्रूताम्'—हे इन्द्र! आवान्निमित्तं वृत्रं हतवानसि, अतो वृत्रवधस्य निमित्तभूतौ आवां तव सकाशाद् 'वरं' प्रार्थयावहे। इत्युक्त्वा वरं प्रार्थितवन्तौ,—'श्वः सुत्यायां' परेद्युः सोमाभिषवे प्रसक्ते सति, पूर्वदिने पशुरूपं वरं वृतवन्तौ। 'स एषः' पशुः 'एनयोः' अग्नीषोमयोः 'अचुग्रतः' अवश्यं कर्त्तव्यः; वरेण वृतत्वात्। 'तस्मात्' एवं प्रशस्तत्वात् 'तस्य' पशोर्मांसम् 'अशितव्यं चैव' सर्वदा भक्षितव्य मेव। न केवलं भक्षणं, किन्तु 'लोप्सितव्यं च' भक्षणात् पूर्वं मादरेण महता लब्धु मेष्टव्य मपि। तावेतौ पूर्वोत्तरपक्षौ शाखान्तरे सङ्गृहीतौ— "तस्मात्तस्य नाश्यं पुरुषनिष्क्रयण इव ह्यथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्र महन्निति; यदग्नीषोमीयं पशु मालभते, वार्त्रघ्न एवास्य स तस्माद्वाश्यम्"-इति (तै० सं०६.१.११.६.)॥

अत्र मीमांसा। प्रथमाध्याये चतुर्थपादे (जै० सू० २३. अधि० १२.) चिन्तितम्—

"यजमानः प्रस्तरोऽत्र गुणो वा नाम वा श्रुतिः?
सामानाधिकरण्येन स्यादेकस्यान्यनामता॥
गुणो वा यजमानोऽस्तु कार्ये प्रस्तरवत्तिते।
अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः॥
सर्वभेदादनामत्वं गुणश्चेत्प्रक्रियेत सः।
यागसाधनताद्वारा प्रधानप्रस्तरस्तुतिः॥

इद माम्नायते—"यजमानः प्रस्तरः"-इति (२५१पृ०१०पं०),

तत्र यजमानस्य प्रस्तरशब्दो नामधेयम्; यागिनेत्यादाविव सामानाधिकरण्यात्। इत्येकः पक्षः। गुणविधिरित्यपरः। तत्रापि यजमानकार्ये जपादौ प्रस्तरस्य अचेतनस्य सामर्थ्याभावात्, प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य अशक्तत्वात्, यजमानरूपो गुणोऽभिधीयते *। एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति। न चात्र पूर्वन्यायेन स्तुतिः सम्भवति; अष्टाकपालद्वादशकपालयोरिवांशांशित्वाभावात्। 'वायुर्वै क्षेपिष्ठा देवता ऊर्जोऽवरुध्यै (तै० सं० २. १. १. १.)"-इतिवत् स्तुतिरिति चेत्, न; प्रस्तरादिधर्म्मवत् कस्यचिदुत्कर्षस्याप्रतीतेः। तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते, ब्रूमः,—गोमहिषयोरिवात्यन्तप्रसिद्धत्वान्न नामधेयत्वं युक्तम्; गुणपक्षे, अग्नौ प्रहरणस्य प्रस्तरविषयत्वात्, यजमाने प्रहृते सति कर्म्मलोपः स्यात्। तस्मात् प्रस्तरशब्दो यजमानशब्देन स्तूयते। स यथा सिंहो देवदत्त इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंह इत्याख्यायते, तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते। एवं "यजमानो यूपो यजमानः प्रस्तरः"-इत्यादिषु (२५१ पृ०) द्रष्टव्यम्॥

चतुर्थाध्यायस्य द्वितीयपादे (जै० सू० १—७. † अधि० १.) चिन्तितम्—

"स्वरुं कुरुत इत्यत्र स्वरुर्यूपात् पृथक् क्रियाम्।
प्रयोजयेन्न वाद्योऽस्तु विशिष्टस्य विधानतः॥

---

* 'विधीयते' ख, ग, घ।

† तेषाञ्च सूत्राणां द्विर्व्याख्यानं मुक्तं शवरस्वामिना। तदाह च तन्त्ररत्नकारः—'व्याख्यानान्तरं तु विस्तरीकृतस्य संक्षेपमाचार्थं कृतं भाष्यकारेण'—इति।

आद्यस्य यूपखण्डस्य स्वरौ तस्य विशेषणे ।
विहिते लाघवं तस्मादनुनिष्पन्न एव सः ॥

अग्नीषोमीये पशौ श्रूयते—"यूपस्य स्वरुं करोति"-इति * । तत्र यूपो यथा छेदनस्य प्रयोजकः, तथा स्वरुः छेदनं प्रयोजयति । कुतः ? करोतीत्यनेन विशिष्टविधिप्रतीतेः । करोतिधातोर्भावना मुख्योऽर्थः । तत्र यूपशब्दोपलक्षितः खादिरादिवृक्षः करणम् ; छेदनादिरितिकर्त्तव्यता ; छिन्नेन वृक्षेण स्वरुरुत्पादनीय इति विशिष्टविधिः । उत्पन्नस्य स्वरोर्विनियोग एव माम्नातः—"स्वरुणा पशु मनक्ति"-इति (तै० सं० ५.५.७.१ †) । तस्मात् स्वरुः छेदनस्य प्रयोजक इति प्राप्ते, ब्रूमः ; —वक्ष्यमाणस्य यूपस्य यः प्रथमः पतितः शकलः, सः स्वरुरिति स्वरुत्वनाममात्रविधि-लाघवात् स्वरुर्न छेदनस्य प्रयोजकः, किन्तु यूपप्रयुक्ते छेदने स्वय मनुनिष्पद्यते"-इति ॥ ३ ॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
तृतीयः खण्डः ॥ ३ ॥

---

* शत० ब्रा० ३. ७. १. २४ । कातश्रा० श्रौ० १. ७. १७ ।

† 'स्वरु मन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथा मिति शिरसि । न वा स्वधितिना स्वरुणैव'-इति आप० श्रौ० ७. १४. ११, १२ ।

॥ अथ चतुर्थः खण्डः ॥

आप्रीभिराप्रीणाति तेजो वै ब्रह्मवर्चस माप्रियस्तेजसैवैनं तद् ब्रह्मवर्चसेन समर्द्धयति समिधो यजति प्राणा वै समिधः प्राणा हीदं सर्वं समिन्धते यदिदं किञ्च प्राणानेव तत् प्रीणाति प्राणान् यजमाने दधाति तनूनपातं यजति प्राणो वै तनूनपात्स हि तन्वः पाति प्राण मेव तत्प्रीणाति प्राणं यजमाने दधाति नराशंसं यजति प्रजा वै नरो वाक् शंसः प्रजां चैव तद्वाचं च प्रीणाति प्रजां च वाचं च यजमाने दधातीळो यजत्यन्नं वा इळो ऽन्न मेव तत्प्रीणात्यन्नं यजमाने दधाति बर्हिर्यजति पशवो वै बर्हिः पशूनेव तत्प्रीणाति पशून्यजमाने दधाति दुरो यजति वृष्टिर्वै दुरो वृष्टि मेव तत्प्रीणाति वृष्टि मन्नाद्यं यजमाने दधात्युषासानक्ता यजत्यहोरात्रे वा उषासानक्ताहोरात्रे एव तत्प्रीणात्यहोरात्रयोर्यजमानं दधाति दैव्या होतारा यजति प्राणापानौ वै दैव्या होतारा प्राणापानावेव तत्प्रीणाति प्राणापानौ यजमाने दधाति तिस्रो देवीर्यजति प्राणो वा अपानो व्यानस्तिस्रो देव्यस्ता एव तत् प्रीणाति ता यजमाने दधाति त्वष्टारं यजति वाग्वै

त्वष्टा वाग्घीदं सर्वं ताष्टीव वाच मेव तत्प्रीणाति वाचं यजमाने दधाति वनस्पतिं यजति प्राणो वै वनस्पतिः प्राण मेव तत्प्रीणाति प्राणं यजमाने दधाति स्वाहाकृतीर्यजति प्रतिष्ठा वै स्वाहाकृतयः प्रतिष्ठाया मेव तद्यज्ञ मन्ततः प्रतिष्ठापयति ताभिर्यथऋष्याप्रीणीयाद्यथऋष्याप्रीणाति यजमान मेव तद्बन्धुताया नोत्सृजति ॥ ४ ॥

अग्नीषोमीयं पशुं विधाय तत्रैकादश प्रयाजान् विधत्ते—"आप्रीभिराप्रीणाति"-इति । तेषां प्रयाजादीनां याज्याः प्रीतिहेतुत्वादाप्रीशब्देनोच्यन्ते । एतच्च शाखान्तरे श्रुतम्—"आप्रीभिराप्नुवन् तदाप्रीणा माप्रीत्वम्"-इति * । ताभिराप्रीसञ्ज्ञकाभिः प्रयाजादिभिः 'आप्रीणाति' देवताः, सर्वत्र प्रीणयेत् ; तत्प्रीत्यर्थं याज्याः पठेदित्यर्थः । ताः प्रशंसति—"तेजो वै ब्रह्मवर्चस माप्रियस्तेजसैवैनं तद् ब्रह्मवर्चसेन समर्द्धयति"-इति । आज्य-

---

* अत एवोक्तं यास्केन—"अथात आप्रियः । आप्रियः कस्मात् ? आप्नोतेः, प्रीणातेर्वा 'आप्रीभिराप्रीणाति'-इति च ब्राह्मणम्"-इति निरु० ८. २. १ । इत आरभ्य अध्यायान्तं यावदाप्रीविचाराः । 'यज्ञो वै प्रजापतिः०—०स एता आप्रीरपश्यत्, ताभिर्वै मुखत आत्मान माप्रीणीत ; यदेता आप्रियो भवन्ति'-इत्यादि तै० सं० ४. ७. ८. ३ । 'अथाप्रीभिश्चरन्ति ०—०यो दीक्षते, तस्य रिरिचान इव आत्मा भवति ; त मेताभिराप्रीभिराप्याययन्ति ; तद्यदाप्याययन्ति, तस्मादाप्रियो नाम । तस्मादाप्रीभिश्चरन्ति । ते वा एत एकादश प्रयाजा भवन्ति'-इत्यादि च शत० ब्रा० ३. ८. १ ; पुनरश्वमेधप्रकरणे 'तम् ( पशुम् ) एताभिराप्रीभिराप्रीणात्'-इत्याद्यपि ११. ८. ३. ५. ।

द्रव्यकत्वात्तेजस्त्वम्, शास्त्रीयसंस्कारसाधनत्वात् ब्रह्मवर्चसत्वम्। तेन याज्यापाठेन यजमानस्य तदुभयं समृद्धं भवति ॥

प्रथमं प्रयाजं विधत्ते—"समिधो यजति"-इति। समिन्नामकदेवतात्वात् यागोऽपि समिधइति-शब्देनोच्यते। समिन्नामकयागं कुर्यादित्यर्थः यद्वा, हौत्रप्रकरणत्वात् समिद्देवताविषयां याज्यां पठेदित्यर्थः। तत्प्रकारं बोधायन आह—"यदा जानाति समिद्धः प्रेष्येति तं मैत्रावरुणः प्रेष्यति होता यक्षदग्निं समिधा सुषमिधा समिद्ध मित्यथ होता यजति समिद्धो अद्य मनुषो दुरोणे ताविव मेव व्यतिषङ्ग मुत्तरेण मैत्रावरुणः प्रेष्यति, उत्तरेणोत्तरेण होता यजति"-इति। अस्याय मर्थः—"समिद्धः प्रेष्य"-इति मन्त्रेणाध्वर्युः मैत्रावरुणं प्रेष्यति। तदानी मयं मैत्रावरुणः प्रैषसूक्तेन "होता यक्षदग्निं समिधा"-इत्यनेन (तै०ब्रा०३.६.२.) प्रथममन्त्रेण होतारं प्रेष्यति। होताप्याप्रीसूक्ते* "समिद्धो अद्य"-इत्येतां (सं० १. १८८. १.) प्रथमयाज्यां पठति। एव मुत्तरत्राध्वर्युः मैत्रावरुणहोतारौ परस्परसन्निधौ स्वस्वमन्त्रयागं कुर्याता मिति तत्र प्रथमा याज्या इति ॥ ॥ अथ समिद्-देवतां प्रशंसति—"प्राणा वै समिधः, प्राणा हीदं सर्वं समिन्धते यदिदं किञ्च; प्राणानेव तत् प्रीणाति, प्राणान् यजमाने दधाति"-इति। 'समिधः' समिन्धनस्य सम्यक्-प्रकाशहेतवः प्रथमप्रयाजदेवताः। प्राणस्वरूपदेवताया एकत्वेऽपि समिध इति बहुवचनं पूजार्थम्। जगति 'यत्किञ्चिदिदं' शरीरजात मस्ति, तत् 'सर्वं' 'प्राणाः' 'समि-न्धते' प्रकाशयन्ति; अतस्तेषां समिद्रूपत्वम्। 'तत्' तेन

* समिद्धो अद्य इत्येकादशर्चं नवमं (सं० १. २४. ९ = १८८.) सूक्त मागत्यम्। पशावगत्याना मेकादशप्रयाजरूप मिद माप्रीसूक्तम्।

याज्यापाठेन 'प्राणानिव' तोषयति, तत् 'यजमाने' अपि 'प्राणान्' सम्पादयति ॥

अत्र प्रयाजानां क्रमेण,— समिधः, तनूनपात्, नराशंसः, इळः, बर्हिः, दुरः, उषासानक्ता, दैव्याहोतारा, तिस्रोदेव्यः, त्वष्टा, वनस्पतिः, स्वाहाकृतयः,—इत्येता देवताः वसिष्ठशुनकात्रिवध्र्यश्वराजन्यानां नराशंसो द्वितीयः, अन्येषां तनूनपाद् द्वितीयः ॥

तद्देवताविषयां द्वितीयां याज्यां विधत्ते—"तनूनपातं यजति ; प्राणो वै तनूनपात् ; स हि तन्वः पाति, प्राण मेव तत्प्रीणाति,— प्राणं यजमाने दधाति"-इति । अत्राध्वर्युप्रैषप्रकार मापस्तम्ब आह—"समिद्भ्यः प्रेष्येति प्रथमं सम्प्रेष्यति । प्रेष प्रेष्यतीतरान्"- इति ( श्रौ० ७. १४. ७ ) । अतो ऽस्माद् द्वितीयपर्याये प्रेषेति-मन्त्रेणाध्वर्युर्मैत्रावरुणं प्रेषति । स च मैत्रावरुणः प्रैषसूक्तगतेन "होता यक्षत्तनूनपातम्"-इत्यनेन द्वितीयमन्त्रेण होतारं प्रेषति । स तु होता आप्रीसूक्तगतां "तनूनपात्"-इत्येतां द्वितीयां याज्यां पठेत् । तनूं शरीरं न पातयतीति तनूनपात् । शरीरे वसति प्राणे न पतति, किन्तु प्राणः शरीराणि चालयति ; अतस्तनूनपाद्देवस्य प्राणरूपत्वम् ॥

द्वितीयप्रयाजयाज्यान्तरं विधत्ते—"नराशंसं यजति ; प्रजा वै नरो, वाक् शंसः, प्रजां चैव तद्वाचं च प्रीणाति,— प्रजां च वाचं च यजमाने दधाति"-इति । अध्वर्युप्रेषितो मैत्रावरुणो "होता यक्षन्नराशꣳसम्"-इति मन्त्रेण होतारं प्रेष्यति । होता "नराशꣳसस्य"-इति याज्यां पठेत् । नरान् मनुष्यान् शंसति वाचा स्तौतीति नराशंसः । तथा सति प्रजाया नरशब्द-

वाच्यत्वाद्वाचश्च शंसनहेतुत्वादुभयप्रीतिः ; यजमानेऽपि तदुभय-सम्पत्तिः ॥ अनयोरुभयोर्मन्त्रयोरधिकारिभेदेन व्यवस्था माप-स्तम्ब आह—"नराशꣳसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् ; तनूनपादितरेषां गोत्राणाम्"-इति ॥

तृतीयां प्रयाजयाज्यां विधत्ते—"इळो यजत्यन्नं वा इळो ऽन्न मेव तत्प्रीणाति,— अन्नं यजमाने दधाति"-इति। "होता-यक्षदग्नि मिळ ईळितः"-इति प्रेषितो होता "आ जुह्वानः"-इत्येतां याज्यां पठेत्। इष्यत इति व्युत्पत्त्यान्न मिट्शब्द-वाच्यम् ॥

चतुर्थीं विधत्ते— "बर्हिर्यजति ; पशवो वै बर्हिः, पशूनेव तत्प्रीणाति,—पशून्यजमाने दधाति"-इति । "होता यक्षद्बर्हिः सुष्टरीम्"-इतिमन्त्रेण प्रेषितो होता "प्राचीनं बर्हिः"-इत्येतां याज्यां पठेत्। बृंहणस्य पोषणस्य हेतुर्बर्हिः ; पशवश्च क्षीरादि-दानेन तादृशत्वाद्बर्हिःस्वरूपाः ॥

अथ पञ्चमीं विधत्ते—"दुरो यजति ; वृष्टिर्वै दुरो, वृष्टि मेव तत् प्रीणाति,—वृष्टि मन्नाद्यं यजमाने दधाति"-इति । "होता यक्षद् दुर ऋष्वा"-इत्यादिना मन्त्रेण प्रेषितो होता "व्यचस्वती-रुर्विया"-इत्येतां याज्यां पठेत्। 'दुरः' द्वारदेवताः ; वृष्टिश्च जीवनद्वारा ॥

षष्ठीं विधत्ते—"उषासानक्ता यजत्यहोरात्रे वा उषासा-नक्ताहोरात्रे एव तत्प्रीणात्यहोरात्रयोर्यजमानं दधाति"-इति । "होता यक्षदुषासानक्ता"-इतिमन्त्रेण प्रेषितो होता "आ सुष्व-यन्ति"-इत्यादिकां याज्यां पठेत्। उषः-शब्दस्य नक्त-शब्दस्य चाहोरात्रविषयत्वं लोकप्रसिद्धम् ॥

सप्तमीं विधत्ते—"दैव्या होतारा यजति; प्राणापानौ वै दैव्या होतारा, प्राणापानावेव तत्प्रीणाति,—प्राणापानौ यजमाने दधाति"-इति। "होता यक्षद् दैव्या होतारा"-इतिमन्त्रेण प्रेषितो होता "दैव्या होतारा प्रथमा"-इति याज्यां पठेत् ॥

अष्टमीं विधत्ते—"तिस्रो देवीर्यजति; प्राणो वा अपानो व्यानस्तिस्रो देव्यस्ता एव तत्प्रीणाति,—ता यजमाने दधाति"-इति। "होता यक्षत् तिस्रः"-इत्यादिमन्त्रेण प्रेषितो होता "आ नो यज्ञम्"-इति याज्यां पठेत्। इळा-सरस्वती-भारतीति-शब्दैरभिधेया देव्यो यथा तिस्रः, एवं प्राणापानव्याना अपि; सङ्ख्यासाम्यात् तिस्रो देव्यः ॥

नवमीं विधत्ते—"त्वष्टारं यजति; वाग्वै त्वष्टा, वाग्घीदं सर्वं ताष्टीव वाच मेव तत्प्रीणाति,—वाचं यजमाने दधाति"-इति। "होता यक्षत् त्वष्टारम्"-इतिमन्त्रेण प्रेषितो होता "य इमे द्यावापृथिवी"-इति याज्यां पठेत्। "तक्षू त्वक्षू तनूकरणे"-इत्यत्र त्वक्षीत्यादिधातोरुत्पन्नः शब्दस्त्वष्टारं देवता माचष्टे। वाचश्च तक्षणहेतुत्वात् त्वष्टृत्वम्। तदेव वाग्घीत्यनेन स्पष्टीक्रियते। यस्मात् 'इदं सर्वं' जगद् 'वाग्' 'ताष्टीव' तक्षतीव; यथा तक्षणेन काष्ठं प्रौढ़ मपि सूक्ष्मं भवति, एवं महान्तोऽपि पर्वतादयोऽल्पेनैव शब्देन गृह्यन्ते; तदेतज्जगत्तक्षण मिव भवति ॥

दशमीं विधत्ते—"वनस्पतिं यजति; प्राणो वै वनस्पतिः, प्राण मेव तत्प्रीणाति,—प्राणं यजमाने दधाति"-इति। "होता यक्षद्वनस्पतिम्"-इत्यादिमन्त्रेण प्रेषितो होता "उपावसृजत्"-इति याज्यां पठेत्। वनस्पतिजन्यफलानां प्राणस्थितिहेतुत्वाद् वनस्पतेः प्राणत्वम् ॥

एकादशीं विधत्ते—"स्वाहाकृतीर्यजति ; प्रतिष्ठा वै स्वाहाकृतयः,—प्रतिष्ठाया मेव तद्यज्ञ मन्ततः प्रतिष्ठापयति"-इति। "होता यक्षदग्निं स्वाहा"-इतिमन्त्रेण प्रेषितो होता "सद्यो जातः"-इति याज्यां पठेत्। स्वाहाकृतीना माहुतिसमाप्तिहेतुत्वात् प्रतिष्ठात्वम्। 'तत्' मन्त्रपाठेनैनं 'यज्ञम्' 'अन्ततः' समाप्य संवत्सरे 'प्रतिष्ठया मेव' वैकल्यराहित्यरूपायां 'प्रतिष्ठापयति'* ॥

दशतो बहुविधाना माप्रीसूक्ताना माम्नातत्वाद्वैकल्यः स्यादित्याशङ्क्याधिकारिभेदेन व्यवस्थां विधत्ते—"ताभिर्यथऋष्याप्रीणीयाद्यथऋष्याप्रीणाति †,—यजमान मेव तद्बन्धुताया नोत्सृजति"-इति। 'नोत्सृजति' न निःसारयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
चतुर्थः खण्डः ॥ ४ ॥

---

* तैत्तिरीयब्राह्मणे तृतीयकाण्डस्य द्वितीयानुवाके 'होता यक्षदग्निम्'-इत्यादयः एकादशप्रयाजविषया द्वादश मैत्रावरुणप्रैषमन्त्राः, तृतीये 'समिद्धो अद्य मनुषः'-इत्याद्याः द्वादश होतुर्याज्याश्च एतद्ब्राह्मणविधिक्रमत एव श्रुताः। माध्यन्दिन्यां च तथा आप्रियः २१. १२—२२, प्रयाजप्रैषमन्त्राश्च २१. २९—४०. द्रष्टव्याः। 'तान्येकादशाप्रीसूक्तानि'-इत्यादि नैरुक्तम्, दुर्गाचार्यकृतं तद्व्याख्यानं चेहालोच्यम् ( ८. २. ७. )।

† 'एकादश प्रयाजाः। तेषां प्रैषाः। प्रथमं प्रैषसूक्त मुक्तं द्वितीये। अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति प्रैषैर्होतारम्। होता यजत्याप्रीभिः प्रैषलिङ्गाभिः। समिद्धो अग्निरिति शुनकानां, जुषस्व नः समिध मिति वसिष्ठानां, समिद्धो अद्येति सर्वेषाम्। यथऋषि वा।

## ॥ अथ पञ्चमः खण्डः ॥

पर्यग्नये क्रियमाणायानुब्रूहीत्याहाध्वर्युरग्निर्होता नो अध्वर इति तृच माग्नेयं गायत्र मन्वाह पर्यग्निक्रियमाणे स्वयैवैनं तद्देवतया स्वेन छन्दसा समर्द्धयति वाजी सन् परिणीयत इति वाजिन मिव ह्येनं सन्तं परिणयन्ति परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिवेत्येष हि रथीरिवाध्वरं परियाति परि वाजपतिः कविरित्येष हि वाजानां पतिरत उपप्रेष्य होतर्हव्या देवेभ्य इत्याहाध्वर्युरजैदग्निरसनद्वाज मिति मैत्रावरुण उपप्रैषं प्रतिपद्यते तदाहुर्यदध्वर्युर्होतार मुपप्रेष्यत्यथ कस्मान्मैत्रावरुण उपप्रैषं प्रतिपद्यत इति मनो वै यज्ञस्य मैत्रावरुणो वाग्यज्ञस्य

---

प्राजापत्यं तु जामदग्न्यः सर्वेषाम्'–इति आश्व० श्रौ० ३. २. १—८। अत्र यथर्षिपक्षे भगवता शौनकेनैषः श्लोक उक्तः—'कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च। वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः'–इति। तदेवम्—तत्र दशानां सूक्तानां प्रथमं कण्वानां 'सुसमिद्धो न आवह'–इति (१. १३.)। द्वितीयं तद्वर्जितानामङ्गिरसां 'समिद्धो अग्न आवह'–इति ( १.१४२. )। तृतीय मगस्त्यानां 'समिद्धो अद्य राजसि'-इति ( १.१८८. )। चतुर्थं शुनकानां 'समिद्धो अग्निर्निहितः'–इति ( २.३. )। पञ्चमं विश्वामित्राणां 'समित्समित्सुमनाः'-इति ( ३.४. )। षष्ठ मत्रीणां 'सुसमिद्धाय शोचिषे'-इति ( ५.५. )। सप्तमं वसिष्ठानां 'जुषस्व नः समिधम्'–इति ( ७. २. )। अष्टमं कश्यपानां 'समिद्धो विश्वतस्पतिः'-इति ( ९. ५. )। नवमं वाध्र्यश्वानाम् 'इमां मे अग्ने समिधं जुषस्वेळ'-इति ( १०. ७०. )। शुनकवाध्र्यश्ववर्जितानां भृगूणां दशमं 'समिद्धो अद्य मनुषो दुरोणे'-इति ( ९. ११०. )। यथर्षिपक्षे विवेकोऽयम् ॥

होता मनसा वा इषिता वाग्वदति यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा तद्यन्मैत्रावरुण उपप्रैषं प्रतिपद्यते मनसैव तद्वाच मीरयति तन्मनसेरितया वाचा देवेभ्यो हव्यं सम्पादयति ॥ ५ ॥

आप्रियो विधाय पर्यग्निकरणा ऋचो विधातु मादौ प्रैषमन्त्रं विधत्ते—"पर्यग्नये क्रियमाणायानुब्रूहीत्याहाध्वर्युः"-इति। पर्यग्निकरणस्य स्वरूप मापस्तम्बो दर्शयति— "आहवनीयादुल्मुक मादायाग्नीध्रः परि वाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुम्"-इति (७. १५, २.)। एवं परितः 'क्रियमाणाय अग्नये' योग्या ऋचः, हे मैत्रावरुण! त्वम् 'अनुब्रूहि'। अनेनैव मन्त्रेण 'अध्वर्युः' प्रेषयेत्॥

मैत्रावरुणेनानुवक्तव्यास्तिस्र ऋचो विधत्ते—"अग्निर्होता नो अध्वर इति (सं० ४.१५.१—३.) तृच माग्नेयं गायत्र मन्वाह, पर्यग्नि क्रियमाणे स्वयैवैनं तद् देवतया स्वेन च्छन्दसा समर्धयति"-इति। पशोः परितोऽग्निरित्यस्मिन्नर्थे पर्यग्नीत्युच्यते। तस्मिन् क्रियमाणे तृचं मैत्रावरुणो ब्रूयात्। तदाहाश्वलायनः—"प्रेषितो मैत्रावरुणोऽग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह"-इति (३.२.९.)। तृचस्यादावग्निरित्युक्तत्वादाग्नेयत्वम्; छन्दश्च तृचस्य गायत्रम्। परितः क्रियमाणेऽग्निरेव, मन्त्रप्रतिपाद्योऽपि स एव; अतः 'स्वयैव देवतया'-इत्युच्यते। अग्निगायत्र्योर्मुखजत्वसाम्यात् छन्दसः स्वत्वम्। 'नः' अस्माकम् 'अध्वरे' यज्ञे अयम् 'अग्निः' 'होता' यज्ञनिष्पादकः, -इति तस्य पादस्यार्थः। द्वितीयं पाद मनूद्य व्याचष्टे—"वाजी

सन् परिणीयत इति वाजिन मिव ह्येनं सन्तं परिणयन्ति"-इति। अथ मन्त्रः 'वाजी' अन्नप्रदानेनान्नवान्, गतिमान् वा, तादृशः 'सन्' ऋत्विग्भिः पशोः परितो नीयते,—तत्पादपाठेन पशुं 'एनम्' अग्निं 'वाजिनम्' एव सन्तं ऋत्विजः परितो नयन्ति॥

द्वितीयस्या ऋचः पूर्वार्द्ध मनूद्य तात्पर्यं दर्शयति—"परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिवेति ( सं० ४. १५. २. ),—एष हि रथीरिवाध्वरं परियाति"-इति॥

तृतीयस्या ऋचः प्रथमपाद मनूद्य व्याचष्टे—"परि वाजपतिः कविरिति (सं०४.१५.३.),—एष हि वाजानां पतिः"-इति। 'कविः' अनूचानः; "ये वा अनूचानास्ते कवयः"-इति श्रुतेः*। तादृशोऽग्निः 'वाजपतिः' अन्नस्वामी। 'एष हि'-इत्यादिना तदर्थप्रसिद्धिरुच्यते। अन्नभक्षकत्वाद्वाजपतिः॥

अथ होतारं प्रति मैत्रावरुणप्रैषार्थं, मैत्रावरुणं प्रत्यध्वर्योः प्रैषमन्त्रं विधत्ते—"अत उपप्रेष्य होतर्हव्या देवेभ्य इत्याहाध्वर्युः"-इति। 'अतः' पर्यग्निकरणानुवचनादूर्द्ध्वम् 'अध्वर्युः' 'उपप्रेष्य'-इत्यादिकं प्रैषमन्त्रं पठेत्। 'होतः! देवेभ्यः' हवींषि 'उपप्रेष्य' प्रेरयेति तस्यार्थः। अत्र मैत्रावरुणस्य होतृसमीपे वरणीयत्वाद्धोतृशब्द उपलक्षकः। तथा सति मैत्रावरुणं प्रत्यध्वर्योर्मन्त्रो भविष्यति॥

अथ मैत्रावरुणेन पठनीयं मन्त्रं विधत्ते—"अजैदग्निरसनद्वाज मिति मैत्रावरुण उपप्रैषं प्रतिपद्यते"-इति। अत्र शामित्रदेशं प्रति नीयमानस्य पशोः पुरतो यः उल्मुकाकारो

---

* "एते वै कवयो यदृषयः"-इति शत० ब्रा० १. ४. २. ८।

ऽग्निः गच्छति, सः 'अग्निः' 'अजैत्' जयतु। पशोः पुरस्ता-
दग्नेर्गमनं शाखान्तरे श्रूयते— "अग्निना पुरस्तादेति रक्षसा मप-
हत्यै"-इति (तै० सं० ६.३.८.२.)। तस्याग्नेर्जयो नाम हविः-
सम्पादनसामर्थ्यम्। सोऽग्निः 'वाजम्' अन्नं हविर्लक्षणम् 'असनत्'।
अस्य मन्त्रस्यान्तः "उपप्रेष्य होतर्हव्या देवेभ्यः"-इति श्रूयते* यतः,
अतो होतारं प्रति मैत्रावरुणः; मुख्यस्याध्वर्युप्रैषस्य समीपवर्त्ति-
त्वादय मुपप्रैषः॥

अत्र ब्रह्मवादिनां चोद्यं वैय्यधिकरण्यरूप मुद्भावयति—"तदा-
हुर्यदध्वर्युर्होतार मुपप्रेष्यत्यथ कस्मान् मैत्रावरुण उपप्रैषं प्रति-
पद्यत इति"-इति। अध्वर्युप्रयुक्ते मन्त्रे होतुः सम्बोधितत्वात्
मैत्रावरुणस्य मन्त्रपाठे वैय्यधिकरण्यम्। तस्य चोद्यस्य परि-
हारं दर्शयति--"मनो वै यज्ञस्य मैत्रावरुणो, वाग्यज्ञस्य होता;
मनसा वा इषिता वाग्वदति, यां ह्यन्यमना वाचं वदत्यसुर्या वै
सा वागदेवजुष्टा; तद्यन् मैत्रावरुण उपप्रैषं प्रतिपद्यते, मनसैव
तद्वाच मीरयति,—तन्मनसेरितया वाचा देवेभ्यो हव्यं सम्पाद-
यति"-इति। यज्ञपुरुषस्य मैत्रावरुणो मनःस्थानीयः; होता
तु वाक्स्थानीयः। लोके हि मनसैव प्रेरिता वाक्, शब्द मुच्चा-
रयति; यदा त्वन्यमनस्कः पुरुषो वाचं ब्रूते, 'सा' वाक् 'असुर्या'
असुराणां प्रिया, 'न तु देवजुष्टा' देवानां न प्रिया। तथा सति
यदि मैत्रावरुणः प्रथम मुपप्रैषं ब्रूते, मनसैव वाक् प्रेरिता भवति;
ततो मनसा प्रेरितया वाचा देवेभ्यो हव्यं सम्पादितं भवति।

---

* सोऽयं मन्त्रः—"अजैदग्निः असनद् वाजं नि देवो देवेभ्यो हव्यावाट् प्राञ्जोभिर्हिन्वानः धेनाभिः कल्पमानः यज्ञस्यायुः प्रतिरन् उपप्रेष्य होतः हव्या देवेभ्यः"-इति तै० ब्रा० ३.६.५.१।

अन्यथा तद्धविरसुरेभ्यः सम्पादितं स्यात्। तस्मादध्वर्युणा होतरित्येवं सम्बोधितेऽपि मैत्रावरुणोक्तप्रैषपूर्वक मेव होतृवचनं युक्तम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
पञ्चमः खण्डः ॥ ५ ॥

---

॥ अथ षष्ठः खण्डः ॥

दैव्याः शमितार आरभध्व मुत मनुष्या इत्याह ये चैव देवानां शमितारो ये च मनुष्याणां तानेव तत्संशास्त्युपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेध मिति पशुर्वै मेधो यजमानो मेधपतिर्यजमान मेव तत् स्वेन मेधेन समर्द्धयत्यथो खल्वाहुर्यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपति रिति स यद्येकदेवत्यः पशुः स्यान् मेधपतय इति ब्रूयाद् यदि द्विदेवत्यो मेधपतिभ्या मिति यदि बहुदेवत्यो मेधपतिभ्य इत्येतदेव स्थितं प्रास्मा अग्निं भरतेति पशुर्वै नीयमानः स मृत्युं प्रापश्यत्

ऽग्निः गच्छति, सः 'अग्निः' 'अजैत्' जयतु। पशोः पुरस्तादग्नेर्गमनं शाखान्तरे श्रूयते— "अग्निना पुरस्तादेति रक्षसा मपहत्यै"-इति ( तै० सं० ६.३.८.२. )। तस्याग्नेर्जयो नाम हविःसम्पादनसामर्थ्यम्। सोऽग्निः 'वाजम्' अन्नं हविर्लक्षणम् 'असनत्'। अस्य मन्त्रस्यान्तः "उपप्रेष्य होतर्हव्या देवेभ्यः"-इति श्रूयते* यतः, अतो होतारं प्रति मैत्रावरुणः; मुख्यस्याध्वर्युप्रैषस्य समीपवर्त्तित्वादय मुपप्रैषः ॥

अत्र ब्रह्मवादिनां चोद्यं वैय्यधिकरण्यरूप मुद्भावयति—"तदाहुर्यदध्वर्युर्होतार मुपप्रेष्यत्यथ कस्मान् मैत्रावरुण उपप्रैषं प्रतिपद्यत इति"-इति। अध्वर्युप्रयुक्ते मन्त्रे होतुः सम्बोधितत्वात् मैत्रावरुणस्य मन्त्रपाठे वैय्यधिकरण्यम्। तस्य चोद्यस्य परिहारं दर्शयति—"मनो वै यज्ञस्य मैत्रावरुणो, वाग्यज्ञस्य होता; मनसा वा इषिता वाग्वदति, यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा; तद्यन् मैत्रावरुण उपप्रैषं प्रतिपद्यते, मनसैव तद्वाच मीरयति,—तन्मनसेरितया वाचा देवेभ्यो हव्यं सम्पादयति"-इति। यज्ञपुरुषस्य मैत्रावरुणो मनःस्थानीयः; होता तु वाक्स्थानीयः। लोके हि मनसैव प्रेरिता वाक्, शब्द मुच्चारयति; यदा त्वन्यमनस्कः पुरुषो वाचं ब्रूते, 'सा' वाक् 'असुर्या' असुराणां प्रिया, 'न तु देवजुष्टा' देवानां न प्रिया। तथा सति यदि मैत्रावरुणः प्रथम मुपप्रैषं ब्रूते, मनसैव वाक् प्रेरिता भवति; ततो मनसा प्रेरितया वाचा देवेभ्यो हव्यं सम्पादितं भवति।

---

* सोऽयं मन्त्रः—"अजैदग्निः असनद् वाजं नि देवो देवेभ्यो हव्यावाट् प्राञ्जोभिर्हिन्वानः धेनाभिः कल्पमानः यज्ञस्यायुः प्रतिरन् उपप्रेष्य होतः हव्या देवेभ्यः"-इति तै०ब्रा०३.६.५.१।

अन्यथा तद्वविरसुरेभ्यः सम्पादितं स्यात् । तस्मादध्वर्युणा होत-रित्येवं सम्बोधितेऽपि मैत्रावरुणोक्तप्रैषपूर्वक मेव होतृवचनं युक्तम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
पञ्चमः खण्डः ॥ ५ ॥

---

॥ अथ षष्ठः खण्डः ॥

दैव्याः शमितार आरभध्व मुत मनुष्या इत्याह ये चैव देवानां शमितारो ये च मनुष्याणां तानेव तत्संशास्त्युपनयत मेध्या दुर आशासाना मेध-पतिभ्यां मेध मिति पशुर्वै मेधो यजमानो मेधपति-र्यजमान मेव तत् स्वेन मेधेन समर्द्धयत्यथो खल्वाहु-र्यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेध-पति रिति स यद्येकदेवत्यः पशुः स्यान् मेधपतय इति ब्रूयाद् यदि द्विदेवत्यो मेधपतिभ्या मिति यदि बहुदेवत्यो मेधपतिभ्य इत्येतदेव स्थितं प्रास्मा अग्निं भरतेति पशुर्वै नीयमानः स मृत्युं प्रापश्यत्

स देवान्नान्वकामयतैतुं तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्याम इति स तथेत्यब्रवीत् तस्य वै मे युष्माक मेकः पुरस्तादैत्विति तथेति तस्याग्निः पुरस्तादैत्सो ऽग्नि मनु प्राच्यवत तस्मादाहुराग्नेयो वाव सर्वः पशुरग्निं हि सो ऽनु प्राच्यवतेति तस्माद्वस्याग्निं पुरस्ताद्धरन्ति स्तृणीत बर्हिरित्योषध्यात्मा वै पशुः पशु मेव तत्सर्वात्मानं करोत्यन्वेनं माता मन्यता मनु पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्य इति जनित्रैरेवैनं तत्स मनुमत मालभन्त उदीचीनाँ अस्य* पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राण मन्ववसृजतादन्तरिक्ष मसुं दिशः श्रोत्रं पृथिवीं शरीर मित्येष्वेवैनं तल्लोकेष्वा†दधात्येकधास्य त्वच माच्छ्यतात्पुरा नाभ्या अपि शसो वपा मुत्खिदतादन्तरेवोष्माणं वारयध्वादिति पशुष्वेव तत् प्राणान् दधाति श्येन मस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपेवांसा ऽच्छिद्रे श्रोणी कवषोरू स्रेकपर्णा ऽष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयताद् गात्रं-गात्र मस्या-

---

* 'उदीचीनां अस्य' क, ख, ग, ङ, टी० ख, घ।

† 'तं लोकेष्वा' ख, ग, ङ।

नूनं कृणुतादित्यङ्गान्येवास्य तद्गात्राणि प्रीणात्यू-वध्यगोहं पार्थिवं खनतादित्याहौषधं वा ऊवध्य मियं वा ओषधीनां प्रतिष्ठा तदेनत् स्वाया मेव प्रतिष्ठाया मन्ततः प्रतिष्ठापयति ॥ ६ ॥

मैत्रावरुणीयप्रैषादूर्ध्वं होतुरध्रिगुप्रैषो बोधायनेन दर्शितः—"यदा जानात्युपप्रेष्य होतर्हव्या देवेभ्य इति, तं मैत्रावरुणः प्रेष्यत्यजैदग्निरित्यथ होताध्रिगु मन्वाह दैव्याः शमितार इति"-इति। 'अध्रिगुः' कश्चिद्देवः पशुविशसनस्य कर्त्ता; तं प्रति होता "दैव्याः शमितारः"-इत्यादिकं प्रैषमन्त्र मनुब्रूयादिति तस्य सूत्र-वाक्यस्यार्थः। त मिमं सूक्तमन्त्रं * विधत्ते—"दैव्याः शमितार आरभध्व मुत मनुष्या इत्याह"-इति (तै० सं० ३. ६. ६. †)। हे 'दैव्याः' देवसम्बन्धिनः, 'शमितारः' पशुविशसनकारिणः! 'आर-भध्वम्' विशसनस्योपक्रमं कुरुत। 'उत मनुष्याः' अपि मनुष्य-रूपा अपि शमितारः आरभध्व मित्यादिक मध्रिगुप्रैषमन्त्रं होता पठेत् ॥

यथोक्तमन्त्रस्य प्रथमपादं व्याचष्टे—"ये चैव देवानां शमि-तारो, ये च मनुष्याणां, तानेव तत् संशास्ति"-इति। 'तत्' तेन प्रथमपादभागेन द्विविधजातीयान् प्रशमितॄन् प्रेरयति।

मन्त्रस्य द्वितीयभाग मनुवदति—"उपनयत मेध्या दुर आशा-साना मेधपतिभ्यां मेध मिति"-इति। प्रारम्भे किं कर्त्तव्य मिति

---

* 'सूक्तोक्त मर्थं' ख, ग, घ।

† एष चाध्रिगुप्रैषमन्त्रोऽन्यशाखीय इति कल्पकारेण प्रपठ्य विहितः (आश्व०३.३.१.)।

चेत्, तदुच्यते—'मेध्याः' मेधार्हाः 'दुरः' द्वारौ हविर्भागान्, विश-सनहेतोर्वा, 'उपनयत' सन्निधापयत, 'मेधपतिभ्याम्' यज्ञस्वामिभ्याम्' पत्नीयजमानार्थ मग्नीषोमदेवतार्थं वा, 'मेधं' यज्ञम् 'आशासानाः' प्रार्थयमानाः। हे शमितारो यूय मुपनयत। अत्र मेधशब्दं मेधपतिशब्दं च व्याचष्टे—"पशुर्वै मेधो यजमानो मेधपतिर्यजमान मेव तत् स्वेन मेधेन समर्द्धयति"-इति। मतान्तरानुसारेण मेधपतिशब्दस्यार्थं दर्शयति— "अथो खल्वाहुर्यस्यै वाव कस्यै च देवतायै पशुरालभ्यते, सैव मेधपतिरिति"-इति। अस्तु मेधपति-शब्दो देवतापरः, तावता च को लाभ इत्याशङ्क्याह—"स यद्येक-देवत्यः पशुः स्यान्मेधपतये इति ब्रूयाद्, यदि द्विदेवत्यो मेध-पतिभ्या मिति, यदि बहुदेवत्यो मेधपतिभ्य इति,—एतदेव स्थितम्"-इति।

तृतीयभाग मनुवदति—"प्रास्मा अग्निं भरतेति"-इति। 'अस्मै' पश्वर्थं हे शमितारः! 'अग्निं' 'प्रभरत' प्रथमं नयत।

प्रथमतो नयन मुपपादयितु माख्यायिका माह— "पशुर्वै नीयमानः स मृत्युं प्रापश्यत्, स देवान्नान्वकामयतैतुं; तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्याम इति; स तथेत्यब्रवीत्तस्य वै मे युष्माक मेकः पुरस्तादैत्विति; तथेति; तस्याग्निः पुरस्तादैत्सोऽग्नि मनुप्राच्यवत"-इति। शामित्रदेशं प्रति 'नीयमानः पशुः' प्रत्यक्षेण 'मृत्युं' दृष्टवान्। ततः 'सः' पशुः 'देवान् अनु' 'एतुं न-अकामयत' आगन्तुं नैच्छत्। ततो देवाः पशुं प्रत्येव मब्रुवन्—हे पशो! त्व मागच्छ। त्वया सह वयं सर्वे स्वर्गं गच्छाम इति। पशुश्च तदङ्गीकृत्य देवान् प्रत्येव मब्रवीत्—'युष्माकं' मध्ये कश्चिद् देवो मम 'पुरस्ताद् एतु'-'इति'। तद्वचन मङ्गीकृत्य 'अग्निः' देवः

'तस्य' पशोः 'पुरस्तात्' अगच्छत्। ततः 'सः' पशुस्तम् 'अग्नि मनु' स्वय मपि तुष्टः सन् प्रकर्षेणागच्छत्। तस्मादग्निं प्रहरत्येतद् युक्तम्। उक्त मर्थं लोकप्रसिद्धया द्रढ़यति—"तस्मादाहुराग्नेयो वाव सर्वः पशुरग्निं हि सो ऽनुप्राचवर्तेति"-इति। यस्मादग्नि मनु पशुः प्रागच्छत्, 'तस्मादाग्नेयः सर्वः' पशुरित्येवं याज्ञिक-लोकप्रसिद्धिः। अत एव सर्वं पशु मग्नौ जुहोति। यस्मादेवं प्रसिद्धिः, तस्मादेव कारणात् पशोः पुरस्तादग्निं नयेयुरित्येत मर्थं * प्रसङ्गाद्विधत्ते—"तस्मादस्याग्निं पुरस्ताद्धरन्ति"-इति। 'तस्माद्' तस्मादेव।

चतुर्थभाग मनूद्य व्याचष्टे—"स्तृणीत बर्हिरित्योषध्यात्मा वै पशुः, पशु मेव तत्सर्वात्मानं करोति"-इति। सञ्ज्ञपनस्थानं नीतस्य पशोरधस्तादुपाकरणसाधनयोर्बर्हिषोः अन्यतरद् बर्हिः हे शमितारः! उपक्षिपत। पशुभक्षितानां मोषधीनां पश्ववयवत्वेन परिणतत्वात् पशोरोषध्यात्मत्वम्। अतस्तद्भागपाठेन पशुं सर्वौ-षध्यात्मानं करोति।

पञ्चमभाग मनूद्य व्याचष्टे—"अन्वेनं माता मन्यता मनु पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्य इति जनित्रैरेवैनं तत्स मनु-मत मालभन्ते"-इति। सञ्ज्ञप्यमानम् 'एनं' पशुं मातादयो ऽङ्गी-कुर्वताम्। समाने गर्भे भवः 'सगर्भ्यः' एकोदरः, भ्रातृविशेषण मेतत्। समाने यूथे भवः 'सयूथ्यः' पशुसमूहाद् व्यावर्तकविशेषण मेतत्। तद्भागपाठेन 'एनं' पशुं 'जनित्रैः' तज्जन्मसम्बन्धिभिः पश्व-न्तरैरनुज्ञातं कृत्वा पश्चाद् 'आलभन्ते'।

षष्ठं भाग मनूद्य व्याचष्टे—"उदीचीनाँ अस्य पदो निधत्तात्,

---

* 'संज्ञ' क।

सूर्यं चक्षुर्गमयताद्, वातं प्राण मन्ववसृजतादन्तरिक्ष मसुं, दिशः श्रोत्रं, पृथिवीं शरीर मितीष्वेवैनं तल्लोकेष्वादधाति"-इति। सञ्ज्ञप्यमानस्य पशोः 'पदः' पादान् 'उदीचीनान्' उत्तरदिग्गतान् 'निधत्तात्' स्थापयत। चक्षुरिन्द्रियं सूर्यदेवतां प्रापयत। 'प्राणं' वायुदेवतां प्रति 'अन्ववसृजतात्' प्रापयत। 'असु' जीवनम् 'अन्तरिक्ष' प्रापयत। 'श्रोत्र' दिग्देवतां प्रापयत। 'शरीरं' 'पृथिवीं' प्रापयत। तद्भागपाठेन 'एन' पशुम् 'एष्वेव' यथोक्तदेवतासम्बन्धिषु 'लोकेषु' स्थापयति।

सप्तमभाग मनूद्य व्याचष्टे—"एकधास्य त्वच माच्छ्यतात् पुरा नाभ्या अपि शसो वपा मुत्खिदतादन्तरेवोष्माणं वारयध्वादिति पशुष्वेव तत्प्राणान् दधाति"-इति। 'एकधा' एकविधया विच्छेदराहित्येन 'अस्य' 'त्वचम्' 'आच्छ्यतात्' समन्ताच्छिन्नां कुरुत। 'नाभ्याः अपि' 'शसः' छेदात् पूर्व मेव 'वपाम्' 'उत्खिदतात्' उद्धरत। 'उष्माणम्' उच्छ्वासम् 'अन्तरेव' 'वारयध्वात्' निवारयत, अपिहितास्यं सञ्ज्ञपयतेत्यर्थः। तद्भागपाठेन 'पशुष्वेव प्राणान्' सम्पादयति।

अष्टमभाग मनूद्य व्याचष्टे—"श्येन मस्य वक्षः कृणुतात्, प्रशसा बाहू, शला दोषणी, कश्यपेवांसा, ऽच्छिद्रे श्रोणी, कवषोरू स्रेकपर्णा ऽष्ठीवन्ता, षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद्, गात्रं-गात्र मस्यानूनं कृणुतादित्यङ्गान्येवास्य तद्गात्राणि प्रीणाति"-इति। 'श्येनं' श्येनाकृतिकम् 'अस्य' पशोः 'वक्षः' कुरुत। 'बाहू' 'प्रशसा' प्रकृष्टच्छेदनौ कुरुत। 'दोषणी' प्रकोष्ठौ 'शला कृणुतात्' शलाकाकारौ कुरुत। उभावपि 'अंसौ' कश्यपाकारौ कुरुत। 'श्रोणी' उभे अपि 'अच्छिद्रे' अनूने कुरुत।

'कवषोरू' कवषाकारावूरू 'स्रेकपर्णा' करवीरपत्राकारौ 'अष्ठीवन्ता' अविभक्तौ मूलयुक्तौ कुरुत। 'अस्य' पशोः 'वङ्क्रयः' वङ्क्राणि पार्श्वास्थीनि 'षड्विंशतिः' भवन्ति। 'ताः' सर्वाः 'अनुष्ठ्या' अनुक्रमेण स्वस्थानगतानि 'उच्च्यावयतात्' उद्धरत। 'गात्रं-गात्र' सर्वं मप्यवदानीय मङ्गम् 'अनून' कृणुतात्' अविकलं कुरुत। तद्भागपाठेन 'अस्य' पशोः 'अङ्गान्येव' अवयवरूपाख्येव 'गात्राणि प्रीणाति'। गात्रशब्दः शरीरे तवदवयवे च वर्त्तते; अतोऽत्रावयवविवक्षां द्योतयितु मङ्गानीति निर्द्देशः।

नवमभाग मनूद्य व्याचष्टे—"ऊवध्यगोहं पार्थिवं खनतादित्याहौषधं वा ऊवध्य मियं वा ओषधीनां प्रतिष्ठा; तदेनत् स्वाया मेव प्रतिष्ठाया मन्ततः प्रतिष्ठापयति"-इति। 'ऊवध्यगोहं' पुरीषगूहनस्थानं 'पार्थिवं खनतात्' पृथिवीसम्बद्ध मवटं खनत। अत्रोवध्यशब्देन 'औषधम्' एवोच्यते; पुरीषस्य पशुभक्षितौषधिविकारत्वाद्। 'ओषधीनां च' 'इयम्' एव भूमिः 'प्रतिष्ठा' आश्रयः। 'तत्' तथा सति 'एनत्' ऊवध्यं स्वकीयाया मेव 'प्रतिष्ठायां' भूमिरूपायाम् 'अन्ततः' पशुविशसनान्ते 'प्रतिष्ठापयति'॥

अथ मीमांसा। नवमाध्यायस्य तृतीयपादे (जै० सू० ३२—४०. अधि० १२.) चिन्तितम्—

"अविकारो विकारो वा स्यान्मेधपतिशब्दयोः।
विकारे स्वामिदेवार्थ एकार्थो वान्तिमेऽपि किम्॥
स्वाम्यर्थो देवतार्थो वा स्यादन्याय्यत्वतोऽग्रिमः।
अर्थसत्त्वाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिन् जायया द्विता।
देवार्थाशीर्द्वैव एकोऽधिष्ठाने द्वे द्विधेरणम्॥

अध्रिगुप्रैषनिगदस्य * आदाविद माम्नायते—"दैव्याः शमितार उत मनुष्या आरभध्वम्। उपनयत मेध्या दुरः। आशासाना मेधपतिभ्यां मेधम्"-इति ( तै०ब्रा० ३.६.६. )। शाखान्तरे "मेधपतये मेधम्"--इति। अथ मर्थः— 'शमितारः' पशुघातिनो द्विविधाः, दैव्या मनुष्याश्च; तानुभयान् सम्बोध्य होता कर्त्तव्यविशेषान् निर्दिशति। प्रारम्भः कर्त्तव्यो मेधो यज्ञः, तद्योगात् दुरः-पदार्थान् हिंसाहेतून् इहानयत। किं कुर्वन्तः ? यज्ञपतिभ्यां यज्ञपतये वा यज्ञम् 'आशासानाः' इति। तत्रैकवचनान्तस्य द्विवचनान्तस्य च मेधपति-शब्दस्य बहुपशुयुक्तासु विकृतिष्वनूह ऊहो वेति संशयः। ऊहपक्षेऽपि कि मेकवचनान्तस्य यजमानोऽर्थः, द्विवचनान्तस्याग्नीषोमौ देवते,-इत्येव मर्थभेदः, किं वा शब्दद्वयस्यैक एवार्थ इति संशयः। एकार्थत्वपक्षेऽपि यजमान एवार्थो देवतैव वेति संशयः। तत्राग्नीषोमीये पशौ यजमानोऽग्नीषोमौ चेति त्रयो मेधस्य पतयः। तेष्वेकवचनस्य द्विवचनस्य चान्यायनिगदत्वेन प्रकृतावविवक्षितस्य वचनस्य विकृतावनूह इत्याद्यः पक्षः। प्रकृतौ समवेतार्थं सम्पादयितुं शक्ये सत्यन्यायनिगदत्वाभावाद्विकृतावूहः कर्त्तव्य इति द्वितीयः पक्षः। अस्मिन् द्वितीयपक्षेऽपि प्रकृतावुपन्यस्तप्रकारेणार्थभेदाद्विकृतिषु द्विबहुयजमानयुक्तास्वहीनादिषु यजमानानुसारेणैकवचनान्त ऊहनीयः; अनेकपशुयुक्तासु विकृतिषु देवतानुसारेण द्विवचनान्त ऊहनीयः।

---

* परसम्बोधनार्था मन्त्रा निगदाः। ते च यजूंष्येव; 'यजूंषि वा तद्रूपत्वात्'-इत्यादुक्तेः ( जै० सू० २. १. ४०–४५. अधि० १३. )। अध्वर्युप्रैषनिगदमन्त्रांस्तु तैत्तिरीयाः समामनन्ति ( ब्रा० ३. ६. ६. १–४. )। 'अथ होताध्रिगु मन्त्राह दैव्याः शमितार इति'-इति च तत्कल्पः।

सोऽयं शाखाविकल्पेन प्रथमः पक्षः ; शाखाभेदेन पाठभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः, किन्त्वेक एवार्थ इति पक्षान्तरम्। तदापि देवतायाः सम्प्रदानत्वेन स्वामित्वाभावान्मेधपतिशब्दयोग्यता नास्तीति यजमान एव तच्छब्दार्थः। तस्मिंश्च यजमाने स्वत एकत्वम्, जायया सह द्वित्व मित्येकवचनद्विवचने उभे अपि समवेतार्थे। ततो यजमानद्वयोपेतायां विकृतावेकवचनान्तो द्वित्वेनोहनीयो द्विवचनान्तो बहुत्वेनेति पूर्व्वः पक्षः। मेधस्य यजमानार्थत्वेनैवाशासनीयत्वस्य सिद्धत्वाद्देवतार्थत्वं त्वाशासनीयम्। ततो मेध माशासाना इत्येतद्देवतायां समवेतार्थम्। सम्प्रदानस्याप्युद्देश्यत्वेन प्राधान्यान्मेधपतित्व मविरुद्धम्। देवत्वाकारेणैकत्वादग्नित्वसोमत्वाकारेण द्वित्वाच्चैकवचनद्विवचने उपपन्ने *। तस्माद्देवतानुसारेण विकृतावूह इति राद्धान्तः"-इति॥

तत्रैवान्यच्चिन्तितिम् ( जै॰ सू॰ ४१. ४२. अधि॰ १३. )—

"आदित्येष्वे व वान्येषु † ऊह्यो नो वोह्यतेऽन्यवत्।
गणार्थत्वादनूह्योऽतो विकल्पः प्रकृताविव॥

प्रजापशुसम्पत्तिकामस्य बहुदेवत्यः पशुराम्नायते—"यः कामयेत प्रथेयं पशुभिः प्र प्रजया जायेयेति, स एता मविं वशा मादितेभ्यः कामायालभेत"-इति ( तै॰ सं॰ २. १. २. ३. )। 'वशां' बन्ध्याम्, 'कामाय' कामुकेभ्यः इत्यर्थः। अत्र चोदकप्राप्तो 'मेधपतये'-इत्येकवचनान्तः शब्द आदित्यानां बहुत्वाद्बहुवचनान्तत्वेनोहनीयः। यथा मेधपतिभ्या मिति द्विवचनान्त

---

* 'उपपद्येते'–इति ए. सी. सु. तै॰ ब्रा॰ भा॰ २ भा॰ २९२ पृ॰।

† 'आदित्ये ष्वेकवाचोष'–इति च ए. सी. सु. तै॰ ब्रा॰ भा॰ २ भा॰ २९३ पृ॰।

ऊह्यते *, यथा वा 'प्रास्मै'-इत्येकवचनान्त ऊह्यते †, तद्वदिति चेत्, मैवम्; प्रकृतावग्नीषोमयोर्गणैकत्व मेकवचनान्तो ब्रूते, आदित्याना मपि गणैकत्वं समान मित्यनूहः। तस्मादविकृत एकवचनान्त इतरेण सह प्रकृताविवात्रापि विकल्प्यते"-इति ॥

"तत्रैवान्यच्चिन्तितम् ( जै० सू० ४३. अधि० १४. )—।

"कृष्णग्रीवादिकेऽनूह ऊहो वास्य न पूर्ववत्।
देवत्वं न गणस्यात ऊहो बह्वभिधित्सया ॥

यूपैकादशिन्याम् ‡ अग्न्यादिदेवताकाः पशव आम्नाताः—'ग्रैवाग्नेयेन वापयति, मिथुनꣳ सारस्वत्या करोति, रेतः सौम्येन दधाति, प्रजनयति पौष्णेन"-इत्यादिना ( तै० सं० ६.६.५.१. )। ते च स्वनामभिरन्यत्राम्नाताः—'आग्नेयः कृष्णग्रीवः सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः'-इत्यादिना (वा०सं० २९.५८.)। तत्रास्यैकवचनान्तस्य मेधपतिशब्दस्यादित्येष्विवानूहः? इति चेत्, मैवम्; वैषम्यात्। आदित्यगणस्य तत्र देवत्वम्, इह त्वेकैकस्यैव पृथग्देवत्वम्; अतो बहून् देवानभिधातुं बहुवचनान्तत्व मूहनीयम्"-इति।

---

* 'मेधपतिभ्यां'-इति २७१ पृ० १४ पं०।

† 'प्रास्मै'-इति च तत्रैव २७१ पृ० १७ पं०।

‡ अग्निष्टोमे सोमायनसंज्ञाः विकल्पत आग्नेय-सारस्वत-सौम्य-पौष्ण-बार्हस्पत्य-वैश्वदेव-ऐन्द्र-मारुतैन्द्राग्न-सावित्र-वारुणाः सवनीयाः पशवो भवन्ति। तेषा मेकादशानां नियोजनार्थ मेक एव यूपः, प्रतिपशु एकैको यूपो वा भवति। एकादशानां वर्ग एकादशिनी, तस्याम्; तस्मिन् पक्षे इति यावत् ( कात्या० श्रौ० ८. ८. ६, २६. )। एषा तु यूपैकादशिनी शतपथे ( ३. ८. ५. ) 'प्रजापतिर्वै प्रजाः ससृजानः'—इत्याख्यानपूर्विका विहिता; तथा तैत्तिरीयसंहितायाञ्च 'प्रजापतिः प्रजा असृजत'-इत्यादिना ( ६. ६. ५. )।

तत्रैवान्यच्चिन्तितम् ( जै० सू० २७, २८. अधि० १०. )—

"द्विपश्वोश्चचुरादूहो न वोहः ? पशुभेदतः ।
तेजोमात्रस्य सूर्य्यादावेकीभावादनूहनम् ॥

अग्नीषोमीयपशावध्रिगुप्रैषे पशुसम्बन्धिचक्षुरादीनां सूर्य्यादिसंसर्ग आम्नायते—"सूर्य्यं चक्षुर्गमयतात् । वातं प्राण मन्ववसृजतात् । दिशः श्रोत्रम्"-इत्यादि ( तै० ब्रा० ३. ६. ६. २. ) । "मैत्रꣳ श्वेत मालभेत, वारुणं कृष्णम्"-इति (तै० सं० २.१.९.२.) विहितयोर्द्वयोः पश्वोर्मन्त्रगताश्चक्षुरादिशब्दा द्विवचनान्तत्वेनोहनीयाः । कुतः ? पशुभेदेन चक्षुरादीनां भेदात्, इति चेन्नैवम् । न खल्वत्रेन्द्रियाधिष्ठानं शरीरगतगोलकं चक्षुःशब्देन विवक्षितम्; तद्विवक्षाया मेकस्मिन्नपि पशौ गोलकभेदादेकवचनान्तचक्षुःशब्दस्यानन्वयप्रसङ्गात्, गोलकस्य सूर्य्यादिप्राप्त्यसम्भवाच्च । यत्तु रूपदर्शनादिसामर्थ्यलक्षणं तेजोमात्रं तदत्र चक्षुरादिशब्दैः विवक्षितम् ; तच्च पश्वनेकत्वेऽपि ततो निर्गत्य सूर्य्यादावेकीभूतत्वात् समुद्रप्रविष्टनदीवन्न भेदेनावतिष्ठते । तस्मान्नास्त्यूहः"—इति ॥

तत्रैवान्यच्चिन्तितम् ( जै० सू० २९—३१. अधि० ११. )—

"एकधेत्यविकारः स्यादभ्यासो वा ? सहत्वतः ।
आद्यो मैवं प्राकृतस्य सकृत्त्वस्योचितत्वतः ॥

तस्मिन्नेवाध्रिगुप्रैषे सूयते—"एकधास्य त्वच माच्छ्यतात्"-इति (तै०ब्रा०३.६.६.२.) । छिन्धीत्यर्थः । तत्र द्वयोः पश्वोरेकधेत्यस्य शब्दस्य नास्ति विकारः । कुतः ? तस्य शब्दस्य इह सहत्ववाचित्वात् ;—एकधा गाः पाययतीत्यत्र यौगपद्ये प्रयोगदर्शनात् । पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्तृकत्वं च घटत इति प्राप्ते, ब्रूमः ;—प्रकृतावेकस्मिन् पशौ यौगपद्यलक्षणो-

ऽर्थो न सम्भवति, ततः सकृत्त्वं तस्य शब्दस्यार्थः । त्वगिय मवयवशो बहुकृत्वो न च्छेतव्या, किन्तु सर्व्वापि सकृदेकप्रयत्नेनेत्युक्तं भवति । ततो यत् प्रकृतौ सकृत्त्वं, तदेव विकृतावुचितम् । ततः प्रतिपशु सकृत्त्व मभिधातु मेकधेत्ययं मन्त्रोऽभ्यसितव्यः”-इति ॥

तत्रैवान्यच्चिन्तितम् ( जै०सू०४ पा०२५—२७. अधि०६. )—

“सादृश्य मुत साकल्यं श्येनाद्युक्तौ विवच्चितम् ? ।
प्रसिद्धसन्निधेराद्यस्तत्सत्त्वादखिलोद्धृतिः ॥

अध्रिगुप्रैषवचने एतदाम्नायते—“श्येन मस्य वक्षः कृणुतात्”-इति ( तै० ब्रा० ३. ६. ६. २. )। तत्र यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्ता मित्युक्ते प्रसिद्धसिंहसन्निधानात् पिष्टपिण्डेषु सिंहसादृश्यं कर्त्तव्यतया प्रतीयते, तथैवास्य पशोर्वक्षः श्येनं कृणुतादित्यत्र श्येनसादृश्यं वक्षसि कर्त्तव्यतया प्रतीयते । ततो वक्षः उद्धृत्य कर्त्तनादुपायेन पक्षचरणचञ्च्वादिकं सम्पाद्य श्येनसंस्थानं कर्त्तव्य मिति प्राप्ते, ब्रूमः ;— वक्षसि श्येनसादृश्यं स्वत एव पूर्व्व मस्ति ; ततो यथा तन्न नश्यति, तथा साकल्येनोद्धरणीय मिति विवक्षया श्येनशब्दः प्रयुज्यते । तथा सति हविरविकलं भवति । अंसादिष्वनेनैव न्यायेन साकल्यविवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या *। एतदेवाभिप्रेत्य श्रूयते,— “गात्रं-गात्र मस्यानूनं कृणुतात्”-इति ( तै० ब्रा० ३. ६. ६. ३. )”-इति ॥

तत्रैवान्यच्चिन्तितम् ( जै० सू० २३,२४. अधि० ५. )—

“प्रशसेत्यसिरर्थः स्यात् स्तुतिर्वा ? च्छेदनादसिः ।
स्तुतिः कार्त्स्न्याय बाह्वोः स्यात् स्वधितिच्छेदसाधनम् ॥

---

* तथाच अंशौ कच्छपौ, दोषणी शलाके, कवषौ करवीरपर्णे इत्यादि ( तै० ब्रा० ३. ६. ६. )। अथान्यते तु श्येनमित्यादिपदानि वक्षआदीनां परिचयार्थान्येव श्रुतानीति ।

अध्रिगुप्रैषे वाक्यान्तर माम्नातम्,—"प्रशसा बाहू"-इति (तै०ब्रा०३.६.६.२.)। तत्र 'शसु हिंसायाम् (१.७२७.)'-इत्यस्माद् धातोः सोपसर्गादुत्पन्नस्य सकारान्तप्रातिपदिकस्य तृतीयैकवचनान्तस्य प्रशसेति रूपं भवति। तच्चासेर्व्वाचकम्। तदेतत् केनचिद्ब्राह्मणवाक्येनानूद्यते—"दश प्रयाजानिष्ट्वा शास माहरेति, असिर्व्वै शास इत्याचक्षते"-इति (शत० ब्रा० ३. ८. १. ४.)। सोऽय मसिर्बाह्वोश्छेदनहेतुः। तस्माद् दृष्टार्थलाभादसिः प्रशसेत्यस्य पदस्यार्थः ? इति चेत्, मैवम्। 'शंसु स्तुतौ (१. ७२८.)'-इत्यस्माद्धातोरय मुत्पन्नः। प्रशसावित्यस्य द्वितीयाद्विवचनान्तस्य शब्दस्य छान्दसे औकारलोपे आकारादेशे च कृते प्रशसेति भवति *। बाह्वोः प्रशस्तत्वं नाम कार्त्स्न्यम्। प्रशस्तौ बाहू कृणुतादितुक्ते निःशेषेणोद्धर्त्तव्यौ बाहू इत्येतादृशो दृष्टोऽर्थो लभ्यते। नाच छेदनसाधनत्व मसेः सम्भवति ; स्वधितेस्तत्साधनत्वेन विहितत्वात्। तस्मात् स्तुतिरेवास्य शब्दस्यार्थः। तथा सति बाहुद्वये बहुवचनान्तत्वेन प्रशसेति पद मूहनीयम् †"-इति॥

तत्रैवान्यच्चिन्तितम् (जै० सू० १—१६. अधि० १.)—

"षड्विंशतिर्वङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते ?।
ऊहेऽपि वचनान्यत्त्व मस्येत्यावर्त्ततेऽथवा॥
षड्विंशतेरुताभ्यासः समस्तोक्तिर्न चेदुत।
अनूहो करणत्वेन दृष्टलाभात्तदूहनम्॥

* 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः'-इति पा० ७. १. ३९। प्रशसावित्यत्र द्वितीयाद्विवचनस्य छान्दस आत्वे प्रशसेति भवति'-इत्येवं वक्तव्यम्।

† बहुषु पशुषु संज्ञप्तेषु 'प्रशसा बाहू'-इति निगद एव 'प्रशसान् बाहून्'-इति पठितव्य मिति भावः।

सङ्ख्यातायाश्च पशोर्युक्तेर्वङ्क्रीणां मुख्यतावशात् ।
अमी पक्षा न युज्यन्ते ता अनुष्ठ्येतिशेषतः ॥

अध्रिगुप्रैषे वाक्य मिद माम्नायते—"षड्विंशतिरस्य वंक्रयः । ता अनुष्ठ्योच्च्यावयतात्"-इति ( तै० ब्रा० ३. ६. ६. ३. ) । अय मर्थः—'वंक्रयः' वंक्राणि पार्श्वास्थीनि, तानि 'अस्य' पशोः षड्विंशतिसङ्ख्याकानि; एकैकस्मिन् पार्श्वे त्रयोदशाना मवस्थितत्वात्। ताश्च वंक्रीः 'अनुष्ठ्या' अनुष्ठाय अनुक्रमेण गणयित्वेति यावत्, 'उच्च्यावयतात्' उद्धरतादिति । सोऽयं मन्त्रो वङ्क्रीणा मुद्धरणे करणतया न विनियुक्तः, किन्तु सञ्ज्ञपनात् प्राक् पशौ नीयमाने होता प्रयुज्यते । ततो ऽसमवेतार्थत्वादनूह इत्याद्यः पक्षः । अकरणत्वेऽपि नादृष्टार्थत्वम् ; वक्ष्यमाणार्थस्य स्मारकत्वेन दृष्टार्थलाभात् । तस्मात् प्रकृतौ समवेतार्थतया विकृतावूहः । तदापि चत्वारः पक्षाः । तत्र,— सङ्ख्या मुख्यत्वेन प्रकाश्यते, तेन द्वयोः पश्वोर्द्विगुणितां षड्विंशतिसङ्ख्यां प्रकाशयितुं द्विवचनान्ततया षड्विंशतिशब्द ऊहनीयः । इत्याद्यः पक्षः । पशोश्चोदितत्वेन मुख्यत्वात् तद्वाचकं षड्विंशतिरस्येति पदं पश्वनुसारेणावर्त्तनीयम् । इति द्वितीयः पक्षः । युक्तिर्योगः ; षड्विंशतिसङ्ख्यायाश्च पशुना सह सम्बन्धः । तस्य मुख्यत्वात् प्रतिपशुविभक्तां सङ्ख्यां प्रकाशयितुं षड्विंशतिपदस्याभ्यासः । इति तृतीयः पक्षः । अत्र सर्व्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि ; सङ्ख्येयानां वंक्रीणां मुख्यत्वात् । तासा मियत्ता समस्य वक्तव्या, ततो द्विपञ्चाशदनयोः वंक्रयः, अष्टसप्ततिरेषां वङ्क्रयः *, इत्येवं यथायोग मूहनीयम् ।

* 'षड्विंशतिरस्य वङ्क्रयः'-इत्येष एव निगदः द्विपशुस्थले 'द्विपञ्चाशदनयोर्वङ्क्रयः' -इति पठनीयः । एवं त्रिपशुस्थले 'अष्टसप्ततिरेषां वङ्क्रयः'-इति ।

इति चतुर्थः पक्षः। अय मेव सिद्धान्तः; वाक्यशेषानुगुण्यात्। 'ता अनुष्ठ्या'-इत्ययं वाक्यशेषः (२७२पृ०)। स च व्याख्यातः (२७७, २८४ पृ०)"-इति ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
षष्ठः खण्डः ॥ ६ ॥

---

॥ अथ सप्तमः खण्डः ॥

अस्ना रक्षः संसृजतादित्याह तुषैर्वै फलीकरणैर्वा हविर्यज्ञेभ्यो रक्षांसि निरभजन्नस्ना महायज्ञात्स यदस्ना रक्षः संसृजतादित्याह रक्षांस्येव तत् स्वेन भागधेयेन यज्ञान्निरवदयते तदाहुर्न यज्ञे रक्षसां कीर्तयेत् कानि रक्षांस्यृतेरक्षा वै यज्ञ इति तदु वा आहुः कीर्तयेदेव यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्र मथ पौत्रं चयते त्वेवैन मिति स यदि कीर्तयेदुपांशु कीर्तयेत्तिर इव वा एतद्वाचो यदुपांशु तिर इवैतद्यद्रक्षांस्यथ यदुच्चैः कीर्तयेदीश्वरो हास्य वाचो रक्षोभाषो जनितोर्यो ऽयं राक्षसीं वाचं वदति स यां वै दृप्तो वदति

या मुन्मत्तः सा वै राक्षसी वाङ्नात्मना दृप्यति नास्य प्रजायां दृप्त आ जायते य एवं वेद वनिष्ठु मस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रवितारवच्छमितार इति ये चैव देवानां शमितारो ये च मनुष्याणां तेभ्य एवैनं तत्परिददात्यध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्व मध्रिगा३उ * इति त्रिर्ब्रूयादपापेति चाध्रिगुर्वै देवानां शमितापापो निग्रभीता शमितृभ्यश्चैवैनं तं निग्रभीतृभ्यश्च सम्प्रयच्छति शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतं मन्यत्र तदित्याहाग्निर्वै देवानां होतासीत्स एनं वाचा व्यशाद्वाचा वा एनं होता विशास्ति तद्यदर्वाग्यत्परः कृन्तन्ति यदुल्बणं यद्विथुरं क्रियते शमितृभ्यश्चैवैनं तन्निग्रभीतृभ्यश्च समनुदिशति स्वस्त्येव† होतोन्मुच्यते सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥ ७ ॥

यद्यप्यध्रिगुप्रैषमन्त्रो न समाप्तः, तथाप्यनन्तरभागे बहुवक्तव्यसद्भावात् खण्डान्तरं कृतम् ॥

दशमं भाग मनूद्य व्याचष्टे—"अस्ना रक्षः संसृजतादित्याह ; —तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन्नस्ना महा-

* 'मध्रिगाउ' ग। † 'स्वस्त्येवं' क।

यज्ञात्; स यदस्ना रक्षः संसृजतादित्याह, रक्षांस्येव तत् स्वेन भागधेयेन यज्ञान्निरवदयते"-इति। 'अस्ना' असृजा रुधिरेण 'रक्षः संसृजतात्' मांसाभिलाषव्यावृत्त्यर्थं राक्षसान् रक्तेनैव संयोजयत। एवं मन्त्रभागं होता ब्रूयात्। किमर्थमेतदिति, तदुच्यते— पुरा 'देवाः' 'तुषैः' व्रीहिगतैः हेयांशैः, 'फलीकरणैः' तण्डुलैश्च दर्शपूर्णमासादिहविर्यज्ञेषु समागतानि 'रक्षांसि' तोषयित्वा तेभ्यो यज्ञेभ्यो 'निरभजन्' हविर्भागरहितान्यकुर्वन्। महायज्ञे ज्योतिष्टोमादिके समागतानि रक्षांसि पशुरक्तेन तोषयित्वा, तस्माद् यज्ञाच्च 'निरभजन्' निःसारितवन्तः। हविर्यज्ञेभ्यो निःसारणं शाखान्तरे दर्शपूर्णमासप्रकरणे मन्त्रव्याख्याने समाम्नातम्— "रक्षसां भागोऽसीत्याह * तुषैरेव रक्षाꣳसि निरवदयते"-इति (तै॰ ब्रा॰ ३. २. ५. ११.) तदेतदापस्तम्बेनोक्तम्— "मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात् कृष्णाजिनस्योपवपति"-इति (१.२०.९.)। महायज्ञान्निःसरणमग्नीषोमीयपशुप्रकरणे तैत्तिरीयैराम्नातम्—"रक्षसां भागोसीति स्थविमतो बर्हिरक्त्वापास्यत्यस्नैव रक्षाꣳसि निरवदयते"-इति (सं॰ ६.३.९.२.)। 'स्थविमतः' स्थौल्ययुक्तो बर्हिर्मूलभाग इत्यर्थः। एतदपि सूत्रकारेण स्पष्टीकृतम्—"बर्हिषोऽग्रं सव्येन पाणिनाऽऽदत्ते। अथ मध्यं यत आच्छ्यति, तदुभयतो लोहितेनाङ्क्त्वा रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्य"-इति (आप॰ श्रौ॰ ७.१८.१३,१४.)। एवं सति यदस्ना रक्ष इति भागं पठेत्, तदानीं रक्षांसि स्वकीयभागेन युक्तानि कृत्वा महायज्ञात् 'निरवदयते' निःसारयति॥

* रक्षसां भागोऽसीति मन्त्रस्तु तैत्तिरीयसंहितायां (१. १. ५. २) श्रुतः।

अथास्मा इत्येतस्य मन्त्रभागस्य पाठं पूर्वपक्षत्वेनाक्षिपति—"तदाहुर्न यज्ञे रक्षसां कीर्त्तयेत्;— कानि रक्षांस्यृतेरक्षा वै यज्ञ इति"--इति। 'तत्' तत्र मन्त्रभागे चोद्यं वादिनः 'आहुः'। कथ मिति? तदुच्यते—'यज्ञे' प्रवर्त्तमाने सति 'कानि' चिदपि 'रक्षांसि न कीर्त्तयेत्'। जातिविशेषानपेक्ष्य बहुवचननिर्देशः। राक्षसावान्तरजातीयानां मध्ये राक्षसम्, असुरं, पिशाचं, वा न कञ्चिदपि कीर्त्तयेत्। जातिविशेषाः श्रुत्यन्तरे सैन्यद्वयोपन्यासे श्रूयन्ते— "देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतः"--इति (तै० सं० २.४.१.१.) अकीर्त्तने हेतुम् 'ऋतेरक्षाः'-इतिपदेनोपन्यस्यति। तदेतत् समस्त मेक मेव पदम्,—ऋते शब्दो वर्जनवाची, वर्जितं रक्षो यस्मिन्यज्ञे सोऽयम् ऋतेरक्षाः। यज्ञे हि हविर्भागत्वाद्देवा एव नामग्रहण मर्हन्ति, न तु रक्षःप्रभृतयः। तस्मादेतं मन्त्रभागं न कीर्त्तयेत्,--इत्याक्षेपवादिना मभिप्रायः॥

समाधत्ते—"तदु वा आहुः,—कीर्त्तयेदेव"-इति। 'तदु वै' तस्मिन्नेव 'अस्मा रक्षः'--इतिमन्त्रभागे सम्प्रदायविदः समाधानम् 'आहुः'। यद्यपि तत्र रक्षोनामास्ति, तथापि तं भागं कीर्त्तयेदेव। तत्रोपपत्ति माह—"यो वै भागिनं भागान् नुदते, चयते वैनं, स यदि वैनं न चयते, ऽथ पुत्र मथ पौत्रं चयते त्वेवैन मिति"-इति। 'यः' पुमान् भागिनं' भागार्हं सन्त मन्यं पुरुषं तदीयान् 'भागान्' 'नुदते', नाशयति, 'एनं' विनाशयितारं स नष्टभागः सन् 'चयते वै' च्यावयत्येव। 'यदि वा' यदा कदाचित् विनाशयितुः प्राबल्ये सति तदानीम् 'एनं' 'न चयते' न च्यावयति; 'अथ' अपि कालान्तरे तदीयं 'पुत्र' पितृद्वेषेण

विनाशयति ; तदाप्यशक्तौ 'पौत्र' वा विनाशयति ; किं बहुना भागभ्रष्टो मनसि द्वेषं गृहीत्वा स्वविरोधिनम् 'एनं' भ्रंशयितारं यदा-कदाचित् केनापि द्वारेण 'चयते स्वैव' विनाशयत्येव । 'इति' अनेनाभिप्रायेण मन्त्रभागं 'कीर्त्तयेदेव'-इति अभिज्ञैरुक्तम् । यद्यपि रक्षसां हविर्भागो नास्ति, तथापि यज्ञे तुषकणादिः देवानर्हभागोऽस्त्येव ; तस्मात् कीर्त्तनपक्ष एव युक्तः ॥

तत्रैतस्य मन्त्रभागस्य कीर्त्तने किञ्चिद्विशेषं विधत्ते—"स यदि कीर्त्तयेदुपांशु कीर्त्तयेत्,—तिर इव वा एतद्वाचो यदुपांशु तिर इवैतद्रक्षांसि"-इति। 'सः' याज्ञिको 'यज्ञे' रक्षसां नामधेयं द्वेषपरिहाराय 'यदि कीर्त्तयेत्', तदापि 'उपांशु' परैर्यथा न श्रूयेत तथा 'कीर्त्तयेत्' । 'वाचः' सम्बन्धि 'यदुपांशु' कीर्त्तनम्, 'एतत् तिरः इव' तिरोहित मिव भवति । यथा कुड्यादिव्यवहितं स्तम्भादिकं चक्षुषा न दृश्यते, तथैवोपांशुकथितं न श्रूयते । 'रक्षांसि'-इति यदस्ति, 'एतद्' अपि 'तिर इव' ; चोरवद्यज्ञे रक्षसां गूढ़चारित्वात् । तस्मात् तदीय कीर्त्तनस्योपांशुत्वं युक्तम् ॥

विपक्षे बाधं दर्शयति—"अथ यदुच्चैः कीर्त्तयेदीश्वरो हास्य वाचो रक्षोभाषो जनितोः"-इति । 'अथ' उपांशुवैलक्षण्येन 'यदुच्चैः कीर्त्तयेत्' 'अस्य' कीर्त्तयितुः सम्बन्धिनो 'वाचो रक्षोभाषः' 'जनितोः' जनयितु मयम् 'ईश्वरः' भवति । रक्षोभिर्भाष्यत इति 'रक्षोभाष्'-इत्यस्य स्त्रीलिङ्गस्य द्वितीयाबहुवचनं 'रक्षोभाषः' इति । तदेतद्वाच इत्यस्य विशेषणम् । अस्योच्चैःकीर्तयितुर्या वाचः सन्ति, ताः सर्वाः, रक्षःप्रोक्तवाग्रूपेणोत्पादयितु मयं सङ्कीर्तयिता समर्थो भवतीति ॥

कोऽयं समर्थ इत्याशङ्क्य तं विशेषाकारेण निर्दिशति—"योऽयं राक्षसीं वाचं वदति सः"-इति। लोके 'यः' पुमान् रक्षसां 'वाचं' परभर्त्सनरूपाम् उच्चध्वनित्वेन भीतिकरीं 'वाचं' ब्रूते, 'सः' पुमान् ता मत्युच्चैः कीर्त्तयन् रक्षसां वागुत्पादको भवति॥

कासौ राक्षसी वागित्याशङ्क्याह—"यां वै दृप्तो वदति, या मुन्मत्तः, सा वै राक्षसी वाग्"-इति। धनविद्यादिना 'दृप्तः' दर्पं प्राप्तः परतिरस्कारहेतुं 'यां' वाचं 'वदति', 'उन्मत्तः' च बुद्धिराहित्यात् पूर्वापरसम्बन्धरहितां यां वाचं वदति, 'सा' इय मुभयविधापि 'राक्षसी वाक्'॥

एतद्वेदनं प्रशंसति—"नात्मना दृप्यति, नास्य प्रजायां दृप्त आ जायते य एवं वेद"-इति। वेदिता स्वय मपि दर्पं नाप्नोति। तदा स्वीयायां च 'प्रजायां' कश्चिदपि 'दृप्तः' नोत्पद्यते॥

एकादशभाग मनूद्य व्याचष्टे—"वनिष्ठु मस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितार इति; ये चैव देवानां शमितारो ये च मनुष्याणां तेभ्य एवैनं तत्परिददाति" इति। हे 'शमितारः!' दैव्याः मनुष्याश्च, 'वनिष्ठुं' वपायाः समीपवर्तिनं मांसखण्डम् 'अस्य' पशोः सम्बन्धिनम् 'उरूकं' उलूकाख्यपक्षिसदृशं 'मन्यमानाः, विशेषाकारेण विजानन्तो 'मा राविष्ट' मैव लवनं कुरुत;—उलूकसदृशो वनिष्टुर्यथा वर्त्तते, तथैव उद्धरत,—न तु मध्यतश्छिन्नं कुरुतेत्यर्थः। एवं कुर्वतां 'वः' युष्माकं सम्बन्धिनि 'तोके' पुत्रे, 'तनये' तदीयापत्ये च 'रविता' शब्दयिता 'नेत्' नैव 'रवत्' भूयात्। यथाशास्त्रच्छेदने क्रियमाणे भवतां गृहे पुत्रपौत्रादिकं निमित्तीकृत्य रोदिता न भविष्यतीत्यर्थः। तद्भागपाठेन 'देवानां' मध्ये 'ये' 'शमितारः' सन्ति,

'मनुष्याणां च' मध्ये 'ये' सन्ति, 'तेभ्य एव' सर्वेभ्यः 'एनं' वनिष्ठुं 'परिददाति' अवैकल्याय समर्पयति ॥

द्वादशभागं मनूद्य व्याचष्टे—"अध्रिगो शमीध्वं,—सुशमि शमीध्वं शमीध्व मध्रिगा३उ इति त्रिर्ब्रूयादपापेति चाध्रिगुर्वै देवानां शमिता-पापो निग्रभीता शमितृभ्यश्चैवैनं तन्निग्रभीतृभ्यश्च सम्प्रयच्छति"-इति। हे 'अध्रिगो' एतन्नामक ! देवेषु शमितृषु मुख्यदेवा यूयं सर्वे 'शमीध्वं' विशसनादिना पशुं संस्कुरुध्वम्। पुनरपि विशेषाकारेणोच्यते—'सुशमि' सुष्ठु शमनं शास्त्रीयं विशसनं यथा भवति तथा 'शमीध्वं' शमयत, सञ्ज्ञपयत। अध्रिगादौ प्लुतिर्दूरादाह्वानार्था ; ओकारस्य प्लुतिवेलायाम् आकार उकारश्चेति वर्णद्वयं सम्पद्यते *। तथाविधा यूयम्, इतरैः सह यूयं 'सुशमीध्वं' † सर्वथा शमयत ; न तूपचरितं शमनं कुरुत। क्रूरकर्मेति ज्ञात्वा‡ तदुपेक्षणं मा भूदिति पुनः-पुनर्वचनम्। 'अध्रिगो शमीध्वम्'-इत्यादिकं वाक्यत्रयसमुदायं त्रिवार मावर्त्तयेत् ; अपापेत्यपि तत्सम्बन्धिनं त्रिवार मावर्त्तयेत्। तदेतदाश्वलायन आह—"अध्रिग्वादि त्रिरुक्त्वा"-इत्यादि (श्रौ० ३.३.४.)। 'अध्रिगो' अपापदेव!। सोऽय मपापवाची शाखान्तरे पठ्यते—"अध्रिगुश्चापापश्चोभौ देवानाꣳ शमितारौ"-इति ( तै० ब्रा० ३. ६. ६. ४.)। अत्र तु तदवान्तर-विशेषोऽभिधीयते—'देवानां' मध्ये यः 'शमिता' हन्ता, सः

---

* 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ'-इति पा० ८. २. १०७।

† टीकापुस्तकेषु सर्वत्र एव मेव पाठः ; मूलपुस्तकेषु तु सर्वत्र 'शमीध्व'-इति पाठः।

‡ क्रूरकर्म त्वेवं विहितम्—'संज्ञपयन्ति प्रत्यक्शिरस मुदीचीनपादम्। अमायुं कृण्वन्तं संज्ञपयतेत्युक्त्वा पराङावर्त्ततेऽध्वर्युः'-इति आप० श्रौ० ७. १६. ५, ६.। 'मायुः शब्दः, त मकुर्वन्त मित्यर्थः'-इति च तट्टीका। तच्छब्दरोधाय मुखे धानादीन् प्रवेशयति निग्रभिता। तदुक्तं कात्यायनेन—'संगृह्य मुखं तमयन्त्यवाश्यमानम्'-इति ६. ५. १८.।

'अध्रिगुः'; यश्च धानादिना 'निग्रभीता' निग्रहस्य कर्त्ता, सोऽयम् 'अपापः'; तद्भागपाठेनाध्रिगुप्रभृतिभ्यः 'शमितृभ्यश्च', अपापप्रभृतिभ्यो 'निग्रभीतृभ्यश्च' 'एनं' पशुं 'संज्ञपनाय 'प्रयच्छति' ॥

अध्रिगुमन्त्रपाठानन्तरं जपं विधत्ते—"शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृत मन्यत्र तदित्याहाग्निर्वै देवानां होतासीत्, स एनं वाचा व्यशाद्वाचा वा एनं होता विशास्ति; तद्यदर्वाग्यत्परः कृन्तन्ति,यदुल्बणं यद्विथुरं क्रियते, शमितृभ्यश्चैवैनं तन्निग्रभीतृभ्यश्च स मनुदिशति, स्वस्त्येव होतोन्मुच्यते, सर्वायुः, सर्वायुत्वाय"--इति । हे 'शमितारः!' 'अत्र' पशुविशसनकर्म्मणि 'यत्' 'सुकृतं' कृतम्, 'कृणवथास्मासु तत्'; तत्र 'यद् दुष्कृतम्', 'अन्यत्र तदिति' जपित्वा दक्षिणाद्वदावर्त्तते इति । एतन्मन्त्रार्थं मग्निर्वा इत्यादिनोच्यते । यदा देवा यज्ञं कुर्वन्ति, तदानीं तेषां मध्ये 'अग्निः' एव 'होता' अभूत् । 'सः' 'एनं' पशुं 'वाचा' अध्रिगुप्रैषरूपया 'व्यशात्' विशसनं कृतवान् । अध्रिगुप्रैषे आरभध्वं शमीध्व मित्यादि प्रेरणवाचकानां पदानां बहूनां विद्यमानत्वात् अस्त्येव होतुर्वाचिकं विशसनम् । तथा सति पशोरर्वाङ्भागे 'यत् कृन्तन्ति' यच्च 'परः' परभागे उत्तमाङ्गं कृन्तन्ति, तस्मिन्नुभयस्मिन्नपि छेदने 'यदुल्बणं' शास्त्रार्थादतिरिक्तं 'क्रियते', 'यत्' च 'विथुरं' न्यूनं क्रियते, 'तत्' सर्व मेतत् पशोः शमितृभ्यो निग्रभीतृभ्यश्च 'स मनुदिशति' तेन मन्त्रजपेन सम्यक् कथयतीति 'वाचा होता' 'स्वस्त्येव' क्षेमेणैव पापात् 'मुच्यते' 'सर्वायुः' मृत्युरहितश्च भवति, यजमानस्याप्यपमृत्युराहित्याय । एतद्वेदनं प्रशंसति— "सर्व मायुरेति य एवं वेद"- इति * ॥

* अध्रिगुशब्दनिर्वचनम्, तत्प्रैषमन्त्रव्याख्यानादिकञ्च निरु० ३भा० ६०—६५ ।

नवमाध्यायस्य चतुर्थपादे (जै०सू०२२.अधि०४.) चिन्तितम्—

"पक्षी वपाथवोरूको रलयोरविशेषतः ।
पक्षी वपा सन्निधानाद् भ्रान्तिच्छेदनिषेधतः ॥

अग्निगुप्रैषवचन मिद माम्नायते—"वनिष्ठुमस्य मा राविष्ट । उरूकं मन्यमानाः"-इति (तै० ब्रा० ३. ६. ६. ३.)। वनिष्ठुः वपासमीपवर्त्ती कश्चित्पश्वङ्गविशेषः। तं 'मा राविष्ट' तस्य लवनं मा कुरुत। व्यत्ययेन लकारस्य रेफः (पा० ३.४.९८.)। किं कुर्वन्तः? 'उरूकं मन्यमानाः' वनिष्ठावुलूकबुद्धिं कुर्व्वन्तः इत्यर्थः। अत्रोरूकशब्देन काकविरोधी कश्चिदुलूकनामा पक्षिविशेषोऽभिधीयते *। कुतः? रलयोरविशेषात्;—पर्य्यङ्कः पल्यङ्कः, रोमाणि लोमानीत्यादिदर्शनात्। उरूकशब्दः सादृश्य-लक्षकः। पक्षिसदृशं वनिष्ठुं विवेकेन मन्यमाना मा राविष्टेति वाक्यार्थः। तस्मादुरूकः पक्षीति प्राप्ते, ब्रूमः;—उरूकशब्दे-नात्र वपा लक्ष्यते। कुतः? वनिष्ठुसन्निधानात्। सति हि सन्नि-धावुरूकत्वभ्रान्तिर्वनिष्ठौ सम्भवति; भ्रान्तिप्राप्तञ्च लवन मत्र निषिध्यते। 'उरूकं मन्यमाना वनिष्ठुं मा राविष्ट'-इत्युक्तत्वात्। वपालवनकाले भ्रान्त्या वनिष्ठोर्यल्लवनं तस्य निषेधे सति दृष्टार्थो लभ्यते, भ्रान्तिनिवारणस्य दृष्टत्वात्। त्वत्पक्षे तु वनिष्ठोर्लवन मेव नास्ति। तच्चायुक्तम्; हृदयाद्यङ्गवद्वनिष्ठोर्लवितव्यत्वात्। "वनिष्ठु मग्नौधे षडवत्तं सम्पादयति"-इत्याद्यनुष्ठानविधानात् (आप० श्रौ० ७. २६. ६.)। ततो लवननिषेधस्य असमवेतार्थ-त्वेनादृष्टार्थो मन्त्रपाठः प्राप्नुयात्। तस्माद्वपावचन मुरूकशब्दो यद्यपि वपाया मप्रसिद्धः, तथाप्युरु विस्तीर्ण मूको मेदो यत्र,

* पेचक इति च प्रसिद्धः।

इत्यवयवार्थद्वारा मेदस्विन्यां वपायां युक्त उरूकशब्दः। एवं सत्यनेकवपासु विकृतिषु एकवचनान्त उरूकशब्द ऊहनीयः" -इति॥ ७॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
सप्तमः खण्डः ॥ ७ ॥

---

॥ अथ अष्टमः खण्डः ॥

पुरुषं वै देवाः पशु मालभन्त तस्मादालब्धान्मेध उदक्रामत्सोऽश्वं प्राविशत्तस्मादश्वो मेध्योऽभवदथैन मुत्क्रान्तमेध मत्यार्जन्त स किम्पुरुषोऽभवत्तेऽश्व मालभन्त सोऽश्वादालब्धादुदक्रामत्स गां प्राविशत् तस्माद् गौर्मेध्योऽभवदथैन मुत्क्रान्तमेध मत्यार्जन्त स गौरमृगोऽभवत्ते गा मालभन्त स गोरालब्धादुदक्रामत्सोऽविं प्राविशत्तस्मादविर्मेध्योऽभवदथैन मुत्क्रान्तमेध मत्यार्जन्त स गवयोऽभवत्तेऽवि मालभन्त सोऽवेरालब्धादुदक्रामत्सोऽजं प्राविशत्तस्मादजो मेध्योऽभवदथैन मुत्क्रान्तमेध मत्यार्जन्त स उष्ट्रोऽभवत्सोऽजे ज्योक्तमा मिवारमत तस्मादेष एतेषां पशूनां

प्रयुक्ततमो यदजस्ते ऽज मालभन्त सो ऽजादालब्धा- दुदक्रामत्स इमां प्राविशत्तस्मादियं मेध्याभवदथैन मुत्क्रान्तमेध मत्यार्जन्त स शरभो ऽभवत्त एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात् तमस्या मन्वगच्छंस्तो ऽनुगतो व्रीहिरभवत्तद्यत्पशौ पुरोळाश मनु निर्वपन्ति समेधेन नः पशुनेष्ट मसत् केवलेन नः पशुनेष्ट मसदिति समेधेन हास्य पशुनेष्टं भवति केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥ ८ ॥

अग्निगुप्रैषं समाप्य पुरोडाशं विधातुं बहुभिः पर्यायैरुपेता काचिदाख्यायिकोच्यते। तत्र प्रथमं पर्यायं दर्शयति—'पुरुषं वै देवाः पशु मालभन्त; तस्मादालब्धान्मेध उदक्रामत्, सोऽश्वं प्राविशत्; तस्मादश्वो मेध्यो ऽभवदथैन मुत्क्रान्तमेध मत्यार्जन्त, स किम्पुरुषो ऽभवत्"-इति। पुरा कदाचिद् 'देवाः' स्वकीये यज्ञे 'पुरुष" मनुष्यं 'पशु मालभन्त' पुरुषं पशुं कृत्वा तेन पशुना यष्टुमुद्युक्ताः। 'तस्मादालब्धाद्' यष्टुमुद्युक्तात् मनुष्यपशोः 'मेधः' यज्ञयोग्यो हविर्भागः 'उदक्रामत्' मनुष्यं परित्यज्यान्यत्रागच्छत्। गत्वा च 'सः' भागः 'अश्वं' प्राविशत्'। यस्मादेवं 'तस्मादश्वः' यज्ञयोग्यः 'अभवत्'। 'अथ' तदानीम् 'उत्क्रान्तमेधं' परित्यक्तहविर्भागम् 'एनं' मनुष्यं देवाः 'अत्यार्जन्त' अतिशयेन वर्जितवन्तः; तस्मिन् पशुत्व मपि न अकुर्वन्।

देवैः स्वीकृत्य परित्यक्तः 'सः' मनुष्यः 'किम्पुरुषः' किन्नरो वानर-जातीयः ॥

द्वितीयं पर्यायं दर्शयति—"तेऽश्व मालभन्त ; सोऽश्वादालब्धादुदक्रामत्, स गां प्राविशत् ; तस्माद् गौर्मेध्योऽभवदथैनमुत्क्रान्तमेध मत्यार्जन्त, स गौरमृगोऽभवत्"-इति । आलब्धादश्वान्मेधो यज्ञयोग्यभाग उत्क्रम्य गां प्राविशत् ; स गौर्यज्ञयोग्य आसीत् । तदानो मयोग्यत्वेन त्यक्तः सोऽश्वो गौरमृगो ऽभवत् ; यस्य शृङ्गावपि लोमशौ भवतः ॥

तृतीयं पर्यायं दर्शयति—"ते गा मालभन्त, स गोरालब्धादुदक्रामत्सोऽविं प्राविशत् तस्मादविर्मेध्यो ऽभवदथैन मुत्क्रान्तमेध मत्यार्जन्त, स गवयो ऽभवत्तेऽवि मालभन्त, सोऽवेरालब्धादुदक्रामत्सो ऽजं प्राविशत्तस्मादजो मेध्यो भवदथैन मुत्क्रान्तमेध मत्यार्जन्त, स उष्ट्रो ऽभवत्"-इति । अजादयः प्रसिद्धाः । उष्ट्रो दीर्घग्रीवः । अजं पुनरपि प्रशंसति—"सोऽजे ज्योक्तमा मिवारमत ; तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजः"-इति । 'सः' मेधाख्यो यज्ञयोग्यभागस्तस्मिन् 'अजे' 'ज्योक्तमा मिव' अतिशयेन चिरकाल मेव 'आरमत' क्रीड़ितवान् । तस्माच्चिरकाल मेव सद्भावात् योऽय मजोऽस्ति, स एषः 'एतेषां' पूर्वोक्तानां 'पशूनां' मध्ये 'प्रयुक्ततमः' शिष्टैरतिशयेन प्रयुक्तः ॥

चतुर्थं पर्यायं दर्शयति—"ते ऽज मालभन्त, सोऽजादालब्धादुदक्रामत्, स इमां प्राविशत्तस्मादियं मेध्याभवदथैन मुत्क्रान्तमेध मत्यार्जन्त, स शरभोऽभवत्"-इति । 'इमां' पृथिवीम् । 'शरभः' अष्टभिः पादैरुपेतः सिंहघाती मृगविशेषः । अत्र प्रसङ्गात् कञ्चित् धर्मविशेषं दर्शयति—"त एत उत्क्रान्तमेधा अमेध्याः

पशवस्तस्मादेतेषां नाश्नीयात्"-इति । मनुष्याश्वगोऽव्यजेभ्यो मेधस्योत्क्रमणक्रमेण निष्पन्नाः, 'त एते' किम्पुरुषादयो मेधराहित्याद् यज्ञयोग्याः पशवो नासन्* । अतः 'एतेषां' पशूनां सम्बन्धि मांसं 'नाश्नीयात्' ॥

अत्र पुरोडाशं विधत्ते--"त मस्या मन्वगच्छन्त्सोऽनुगतो व्रीहिरभवत्तद्यत्पशौ पुरोळाश मनु निर्वपन्ति, स मेधेन नः पशुनेष्ट मसत्, केवलेन नः पशुनेष्ट मसदिति"-इति । 'तं' मेधाख्यं हविर्भागम् 'अस्यां' पृथिव्यां प्रविष्टं गृहीतुं देवाः 'अन्वगच्छन्', 'सः' च मेधो देवैः 'अनुगतः' उत्क्रान्तु मशक्यः सन् सहसा 'व्रीहिरभवत्' । तथा सति यदि 'पशौ पुरोडाश मनु निर्वपन्ति' पश्वालम्भानन्तर मेव निर्वपेयुः, तदानीं 'नः' अस्माकं यज्ञयोग्यहविर्भागयुक्तेन 'पशुनेष्टम् असत्' द्रव्यं भवति । पुरोडाशनिर्वापकर्तृणां कोऽभिप्रायः ?—इति, सोऽभिधीयते—'नः' अस्माकं 'केवलेन' साधनान्तरनिरपेक्षेण मेधपूर्णेन 'पशुनेष्ट मसत्'-'इति' एतदभिप्रायः ॥

वेदनं प्रशंसति—"समेधेन हास्य पशुनेष्टं भवति, केवलेन हास्य पशुनेष्टं भवति, य एवं वेद"-इति । समेधेनेत्यस्यैव वाक्यस्य

---

* एतेनानुमीयते आदिकाले नरमेधस्यासीत् प्राचुर्य्यम्, ततस्तदनुकल्पोऽश्वमेधः प्रचलितः, एवं क्रमेण शरभान्तो मेध्यप्रचलितः, ततो जीवहिंसने ग्लानि मनुभूय तदनुकल्पत्वं पुरोडाशस्य मत्वैव 'पिष्ट-पशुः' प्रारब्धः ; योऽनुष्ठितः सम्प्रति च प्रायः षड्विंशताब्दतः प्राक् काश्या मसीतीरे पेशवावंशधरेणेति । शतपथेऽप्येवम्—'पुरुषो हि प्रथमः पशूनाम्' -इत्यादि ६. २. १. १८ । घृतपशुः पिष्टपशुश्च म० सं० ५. ३७ । उक्तं च तत्रा—'दधि मधु घृत मापो धाना भवन्त्येतद्वै पशूनां रूपम्'-इति तै० सं० २. ३. २. ८ । 'पशवो वै पुरोडाशः'-इति च ७. १. ९ । इहानुपदं वक्ष्यति च 'स वा एष पशुरेवालभ्यते यत् पुरोळाशः'-इति ( ९ ख० ) ।

व्याख्यानं केवलेनेत्यादि। तदेतत् सर्वं श्रुत्यन्तरे सङ्गृहीतम्—"पशु मालभ्य पुरोडाशं निर्वपति, समेध मेवैन मालभते"—इति ( तै० सं० ६.३.१०.१. )॥

अत्र मीमांसा। द्वादशाध्यायस्य प्रथमपादे (जै०सू० १—६. अधि० १.) चिन्तितम्—

"उपकारी संस्कृतिर्वा पुराडाशः पशूदितः।
तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता॥
सन्दंशान्निश्चितेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः।
देवान्तरं चेद्विकृत मग्नीषोमनिवर्त्तनम्॥

ज्योतिष्टोमाङ्गभूताग्नीषोमीये पशौ श्रूयते—"अग्नीषोमीयस्य वपां प्रचर्याग्नीषोमीय मेकादशकपालं निर्वपति"—इति (तै०सं० ६.३.१०.)। तत्र पशावुक्तः पुरोडाशः, स किं पशोरारादुपकारकः, उत पशुदेवतासंस्कारः ? इति सन्देहः*। तत्र "अग्नीषोमीयं पशु मालभेत"—इति (तै०सं०६.१.११.६.) पशुविधौ तद्धितोक्ता अग्नीषोमदेवता यथा गुणत्वेन पशौ विधीयते, तथा पशुपुरोडाशेऽपि। तथा सति विधिभेदेन विधेयदेवताभेदात् संस्कारो न युक्तः ; गुणत्वं च संस्कार्यविरोधीति पूर्वोक्तम्। तस्मात् पशोः

* "क्रियारूपाणि च द्विविधानि। गुणकर्माणि, प्रधानकर्माणि च। एतान्येव सन्निपत्योपकारकाणि, आरादुपकारकाणीति चोच्यते। कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथा अवघातप्रोक्षणादि। तच्च दृष्टार्थ मदृष्टार्थं दृष्टादृष्टार्थं चेति। दृष्टार्थ मवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांशेनैवादृष्टं, देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म त्वारादुपकारम्। यथा प्रयाजादि। आरादुपकारकं च परमापूर्वोत्पत्तावेवोपयुज्यते ; सन्निपत्योपकारकं तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते"—इति लौ० मी० अर्थ०।

आरादुपकारक इति प्राप्ते, ब्रूमः ;— देवताभेदवादिनां तावदिदं वक्तव्यम्,— पशुः पुरोडाशश्चेत्युभौ किं स्वतन्त्रौ यागौ, किं वाङ्गाङ्गिरूपौ ? तत्रापि किं मङ्ग' किं वाङ्गीति । तत्र पशुधर्मैरुभयतः संदृष्टस्य पुरोडाशस्य स्वतन्त्राङ्गित्वे तयोः पशुप्रकरणपाठबाध्यत्वादभिमत मुपकारकत्वं न सिध्येत् । अङ्गत्वेऽपि दृष्टसम्भवाददृष्टकल्पन मन्याय्यम् ; भवति चात्र दृष्टम्,—पुरोडाशवाक्येन तद्धितान्तपदेन पशुवाक्यगताया देवताया अनुवादे सति तदीयस्मरणपूर्वकनिर्वापे पशुदेवतायाः संस्क्रियमाणत्वात् । एवं च सति पशुवाक्ये गुणत्वेन प्रतीतायाः पुरोडाशवाक्ये प्राधान्यावगमात् संस्कार्यत्व मविरुद्धम् । तस्मात्पशुदेवतासंस्कारः पुरोडाशः । एवं च सत्यग्नीषोमीयपशुविकृतौ वायव्यपशावग्नीषोमदेवतायां निवृत्तायां तदीयपुरोडाशोऽपि सा निवर्त्तत इति बाधः फलिष्यति"— इति ॥

यद्वा, दशमाध्यायस्य प्रथमपादे (जै०सू०१९—२२. अधि०९.) चिन्तितम्—

"पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया ।
अस्ति वा विध्यभावे न ह्यस्त्यकार्यत्वतोऽध्ववत् ॥

अग्नीषोमीये पशौ यानि चोदकप्राप्तानि प्रयाजादीन्यङ्गान्यनुष्ठितानि, तैः पशुपुरोडाशे उपकारो नास्ति । कुतः ? तदुपकारबोधकस्य विधेरभावात् । चोदकस्तु दर्शपूर्णमासवत् पशुरनुष्ठेयः इत्येवंरूपत्वात् पशावेव उपकारं बोधयति । ननु पुरोडाशस्यापीष्टिविकृतित्वात्तत्रापि चोदकोऽस्तीति चेत्, वाढ़म् ! अतएव भिन्नचोदकबलात् पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानीति प्राप्ते, ब्रूमः ;— यद्यपि पश्वर्थैः पुरोडाशस्योपकारः,—

इत्येतादृशं शास्त्रं नास्ति, तथाप्ययमुपकारोऽर्थप्राप्तो न निवारयितुं शक्यते। यथा प्रदीपस्य वेदिकार्ये निर्मितस्यार्थसिद्धमार्गप्रकाशकत्व मनिवार्यम्, तथा पशुतन्त्रमध्येऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्येत ?। तस्मादन्यार्थैरप्यस्त्युपकारः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
अष्टमः खण्डः ॥ ८ ॥

---

॥ अथ नवमः खण्डः ॥

स वा एष पशुरेवालभ्यते यत्पुरोळाशस्तस्य यानि किंशारूणि तानि रोमाणि ये तुषाः सा त्वग्ये फलीकरणास्तदसृग्यत्पिष्टं किक्नसास्तन्मांसं यत् किञ्चित्कं सारं तदस्थि सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोळाशेन यजते तस्मादाहुः पुरोळाशसत्रं लोक्य मिति युव मेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति सर्वाभिर्वा

एष देवताभिरालब्धो भवति यो दीक्षितो भवति तस्मादाहुर्न दीक्षितस्याश्नीयादिति स यदग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति सर्वाभ्य एव तद्देवताभ्यो यजमानं प्रमुञ्चति तस्मादाहुरशितव्यं वपायां हुतायां यजमानो हि स तर्हि भवतीत्यान्यं दिवो मातरिश्वा जभारेति पुरोळाशस्य यजत्यमथ्नादन्यं परि श्येनो अद्रेरितीत इव च ह्येष इत इव च मेधः समाहृतो भवति स्वदस्व हव्या स मिषो दिदीहीति पुरोळाशः स्विष्टकृतो यजति हविरेवास्मा एतत् स्वदयतीष मूर्जं मात्मन् धत्त इळा मुपह्वयते पशवो वा इळा पशूनेव तदुपह्वयते पशून्यजमाने दधाति ॥ ६ ॥

विहितं पशुपुरोडाशं प्रशंस्य पश्चाद्वपादियाज्याविवक्षुरादौ तं प्रशंसति—"स वा एष पशुरेवालभ्यते यत्पुरोळाशः"-इति। पशुशरीरसादृश्यादयं पुरोडाशोऽनुष्ठितः पश्वालम्भ एव भवति। तदेतत्सादृश्यं विशदयति—"तस्य यानि किंशारूणि तानि रोमाणि, ये तुषाः सा त्वग्, ये फलीकरणास्तदसृग्, यत्पिष्टं किक्नसास्तन्मांसं, यत्किञ्चित्कं सारं तदस्थि"-इति। 'तस्य' व्रीहिबीजस्य सम्बन्धीनि 'यानि किंशारूणि' बुसपलालादीनि 'तानि' पशुरोमस्थानीयानि; 'ये तुषाः' तण्डुलवेष्टनरूपाः प्रथमावघातेन परित्याज्याः, सा तुषसमष्टिः, पशुत्वक्स्थानीयाः; 'ये फलीकरणाः' तण्डुलस्थैल्यार्थेना-

वघातेन हेया अंशास्तत्सर्वम् 'असृक्' पशुरक्तस्थानीयम्, 'यत्पिष्ट' तण्डुलपेषणेन निष्पन्नं पिण्डयोग्यरूपम्, ये च 'किक्नसाः' सूक्ष्माः पिष्टावयवाः, तत्सर्वं पशुमांसस्थानीयम् ; 'यत्किञ्चित्कं सारं' स्वार्थे कप्रत्ययः ; यत्किञ्चिदन्यद् व्रीहिसम्बन्धिकाठिन्यरूपं सारं 'तदस्थि' तत् पशोरस्थिस्थानीयम्। एवं पशुसाम्यात् पुरोडाशस्य पशुत्वम् ॥

एवं सति यत् फलितं तद्दर्शयति—"सर्वेषां वा एष पशूनां मेधेन यजते, यः पुरोळाशेन यजते"-इति। पुरोडाशयाग एव सर्व-पशुसम्बन्धि-यज्ञयोग्यो हविर्यागः। सर्वपशुसम्बन्धश्च "पुरुषं वै देवाः"-इत्यादिना प्रपञ्चितः (२९४पृ०)। लौकिकोक्त्या प्राशस्त्यं दृढ़यति—"तस्मादाहुः पुरोळाशसत्रं लोक्य मिति"-इति। यस्मात् पुरोळाशयागः सर्वपशुसारभूतः, तस्मात् पुरोडाशानुष्ठानं 'लोक्य' प्रेक्षणीय मिति याज्ञिकाः 'आहुः'। अत एव प्रैषमन्त्रे "पुरो-डाशाᳫँ अलङ्कुरु"-इत्येव माम्नातम् ( शत० ब्रा० ४.२.५.११. ) ॥

अथ वपादीनां क्रमेण याज्याविवक्षुरादौ वपायाज्यां विधत्ते— "युव मेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्; युवं सिन्धूँ-रभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतानिति ( सं० १.९३.५. ) वपायै यजति"-इति। हे 'सोम!' त्वं च 'अग्निश्च' 'युवं' एतावुभौ युवाम् एतानि सर्वैः दृश्यमानानि 'रोचनानि' प्रकाशरूपाणि नक्षत्रादीनि 'दिवि' द्युलोके 'अधत्तम्'। कीदृशौ युवाम् 'सक्रतू' समानकर्माणौ। हे अग्नीषोमौ युवां! स्वकीयत्वेन स्वीकृतान् 'सिन्धून्' समुद्रवत्प्रौढ़ान् राजामात्यादीन् पुरुषान्, यजमानादीन्वा 'अभिशस्तेः' सङ्ग्रामादिषु ब्राह्मणबधादिरूपादपवादाद् 'अवद्यात्' तन्निमित्तदुरिताच्च 'अमुञ्चतम्' मुक्तान् अकुरुतम्:—एतत्प्रश्नादि-

कर्मानुष्ठानेन जनापवादो दुरितं च नश्यतीत्यर्थः। 'वपायै यजति' इति वपाहोमार्थं ऋचं याज्यात्वेन पठेदित्यर्थः॥

पूर्वोत्तरपक्षाभ्या मेतां याज्यां प्रशंसति—"सर्वाभिर्वा एष देवताभिरालब्धो भवति, यो दीक्षितो भवति, तस्मादाहुर्न दीक्षितस्याश्नीयादिति; स यदग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति, सर्वाभ्य एव तद्देवताभ्यो यजमानं प्रमुञ्चति; तस्मादाहुरशितव्यं वपायां हुतायां यजमानो हि स तर्हि भवतीति"-इति। 'यः' पुमान् यज्ञार्थी 'दीक्षितो भवति', 'एषः' 'सर्वाभिः' अपि 'देवताभिः' स्वकीयहविर्दानार्थम् 'आरब्धः' स्वीकृतो 'भवति'। 'तस्मात्' एतदीयस्य द्रव्यस्य देवताभिरवरुद्धत्वात् 'दीक्षितस्य' गृहे 'नाश्नीयात्'-'इति' पूर्वपक्षिणः 'आहुः'। तत्र होता 'यदग्नीषोमावमुञ्चतम्'-'इति' एतं याज्यायाश्चतुर्थपादं पठेत्। तदा तेन पाठेन 'सर्वाभ्यो देवताभ्यो यजमानं' होता मोचयति। 'तस्मात्' कारणाद्वपाहोमे निष्पन्ने सति तद्गृहे भोक्तव्यम्; 'तर्हि' तस्मिन्वपाहोमोत्तरकाले 'सः' दीक्षितो 'यजमानो भवति'। पूर्वं तु दीक्षित एव, न तु यजमानः; इदानीं यागस्य निष्पन्नत्वादयं यजमानः। तथा सति देवतावरोधात् * मुक्तस्य गृहे भोक्तुं शक्य मिति सिद्धान्तिनः 'आहुः'॥

अथ पुरोडाशस्य याज्यां विधत्ते—"आन्यं दिवो मातरिश्वा जभारेति पुरोळाशस्य यजति"-इति( सं०१.९३.६. )। द्वितीयपाद मनूद्य पादद्वयस्य सहैव तात्पर्यं दर्शयति—"अमथ्नादन्यं परि श्येनो अद्रेरितीत इव च ह्येष इत इव च मेधः समाहृतो भवति"-इति। 'मातरिश्वा' वायुः 'अन्यम्' अग्नीषोमयोरन्यतरं

* 'देवताविरोधात्' ख, ग।

सोमाख्यं देवम् 'दिवः' द्युलोकाद् 'आजभार' आहृतवान्; गायत्रीरूपं कृत्वा वायुः सोम मानीतवान्। इति प्रथमपादस्यार्थः। 'श्येनः' बलवत्पक्षी, तादृशोऽध्वर्युः 'अन्यम्' उभयोर्देवयोरन्यतर मग्निम्, 'अद्रेः' पर्वतजन्यात्काष्ठादरणिरूपात् 'पर्यमथ्नात्' परितो मथनं कृतवान्। इति द्वितीयपादस्यार्थः। 'एष मेधः' यज्ञयोग्यः पुरोडाशोऽपि 'इत इव चेत इव च' अस्मान्मनुष्यादस्मादश्वाद् गोः अवेः अजाच्च भूम्याः 'समाहृतः'। एवं सति इतस्ततः आनयनसाम्यात् पुरोडाशस्येय मग्नीषोमप्रतिपादिका याज्या योगेत्यर्थः॥

पुरोडाशसम्बन्धिस्विष्टकृतो याज्यां विधत्ते—"स्वदस्व हव्या स मिषो दिदीहीति ( सं० ३.५४.२२. ) पुरोळाशः स्विष्टकृतो यजति"-इति। हे स्विष्टकृदग्ने! 'हव्या' हवींषि 'स्वदस्व' स्वादूनि कुरु; 'इषः' अन्नानि 'सन्दिदीहि' सम्यक् प्रयच्छेति तस्य पादस्यार्थः। ता मेतां याज्यां प्रशंसति—"हविरेवास्मा एतत् स्वदयतीष मूर्ज मात्मन् धत्ते"-इति। एतेन याज्यापाठेन 'अस्मै' कर्मसिद्ध्यर्थं यजमानार्थं वा हविरेव स्वादूकरोति। यः 'इषम्' ओदनम् 'ऊर्जम्' क्षीरादिरसं च 'आत्मन् धत्ते' होता स्वात्मनि सम्पादयति॥

पुरोडाशीयस्विष्टकृद्यागादूर्ध्वं पशुपुरोडाशसम्बन्धि इडोपाह्वानं विधत्ते—"इळा मुपह्वयते; पशवो वा इळा, पशूनेव तदुपह्वयते,—पशून्यजमाने दधाति"-इति। "इळोपहूता सह दिवा"-इत्यादिना ( आश्व० श्रौ० १. ७. ७. ) सूत्रगतेन, "उपहूतं रथन्तरं सह पृथिव्या"-इत्यादिना ( तै० ब्रा० ३. ५. ८. १. ) शाखान्तराम्नातेन मन्त्रेण वा इळाख्यां देवता मुपह्वयते। "गौर्वा

अस्यै शरीरम्"–इति श्रुत्यन्तरादिष्टदेवतायाः पशुरूपत्वम्*। 'तत्' तेनोपाह्वानेन 'पशूनेव' आह्वयति। 'यजमाने' च 'पशून्' सम्पादयति†॥ ९॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
नवमः खण्डः॥ ९॥

---

॥ अथ दशमः खण्डः ॥

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युस्त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाहेति तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि वाग्वै देवानां मनोता तस्यां हि तेषां मनांस्योतानि गौर्वै देवानां मनोता तस्यां हि तेषां मनांस्योतान्यग्निर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतान्यग्निः

---

* शत० ब्रा० १. ८. १. २४ द्रष्टव्यम्।

† व्याख्यातश्चैतदिडाह्वानं तैत्तिरीयसंहिताभागे (२.६.७.)। शतपथेऽप्येवमेव श्रुतमिडाह्वानम् 'उपह्वयते। उपहूतꣳ रथन्तरꣳ सह पृथिव्या'–इत्यादिना (१.८.१.१९.)।

सर्वा मनोता अग्नौ मनोताः सङ्गच्छन्ते तस्मादाग्नेयीरेव मनोतायै हविषो ऽवदीयमानस्यान्वाहाग्नीषोमा हविषः प्रस्थितस्येति हविषो यजति हविष इति रूपसमृद्धा प्रस्थितस्येति रूपसमृद्धा सर्वाभिर्हास्य समृद्धिभिः समृद्धं हव्यं देवानप्येति य एवं वेद वनस्पतिं यजति प्राणो वै वनस्पतिर्जीवं हास्य हव्यं देवानप्येति यत्रैवं विद्वान् वनस्पतिं यजति स्विष्टकृतं यजति प्रतिष्ठा वै स्विष्टकृत् प्रतिष्ठाया मेव तद्यज्ञ मन्ततः प्रतिष्ठापयतीळा मुपह्वयते पशवो वा इळा पशूनेव तदुह्वयते पशून् यजमाने दधाति--दधाति ॥ १० ॥

॥ इत्यैतरेयब्राह्मणे द्वितीयपञ्चिकायां प्रथमोध्यायः ॥१॥

अथ हृदयाद्यङ्गरूपस्य प्रधानहविषो ऽवदानकाले किञ्चित् सूक्तं विधातुं प्रैषमन्त्रं विधत्ते—"मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युः"-इति। देवानां मनांस्योतानि दृढं प्रविष्टानि यस्यां देवतायां सा मनोता। तदर्थं हृदयादेकादशाङ्गरूपं हविरवदीयते ॥

तस्य हविषोऽनुकूला ऋचोऽनुब्रूहीत्यध्वर्युः प्रैषमन्त्रं पठन् सूक्तं* विधत्ते—"त्वं ह्यग्ने प्रथमो मनोतेति सूक्त मन्वाह"-इति।

---

* मनोतासूक्त मिदम्। तदाहाश्वलायनः—'मनोतायै सम्प्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह'-इत्यादि ९. ६. १। तै० ब्रा० ३. ६. १०. एतदेव सूक्तम्।

त्वं ह्यग्न इत्यादिकं त्रयोदशर्चं सूक्तम् (सं६.१.१—१३.)। तन्मैत्रावरुणो ब्रूयात् *। तदाह बौधायनः—"यदा जानाति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति,तदा मैत्रावरुणो मनोता मन्वाह,—त्वं ह्यग्ने प्रथमः"-इति। अत्र वैय्यधिकरण्यलक्षणं चोद्य मवतारयति—"तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्मादाग्नेयीरेव मनोतायै हविषो ऽवदीयमानस्यान्वाहेति"-इति। अत्र हविरग्नीषोमदेवत्यम्, सूक्तगता ऋचः केवलाग्निदेवताकाः। तत्र 'यद्' यस्मात् कारणात् पशुः 'अन्यदेवत्यः उत' देवतान्तरयुक्तः खलु भवति, तस्मात् कारणाद्वैय्यधिकरण्य मिदम्। तच्चायुक्त मिति ब्रह्मवादिनश्चोद्यम् 'आहुः'। तस्य समाधानं दर्शयति—"तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि; वाग् वै देवानां मनोता, तस्यां हि तेषां मनांस्योतानि; गौर्वै देवानां मनोता, तस्यां हि तेषां मनांस्योतानि; अग्निर्वै देवानां मनोता, तस्मिन् हि तेषां मनांस्योतान्यग्निः सर्वा मनोता, अग्नौ मनोताः सङ्गच्छन्ते; तस्मादाग्नेयीरेव मनोतायै हविषो ऽवदीयमानस्यान्वाह"-इति। वाग्गौरग्निरित्येतासु देवतासु देवमनःसमाश्रितत्वात् तिस्रोऽपि देवता मनोता इत्युच्यन्ते। ताश्च तिस्रः सर्वा मनोताः, अग्निःस्वरूपा एव; अग्नौ तासां सङ्गतत्वात्। सङ्गतिश्च तदीयहविषोऽग्न्याधारकत्वात्। तस्मादग्नेर्मुख्यत्वादग्निदेवताका ऋचोऽनुब्रूयात्॥

अथ हृदयाद्यङ्गरूपस्य प्रधानहविषो याज्यां विधत्ते—"अग्नी-

---

* तैत्तिरीयाम्नाये तु हविर्वनस्पतिस्विष्टकृतां मैत्रावरुणेन वक्तव्याः पुरोऽनुवाक्याः प्रैषाश्च ब्राह्मणीयतृतीयकाण्डेऽनुक्रमेणैव श्रुताः (६.११.अनु०), तत उत्तरस्मिन्ननुवाके याज्या अपि।

षोमा हविषः प्रस्थितस्येति (सं० १.९३. ७.) हविषो यजति"-इति। अग्नीषोमेत्यादिकां याज्यां पठेदित्यर्थः। अस्या याज्याया हविरानुकूल्यं दर्शयति—"हविष इति रूपसमृद्धा, प्रस्थितस्येति रूपसमृद्धा"-इति। इदं हृदयादिकं हविः, प्रस्थितं वेद्या मासादितम्; याज्यायां हविषः प्रस्थितस्येति पदद्वयं श्रुतम्। तस्मादिय मनुकूला। वेदनं प्रशंसति—"सर्वाभिर्हास्य समृद्धिभिः समृद्धं हव्यं देवानप्येति य एवं वेद"-इति। हविषो यथाशास्त्र मवदानपाकविशेषः, परस्परं हृदयादीना मसङ्कीर्णत्वम्,-इत्यादयो याः समृद्धयो ऽपेक्षिताः, ताभिः सम्पूर्णं भूत्वा तद्धविर्देवान् प्राप्नोति॥

अथ वनस्पतियागं विधत्ते—"वनस्पतिं यजति, प्राणो वै वनस्पतिः"-इति। वनस्पतिः वृक्षः। तयाविधशरीरयुक्तां देवतां यजेत्। तत्प्रकार आपस्तम्बेन दर्शितः—"जुह्वा मुपस्तीर्य सकृत् पृषदाज्यस्योपहत्य द्विरभिघार्य वनस्पतयेऽनुब्रूहि वनस्पतये प्रेष्येति संप्रैषौ वषट्कृते जुहोति"-इति (श्रौ० ७. २५. १५.)। अत्र वनस्पतेः वृक्षशरीरस्य जीवाविष्टत्वात् प्राणरूपत्वम् *। यष्टुर्वेदनं प्रशंसति—"जीवं हास्य हव्यं देवानप्येति यत्रैवं विद्वान् वनस्पतिं यजति"-इति। विदुषो यष्टुर्हविरेवं प्राणोपेतं चेतनं भूत्वा तद्धविर्देवानाप्नोति॥

अथ स्विष्टकृद्यागं विधत्ते—"स्विष्टकृतं यजति, प्रतिष्ठा वै स्विष्टकृत्; प्रतिष्ठाया मेव तद्यज्ञ मन्ततः प्रतिष्ठापयति"-

---

* भगवतो निरुक्तकारस्य यास्कस्याभिमतविरुद्ध मिदं भाष्यम्। तेन ह्युक्तम्—'यज्ञसंयोगाद्राजा स्तुतिं लभेत, राजसंयोगाद् युद्धोपकरणानि। तेषां रथः प्रथमागामी भवति'-इति, 'आत्मैवैषां रथो भवत्यात्माश्व आत्मायुध मात्मेषवः'-इत्यादि च (निरु० ९.२.१; ७.१.५.)।

इति। वैकल्यपरिहारेण स्विष्टकृत्त्वापादनात् स्विष्टकृतः प्रतिष्ठात्वम्। तद्यागानुष्ठानेनेमं 'यज्ञ मन्तत:' समाप्त्यवसरे प्रतिष्ठायां स्थापयति * ॥

इळोपह्वानं † विधत्ते—"इळा मुपह्वयते ; पशवो वा इळा, पशूनेव तदुपह्वयते,—पशून् यजमाने दधाति-दधाति"-इति। पूर्ववद् (३०४ पृ०) व्याख्येयम् ; पुरोडाशेडा पूर्वखण्डेऽभिहिता, इह तु पश्विडेति विशेषः। अत्र सर्वत्र यद्यच्चोदकतः प्राप्तम्, तस्य सर्वस्य विधि मनूद्य प्रशंसा कृतेति द्रष्टव्यम् ॥ दधातीतिपदाभ्यासो ऽध्यायसमाप्त्यर्थः ॥

अत्र मीमांसा। दशमाध्यायस्य तृतीयपादे ( जै॰ सू॰ ४२. अधि॰ २२. ) चिन्तितम्—

"मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वाद्यसौ।
आग्नेयैरवेति वचनं प्रकृतौ सार्थकं यतः ॥
अग्नीषोमावग्निनैव लक्षितौ वचनं विना।
अनर्थकं तत्र वाक्यं ‡ विकृतावूहवारणम् ॥

"त्वं ह्यग्ने प्रथमो मनोता"-इति ( सं॰ ६.१.१. ), अयं मनोतामन्त्रो ऽग्नीषोमीयपशौ पठितः ( तै॰ ब्रा॰ ३. ६. १०. ); वायव्यपशावयं चोदकप्राप्तः। तत्र 'त्वं हि वायो प्रथमः'- इत्येव मूहोऽस्ति। यत्तु वचनम्—'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या'-इति, तत्प्रकृतौ पठितम्; तत्रैव वचनं सार्थकम्; द्विदेवत्यपशावेकवचनमन्त्रस्य प्रकरणपठितस्याप्ययोग्यत्वशङ्कया पुनर्विधा-

---

* 'स्थापयेत्' क। † 'इलोपाह्वानं' क, घ।
‡ 'अनर्थकात्तत्तो वाक्याद्' ए. सी. मु. तै॰ ब्रा॰ भा॰ २ भा॰ ४११ पृ०।

नार्थत्वात् *। मैवम्; छत्रिणो गच्छन्तीत्यादिवन्मन्त्रगतस्याग्निशब्दस्याग्नीषोमलक्षकत्वेनायोग्यत्वशङ्काया अनुदयात्। अतः प्रकृतावनर्थकं तद्वाक्यं विकृतावूहनिवारणेन चरितार्थं भवति। तस्मादूहो नास्ति"–इति ॥ १० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां प्रथमाध्याये
दशमः खण्डः ॥ १० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायाः प्रथमोऽध्यायः ॥

---

* अतएवाहाश्वलायनः—"तत्र प्रैषे कतर एवाग्नीषोमावेव मित्रैतरेयिणः। अन्यत्र द्विदेवतान्मैत्रावरुणदेवते च। तथा दृष्टत्वात्। प्रकृतत्वा गाणगारिः। उत्पन्नानां स्मृत आम्नायेऽनर्थभेदे निरर्थो विकारः"–इति श्रौ० ३. ६. २—७ सू०।

## ॥ अथ द्वितीयाध्यायः ॥

( तत्र )

### ॥ अथ प्रथमः खण्डः ॥



देवा वै यज्ञ मतन्वत तांस्तन्वानानसुरा अभ्यायन्यज्ञवेशस मेषां करिष्याम इति तानाप्रीते पशौ पुर इव पर्यग्नेर्यूपं प्रति पुरस्तादुपायंस्ते देवाः प्रतिबुध्याग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त यज्ञस्य चात्मनश्च गुप्त्यै ता एषा मिमा अग्निमय्यः पुरो दीप्यमाना भ्राजमाना अतिष्ठंस्ता असुरा अनपधृष्यैवापाद्रवंस्ते ऽग्निनैव पुरस्तादसुररक्षांस्यपाघ्नताग्निना पश्चात्तथैवैतद्यजमाना यत्पर्यग्निकुर्वन्त्यग्निमयीरेव तत्पुरस्त्रिपुरं पर्यस्यन्ते यज्ञस्य चात्मनश्च गुप्त्यै तस्मात्पर्यग्नि कुर्वन्ति तस्मात्पर्यग्नये ऽन्वाह तं वा एतं पशु माप्रीतं सन्तं पर्यग्निकृत मुदञ्चं नयन्ति तस्योल्मुकं पुरस्ताद्धरन्ति यजमानो वा एष निदानेन यत्पशुरनेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोक मेष्यतीति तेन ज्योतिषा यज-

मानः पुरोज्योतिः स्वर्गं लोक मेति तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति यदेवैन मद आप्नीतं सन्तं पर्यग्निकृतं बहिर्वेदि नयन्ति बर्हिषद मेवैनं तत्कुर्वन्ति तस्योवध्यगोहं खनन्त्यौषधं वा ऊवध्य मियं वा ओषधीनां प्रतिष्ठा तदेनत्स्वाया मेव प्रतिष्ठाया मन्ततः प्रतिष्ठापयन्ति तदाहुर्यदेष हविरेव यत्पशुरथास्य बह्वपैति लोमानि त्वगसृक्कुष्ठिकाः शफा विषाणे स्कन्दति पिशितं केनास्य तदापूर्यत इति यदेवैतत्पशौ पुरोळाश मनु निर्वपन्ति तेनैवास्य तदापूर्यते पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूतावजायेतां तद्यत्पशौ पुरोळाश मनुनिर्वपन्ति समेधेन नः पशुनेष्ट मसत् केवलेन नः पशुनेष्ट मसदिति समेधेन हास्य पशुनेष्टं भवति केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥ ११ ॥

यूपोऽथ यूयाञ्जन माप्रियश्च पर्यग्न्युपप्रैष मथाध्रिगुश्च ।
पशौ पुरोडाशविधिर्मनोतावनस्पतिस्विष्टकृदिडास्तुतिश्च ॥

अथ सप्तमाध्याये पशुप्रैषप्रातरनुवाकौ वक्तव्यौ । तत्र पर्यग्निकरणस्तुत्यर्था माख्यायिका माह—"देवा वै यज्ञ मतन्वत; तांस्तन्वानानसुरा अभ्यायन्यज्ञवेशस मेषां करिष्याम इति ; तानाप्रीते पशौ पुर इव पर्यग्नेर्यूपं प्रति पुरस्तादुपायंस्ते देवाः प्रतिबुध्याग्नि-

मयी: पुरस्त्रिपुरं पर्यास्यन्त, यज्ञस्य चात्मनश्च गुप्त्यै ; ता एषा मिमा अग्निमय्यः पुरो दीप्यमाना भ्राजमाना अतिष्ठंस्ता असुरा अनपधृष्यैवापाद्रवंस्ते ऽग्निनैव पुरस्तादसुररक्षांस्यपाघ्नताग्निना पश्चात्"-इति। पुरा कदाचिद् 'देवा यज्ञम्' 'अतन्वत' विस्तारितवन्तः। यद्यपि पूर्वमीमांसाकर्तृभिर्नवमाध्याये देवाना मशरीरत्वात्कर्म्माधिकारो नास्तीत्युक्तम् *, तथापि प्रशंसार्थत्वेन स्वार्थतात्पर्याभावाद्† अविरोधः। यद्वा ; उत्तरमीमांसाकर्तृभिः शरीर मङ्गीकृत्य विद्याधिकारोपपादनाद् ‡ इतरेषां § शरीरराहित्य मृत्विगादिवत् कर्म्मकाले प्रत्यक्षशरीरं नास्तीति तदभिप्रायं कर्म्माधिकारनिराकरणस्य कर्म्मसाध्यस्य स्वर्गस्य प्राप्तत्वात्तत्प्रयोजनाभावाभिप्रायम्। जगदनुग्रहार्थं तु तेषां शरीराणा मस्त्येवाधिकार इत्यभिप्रेत्य यज्ञ मतन्वतेत्यत्रोच्यते। 'तान्' देवान् यज्ञविस्तारिणो ऽभिलक्ष्य 'असुराः' आगच्छन्। केनाभिप्रायेणेति, तदुच्यते—'एषां

---

* जै०सू०९.१.६—१०. अधि० ४ ; ४२—४४ सू० अधि० १५ ; ६.७.३२ सू० अधि०१३।

† तथाह्याह शबरस्वामी— "असद्वृत्तान्तान्वाख्यानं, स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने वर्त्तमाने, इयं निष्पद्यते,—यच्च वृत्तान्तज्ञानं, यच्च कस्मिंश्चित्प्ररोचना, द्वेषो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं न निवर्त्तकं च इति प्रयोजनाभावात् अनर्थक मिति अविवक्षितं ; प्ररोचनया तु प्रवर्त्तते, द्वेषात् निवर्त्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत !"-इति (जै० सू० १. २. १०. भा०)।

‡ वै० सू० १. ३. २६—३३. अधि० ८।

§ 'इतरेषाम्' नरुक्तानाम्। तथाहि—'अपि वा कर्मपृथक्त्वाद् यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः'-इति निरु० ७. २. १। तत्रैव तत उत्तरम्—'अथाकारचिन्तनं देवतानाम्'-इत्युपक्रम्य 'अपुरुषविधाः स्युः'-इत्यादिना (७. २. २, ३.) इन्द्रादीनां विग्रहाद्यभाव एव सिद्धान्तितो यास्केन।

देवानां' 'यज्ञविभ्रंसं' यज्ञविघातं 'करिष्याम इति' तदभिप्रायः। कदा, कुत्र, समागता इति तदुच्यते,— 'पशावाप्रीते' प्रयाजैस्तर्पिते सति 'पर्यग्नेः पुर इव' पर्यग्निकरणात् पूर्वस्मिन् काले 'यूपं प्रति' 'पुरस्तात्' पूर्वदेशे, 'तान्' देवानसुरा उपागच्छन्। 'ते देवाः' तदागमनं निश्चित्य 'अग्निमयीः पुरः' अग्निप्राकाराः 'त्रिपुरं' वेष्टनत्रयं यथा भवति तथा 'पर्यास्यन्त' पशोः पुरतः प्रक्षिप्तवन्तः। तच्च प्रक्षेपणं 'यज्ञस्य' देवानां स्वरूपस्य च रक्षणाय भवति। 'एषां' देवानां सम्बन्धिन्यः 'ताः पुरः' पशोः परितो ज्वलन्त्यो ऽन्धकारं निवर्त्य तं देशं प्रकाशयन्त्यः 'अतिष्ठन्'। 'ता अग्निमय्यः पुरः' 'अनपधृष्यैव' तिरस्कार मकृत्वैव 'अपाद्रवन्' अपगताः। तत्र देवास्तेन च प्राकाररूपेण 'अग्निना' पूर्वस्यां दिशि असुरान् रक्षांसि च हतवन्तः ;—'पश्चाद्' अपि 'अग्निना' एव हतवन्तः॥

अथ पर्यग्निकरणं विधत्ते— "तथैवैतद्यजमाना यत्पर्यग्नि कुर्वन्त्यग्निमयीरेव तत्पुरस्त्रिपुरं पर्यस्यन्ते, यज्ञस्य चात्मनश्च गुप्त्यै; तस्मात्पर्यग्नि कुर्वन्ति, तस्मात्पर्यग्नये ऽन्वाह"-इति। यथा देवैरग्निप्राकाराः कृताः, 'तथैवैतद्यजमानाः' पर्यग्नि 'कुर्वन्ति'। अतो यद्येतत्कुर्युस्तदानी मग्निप्राकारवेष्टनं पशोः परितः प्रक्षिपन्ति। 'यज्ञस्य चात्मनश्च' रक्षणाय भवति। तस्मादवश्यं पर्यग्निकरण मपेक्षितम्। तदर्थं मनुवचनं चापेक्षितम्। तत्र पर्यग्निकरण मापस्तम्बो विस्पष्टयति—"आहवनीयादुल्मुक मादायाग्नीध्रः परि वाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुम्"-इति (श्रौ० ७.१५.२.)। अनुवचनं पूर्व मेवाग्निर्होता न इत्यादिना दर्शितम् (२६७ पृ०)। पर्यग्निकरणादूर्ध्वं पशोः शामित्रदेशं प्रत्या-

नयनं विधत्ते—"तं वा एतं पशु माप्रीतं सन्तं पर्यग्निकृत मुदञ्चं नयन्ति"-इति। प्रयाजैस्तोषितं पर्यग्निकरणेन रक्षितम् पशु मुदङ्मुखं कृत्वा नयेयुः। नीयमानस्य पशोः पुरतो नेतव्यं विधत्ते—"तस्योल्मुकं पुरस्ताद्धरन्ति"-इति। तदेतदुभय मापस्तम्बेन स्पष्टीकृतम्—"आहवनीयादुल्मुक मादायाग्नीध्रः पूर्वः प्रतिपद्यते। शमिता पशुं नयति। उरोरन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति"-इति (७.१५.८-१०.)। पशोः पुरतो वह्निनयनं प्रशंसति—"यजमानो वा एष निदानेन यत्पशुरनेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोक मेष्यतीति तेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोक मेति"-इति। यः 'पशुः' अस्ति, 'एषः' 'निदानेन' सूक्ष्मदृष्टिनिरूपणेन 'यजमानः' एव भवति; पशुना स्वात्मनो निष्क्रीतत्वात्। पशोर्यजमानत्वं निष्क्रयणं च पूर्व मेव [ आत्मनिष्क्रयण मेवास्य सन्दृढ़यति (?) ] श्रुत्यन्तरोदाहरणेन दर्शितम् ( २५६, २५७ पृ० )। पशोः पुरतो नीयमानज्योतिषायं यजमानः पुरोवर्त्तिदीपयुक्तो भूत्वा स्वर्गं लोकं प्रयास्यति। यथा राजामात्यादिः पर्यटने रात्रौ पुरोवर्त्तिदीपयुक्तो गच्छति, तद्वदित्यभिप्रेत्योल्मुकं पुरस्तान्नयन्ति ;— तदभिप्रायानुसारेणैव यजमानोऽपि तथा स्वर्गं लोकं प्राप्नोति। तदेतदग्नेः पुरतो नयनं शाखान्तरेऽप्याम्नातम्—"यर्हि पशु माप्रीत मुदञ्चं पशुं नयन्ति, तर्हि तस्य पशुश्रपणꣳ हरेत् ; तेनैवैनं भागिनं करोति"-इति ( तै० सं० ३. १. ३. २. )।

शामित्रदेशं नीतस्य पशोर्हननस्थले बर्हिःप्रक्षेपं विधत्ते—"तं यत्र निहनिष्यन्तो भवन्ति, तदध्वर्युर्बर्हिरधस्तादुपास्यति"-इति। 'तं' पशुं यस्मिन् देशे हनिष्याम इत्येवं मन्यन्ते, तस्मिन्

देशे 'अध्वर्युः' भूमौ 'बर्हिः' प्रक्षिपेत्। तदेतत् शाखान्तरे समन्त्रक मामनातम्—"पृथिव्याः सम्पृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषद मेवैनं करोति"-इति ( तै० सं० ६. ३. ८. २. * )। तदेतदापस्तम्बेन स्पष्टीकृतम्—"अभिपर्यग्निकृते देशे उल्मुकं निदधाति। स शामित्रः। तं दक्षिणेन प्रत्यञ्चं पशु मवस्थाप्य पृथिव्याः सम्पृचः पाहीति तस्याधस्ताद् बर्हिरुपास्यत्युपाकरणयोरन्यतरत्। तस्मिन् सञ्ज्ञपयन्ति † प्रत्यक्शिरस मुदीचीनपादम्"--इति ( ७.१६. २-५. )। पशोरधो बर्हिःप्रक्षेपं प्रशंसति—"यदेवैन मद आप्रीतं सन्तं पर्यग्निकृतं बहिर्वेदि नयन्ति, बर्हिषद मेवैनं तत् कुर्वन्ति"-इति। प्रयाजैस्तोषितं, पर्यग्निकरणेन रक्षितं, पशुं सौमिकवेदेः वहिर्भागे संज्ञपनाय नयन्तीति अदो यदस्ति, तदानीम् 'एनं' पशुं 'बर्हिषद मेव' दर्भेऽवस्थित मेव 'कुर्वन्ति'। यद्वा; 'बर्हिषदं' यज्ञेऽवस्थितं वेद्या मवस्थितं 'कुर्वन्ति'। वाह्यदेशे नयनदोषं परिहरतीत्यर्थः॥

पशोः पुरीषस्थापनार्थ मवटखननं विधत्ते—"तस्योवध्यगोहं खनन्ति"-इति। ऊवध्यं पुरीषं, तस्य गोहं गोपनस्थानं, तत्कुर्युः। अस्य खननस्य कालः आपस्तम्बेन दर्शितः—"ऊवध्यगोहं पार्थिवं खनतादित्यभिज्ञायोवध्यगोहं खनति"-इति ( श्रौ० ७.१६.१. )। होता त्वध्रिगुप्रैषमन्त्रे ‡ यदोवध्यगोह मिति वाक्यं पठति, तदा

* पृथिव्याः सम्पृचः पाहीति मन्त्रस्तु, तै० सं० १. ३. ८. २।

† 'शमितार इति शेषः। अक्षतस्य मारणं संज्ञपनम्'-इति तट्टीका।

‡ स मन्त्रः तैत्तिरीयब्राह्मणे ( ३. ६. ६ अनुवाके ) आम्नातः, इह षष्ठाध्यायीयषष्ठसप्तमखण्डयोः व्याख्यातश्च ( २७१—२९४ पृ० )।

खनेदित्यर्थः। तदेतद्रूवध्यगोहखननं प्रशंसति—"औषधं वा ऊवध्य मियं वा ओषधीनां प्रतिष्ठा, तदेनत् स्वाया मेव प्रतिष्ठाया मन्ततः प्रतिष्ठापयन्ति"-इति। तदेतदर्थवादवाक्यं पूर्वाध्याय-मन्त्रप्रसङ्गे व्याख्यातम् * ॥

अथ पशुपुरोडाशं † प्रशंसितुं प्रश्न मुत्थापयति—"तदाहुर्यदेष हविरेव यत्पशुरथास्य बह्वपैति,—लोमानि त्वगसृक् कुष्ठिकाः शफा विषाणे; स्कन्दति पिशितं; केनास्य तदापूर्यत इति"-इति। 'तत्' तत्र पशौ चोद्यवादिनः 'आहुः'—'यद्' यदा यः 'पशुः' अस्ति, 'एषः' सर्वोऽपि 'हविरेव'; कृत्स्नस्य पशोरुपाकृतत्वात्। 'अथ' तदानीं कस्याप्यवयवस्यापनयो न युक्तः; इह तु 'बहु' अवयवजातम् 'अपैति'; तद्यथा—'लोमानि' रोमाणि, 'त्वक्' चर्म, 'असृक्' रक्तम्, 'कुष्ठिकाः' उदरवर्तिनो भक्षितास्तृणादयः, 'शफाः' खुराः, 'विषाणे' शृङ्गद्वयम्। एतत्सर्व मपैति; अग्नौ होमाभावात्। किञ्च 'पिशितं' मांसं यत्किञ्चित् 'स्कन्दति' भूमौ पतति, तदप्यपैति। एवं सति 'केन' प्रकारेण 'अस्य' पशोः सम्बन्धि 'तत्' सर्व मवयवजातं समन्तात् 'पूर्यते'? इति प्रश्नः।

तस्योत्तर माह—"यदेवैतत्पशौ पुरोळाश मनु निर्वपन्ति, तेनैवास्य तदापूर्यते"-इति। पश्वालम्भनम् 'अनु'सृत्य 'पुरोळाशं निर्वपन्ति' इति 'यत्' इद मस्ति, 'तेनैव' 'अस्य' पशोः सम्बन्धि 'तत्' सर्वं मवयवजातं पूरितं भवति।

तदेतदुपपादयति—"पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूतावजायेतां; तद्यत्पशौ पुरोळाश मनु निर्वपन्ति', समेधेन

---

* २७५ पृ० १३ पं० पशुभक्षितानां मित्यादिना।

† 'पश्वर्थः पुरोडाशः पशुपुरोडाशः'-इति आप० श्रौ० ७. २२. १. टी०।

नः पशुनेष्ट मसत्केवलेन नः पशुनेष्ट मसदिति"-इति। मनुष्याश्वादिभ्यः सकाशात् 'मेधाः' यज्ञयोग्याः भागाः 'उदक्रामन्'; तदेतत् पुरुषं वै देवा इत्यस्मिन् खण्डे प्रपञ्चितम् (२९४—३०० पृ०)। उत्क्रान्तमेधा भूमौ प्रविश्य 'व्रीहिर्यवश्च'-इति यौ धान्यविशेषौ विद्येते, तावुभौ 'भूमौ'* तद्रूपतां प्राप्तौ 'अजायेतां' भूमेः सकाशादुत्पन्नौ। तद्यत्पशावित्यादिकं तस्मिन्नेव खण्डे व्याख्यातम् (२९७ पृ० ५पं०)।

एतद्वेदनं प्रशंसति—"समेधेन हास्य पशुनेष्टं भवति, केवलेन हास्य पशुनेष्टं भवति, य एवं वेद"-इति। एतदपि तत्रैव व्याख्यातम् (२९७ पृ० १६ पं०)। पुनरप्यत्रोक्तिर्यवप्रशंसार्था; पूर्वत्र व्रीहिमात्रं प्रशंसितम्, इह तु व्रीहियवा उभावपि प्रशस्येते इत्यविशेषः॥

अत्र "यदेष हविरेव यत्पशुः"-इत्युक्तम् (३१७ पृ० ५ पं०), तत्र कश्चिद्विशेषो मीमांसा-दशमाध्यायस्य सप्तमपादे (जै० सू० १, २. अधि० १.) चिन्तितः—

"पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यतः।
आद्यो वा चोदनान्नैव मवदानपृथक्त्वतः॥

"अग्नीषोमीयं पशु मालभेत"-इत्यत्र (२५१, २५५ पृ०) कृत्स्नस्य पशोरेकहविष्ट्वं युक्तम्। कुतः? अग्नीषोमदेवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात्। न हि हृदयाद्यङ्गं साक्षात् पशुर्भवतीति प्राप्ते, ब्रूमः;—"हृदयस्याग्रेऽवद्यति, अथ जिह्वाया अवद्यति, वक्षसोऽवद्यति, दोष्णोरवद्यति, पार्श्वयोरवद्यति"-इत्यादिना हृदयाद्यङ्गाना मवदानानि पृथगाम्नायन्ते (तै० सं० ६.३.

* मद्दृष्टेषु सर्वमूलपुस्तकेषु 'भूतौ'-इति, सर्वटीकापुस्तकेषु 'भूमौ'-इत्येव।

१०.४.)। अवदानं च हविष्ट्वप्रयोजकः संस्कारः ; पुरोडाशं ह्येतु मवदीयमानत्वदर्शनात्। हविःशब्दस्तु कर्म्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते। पश्वाकृतिचोदना तु हृदयाद्यङ्गद्वारेण। तस्मात् प्रत्यङ्गं हविर्भेदः"—इति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये
प्रथमः खण्डः ॥ १ ( ११ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

तस्य वपा मुत्खिद्याहरन्ति ता मध्वर्युः स्रुवेणाभिघारयन्नाह स्तोकेभ्यो ऽनुब्रूहीति तद्यत् स्तोकाः * श्चोतन्ति सर्वदेवत्या वै स्तोका नेन्म इमे ऽनभिप्रीता देवान् गच्छानिति जुषस्व सप्रथस्तम मित्यन्वाह वचो देवप्सरस्तमं हव्या जुह्वान आसनीत्यग्ने रेवैनांस्तदास्ये जुहोतीमं नो यज्ञ ममृतेषु धेहीति सूक्त मन्वाहेमा हव्या जातवेदो जुषस्वेति हव्यजुष्टि माशास्ते स्तोकाना मग्ने मेदसो घृतस्येति मेदसश्च हि घृतस्य

* इह सर्वत्रैव 'स्तोकाः श्चोतन्ति'—इति सविसर्गपाठः क-पुस्तके।

च भवन्ति। होतः प्राशान प्रथमो निषद्येत्यग्निर्वै देवानां होताग्ने प्राशान प्रथमो निषद्येत्येव तदाह। घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदस इति मेदसश्च ह्येव हि घृतस्य च भवन्ति। स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्यमित्याशिष माशास्ते। तुभ्यं स्तोका घृतश्चुतो ऽग्ने विप्राय सन्त्येति। घृतश्चुतो हि भवन्त्यृषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भवेति। यज्ञसमृद्धि माशास्ते। तुभ्यं श्चोतन्त्यध्रिगो शचीव। स्तोकासो अग्ने मेदसो घृतस्येति। मेदसश्च ह्येव हि घृतस्य च भवन्ति। कविशस्तो बृहता भानुना गा। हव्या जुषस्व मेधिरेति। हव्यजुष्टि मेवाशास्त। ओजिष्ठं ते मध्यतो मेद उद्भृतं। प्र ते वयं ददामहे। श्चोतन्ति ते वसो स्तोका अधि त्वचि। प्रति तान् देवशो विहीत्यभ्येवैनांस्तद्वषट् करोति। यथा सोमस्याग्ने वीहीति। तद्यत् स्तोका श्चोतन्ति। सर्वदेवत्या वै स्तोकास्तस्मादियं स्तोकशो। वृष्टिर्विभक्तोपाचरति। ॥ २ (१२) ॥

अथ स्तोकानुवचनीयाः * विधातु मादौ प्रैषमन्त्रं विधत्ते— "तस्य वपामुत्खिद्याहरन्ति; ता मध्वर्युः स्रुवेणाभिघारयन्नाह,—

* 'अग्निसंयोगाद् ये मेदसो विन्दवश्चोतन्ति, ते स्तोकाः'–इति आप० श्रौ० टी० ७. २०. ३। 'द्विशूलया शाखया धार्यमाणया वपाया उपरि 'त्वा सु ते दधिरे'–इतिमन्त्रेण आज्ये हुते सति तत्सकाशात् पतन्तो विन्दवः स्तोकाः'–इति च सा०भा० (तै०सं०१.३.९.)।

स्तोकेभ्यो ऽनुब्रूहीति"-इति । 'तस्य' पशोः 'वपाम्' उदरगतां वस्त्र-सदृशीम् 'उत्खिद्य' उद्धृत्य होमार्थम् 'आहरन्ति' । 'तां' च वपाम् 'अध्वर्युः' 'अभिघारयन्' प्रैषमन्त्रं ब्रूयात् । तदेतदापस्तम्बो विशदयति—"त्वा मु ते दधिरे हव्यवाह मिति स्रुवेण वपा मभिजुहोति । प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्यो ऽनुब्रुहीति सम्प्रेष्यति"-इति ( श्रौ० ७. २०. २, ३. ) । तस्य प्रैषकथनस्य तात्पर्यं दर्शयति—"तद्यत् स्तोका श्चोतन्ति, सर्वदेवत्या वै स्तोका, नेन्म इमे ऽनभिप्रीता देवान् गच्छानिति"-इति । 'तत्' तस्यां वपायां तदानी मेव छिन्नाया मार्द्रायां श्रप्यमाणायां यदा 'स्तोकाः' नीरविन्दवः 'श्चोतन्ति' निर्मला अधः पतन्ति, तदानीं सर्व्वदेवानां प्रियत्वात् 'इमे' स्तोकाः स्वयम् 'अनभिप्रीताः' अस्मासु प्रीतिरहिताः 'देवान्' 'गच्छान्' गमिष्यन्ति । तथा सति महदेतदस्माकं भयकारणम् तन्माभूदित्यभिप्रेत्य स्तोकप्रीणनार्थमिदं प्रैषानुवचनम् । अत्र 'नेत्'-इत्ययं शब्दः परिभयार्थः ॥

अथानुवचनं विधत्ते—"जुषस्व सप्रथस्तम मित्यन्वाह"-इति । तस्य अनुवचनस्य काल आश्वलायनेन दर्शितः—"वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्यो ऽन्वाह जुषस्व सप्रथस्तम मिमं नो यज्ञ मिति"-इति ( श्रौ० ३.४.१. * ) । अत्रानुवचनवक्ता मैत्रावरुणः । तदाह बौधायनः—"यदा जानाति स्तोकेभ्यो ऽनुब्रूहीति, तदा मैत्रावरुणः स्तोकीया अन्वाह जुषस्व सप्रथस्तम मिति"-इति ॥ तस्या ऋचो द्वितीयतृतीयपादा वनुवदति —"वचो देवप्सरस्तमं हव्या जुह्वान आसनि"-इति । सर्वस्या

* जुषस्वेत्येका ( सं० १. ७५. १. ), इमन्नो यज्ञ मिति सूक्तात्मिकाः पञ्च ( सं० ३. २१. १—५. ) ; त इमाः षडेवर्चस्तैत्तिरीयैरेकत्राम्नाताः ( ब्रा० ३. ६. ७. ) ।

ऋचो ऽय मर्थः—हे अग्ने ! 'हव्या' हवींष्यस्मदीयानि 'आसनि' आस्ये मुखे 'जुह्वानः' प्रक्षिपन् 'वचः' अस्मदीयं स्तोत्रं 'जुषस्व' सेवस्व। कीदृशं वचः ? 'सप्रथस्तमम्' अतिशयेन प्रथसा विस्तरेण सहितं, 'देवप्सरस्तमं' देवाना मतिशयेन प्रीणयितृ। अत्रासनीति-पदस्याभिप्रायं दर्शयति—"अग्नेरेवैनांस्तदास्ये जुहोति"--इति। 'तत्' तेन मन्त्रपाठेन स्तोकानग्नेरेव मुखे जुहोति॥

अनुवचनीया मेका मृचं विधाय पुनरप्यनुवचनीयं पञ्चर्चं सूक्तं (सं० ३.२१.१—५.) विधत्ते—"इमं नो यज्ञ ममृतेषु धेहीति सूक्त मन्वाह"-इति। 'जातवेदः !' इति सम्बोधनं वक्ष्यते। 'नः' अस्मदीयम् 'इमं' यज्ञम् 'अमृतेषु' देवेषु 'धेहि' स्थापय। द्वितीयपाद मनूद्य व्याचष्टे—"इमा हव्या जातवेदो जुषस्वेति हव्यजुष्टि माशास्ते"-इति। जुषस्वेत्यभिधानाद्धविःसेवायाः प्रार्थ-नम्। तृतीयपाद मनूद्य व्याचष्टे—"स्तोकाना मग्ने मेदसो घृतस्येति मेदसश्च हि घृतस्य च भवन्ति"-इति। हे 'अग्ने !' 'मेदसः' वपायाः, हूयमानस्य च 'घृतस्य' ये 'स्तोकाः' विन्दवः सन्ति, तेषां मध्ये स्वादूनीत्यध्याहारः। 'प्राशान'--इतिवक्ष्य-माणेनान्वयः। अत्र ये स्तोकाः पतन्ति, यस्मात् 'मेदसश्च घृतस्य च' सम्बन्धिनो 'भवन्ति', तस्माद्युक्तोऽयं वादः। चतुर्थ-पाद मनूद्य व्याचष्टे—"होतः प्राशान प्रथमो निषद्येत्यग्निर्वै देवानां होताग्ने प्राशान प्रथमो निषद्येत्येव तदाह"-इति। हे 'होतः' होमनिष्पादकाग्ने ! त्वं 'प्रथमः' मुख्यः सन् 'निषद्य' उपविश्य 'स्तोकान्' 'प्राशान' भक्षय। यद्यपि होतृशब्दोऽत्र प्रयुक्तः, तथाप्यग्नेरेव देवहोतृत्वात् अग्नि मेव सम्बोध्य चतुर्थ-पादो ब्रूते॥

अस्मिन् सूक्ते द्वितीयस्या ऋचः पूर्वार्द्धं मनूद्य व्याचष्टे—"घृतवन्तः पावक ते स्तोका श्चोतन्ति मेदस इति, मेदसश्च ह्येव हि घृतस्य च भवन्ति"-इति। हे 'पावक' शोधकाग्ने! 'ते' त्वदर्थं 'मेदसः' वपायाः सम्बन्धिनः 'घृतवन्तः' घृतसहिताः 'स्तोकाः' बिन्दवः 'श्चोतन्ति'। अत्र मेदःसम्बन्धे घृतसम्बन्धे च पृथक् प्रसिद्धिं वक्तुं मेदसश्च ह्येव हि घृतस्य चेति 'हि'-शब्दद्वयम्। उत्तरार्द्धं मनूद्य व्याचष्टे—"स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्य मित्याशिष माशास्ते"-इति। 'देववीतये' देवानां भक्षणाय 'नः' अस्माकं 'स्वधर्म' कुलोचितं यागादावनुष्ठानरूपं धर्मं 'धेहि' सम्पादय। कीदृशं धर्मम्? 'श्रेष्ठम्' अतिप्रशस्तम्; अतएव 'वार्यं' सर्व्वैर्वरणीयम्। अत्र स्वधर्मं धेहीत्यनेनाशीः प्रतीयते॥

तृतीयस्या ऋचः पूर्वार्द्धं मनूद्य व्याचष्टे—"तुभ्यं स्तोका घृतश्चुतो ऽग्ने विप्राय सन्त्येति, घृतश्चुतो हि भवन्ति"-इति। सन्तिः दानं, ता मर्हतीति सन्त्यः। हे 'सन्त्य' फलप्रदानकुशलाग्ने! 'विप्राय' मेधाविने 'तुभ्यं' त्वदर्थं 'स्तोकाः' बिन्दवः, 'घृतश्चुतः' घृतस्राविणो वर्त्तन्ते। अत्र घृतस्रावित्वप्रसिद्धिं 'हि'-शब्देन दर्शयति। उत्तरार्द्धं मनूद्य व्याचष्टे—"ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भवेति, यज्ञसमृद्धि माशास्ते"-इति। हे अग्ने! 'ऋषिः' 'द्रष्टा' 'श्रेष्ठः' प्रशस्ततमश्च * 'समिध्यसे' अस्माभिः प्रज्वाल्यसे; अतो 'यज्ञस्य' अस्मदीयस्य 'प्राविता' प्रकर्षेण रक्षिता भव। अत्र यज्ञरक्षणवचनेन यज्ञसमृद्धि-प्रार्थनम्॥

चतुर्थ्या ऋचः पूर्वार्द्धं मनूद्य व्याचष्टे—"तुभ्यं श्चोतन्त्यध्रिगो

* 'प्रशस्ततमश्च' घ।

शचीव स्तोकासो अग्ने मेदसो घृतस्येति, मेदसश्च ह्येव हि घृतस्य च भवन्ति"-इति। हे 'अध्रिगो' अधृतरश्मे ! हे 'शचीवः' शक्तिमन्! 'अग्ने!' 'मेदसः' वपायाः सम्बन्धिनः 'घृतस्य' 'स्तोकासः' बिन्दवः 'तुभ्य' त्वदर्थं 'श्चोतन्ति' चरन्ति। अत्रापि 'हि'-शब्दद्वयं पूर्ववत्। उत्तरार्द्धं मनूद्य व्याचष्टे—"कविशस्तो बृहता भानुना गा हव्या जुषस्व मेधिरेति, हव्यजुष्टि मेवाशास्ते"-इति। हे अग्ने! त्वं 'कविशस्तः' विद्वद्भिर्ऋत्विग्भिः स्तुतः सन् 'बृहता भानुना' महता तेजसा युक्तः 'आगाः' आगच्छ। हे 'मेधिर' यज्ञयोग्य! अस्मदीयानि हव्यानि 'जुषस्व'। तदेतद्धविःसेवायाः प्रार्थनम्॥

पञ्चम्या ऋचश्चतुरोऽपि पादाननुवदति—"ओजिष्ठं ते मध्यतो मेद उद्भृतं, प्र ते वयं ददामहे, श्चोतन्ति ते वसो स्तोका अधि त्वचि, प्रति तान् देवशो विहीति"-इति। हे अग्ने! त्वदर्थम् 'ओजिष्ठ' बलवत्तमं 'मेदः' वपारूपं 'मध्यतः' पशोर्मध्यभागात् 'उद्भृतं' उत्कृष्य सम्पादितं 'वयं' यजमानाः 'ते' तुभ्य 'प्रददामहे' प्रकर्षेण दद्मः। हे 'वसो' सर्वेषां निवासहेतो! 'अधि त्वचि' वपाया मधिश्रिताः 'स्तोकाः' बिन्दवः 'ते' त्वदर्थं 'श्चोतन्ति' चरन्ति। 'देवशः' तत्तद्देवतुष्टयर्थं 'तान्' स्तोकान् 'प्रतिविहि' प्रत्येकं पिब। एतन्मन्त्रतात्पर्यं दर्शयति— "अभ्येवैनांस्तद्वषट् करोति, यथा सोमस्याग्ने वीहीति"-इति। 'तत्' तेन मन्त्रपाठेन 'एनान्' स्तोकान् 'अभि' वषट्कारमन्त्रं पठति। 'यथा सोमस्य'--इत्यादिमन्त्रस्तद्वत्॥

इदानीं स्तोकान् प्रशंसति—"तद्यत् स्तोका श्चोतन्ति, सर्वदेवत्या वै स्तोकास्तस्मादियं स्तोकशो वृष्टिर्विभक्तोपाचरति"-

इति । 'तत्' तस्यां वपायां 'यत्' यस्मात् कारणात् 'स्तोकाः श्चोतन्ति', ते च 'स्तोकाः' सर्वासां देवतानां प्रिया एव, 'तस्माद्' देवानुग्रहात् 'इयं वृष्टिः' लोके 'स्तोकशः' प्रतिबिन्दुभिः * 'विभक्ता' सती भूसमीप मागच्छति † ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये
द्वितीयः खण्डः ॥ २ (१२) ॥

---

॥ अथ तृतीयः खण्डः ॥

तदाहुः का स्वाहाकृतीनां पुरोनुवाक्याः' कः प्रैषः का याज्येति' या एवैता अन्वाहैताः पुरोनुवाक्या' यः प्रैषः स प्रैषो' या याज्या सा याज्या' तदाहुः का देवता स्वाहाकृतय इति' विश्वेदेवा

---

* घ-पुस्तकेऽत्र सर्वत्रैव विन्दुशब्दो बकारादिः ।

† 'वायो वीहि स्तोकाना मित्याह, तस्माद् विभक्ताः स्तोका अवपद्यन्ते'–इति तै० सं० ६. ३. ९ । 'वायो वीहि स्तोकाना मिति बर्हिषोऽग्र मधस्ताद वपाया उपास्यति'–इति च आप० ७. २०. १ । वायो वीहि मन्त्रस्तु तै० सं० १. ३. ९. २ । 'स्तोक्या जुहोति या एव वर्ष्या आपस्ता अवरुन्धे'–इत्यादि च तै० ब्रा० ३. ८. ६. २, ३ ।

इति ब्रूयात्तस्मात् स्वाहाकृतं हविरदन्तु देवा इति यजन्तीति देवा वै यज्ञेन श्रमेण तपसाहुतिभिः स्वर्गं लोक मजयंस्तेषां वपाया मेव हुतायां स्वर्गो लोकः प्राख्यायत ते वपा मेव हुत्वाऽनादृत्येतराणि कर्माण्यूर्ध्वाः स्वर्गं लोक मायंस्ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन् यज्ञस्य किञ्चिदेषिष्याम:* प्रज्ञात्या इति ते ऽभितः परिचरन्त† एत्‡ पशु मेव निरान्त्रं शयानं ते विदुरियान्वाव किल पशुर्यावती वपेति स एतावानेव पशुर्यावती वपा ऽथ यदेनं तृतीयसवने श्रपयित्वा जुह्वति भूयसीभिर्न आहुतिभिरिष्ट मसत्केवलेन नः पशुनेष्ट मसदिति भूयसीभिर्हास्याहुतिभिरिष्टं भवति केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥ ३ (१३) ॥

अथ वपाप्रशंसां हृदि निधाय तदुपयोगिनं कञ्चित्प्रश्न मुत्थापयति—"तदाहुः का स्वाहाकृतीनां पुरोनुवाक्याः, कः प्रैषः, का याज्येति"-इति। स्वाहाकृतिशब्देनान्तिमप्रयाजदेवता उच्यन्ते§। तासां देवतानां पुरोनुवाक्याप्रैषयाज्यासु ज्ञानरहिता ब्रह्मवादिनः पृच्छन्ति। तस्य प्रश्नस्योत्तर माह—"या एवैता अन्वाहैताः

---

* 'देशिष्याम:' ग, ङ, टी० घ।

†, ‡ 'प्रतिचरन्त', 'ऐत्य' क।

§ २६३ पृ० ३ पं० द्वादश प्रयाजदेवताः प्रदर्शिताः।

पुरोनुवाक्या, यः प्रैषः स प्रैषो, या याज्या सा याज्या"-इति। वपासम्बन्धिस्तोकार्थं प्रेषितो मैत्रावरुणो जुषस्वेत्यादयो 'या एवैता अन्वाह', 'एताः' एव * स्वाहाकृतीनां 'पुरोनुवाक्याः' भवन्ति, न त्वन्याः सन्ति। अनेन वपाप्रशंसा सूचिता। प्रैषसूक्ते "होता यक्षदग्निं स्वाहाज्यस्य"-इति प्रयाजान्तिमो 'यः प्रैषः' आम्नातः (तै०ब्रा०३.६.३.१२.), 'सः' एषः 'प्रैषः'। आप्रीसूक्ते 'या' इय मुत्तमयाज्यारूपेणाम्नाता (तै०ब्रा०३.६.४.१२.), सैव स्वाहाकृति-देवतानां याज्या। तदेतत्सर्वं मन्त्रानप्रश्नस्योत्तरम्॥

पुनरपि तथाविधं प्रश्नान्तर मुत्थापयति—"तदाहुः का देवता स्वाहाकृतय इति"-इति। अग्निवाय्वादिवत् स्वाहाकृत्याख्या अपि प्रसिद्धाः काश्चित् न सन्ति; तस्मादेताः 'काः?'-इति अज्ञात्वा प्रश्नः। तस्योत्तरं दर्शयति—"विश्वे देवा इति ब्रूयात्"-इति। प्रसिद्धा ये देवाः सन्ति, ते सर्वे स्वाहाकृत्याख्या इत्यभि-ज्ञात उत्तरं ब्रूयात्। तदेतदुपपादयति—"तस्मात् स्वाहाकृतं हविरदन्तु देवा इति यजन्तीति"-इति। अस्यान्तिमप्रयाज-याज्यायाश्चतुर्थपाद एव माम्नातः—"स्वाहाकृतं हविरदन्तु देवाः" -इति (सं० १०. ११०. ११.)। तस्य पादस्याय मर्थः—स्वाहा-कारेण संस्कृतं हविः सर्वे देवा भक्षयन्त्विति। एवं सति स्वाहा-कृतिनामकाः सर्वे देवाः। 'तस्मात्' स्वाहाकृत मित्यादिपाद-सहितेन मन्त्रेणान्तिमं प्रयाजं 'यजन्ति'-'इति' एवं मन्त्रलिङ्गं स्वाहाकृतिशब्देन सर्वदेवताभिधाने प्रमाण मित्यर्थः। पशोः पर्यग्निकरणात् पूर्वं प्रयाजकाले दशैव प्रयाजा इष्टाः, अन्तिम-

* पूर्वस्मिन् खण्डे विहिताः षट् स्तोकानुवचनीया एवेत्यर्थः।

प्रयाजस्त्ववस्थापित: *। तदुक्त मापस्तम्बेन—"दशैष्टैकादश-याज्या मवशिनष्टि"-इति (श्रौ० ७. १४. ८.)। सोऽय मव-शिष्टोऽन्तिमप्रयाज: "जुषस्व सप्रथस्तमम्"--इत्यादिस्तोकानुवचना-दूर्ध्वम्, वपाहोमात् प्रागिज्यते। अतो व्यवहितत्वादन्तिम-प्रयाजविषय: पुरोनुवाक्याप्रैषयाज्याप्रश्नो युक्त:। वपासमीप-वर्त्तित्वादेव स्तोकानुवचनमन्त्राणा मेतदीयपुरोनुवाक्यात्वं चोप-पन्नम्। अनुष्ठानस्य व्यवधानेऽपि प्रैषयाज्ये तत्तदनुवाकोक्ते (तै० ब्रा० ३. ६. ३, ४ अनु०) एवेति स्मर्यते॥

अथ वपाहोमं प्रशंसितु माख्यायिका माह—"देवा वै यज्ञेन श्रमेण तपसाहुतिभि: स्वर्गं लोक मजयंस्तेषां वपाया मेव हुतायां स्वर्गो लोक: प्राख्यायत; ते वपा मेव हुत्वा ऽनादृत्येतराणि कर्म्मा-ण्यूर्ध्वा: स्वर्गं लोक मायंस्ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञ-वास्त्वभ्यायन्, यज्ञस्य किञ्चिदेषिष्याम: प्रज्ञात्या इति; ते ऽभित: परिचरन्त ऐत् पशु मेव निरान्त्रं शयानं; ते विदुरियान्वाव किल पशुर्यावती वपेति"-इति। पुरा कदाचिद् 'देवा:' ज्योतिष्टोमादि-यागेन, तीर्थयात्रादिश्रमेण, कृच्छ्रचान्द्रायणादितपसा, कुष्माण्डगण-होमादिगताभिराहुतिभिश्च 'स्वर्गं लोक मजयन्' वशीकृतवन्त:। 'तेषां' देवानां यज्ञमध्ये 'वपाया मेव हुतायां' 'स्वर्ग:' प्रख्यातो-ऽभूत्। तत: 'ते' देवा: 'वपा मेव हुत्वा' उत्तरकालीनानि सर्वाणि 'कर्म्माण्यनादृत्य' ऊर्ध्वाभिमुखा: 'स्वर्गं लोकं' प्राप्ता:। अनन्तरं 'मनुष्याश्च ऋषयश्च' यज्ञसम्बन्धि किञ्चिद् उत्तम मङ्ग मन्विष्य निश्चेष्याम इति विचार्य तत्प्रज्ञानाय यज्ञानां ज्ञानाय 'देवानां' यज्ञभूमिं प्रति अगच्छन्। आगत्य च 'ते' मनुष्यादय: तदन्वेष-

* ते चैकादशैव २६२—२६३ पृष्ठेषु व्याख्याता द्रष्टव्या:।

णार्थं तस्यां यज्ञभूमौ परितः 'चरन्तः' 'निरान्त्र'' निरङ्गं 'शयानं' भूमौ पतितं 'पशु मेव' 'ऐत्' प्राप्तवन्तः। वपाया देवैरुत्क्रान्त्य हुतत्वादयं पशुर्निरान्त्रो दृष्टः। यद्यप्यान्त्रशब्दः पुरीतद्वाची*, तथाप्यत्र तेन वपोपलक्ष्यते। मनुष्यादयः स्वमनस्येवं 'विदुः' निश्चितवन्तः,—'वपा यावती' विद्यते, एतावानेव 'किल पशुः'! अन्यथा कथं देवाः वपा मेव हुत्वा शिष्टान्यङ्गान्युपेक्षितवन्तः?। तथा पशौ सारभूत मङ्गं वपेति आख्यायिकामुखेन वपां प्रशंस्य श्रुतिः स्वय मपि साक्षात् प्रशंसति—"स एतावानेव पशुर्यावती वपा"-इति। पशुशरीरमध्ये 'वपा यावती' विद्यते, 'एतावानेव' मुख्यः 'पशुः'; "हविरदन्तु देवाः"-इतिमन्त्रे (सं० १०.११०.११.) वपायाः सर्वदेवहविष्ट्वाभिधानात्॥

ननु सुत्यादिने सवनीयपशोर्वपां प्रातःसवने हुत्वा, शिष्टानि हृदयाद्यङ्गानि तृतीयसवने पक्त्वा यजमाना जुह्वति; वपामात्रस्य पशुस्वरूपत्वे तृतीयसवने पशुशेषं जुह्वतां कोऽभिप्राय इत्याशङ्क्याह —"अथ यदेनं तृतीयसवने श्रपयित्वा जुह्वति, भूयसीभिर्न आहुतिभिरिष्ट मसत्,—केवलेन नः पशुनेष्ट मसदिति"-इति। 'अथ' वपायाः पशुसारत्वे सति 'एनम्' अवशिष्टं पशुं 'तृतीयसवने श्रपयित्वा जुह्वति'-इति 'यद्' अस्ति, तत्र जुह्वता मय मभिप्रायः—यद्यपि वपायाग एव स्वर्गाय पर्याप्तः, तथापि 'नः' अस्माकं 'भूयसीभिः' बहुलाभिः 'आहुतिभिरिष्टम्' अस्तु†, 'केवलेन' द्रव्यान्तरनिरपेक्षेण निरवशेषेण 'नः' अस्मदीयेन 'पशुनेष्टम्' अस्तु 'इति'। अत्राधिकं नैव दोषायेति लौकिकन्यायेन तृतीयसवने पश्वङ्ग-

---

* 'पुरीततवाची' घ।

† मूले असदिति लेटो रूपम्; तस्यैवार्थोऽयम्।

होमः ; न तु वपाया न्यूनत्वबुद्धेरित्यर्थः । वेदनं प्रशंसति—"भूयसीभिर्हास्याहुतिभिरिष्टं भवति, केवलेन हास्य पशुनेष्टं भवति य एवं वेद"-इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये
तृतीयः खण्डः ॥ ३ ( १३ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

सा वा एषा ऽमृताहुतिरेव यद्वपाहुतिरमृताहुतिरग्न्याहुति-रमृताहुतिराज्याहुति-रमृताहुतिः सोमाहुतिरेता वा अशरीरा आहुतयो या वै काश्चाशरीरा आहुतयो ऽमृतत्व मेव ताभिर्यजमानो जयति सा वा एषा रेत एव यद्वपा प्रेव वै रेतो लीयते प्रेव वपा लीयते शुक्लं वै रेतः शुक्ला वपा ऽशरीरं वै रेतो ऽशरीरा वपा यद्वै लोहितं यन्मांसं तच्छरीरं तस्माद् ब्रूयाद्यावदलोहितं तावत्परिवासयेति सा पञ्चावत्ता भवति यद्यपि चतुरवत्ती

यजमानः स्यादथ पञ्चावत्तैव वपाज्यस्योपस्तृणाति हिरण्यशल्को वपा हिरण्यशल्क आज्यस्योपरिष्टाद-भिघारयति तदाहुर्यद्धिरण्यं न विद्येत कथं स्यादिति द्विराज्यस्योपस्तीर्य वपा मवदाय द्विरुपरिष्टादभि घारयत्यमृतं वा आज्य ममृतं हिरण्यं तत्र स काम उपाप्तो य आज्ये तत्र स काम उपाप्तो यो हिरण्ये तत्पञ्च सम्पद्यन्ते पाङ्क्तो ऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांस मस्थि मज्जा स यावा-नेव पुरुषस्तावन्तं यजमानं संस्कृत्याग्नौ देवयोन्यां जुहोत्यग्निर्वै देवयोनिः सो ऽग्नेर्देवयोन्या आहु-तिभ्यः सम्भूय हिरण्यशरीर ऊर्द्ध्वः स्वर्गं लोक मेति ॥ ४ ( १४ ) ॥

आज्याद्याहुतीनां प्राशस्त्यप्रसिद्धेः तद्वपाहुतिरपि प्रशस्तेति विवक्षया ताभिः सहैता माहुतिं प्रशंसति—"सा वा एषा ऽमृता-हुतिरेव यद्वपाहुतिरमृताहुतिरग्न्याहुतिरमृताहुतिराज्याहुतिर-मृताहुतिः सोमाहुतिरेता वा अशरीरा आहुतयो ; या वै काश्चाशरीरा आहुतयो, ऽमृतत्व मेव ताभिर्यजमानो जयति"-इति। या वपाहुतिरस्ति, सैषा स्वय ममृताहुतिः ; देवाना ममृते यावती प्रीतिस्तावत्प्रीतेर्वपाहुतौ विद्यमानत्वात्। आतिथ्य-कर्म्मसु मथितस्याग्नेराहवनीयाग्नौ प्रक्षेपरूपा येय माहुतिः, साप्य-मृताहुतिः ; अमृतत्वाख्यस्य देवत्वस्य प्राप्तिहेतुत्वात्। याप्यन्या

काचिदाज्याहुतिः, साप्यमृताहुतिः; "अमृतं वा आज्यम्"-इति-श्रुतेः। याप्यन्या सोमाहुतिः, सापि; "अपाम सोमममृता अभूम"-इति (सं० ८. ४८. ३.) सोमस्यामृतत्वप्राप्तिसाधनत्वश्रवणात्। या एतास्ततस्र आहुतयः, ताः सर्वा अशरीराः; शीघ्रमरणयुक्तशरीरप्राप्तिसाधनत्वाभावात्। अतएव याः काश्चिदशरीरा आहुतयः सन्ति, ताभिर्यजमानश्चिरजीवनरूपम् 'अमृतत्वं' देवत्वमेव प्राप्नोति॥

पुनः प्रकारान्तरेण वपां प्रशंसति—"सा वा एषा रेत एव यद्वपा;—प्रेव वै रेतो लीयते, प्रेव वपा लीयते; शुक्लं वै रेतः, शुक्ला वपा; ऽशरीरं वै रेतो, ऽशरीरा वपा; यद्वै लोहितं, यन्मांसं, तच्छरीरं; तस्माद् ब्रूयाद्यावदलोहितं तावत् परिवासयेति"-इति। येयं वपास्ति, सेयं रेत एव; तत्सादृश्यात्। कथं सादृश्यम्? इति तदुच्यते—रेतो योन्यां निषिक्तं सत्प्रलीयते, एवं वपाप्यग्नौ हुता प्रलीयत एव। इद मेकं सादृश्यम्। शुक्लवर्णत्वं द्वितीयम्। अशरीरत्वं तृतीयम्। तस्मात् प्रजोत्पादकरेतोवद्वपा प्रशस्ता। न च वपायाः शरीरमध्येऽवस्थानात् शरीरत्वं शङ्कनीयम्;—यदेव 'लोहितं' रक्त मस्ति, यच्च मांसम्, अनेन मुग्धबालादिप्रसिद्धास्त्वगस्थ्यवयवा उपलक्ष्यन्ते; अतो बालादिप्रसिद्धं रक्तमांसादिक मेव मुख्यं शरीरम्; न तु वपायां रेतसि वा बालप्रसिद्धिरस्ति, ततस्तयोरशरीरत्वम्। यस्माद्वपाशरीरयोर्विभाग उक्तः, तस्माद्याज्ञिको वपोद्धरणकर्त्तारं प्रत्येवं ब्रूयात्। वपायाः स्वरूपं यावद् 'अलोहितं' रक्तरहितं श्वेतं भवति, तावत् सर्वं 'परिवासय' छिन्धीति। तदेवं वपा प्रशस्ता *॥

* 'प्रजापतिर्वा इद् मेक आसीत्'-इत्यादिना वपाविधानम् तै० सं० २, १. १. ४।

तस्या अवदाने विशेषं विधत्ते—"सा पञ्चावत्ता भवति ; यद्यपि चतुरवत्तो यजमानः स्यादथ पञ्चावत्तैव वपा"–इति । द्विविधा यजमानाः,—चतुरवत्तिनः, पञ्चावत्तिनश्चेति । चतुर्भिरवदानैर्युक्तश्चतुरवत्तो, पञ्चभिर्युक्ताः पञ्चावत्तिनः । एवं स्थिते वपा पञ्चभिरवदानैर्युक्ता कर्त्तव्या । तत्र, पञ्चावत्तिनो यजमानस्य स्वत एव पञ्चावदानानि प्राप्तानि ; यस्तु चतुरवत्तो, तस्यापि पञ्चावदानानि वपायां कुर्यात् । तान्येतानि पञ्चापि विभज्य दर्शयति—"आज्यस्योपस्तृणाति ; हिरण्यशल्को वपा, हिरण्यशल्क आज्यस्योपरिष्टादभिघारयति"--इति । 'आज्यस्य' आज्येनेत्यर्थः । तदेतदापस्तम्बेन स्पष्टं सुक्तम् ( श्रौ०७.२०.९-११. ) । "जुह्वा मुपस्तीर्य हिरण्यशकल मवधाय कृत्स्नां वपा मवदाय हिरण्यशकल मुपरिष्टात् कृत्वाभिघारयति । एवं पञ्चावत्ता भवति । चतुरवत्तिनोऽपि पञ्चावत्तैव स्यात्"–इति ॥

हिरण्यरहितस्य प्रकारान्तरेण पञ्चावदानानि प्रश्नोत्तराभ्यां दर्शयति—"तदाहुर्यद्धिरण्यं न विद्येत, कथं स्यादिति ; द्विराज्यस्योपस्तीर्य वपा मवदाय द्विरुपरिष्टादभिघारयति"–इति ।

आज्यस्य हिरण्यप्रतिनिधित्व मुपपादयति—"अमृतं वा आज्य ममृतं हिरण्यं ; तत्र स काम उपाप्तो य आज्ये, तत्र स काम उपाप्तो यो हिरण्ये ; तत्पञ्च सम्पद्यन्ते"–इति । आज्यस्य स्वादु-

---

'वपा मेकः परिशय आत्मैवात्मानं परिश्रये'–इति च ६. ३. ७. ५ । 'श्रय' वा एतत् पशूनां यद्द वपा"–इत्यपि तत्रैवाग्रे ( ९. ५. ) । 'मेदसा देवा वपया यजध्वम्'–इति ( तै० ब्रा० २. ८. ४. ४. ) वपाया याज्या । 'वपा वपावतां जुहोति ; लच सुत्कार्त्त मवपाकानाम्'–इति शत० ब्रा० १२. ७. १. ९ । 'मेदोऽस्योद्धरन्ति वपार्थे'–इत्यादि ( २०. ७. ७ ) कात्यायनीयं वपाकाण्डं चेह विशेषतो द्रष्टव्यम् ।

त्वेन हिरण्यस्य च दर्शनीयत्वेन प्रियत्वादमृतत्वम्। एवं सति यत्र हिरण्यं प्रक्षिप्यते, तत्राज्यप्रयुक्तो यः कामः स प्राप्तो भवति; यत्र त्वाज्यं प्रक्षिप्यते, तत्र हिरण्यप्रयुक्तो यः कामः स प्राप्तो भवति। तस्मादाज्येन हिरण्येन पञ्चावदानानि सम्पद्यन्ते ॥

अवदानगतां पञ्चसङ्ख्यां प्रशंसति— "पाङ्क्तो ऽयं पुरुषः, पञ्चधा विहितो लोमानि त्वङ्मांस मस्थि मज्जा; स यावानेव पुरुषस्तावन्तं यजमानं संस्कृत्याग्नौ देवयोन्यां जुहोत्यग्निर्वै देवयोनिः;—सो ऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोक मेति"-इति। पञ्चसङ्ख्यायोगात् पुरुषस्य पाङ्क्तत्वम्। तद्योगाच्च लोमादिभिः पञ्चभिर्निष्पादितत्वात्। तस्मात्पञ्चभिरवदानैः पुरुषो यावान् लोमादिपञ्चावयवोपेतोऽस्ति, तावन्तं सर्व मपि यजमानं संस्कृत्याग्नौ देवत्वप्राप्तिकारणे हुतवान् भवति। अग्नेश्च यागद्वारा देवजन्मकारणत्वम्। एवं सति 'सः' यजमानो देवत्वकारणादग्नेः, स्वेनानुष्ठिताभ्य आहुतिभ्यः समष्टिरूपेणोत्पद्य सुवर्णवर्णशरीरयुक्तः ऊर्ध्वगामी स्वर्गं प्राप्नोति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये
चतुर्थः खण्डः ॥ ४ (१४) ॥

( पशुशेषः समाप्तः * )

---

* मत्सस्यादिसपुस्तकानां 'क'मार्गे नास्त्येतद् वाक्यम्।

॥ अथ पञ्चमः खण्डः ॥

देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युरेते वाव देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ त एते सप्तभिः सप्तभिश्छन्दोभिरागच्छन्त्यास्य देवाः प्रातर्यावाणो हवं गच्छन्ति य एवं वेद प्रजापतौ वै स्वयं होतरि प्रातरनुवाक मनुवक्ष्यत्युभये देवासुरा यज्ञ मुपावसन्नस्मभ्य मनुवक्ष्यत्यस्मभ्य मिति स वै देवेभ्य एवान्वब्रवीत्ततो वै देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद प्रातर्वै स तं देवेभ्यो ऽन्वब्रवीद्यत्प्रातरन्वब्रवीत् तत् प्रातरनुवाकस्य प्रातरनुवाकत्वं महति रात्र्या अनूच्यः सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै यो वै भवति यः श्रेष्ठता मश्नुते तस्य वाचं प्रोदिता मनु प्रवदन्ति तस्मान्महति रात्र्या अनूच्यः पुरा वाचः प्रवदितोरनूच्यो यद्वाचि प्रोदितायां मनुब्रूयादन्यस्यैवैन मुदितानुवादिनं कुर्यात्तस्मान्महति रात्र्या अनूच्यः पुरा शकुनिवादादनुब्रूयान्निर्ऋतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयस्तद्यत्पुरा शकुनिवादादनुब्रूयान्मा यज्ञियां वाचं प्रोदिता मनु प्रवदिष्मेति तस्मान्महति रात्र्या अनूच्यो ऽथो

खलु यद्दैवाध्वर्युरुपाकुर्याद्यथानुब्रूयाद् यदा वा अध्वर्युरुपाकरोति वाचैवोपाकरोति वाचा होता ऽन्वाह वाग्घि ब्रह्म तत्र स काम उपाप्तो यो वाचि च ब्रह्मणि च ॥ ५ ( १५ ) ॥

अथ प्रातरनुवाको वक्तव्यः । तदर्थ मादौ प्रैषमन्त्रं विधत्ते—"देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युः"-इति । सुत्यादिने प्रातःकाले यान्ति यज्ञभूमिं गच्छन्तीति प्रातर्यावाणः । तादृशेभ्यो 'देवेभ्यः' तत्प्रीत्यर्थं हे 'होतः' अनुकूला ऋचो 'ब्रूहि'—त मेतं प्रैषमन्त्रम् 'अध्वर्युः' पठेत् । तं मन्त्रं व्याचष्टे—"एते वाव देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ ; त एते सप्तभिः सप्तभिश्छन्दोभिरागच्छन्ति"-इति । योऽय मग्निः, या चोषःकालाभिमानिनी देवता, यौ चाश्विनौ, एत एव देवाः प्रैषमन्त्रे प्रातर्यावाण इति विशेष्यन्ते । तत्कथम् ? इति, तदुच्यते—'त एते' देवाः प्रत्येकं सप्तच्छन्दोयुक्ताभिः ऋग्भिर्यज्ञभूमि मागच्छन्ति । तस्मात् प्रातर्यावाणः 'सप्तभिः-सप्तभिः'-इति वीप्सा प्रत्येकसङ्ग्रान्वयार्था । ताश्च ऋचः सर्वा आश्वलायनेन "आपो रेवतीः क्षयथ"--इत्यादिग्रन्थेन उदाहृताः ( श्रौ० ४. १३. ७. ) । तत्र,—

'उपप्रयन्त इत्यादिषु ( सं० १. ७४. १. ) छन्दो गायत्रम् ।
'त्व मग्ने वसूनित्यादिषु ( सं० १. ४५. १. ) अनुष्टुप्छन्दः ।
'अबोध्यग्निरित्यादिषु ( सं० ५. १. १. ) त्रिष्टुप्छन्दः ।
'एना वो अग्नि मित्यादिषु (सं० ७. १६. १.) बृहतीच्छन्दः ।
'अग्ने वाजस्येत्यादिषु ( सं० १. ७९. ४. ) उष्णिक्छन्दः ।

'जनस्य गोपा इत्यादिषु ( सं० ५. ११. १. ) जगतीच्छन्दः ।
'अग्निं तं मन्य इत्यादिषु ( सं० ५. ६. १. ) पङ्क्तिच्छन्दः ।
तान्येतानि सप्त छन्दांस्याग्नेये क्रतौ प्रातरनुवाके द्रष्टव्यानि * ।
'प्रति ष्या सूनरीत्यादिषु ( सं० ४. ५२. १. ) गायत्रीच्छन्दः ।
'उषो भद्रेभिरित्यादिषु ( सं० १. ४९. १. ) अनुष्टुप् ।
'इदं श्रेष्ठ मित्यादिषु ( सं० १. ११३. १. ) त्रिष्टुप् ।
'प्रत्यु अदर्श्यौत्यादिषु ( सं० ७. ८१. १. ) बृहती ।
'उषस्तच्चित्र माभरेत्यादिषु ( सं० १. ९२. १३.) उष्णिक् ।
'एता उ त्या इत्यादिषु ( सं० १. ९२. १. ) जगती ।
'महे नो अद्ये त्यादिषु ( सं० ५. ७९. १. ) पङ्क्तिः ।
तान्येतान्युषस्ये प्रातरनुवाके सप्त छदांसि † ।
'एषो उषा इत्यादिषु ( सं० १. ४६. १. ) गायत्री ।
'यदद्य इत्यादिषु ( सं० ५. ७३. १. ) अनुष्टुप् ।
'आ भात्यग्निरित्यादिषु ( सं० ५. ७६. १. ) त्रिष्टुप् ।
'इमा उ वा मित्यादिषु ( सं० ७. ७४. १. ) बृहती ।
'अश्विना वर्तिरित्यादिषु ( सं० १. ९२.१६.) उष्णिक् ।
'अबोध्यग्निर्ज्म इत्यादिषु ( सं० १. १५७. १. ) जगती ।
'प्रति प्रियतम मित्यादिषु ( सं० ५. ७५. १. ) पङ्क्तिः ।
तान्येतान्याश्विने प्रातरनुवाके सप्त छन्दांसि ‡ ।
तैरेतैः प्रत्येकं सप्तभिः छन्दोभिर्देवाना मागमनं द्रष्टव्यम् ॥

---

* 'उपप्रयन्त०—० इत्याग्नेयः क्रतुः'–इति आश्व० श्रौ० ४. १३. ७. ८।

† 'अथोषस्यः। प्रति०—० इत्युषस्यः क्रतुः'–इति आश्व० श्रौ० ४. १४. १, २।

‡ 'अथाश्विनः। एषो उषाः०—० प्रति प्रियतम मिति पाङ्क्तम्। इत्येतेषां छन्दसां पृथक् सूक्तानि प्रातरनुवाकः'–इति आश्व० श्रौ० ४. १५. १, २।

 

एतद्वेदनं प्रशंसति—"आस्य देवाः प्रातर्यावाणो हवं गच्छन्ति य एवं वेद"-इति। ह्रयते अत्रेति हवः यज्ञः। अस्य वेदितुर्हवं उक्ता देवाः प्राप्नुवन्ति ॥

प्रैषमन्त्रे देवेभ्योऽनुब्रूहीति यदुक्तम् (३३५ पृ० २पं०) तदुपपादयितुं प्रातरनुवाकस्य देवसम्बन्धं विशदयति--"प्रजापतौ वै स्वयं होतरि प्रातरनुवाक मनुवक्ष्यत्युभये देवासुरा यज्ञ मुपावसन्नस्मभ्य मनुवक्ष्यत्यस्मभ्य मिति; स वै देवेभ्य एवान्वब्रवीत्"-इति। पुरा कदाचित् कस्मिंश्चिद्यज्ञे प्रजापतिः स्वयं होता भूत्वा प्रातरनुवाक मनुवक्तु मुद्यतः, तस्मिन्ननुवक्ष्यति देवाश्चासुराश्च 'अस्मभ्यम्' अस्मदर्थ मेवानुवक्ष्यतीति प्रत्येक मभिप्रेत्य तं यज्ञ मुपेत्य तत्रासन्निति। 'अस्मभ्यम्'-इति वीप्सा वर्गद्वयस्य प्रत्येक मन्वयार्था। तदानीं प्रजापतिरसुरान् उपेक्ष्य देवार्थ मेवान्वब्रवीत्। ततः प्रातरनुवाकस्य पूर्वोक्तैरग्न्यादिभिर्देवसम्बन्धः ॥

प्रातरनुवाकस्य देवोत्कर्षहेतुत्वं दर्शयति—"ततो वै देवा अभवन् परासुराः"-इति। 'अभवन्' भूति मुत्कर्षं प्राप्ताः; असुरास्तु 'पराभवन्' अपकर्षं प्राप्ताः। वेदनं प्रशंसति— "भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद"-इति। 'आत्मना भवति' स्वय मुत्कृष्टो भवति; तदीयस्तु भ्रातृव्यः 'पराभवति' ॥

प्रातरनुवाकशब्दस्य निर्वचनं दर्शयति—"प्रातर्वै स तं देवेभ्योऽन्वब्रवीद्यत्प्रातरन्वब्रवीत्तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्"-इति। प्रातःकाले एव 'सः' प्रजापतिः 'तम्' अनुवाकम् ऋक्समूहं देवार्थ मनुक्रमेणाब्रवीत्। यस्मादेवं, तस्मात्प्रातरनुवाक इति नाम सम्पन्नम् ॥

तस्य प्रातरनुवाकस्य कालविशेषं विधत्ते—"महति रात्र्या अनूच्यः; सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै; यो वै भवति, यः श्रेष्ठतामश्नुते, तस्य वाचं प्रोदितामनु प्रवदन्ति; तस्मान्महति रात्र्या अनूच्यः"-इति। 'रात्र्याः' पूर्वस्यौपवसथ्याख्यस्य * दिनस्याग्नीषोमीयपश्वनुष्ठानयुक्तस्य या रात्रिः, तस्या रात्रेः सम्बन्धिनि शेषे महत्यवतिष्ठमाने सति, प्रातरनुवाकाख्य ऋक्समूहो वक्तव्यः। एतदुक्तं भवति— यस्मिन् काले प्रारब्धः प्रातरनुवाकः, तमसोपघातात् पुरैव समापयितुं शक्यः स्यात्, तदा प्रारब्धव्य इति। तथाविधमनुवचनं लौकिक्याः सर्वस्याः वाचः 'ब्रह्मणः' वेदस्य सर्वस्यापि परिग्रहाय भवति। 'यो वै'-इत्यादिना लौकिको न्याय उच्यते। लोके यः पुमान् 'भवति' ऐश्वर्यं प्राप्नोति, यश्च विद्यावृत्तादिभिः श्रेष्ठत्वं प्राप्नोति, 'तस्य' उभयविधस्य पुरुषस्य सम्बन्धिनीं वाचं 'प्रोदितां' प्रथमत उक्ताम् 'अनु' पश्चात् सर्वे भृत्याः शिष्याश्च प्रवदन्ति। तस्मात्तत्रापि राजाचार्यादिवाक्स्थानीयः प्रातरनुवाकः; स्वेतरवैदिकलौकिकसर्ववाक्प्रवृत्तेः। पूर्वं रात्र्याः सम्बन्धिनि महत्यवशिष्टे काले पाश्चात्ययामेऽनुवक्तव्यः। यद्यप्ययमुषःकालो न तु प्रातःकालः, तथापि प्रातःकालसमीप-

---

* उपसदामन्तिमं सुत्याहाच्च पूर्वमग्नीषोमीयाहरेवौपवसथ्य मुच्यते। तथाहि वच्यातुपरिष्टादिहैव—'अथौपवसथ्य महः'-इत्यादि ७. ५. ६। 'अग्नीषोमीयसम्बन्धिदिनमुपवसथशब्देनोच्यते। उपवसथसम्बन्धि [कर्म] औपवसथ्यम्-इति कात्या० श्रौ० ८. ३. ६. टी० या० दे०। "तेऽस्य विश्वे देवा गृहानागच्छन्ति, तेऽस्य गृहेषूपवसन्ति, स उपवसथः"-इति (१.१.१.७.), 'उपवसथेऽग्नीषोमीयं पशुमालभते'-इति (१.४.४.११.), 'उपवसथे नाश्नीयात्'-इति च (९.५.१.६.) शत० ब्रा०। तैत्तिरीयेऽप्येवमेव (ब्रा० १.५.९.७.)। औपवसथ्यकर्माणि च कात्यायनीयाष्टमाध्यायादितोऽवगन्तव्यानि।

वर्त्तित्वात् प्रातरनुवाकत्वं द्रष्टव्यम्। पाश्चात्यग्रामेऽपि कश्चिद् विशेषं विधत्ते—"पुरा वाचः प्रवदितोरनूच्यः"-इति। रात्रौ निद्रां कुर्वन्तः प्राणिन उषःकाले प्रबुध्य वाचं प्रवदन्ति; तस्मात् 'प्रवदितोः' प्रवचनात् पूर्व मेवाय मनुवक्तव्यः। विपक्षे बाधक माह—"यद्वाचि प्रोदिताया मनुब्रूयादन्यस्यैवैन मुदितानुवादिनं कुर्यात्"-इति। निद्रां परित्यज्य प्रबुद्धैः पुरुषैः वाचि प्रोदितायां यदि पश्चाद् ब्रूयात्, तदानीम् 'एनम्' प्रातरनुवाकं 'उदितानुवादिनं कुर्याद्' अन्यैरुदिता या वाक्, तदनुवादित्वे सति भृत्यादिशिष्यादिरूपत्वं स्यात्; न तु राजाचार्यादिरूपत्वम्। स्वपक्षं निगमयति— "तस्मान्महति रात्र्या अनूच्यः"-इति। अपरं विशेषं विधत्ते—"पुरा शकुनिवादादनुब्रूयात्"-इति। 'शकुनयः' पक्षिणः उषःकाले प्रबुध्य वदन्ति, ध्वनिं कुर्वन्ति; तस्माद्वादात् पूर्व मेवानुब्रूयात् *। तदेतदुपपादयति—"निर्ऋतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयस्तद्यत्पुरा शकुनिवादादनुब्रूयान्मा ऽयज्ञियां वाचं प्रोदिता मनु प्रवदिष्मेति; तस्मान्महति रात्र्या अनूच्यः"-इति। 'निर्ऋतिः' काचिद्राक्षसरूपा मृत्युदेवता; यानि 'वयांसि' ये च 'शकुनयः', एतत् सर्वं मृत्युदेवताया मुखम्। अत्र वयःशब्देन पक्षिसामान्य मुच्यते, शकुनिशब्देन पक्षिविशेषः। येषां सञ्चाराद्ध्वनीष्टानिष्टसूचकतया मनुष्या व्यवहरन्ति, ते शकुनयः। यस्मादुभयं मृत्युमुखम्, तद्यदि तदुभयध्वनेः पुरा अनुब्रूयात्, तदानीं 'प्रोदितां' प्रथमत उक्ताम् 'अयज्ञियां' यज्ञसम्बन्धरहितां 'वाच मनु' 'मा प्रवदिष्म' प्रातरनुवाकं पश्चादुक्तवन्तो मा भवामेति होतु-

---

* 'अथैतस्या रात्रेर्विवासकाले प्राग् वयसां प्रवादात् प्रातरनुवाकायामन्त्रितः'-इत्यादि आश्व० श्रौ० ४. १२. १—६।

रभिप्रायो भवति। अतो महति रात्रिशेषे ऽवस्थिते सति शकुनिवादशङ्कानुदयात् तदानी मेवानूच्यः ॥

पक्षान्तरं विधत्ते—"अथो खलु यदैवाध्वर्युरुपाकुर्यादथानुब्रूयाद्"-इति। अध्वर्योरुपाकरणं प्रैषमन्त्रपाठः *। स एव प्रातरनुवाकस्य कालः। तदेतदुपपादयति—"यदा वा अध्वर्युरुपाकरोति, वाचैवोपाकरोति; वाचा होता ऽन्वाह; वाग्घि ब्रह्म,—तत्र स काम उपाप्तो यो वाचि च ब्रह्मणि च"-इति। अध्वर्योरुपाकरणं प्रैषमन्त्ररूपया वैदिकवाचैव सम्पद्यन्ते। होतुरनुवचन मपि वैदिकवाचा भवति। यस्मादुभयविधा वाक् 'ब्रह्म' वेदरूपा, तस्मादुपाकरणानन्तरभाविना अनुवचनेन लौकिकवाचि वैदिकवाचि यत्फलं भावि, तत् प्राप्नोति। अत्र कालविशेषः शाखान्तरे ऽप्याम्नातः—"पुरा वाचः प्रवदितोः प्रातरनुवाक मुपाकरोति; यावतीव वाक् ता मवरुन्धे"-इति ( तै०सं० ६.४.३.१. )। उपाकरणं चापस्तम्बेन स्पष्टीकृतम्—"पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनुवाक मुपाकरोति। प्रातर्यावभ्यो देवेभ्य अनुब्रूहि, ब्रह्मन् वाचं यच्छ, प्रतिप्रस्थातः सवनीयान् निर्वप, सुब्रह्मण्य सुब्रह्मण्या माह्वयेति सम्प्रेष्यति"-इति (श्रौ०१२.३.१४,१५.) ॥५॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ( १५ ) ॥

---

* 'प्राग् वाचं प्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिध मादधत्'-इति कात्या० श्रौ० ९. १. १०।

॥ अथ षष्ठः खण्डः ॥

प्रजापतौ वै स्वयं होतरि प्रातरनुवाक मनुवक्ष्यति सर्वा देवता आशंसन्त मा मभि प्रतिपत्स्यति मा मभीति स प्रजापतिरैक्षत यद्येकां देवता मादिष्टा मभि प्रतिपत्स्यामीतरा मे केन देवता उपाप्ता भविष्यन्तीति स एता मृच मपश्यदापो रेवतीरित्यापो वै सर्वा देवता रेवत्यः सर्वा देवताः स एतयर्चा प्रातरनुवाकं प्रत्यपद्यत ताः सर्वा देवताः प्रामोदन्त मा मभि प्रत्यपादि मा मभीति सर्वा ह्यस्मिन् देवताः प्रातरनुवाक मनुब्रुवति प्रमोदन्ते सर्वाभिर्हास्य देवताभिः प्रातरनुवाकः प्रतिपन्नो भवति य एवं वेद ते देवा अबिभयुरादातारो वै न इमं प्रातर्यज्ञ मसुरा यथौजीयांसो बलीयांस एव मिति तानब्रवीदिन्द्रो मा बिभीत त्रिषमृद्ध मेभ्यो ऽहं प्रातर्वज्रं प्रहर्तास्मीत्येतां वाव तदृच मब्रवीद्वज्रस्तेन यदपोनप्त्रीया वज्रस्तेन यत् त्रिष्टुब् वज्रस्तेन यद्वाक् त मेभ्यः प्राहरत्तेनैनानहंस्ततो वै देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद तदाहुः स वै होता स्याद्य एतस्या मृचि सर्वाणि च्छन्दांसि प्रजनयेदित्येषा वाव

न्निरनूक्ता सर्वाणि छन्दांसि भवन्त्येषा छन्दसां प्रजातिः ॥ ६ ( १६ ) ॥

अथ प्रातरनुवाके प्रथमा मृचं विधातु माख्यायिका माह—"प्रजापतौ वै स्वयं होतरि प्रातरनुवाक मनुवक्ष्यति ; सर्वा देवता आशंसन्त,—मा मभि प्रतिपत्स्यति मा मभीति; स प्रजापतिरैक्षत,—यद्येकां देवता मादिष्टा मभि प्रतिपत्स्यामीतरा मे केन देवता उपाप्ता भविष्यन्तीति; स एता मृच मपश्यदापो रेवतीरित्यापो वै सर्वा देवता, रेवत्यः सर्वा देवताः ; स एतयर्चा प्रातरनुवाकं प्रत्यपद्यत ; ताः सर्वा देवताः प्रामोदन्त,—मा मभिप्रत्यपादि मा मभीति"-इति। प्रजापतौ वै स्वय मेव होतृत्वं प्राप्य कस्मिंश्चिद्यज्ञे प्रातरनुवाक मनुवक्तु मुद्युक्ते सति सर्वा अपि देवताः प्रत्येकं माम् 'अभि'लक्ष्य 'प्रतिपत्स्यति' प्रारम्भं करिष्यति 'इति' एवम् 'आशंसन्त' अपेक्षां कृतवन्तः । 'मा मभि'-इति वीप्सा सर्वसङ्ग्रहार्था । मद्देवत्ययैवर्चा प्रारम्भ इति सर्वासां देवतानां प्रत्येक माशा मवलोक्य 'सः' प्रजापतिः स्वमनसि विचारितवान् । स एव विचारो यदीत्यादिना स्पष्टीक्रियते। 'आदिष्टां' केनचिन्मन्त्रेण प्रतिपादिता मेकां देवताम् 'अभि'लक्ष्य यद्यहं 'प्रतिपत्स्यामि' प्रारम्भं करिष्यामि, तदानीम् 'इतराः' देवताः, कुप्येयुरिति * शेषः। तस्मात्कारणात् 'मे' मम 'केन' प्रकारेण 'देवताः' सर्वा अपि† 'उपाप्ताः' उपक्रमे प्राप्ता भविष्यन्ति। एवं विचार्य 'सः' प्रजापतिः सर्वदेवतासिद्ध्यर्थम् "आपो रेवतीः क्षयथा हि वस्वः"-इत्येता मृचम् (सं०१०.३०.१२.)

*, † इतरा देवताः केनेत्याद्येकवाक्यत्वे पदान्तरानाक्षेपीऽस्माकम् ।

अपश्यत्। तत्र आप्-शब्देन, रेवती-शब्देन च सर्वा देवता उक्ता भवन्ति ; आप्नुवन्तीत्यापः ; रायो धनानि यासां सन्तीति रेवत्यः ; यज्ञभूमिप्राप्तिर्धनवत्त्वञ्च सर्वासु देवतासु विद्यते, तस्मात्सर्वदेवता-प्रतिपादिकेयं मृक्। 'सः' प्रजापतिः रेवत्या एवोपक्रान्तवान्। तेन सर्वा देवताः प्रत्येकं मा मभिलक्ष्य प्रारम्भः कृत इति प्रहृष्ट-वत्यः। वीप्सा पूर्ववत् ॥

अथार्थवादेन विधि मुन्नयति—"सर्वा ह्यस्मिन् देवताः प्रात-रनुवाक मनुब्रुवति प्रमोदन्ते"-इति। स एतदृचा प्रातरनुवाकं प्रतिपद्यते इति शेषः। यः पुमान् "आपो रेवतीः"-इत्येतया प्रातरनुवाकं प्रारभते*, 'अस्मिन्' प्रारभ्यानुब्रुवति सर्वा देवताः प्रहृष्यन्ति ; तस्मादनयैवर्चा प्रारभेतेति विधिरुन्नेयः। वेदनं प्रशं-सति— "सर्वाभिर्हास्य देवताभिः प्रातरनुवाकः प्रतिपन्नो भवति य एवं वेद"-इति। तदेतदाश्वलायनेनाभिहितम्—"अन्तरेण युगधुरावुपविश्य† प्रेषितः प्रातरनुवाक मनुब्रूयान्मन्द्रेणापो रेवतीः क्षयथा हि वस्व उपप्रयन्त इति सूक्ते"-इति (श्री० ४.१२.६,७.) ॥

आपोरेवतीरित्येता मृच माख्यायिकया प्रशंसति—"ते देवा अबिभयुरादातारो वै न इमं प्रातर्यज्ञ मसुरा यथौजीयांसो बलीयांस एव मिति ; तानब्रवीदिन्द्रो मा बिभीत त्रिषमृद्ध मेभ्यो ऽहं प्रातर्वज्रं प्रहर्तास्मीत्येतां वाव तदृच मब्रवीद्वज्रस्तेन यदपोनप्त्रीया, वज्रस्तेन यत् त्रिष्टुब्, वज्रस्तेन यद्वाक्, त मेभ्यः प्राहरत् ; तेनैनानहंस्ततो वै देवा अभवन् परासुराः"-इति। पुरा कदाचित् प्रजापतौ प्रातरनुवाक मनुब्रुवति सति तत्समीपे आगता देवाः 'अबिभयुः' भीतिं प्राप्ताः। केनाभिप्रायेणेति, तदुच्यते—यथा लोके

* 'प्रारभेत' घ। † 'युगधुरा उपविश्य' ए० सी० सु० आश्व० श्री०।

केचिच्छत्रव: 'ओजीयांस:' अतिशयेनौजसा सप्तमधातुना युक्तत्वात् पुष्टशरीरा:, 'बलीयांस:' महता सैन्येन युक्तत्वादतिशयेन प्राबल्यात्, आगत्य धन मपहरन्ति; एव मसुरा: 'न:' अस्मदीयम् 'इमं' प्रातर्यज्ञं प्रातरनुवाकरूपम् 'आदातारो वै' आदास्यन्त्येव, अपहरिष्यन्त्येवेति । तदानी मिन्द्रो 'मा विभीत' भीतिं मा कुरुतेति 'तान्' देवान् अब्रवीत् । कथं भीत्या अभाव: ? इति, तदुच्यते—'अहम्' इन्द्र एव 'एभ्य:' असुरेभ्य: ; असुरविनाशार्थं 'प्रात:' काले 'त्रिषन्धं' त्रिभि: प्रकारै: सन्धं प्रबलं वज्रं 'प्रहर्त्तास्मि' तेषा मुपरि प्रक्षेप्स्यामि । ततो हे देवा: ! अस्माकं भीतिर्माभूत् । इत्युक्त्वा तदानीम् 'एतां' वाचम्, आपो रेवतीरिति यास्ति, ता मृच मेवाब्रवीत् । तस्या ऋच: त्रिप्रकारवज्रत्वं कथम् ? इति, तदुच्यते— 'यद्' यस्मात्कारणात् 'अपोनप्त्रीया' सा ऋक् अपोनप्तृदेवताका,—तथाचानुक्रमणी-कारो यस्मिन् सूक्ते सास्ति (सं० १०.३०.), तस्य सूक्तस्य देवतां ब्रूते—"प्र देवत्रा पञ्चोना कवष ऐलूष आप मपोनप्त्रीयं वा" इति । 'तेन' अपोनप्तृदेवताकत्वेन कारणेनायं मन्त्रो 'वज्र:' सम्पन्न: । सोऽय मेक: प्रकार: । अपोनप्ता देवोऽतिक्रूर:, तत्त-दीयाया ऋचो वज्रत्वं युक्तम् । यस्मादियं त्रिष्टुप्छन्दस्का, तेनापि प्रकारेण वज्रत्वम् । 'इन्द्रियं वै वीर्यं त्रिष्टुप्'-इतिश्रुत्यन्तरे वीर्यरूपत्वश्रवणाद् (४६ पृ०) वज्रत्वम्* । सोऽयं द्वितीय: प्रकार: । यस्मादियं वाग्रूपा, तेनापि प्रकारेण वज्रत्वम् ; "स वाग्वज्रो यज-मानं हिनस्ति"-इत्यत्र† शब्दरूपाया वाचो वज्रत्वश्रवणात् ।

* त्रिष्टुभोवज्रत्वञ्चेहैव साक्षात् श्रुतं पुरस्तात्—'त्रिष्टुबिन्द्रस्य वज्र:'-इति (२४२पृ० ५पं०) ।

† 'स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रु: स्वरतोऽपराधात्'-इति पा० शि० १०.४ । तदाहृतश्च पा० महाभा०१.१.१. । स च वाग्वज्रमन्त्र: 'इन्द्रशत्रुर्वर्द्धस्व'-इति तैत्तिरीय:

सोऽयं तृतीयः प्रकारः। त मेवं त्रिषमृद्धम् अब्रूपं वज्रम् 'एभ्यः' असुरेभ्यः प्राहरत्। तेन 'एनान्' असुरान् 'अहन्' हतवान्। 'ततः' एवासुरवधाद् देवा विजयिनो ऽभवन्, असुराश्च पराभवन्। वेदनं प्रशंसति—"भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद"-इति। पूर्ववद् (३३८ पृ०) व्याख्येयम् ॥

अस्या ऋचस्त्रिरावृत्तिं विधत्ते—"तदाहुः,—स वै होता स्याद्य एतस्या मृचि सर्वाणि च्छन्दांसि प्रजनयेदित्येषा वाव त्रिरनूक्ता सर्वाणि च्छन्दांसि भवत्येषा छन्दसां प्रजातिः"-इति। 'तत्' तस्याम्, आपोरेवतीरित्यृचि ब्रह्मवादिन एव माहुः। यः पुमानेतस्या मृचि सर्वाणि छन्दांस्युत्पादयेत्, स एव मुख्यो होता स्यात्, न त्वन्य इति। एतद्ब्रह्मवादिनां वचनं श्रुत्वा कश्चिदभिज्ञः सर्वच्छन्दसा मुत्पादनप्रकारं ब्रूते,—येय मृगनूक्ता, सेय मेव त्रिः पठिता सती सर्वच्छन्दसां स्वरूपम् भवति। इयं त्रिष्टुब्रूपत्वाच्चतुश्चत्वारिंशदक्षरा *। तस्यां त्रिरावृत्तायां द्वात्रिंशदधिकशताक्षराणि सम्पद्यन्ते। तेषु जगत्यादीन्यधिकाक्षराणि, गायत्र्यादीनि न्यूनाक्षराणि, सर्वच्छन्दांसि सम्पादयितुं शक्यन्ते †। तस्मादेषा

संहिताया मसकृत् श्रुतः (२.४.१२.१ ; ५.२.१.)। "तत्र मन्त्रगतस्वरापराधो निमित्तम्। तथाहि इन्द्रस्य शातयितेन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम्, आद्युदात्तस्त्वयं शब्दः प्रयुक्तः, स च बहुव्रीहितां द्योतयति। बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदाद्युदात्तत्वविधानात्। सति बहुव्रीहाविन्द्रः शातयिता यस्येत्यर्थो भवति। सोऽयं मन्त्रगतः स्वरापराधः। अपराधाभावे सति उन्नतया ज्वालया यजमानस्य कार्यसिद्धिः सूचिता भवति। अपराधे त्ववनतया ज्वालया यजमानस्य कार्यसिद्ध्यभावः सूच्यते"-इति सा०भा०।

* सैषा—"आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च। रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद् गृणते वयो धात्"-इति सं० १०. ३०. १२।

† विराट्२० — गायत्री४— उष्णिक्८— अनुष्टुप्१२— बृहती१६ — पङ्क्तिः२० —त्रिष्टुप्२४ — जगती२८= १३२ अक्षराणि। एवमेवेदीपदेशटीकितो घ-पुस्तके।

सर्वेषां छन्दसां 'प्रजातिः' उत्पत्तिस्थानम् । यद्यपि त्रिरावृत्तिः सूत्रकारेण नोक्ता, तर्हि सर्वच्छन्दोऽन्तर्भावनेय ऋचः प्रशंसास्तु ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये षष्ठः खण्डः ॥ ६ ( १६ ) ॥

---

॥ अथ सप्तमः खण्डः ॥

शत मनूच्य मायुष्कामस्य शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति त्रीणि च शतानि * षष्टिश्चानूच्यानि यज्ञकामस्य त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तावान्त्संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञ उपैनं यज्ञो नमति यस्यैवंविद्वांस्त्रीणि च शतानि † षष्टिं चान्वाह सप्त च शतानि विंशतिश्चानूच्यानि प्रजापशुकामस्य सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रास्तावान्त्संवत्सरः संवत्सरः प्रजाप-

---

*, † उभयत्रैव 'शतानि च' क ।

तिर्यं प्रजायमानं विश्वं रूप मिद मनु प्रजायते प्रजापति मेव तत्प्रजायमानं प्रजया पशुभिरनुप्रजायते प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेदाष्टौ शतान्यनूच्यान्यब्राह्मणोक्तस्य यो वा दुरुक्तोक्तः शमलगृहीतो यजेताष्टाक्षरा वै गायत्री गायत्र्या वै देवाः पाप्मानं शमल मपाघ्नत गायत्र्यैवास्य तत्पाप्मानं शमल मपहन्त्यप * पाप्मानं हते य एवं वेद सहस्र मनूच्यं स्वर्गकामस्य सहस्राश्वीने वा इतः स्वर्गो लोकः स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै सङ्गत्या अपरिमित मनूच्य मपरिमितो वै प्रजापतिः प्रजापतेर्वा एतदुक्थं यत्प्रातरनुवाकस्तस्मिन्त्सर्वे कामा अवरुध्यन्ते स यदपरिमित मन्वाह सर्वेषां कामाना मवरुध्यै सर्वान्कामानवरुन्धे य एवं वेद तस्मादपरिमित मेवानूच्यं सप्ताग्नेयानि छन्दांस्यन्वाह सप्त वै देवलोकाः सर्वेषु देवलोकेषु राध्नोति य एवं वेद सप्तोषस्यानि छन्दांस्यन्वाह सप्त वै ग्राम्याः पशवोऽव ग्राम्यान् पशून् रुन्धे य एवं वेद सप्ताश्विनानि छन्दांस्यन्वाह सप्तधा वै वागवदत्तावद्वै वागवदत्सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै तिस्रो देवता

* 'मपहन्त्यव' क।

अन्वाह त्रयो वा इमे त्रिवृतो लोका एषा मेव लोकाना * मभिजित्यै ॥ ७ ( १७ ) ॥

अथ प्रातरनुवाकगताना मृचां काम्या विशेषा वक्तव्याः । तत्रायुरर्थं शतसङ्ख्यां विधत्ते—"शत मनूच्य मायुष्कामस्य ;—शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैन तद्वीर्य इन्द्रिये दधाति"—इति । अपमृत्युरहित मायुर्यः कामयते, तस्य ऋचां शत मनूच्यम् । ऋग्विशेषास्तु सूत्रान्तरे द्रष्टव्याः । शतसङ्ख्याका वत्सरा आयुः यस्य मनुष्यस्य सोऽयं 'शतायुः' । अधर्म्मसम्पादितस्यापमृत्योरभावे संवत्सरशतं मनुष्या जीवन्ति । दशसङ्ख्याकानीन्द्रियाणि, प्रत्येकं दशसु नाड़ीषु वर्त्तमानत्वात् तन्मिलित्वा शतेन्द्रियाणि भवन्ति । ततस्तद्व्यापाराणा मपि शतत्वेन शतवीर्यत्वम् । तस्माच्छतानुवचनेन तत्सङ्ख्याके आयुषि वीर्ये इन्द्रिये च 'एनं' यजमानं स्थापयति ॥

अहीनरात्रादुत्तरक्रतुकामस्य सङ्ख्यान्तरं विधत्ते—"त्रीणि च शतानि षष्टिश्चानूच्यानि यज्ञकामस्य ;—त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि, तावान्त्संवत्सरः, संवत्सरः प्रजापतिः, प्रजापतिर्यज्ञः"—इति । षष्ट्युत्तरशतत्रयदिवसपरिमितो यः संवत्सरः कालात्मा, स एव प्रजापतिः । संवत्सरादिकालविशेषणं प्रजापतिसृष्टत्वेन तदभेदोपचारः । तथा यज्ञस्यापि तेन सृष्टत्वात् तद्रूपत्वम् । एवं सति षष्ट्युत्तरशतत्रयसङ्ख्यायाः संवत्सरप्रजापतिद्वारा यज्ञसम्बन्धादुत्तरक्रतुप्राप्तिहेतुत्वं भवति । होतुर्वेदनं

* 'देवलोकाना' क ।

प्रशंसति—"उपैनं यज्ञो नमति, यस्यैवं विद्वांस्त्रीणि च शतानि षष्टिं चान्वाह"-इति ॥

अथ प्रजां पशूंश्च कामयमानस्य पूर्वसङ्ख्याया द्विगुणां सङ्ख्यां विधत्ते—"सप्त च शतानि विंशतिश्चानूच्यानि प्रजापशुकामस्य ; —सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रास्तावान्संवत्सरः ; संवत्सरः प्रजापतिर्यं प्रजायमानं विश्वं रूप मिद मनु प्रजायते ; प्रजापति मेव तत्प्रजायमानं प्रजया पशुभिरनुप्रजायते प्रजात्यै"–इति। संवत्सरगतानामह्नां रात्रीणां च पृथग्गणनायां मिलित्वा विंशत्यधिकसप्तशतसङ्ख्या संवत्सरे सम्पद्यते। संवत्सरस्य च प्रजापतित्व मुक्तम् ( २४ पृ० )। एतावता विंशत्युत्तरसप्तशतसङ्ख्यायाः प्रजापतिसम्बन्धो दर्शितः। यं प्रजायमान मित्यादिना काम्यमानानां प्रजानां पशूनां च प्रजापतिसम्बन्धः प्रदर्श्यते। लोके कस्मिंश्चिद् गृहे प्रजायमानं 'यं' पुरुष मनु 'विश्वं रूप मिदम्' ओषधिवनस्पत्यादि स्थावरम्, भ्रातृभगिनीगोमहिष्यादिकं जङ्गमं च, सर्वं प्रजायते। तत्तद्गृहे प्रजायमानं प्रजापति मेव अनुप्रजापशुरूपेण सर्वं मुत्पद्यते। एतदुक्तं भवति—कस्यचिद् धनिकस्य पुत्रे उत्पद्यमाने सति कुटुम्बाभिवृद्ध्या तज्जीवनार्थं सस्यादिनिष्पत्तिं गोमहिष्यादिसम्पत्तिं च स धनिकः प्रभूतां करोति। तस्य पुत्रस्य भ्रातृभगिन्यादयोऽपि पुनर्जायन्ते। तत्र च स्थावरजङ्गमरूपाणां प्रजानां पालनहेतुत्वादयं जायमानः पुत्र एव च प्रजापतिः। अतः प्रजापतिद्वारा प्रजापशुसम्बन्धोऽपि भवतीति। तस्मादियं सङ्ख्या यजमानस्य 'प्रजात्यै' प्रजापशूत्पादनाय सम्पद्यते। वेदनं प्रशंसति—"प्रजायते प्रजया पशुभिर्य एवं वेद"-इति ॥

अथ दुर्ब्राह्मणत्वपरिहारकामस्य सङ्ख्यान्तरं विधत्ते—"अष्टौ शतान्यनूच्यान्यब्राह्मणोक्तस्य; यो वा दुरुक्तोक्तः शमलगृहीतो यजेताष्टाक्षरा वै गायत्री, गायत्र्या वै देवाः पाप्मानं शमल मपाघ्नत; गायत्र्यैवास्य तत् पाप्मानं शमल मपहन्ति"-इति। अब्राह्मणत्वेन स्मृतिषु योऽभिहितः, सोऽय मब्राह्मणोक्तो राजसेवाधिकारी। स्मृतिवाक्यं चात्र पूर्व मेवोदाहृतम् (१२९ पृ०)। तादृशस्याष्टौ शतान्यनुब्रूयात्। अथवा, यो वा 'दुरुक्तोक्तः' दुरुक्तेनापवादेन जनैर्व्यवहृतः, स 'शमलगृहीतः' मलिनेन लोकविरुद्धेन स्वीकृतः। तादृशो यदा यजेत, तदाप्यष्टौ शतान्यनुब्रूयात्। गायत्र्या अष्टाक्षरत्वात्, तया च मलिनस्य पापस्य देवैर्विनाशितत्वात्, अष्टसङ्ख्या मनुतिष्ठन् गायत्र्यैव 'मलिनं' पापं विनाशयति। वेदनं प्रशंसति—"अप पाप्मानं हते य एवं वेद"-इति। अपहन्तीत्यर्थः॥

सङ्ख्यान्तरं विधत्ते—"सहस्र मनूच्यं स्वर्गकामस्य; सहस्राश्वीने वा इतः स्वर्गो लोकः, स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै सङ्गत्यै"-इति। प्रबलोऽश्व एकेनाह्ना यावन्ति योजनानि गच्छति, तावद्योजनपरिमितो देशो ऽश्वीनः। स च सहस्रसङ्ख्यया गुणितः सहस्राश्वीनः। 'अश्वस्यैकाहगमः'-इति-(५.२.१९.)-पाणिनीयसूत्रादाश्वीनशब्दनिष्पत्तिः *। 'इतः' भूलोकादारभ्य 'सहस्राश्वीने' ऊर्ध्वदेशे स्वर्गो लोको वर्त्तते। अतः सहस्रसङ्ख्या स्वर्गस्य लोकस्य 'समष्ट्यै' प्राप्त्यै भवति; प्राप्तस्य 'सम्पत्त्यै' स्वापेक्षित-

---

* 'एकाहेन गम्यत इत्येकाहगमः आश्वीनोऽध्वा'-इति सि० कौ०। 'त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते'-इति अम० को० २. ८. ४७।

सर्वभोग्यवस्तुसम्पादनाय भवति ; सम्पन्नस्य च 'सङ्गत्यै' महता मिन्द्रादिदेवानां प्रीतिपूर्वकसम्बन्धाय भवति ॥

सर्व्वकामसिद्ध्यर्थ मियत्तापरिच्छेदराहित्यसङ्ख्यां विधत्ते— "अपरिमित मनूच्य मपरिमितो वै प्रजापतिः ; प्रजापतेर्वा एत-दुक्थं यत्प्रातरनुवाकस्तस्मिन् सर्वे कामा अवरुध्यन्ते ; स यदपरि-मित मन्वाह, सर्वेषां कामाना मवरुध्यै"-इति। शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य मध्यरात्रादूर्ध्व मुपक्रम्य सूर्यो-दयात् प्राचीनकाले यावतीरनुवक्तुं शक्तिरस्ति तावतीरनुब्रूयात्। जगत्कारणभूतः प्रजापतिश्चापरिमितः ;— न ह्येतावदस्य स्वरूप मिति प्रजापतिः * परिमातुं शक्यते। यः प्रातरनुवाकोऽस्ति, तदेतत् तादृशस्य प्रजापतेः 'उक्थं' प्रियं शस्त्रम् ; अतः 'तस्मिन्' प्रातरनुवाके सर्वे कामा अन्तर्भवन्ति। एवं सति 'सः' होता यद्यपरिमित मनुब्रूयात्,तदानीं तदनुवचनं सर्वकामप्राप्त्यै भवति। वेदनं प्रशंसति—"सर्वान् कामानवरुन्धे य एवं वेद"-इति। बहु-फलहेतुत्वादपरिमितपक्ष मादरेण निगमयति—"तस्मादपरिमित मेवानूच्यम्"-इति †॥

प्रातरनुवाकगतास्वृक्षु छन्दोविशेषान् विधत्ते—"सप्ताग्नेयानि छन्दांस्यन्वाह, सप्त वै देवलोकाः"-इति। प्रातरनुवाके त्रयो भागाः। तत्र प्रथमो भाग आग्नेयः। तस्मिंश्च गायत्री, अनु-ष्टुप् त्रिष्टुप्, बृहती, उष्णिक्, जगती, पङ्क्तिरिति सप्तभिश्छन्दो-भिर्युक्ता ऋचोऽनुब्रूयात्। देवानां सम्बन्धिनो बहुलोकयुक्ता लोकविशेषाः सप्त ; तस्माच्छन्दसां सप्तसङ्ख्या प्रशस्ता। वेदनं प्रशं-

* 'प्रजापतिः' क, ख, ग।

† तदुक्त माश्वलायनेन—'शतप्रभृत्यपरिमितः'—इति ४. १५. २।

सति—"सर्वेषु देवलोकेषु राध्नोति य एवं वेद"-इति। भूलोकादयः सप्तलोकान्ताः सप्त वै देवलोका द्रष्टव्याः॥

प्रातरनुवाकस्य द्वितीयभागे छन्दांसि विधत्ते—"सप्तौषस्यानि छन्दांस्यन्वाह, सप्त वै ग्राम्याः पशवः"-इति। यथा प्रथमभागस्याग्निर्देवता, तथा द्वितीयभागस्योषा देवता। तस्मादुषःप्रतिपादिकास्वृक्षु पूर्ववद् गायत्र्यादीनि सप्त छन्दांसि द्रष्टव्यानि। ग्रामे भवाः ग्राम्याः पशवः, ते च सप्त। तथाच बौधायनः—"सप्त ग्राम्याः पशवोऽजाश्वो गौर्महिषी वराहो हस्त्यश्वतरी च"-इति। आपस्तम्बमतानुसारिणस्त्वेवं वर्णयन्ति—

"अजाविकं गवाश्वं च गर्दभोष्ट्रनरास्तथा।
सप्त वै ग्राम्यपशवो गीयन्ते कविसत्तमैः॥"-इति।

तस्मादत्र सप्तसङ्ख्या युक्ता। वेदनं प्रशंसति—"अव ग्राम्यान् पशून् रुन्धे य एवं वेद"-इति॥

तृतीयभागे छन्दांसि विधत्ते—"सप्ताश्विनानि छन्दांस्यन्वाह; सप्तधा वै वागवदत्तावद्वै वागवदत् सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै"-इति। तृतीयभागस्याश्विनौ देवता। तत्सम्बन्धिनीः सप्तच्छन्दोयुक्ता ऋचोऽनुब्रूयात्। लोके गानरूपा या वागस्ति, सा 'सप्तधा अवदत्' षड्जऋषभादिस्वरोपेता प्रवृत्ता *। तावदेव वैदिकवागप्यवदत्; साम्नि क्रुष्टप्रथमद्वितीयादीनां सप्तस्वराणा मधीयमानत्वात् †। अतोऽत्रत्यसप्तसङ्ख्या, लौकिक्याः

---

* 'षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा।
पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः॥'-इत्यादि ना० शि० १. २. ५।

† 'प्रथमश्च द्वितीयश्च तृतीयश्च चतुर्थकः।
मन्द्रः क्रुष्टो ह्यतिस्वार एतान् कुर्वन्ति सामगाः॥'-इति ना०शि० १. १. १२।

सर्वस्या वाचो वेदस्य च सर्वस्याः परिग्रहाय भवति। त्रिष्वप्येष्वाग्नेयौषस्याश्विनभागेषु छन्दांस्यस्माभिः पूर्व मेवोदाहृत्य प्रदर्शितानि ( २२६—२२७ पृ० ) ॥

भागत्रये देवतात्रयं विधत्ते—"तिस्रो देवता अन्वाह ; त्रयो वा इमे त्रिवृतो लोका एषा मेव लोकाना मभिजित्यै"--इति। अग्निः, उषाः, अश्विनाविति देवतात्रयम्। यथा गुणत्रयमेलनरूपा रज्जुस्त्रिवृत्, एवम् 'एते' पृथिव्यन्तरिक्षद्युलोकाः परस्परं मिलितास्त्रिवृतः। यद्वा, एकैकस्मिंल्लोके सत्वरजस्तमोगुणभेदेन अस्योत्तममध्यमाधमरूपत्वात्प्रत्येकं त्रिवृत्त्वम्। अतो देवतात्रिसङ्ख्या, लोकत्रयजयाय भवति ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये
सप्तमः खण्डः ॥ ७ (१७) ॥

---

॥ अथ अष्टमः खण्डः ॥

तदाहुः कथ मनूच्यः प्रातरनुवाक इति। यथाच्छन्दस मनूच्यः प्रातरनुवाकः। प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांस्येष उ एव प्रजापतिर्यो यजते। तद्यजमानाय हितं पच्छो ऽनूच्यः। प्रातरनुवाकस्त्रतु-

ष्पादा वै पशवः पशूना मवरुध्या अर्द्धर्चश एवानूच्यो यथैवैन मेतदन्वाह प्रतिष्ठाया एव द्वि[illegible]ष्ठो वै पुरुष-श्चतुष्पादाः पशवो यजमान मेव [illegible] द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्मादर्द्धर्चश [illegible]यति; नूच्यस्तदाहुर्यद् व्यूळ्हः प्रातरनुवाकः कथ मव्यूळ्हो भवतीति यदेवास्य बृहती मध्यान्नैतीति ब्रूयात्तेने-ष्याहुतिभागा वा अन्या देवता अन्यास्तोमभागा-श्छन्दोभागास्ता या अग्नावाहुतयो हूयन्ते ताभि-राहुतिभागाः प्रीणात्यथ यत् स्तुवन्ति च शंसन्ति च तेन स्तोमभागाश्छन्दोभागा उभय्यो हास्यैता देवताः प्रीता अभीष्टा† भवन्ति य एवं वेद त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चैते देवाः सोमपा एकादश प्रयाजा एकादशानुयाजा एका-दशोपयाजा एते ऽसोमपाः पशुभाजनाः सोमेन सोमपान् प्रीणाति पशुना ऽसोमपानुभय्यो हास्यैता देवताः प्रीता अभीष्टा‡ भवन्ति य एवं वेदाभूदुषा रुशत्पशुरित्युत्तमया परिदधाति तदाहुर्यत् त्रीन् क्रतूनन्वाहाग्नेय मुषस्य माश्विनं कथ मस्यैकयर्चा

---

* 'यजमान मेतद्' ङ।  †, ‡ 'अभिष्टा' क।

परिदधतः सर्वे त्रयः ऋतवः परिहिता भवन्तीत्य-
भूदुषा रुश[illegible]पशु[illegible]सो रूप माग्निरधाय्यृत्विय
इत्यग्ने[illegible] [illegible]म् [illegible]यो दस्रावमर्त्यौ
[illegible] मम श्रुतं हव मित्याश्वि[illegible]
परिदधतः सर्वे त्रयः ऋतवः परिहिता [illegible]
भवन्ति ॥ ८ ( १८ ) ॥

॥इत्यैतरेयब्राह्मणे द्वितीयपञ्चिकायां द्वितीयोध्यायः॥२॥

अथ तस्य प्रातरनुवाकस्यानुवचनप्रकारविशेषं निर्णेतुं प्रश्न मवतारयति—"तदाहुः,—कथ मनूच्यः प्रातरनुवाक इति"-इति। कि मेकैकस्मिन् भागे गायत्र्यादीनि छन्दांस्यनुक्रमेणैवानुवक्तव्यानि, आहोस्विदन्यथा ? इत्येकः संशयः। अनुक्रमपक्षेऽपि किं पादे पादे अवसानं कृत्वानुवचनीयम्, आहोस्वित् तदर्द्धेऽवसानं कृत्वा ? इति द्वितीयः संशयः। तत्र प्रश्नोत्तर माह—"यथाच्छन्दस मनूच्यः प्रातरनुवाकः ; प्रजापतेर्वा एतान्यङ्गानि, यच्छन्दांस्येष उ एव प्रजापतिर्यो यजते, तद्यजमानाय हितम्"-इति। अनुक्रमेणावस्थितानि गायत्र्यादीनि छन्दांसि अनतिक्रम्येति 'यथाच्छन्दसम्', छन्दःक्रमेणैवाय मनुवचनीयः। छन्दसां प्रजापतिसृष्टत्वेन तदवयवत्वात्, यजमानस्य च प्रजापतिपदप्राप्तियोग्यत्वेन प्रजापतिरूपत्वात्, तदङ्गरूपच्छन्दसां क्रमेणानुवचनं यजमानाय अवयवविपर्यासराहित्येन हितं भवति। तस्माच्छन्दःक्रमेणैवानुवक्तव्यः ॥

द्वितीयविचारे पूर्वपक्ष माह—"पच्छो ऽनूच्यः प्रातरनुवाक-श्चतुष्पादा वै पशवः, पशूना मवरुध्यै"—इति । 'पच्छः' एकैकस्मिन् पादे अवसायेत्यर्थः । सिद्धान्त माह—"अर्द्धर्चश एवानूच्यो यथैवैन मेतदन्वाह प्रतिष्ठाया एव ; द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ; तस्मादर्द्धर्चश एवानूच्यः"—इति । 'अर्द्धर्चशः' एकैकस्मिन् ऋचोऽर्द्धे अवसायावसाय प्रातरनुवाकोऽनूच्यः । 'एव'कारः पूर्वपक्षव्यावृ-त्त्यर्थः । यथैवेत्यादिना अर्द्धर्चश इत्येतदेव स्पष्टीक्रियते । एत मर्थं* 'यथैव' येनैव प्रकारेण 'एतदनु' अध्ययनकालीनं गुरूच्चारण मनु, —यथाध्यनकाले प्रत्यर्द्ध मवसाय 'आह' पठति, तथैव प्रातरनु-वाकानुष्ठानकालेऽपि । न त्वत्र ऋगन्ते प्रणवप्रक्षेपादिवत् किञ्चित् नूतनं कर्त्तव्य मस्ति । तदेतदर्द्धर्चशोऽनुवचनम् 'प्रतिष्ठाया एव' यजमानस्य प्रतिष्ठार्थं मेव भवति । तत्कथम् ? इति, तदेवोच्यते —यथैकस्या ऋचो द्वे अर्द्धर्चे, एवं पुरुषो 'द्विप्रतिष्ठः' । प्रति-तिष्ठति स्थैर्येणावस्थितो भवति आभ्यां पादाभ्या मिति, प्रतिष्ठे द्वौ पादौ† ; प्रतिष्ठे यस्यासौ द्विप्रतिष्ठः । पशूनां चत्वारः पादाः ; तथा सति पादचतुष्टयोपेतासु ऋक्षु द्वाभ्या मवसानयुक्ताभ्या मनु-वचने कृते सति 'द्विप्रतिष्ठं' द्विपादं यजमानं चतुष्पात्सु पशुषु प्रतिष्ठापयति । तस्मादर्द्धर्चश एवानुवचनं युक्तम् ॥

तत्र प्रातरनुवाकक्रम माक्षिप्य समाधत्ते—"तदाहुर्यद् व्यूळ्हः प्रातरनुवाकः, कथ मव्यूळ्हो भवतीति ? यदेवास्य बृहती मध्या-न्नैतीति ब्रूयात्तेनेति"—इति । छन्दसां यो ऽय मनुक्रमः, सोऽय मनु क्रमणिकाकारेण दर्शितः—"अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्-

---

* 'एत मर्थं' घ। † 'द्वे पादौ' घ।

बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्य्यष्ट्यत्यष्टिधृत्यतिधृतयश्चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि" इति (का० छ० अ० १.१.)। चतुर्विंशत्यक्षरोपेतां गायत्री मारभ्योत्तरोत्तरं छन्दश्चतुर्भिश्चतुर्भिरक्षरैरधिक मित्यर्थः। त मेतं छन्दसां क्रमं विपर्यस्य प्रातरनुवाके क्रमान्तर मूहितम्,—गायत्र्यनुष्टुप्त्रिष्टुब्बृहत्युष्णिग्जगतीपङ्क्तिरिति। सोऽयं क्रमोऽस्माभिराश्वलायनोक्तक्रमेण पूर्व मेवोदाहृतः ( ३३६ पृ० )। तस्मात्प्रातरनुवाकोक्तक्रमस्य विपर्ययेणोहनादयं व्यूढः सम्पन्नः। सोऽय मनुचितः। तस्मात् कथ मव्यूढो भवतीति प्रश्नः, आक्षेपो वा। यदेवेत्यादिक मुत्तरम्। यस्मादेव कारणात् छन्दःक्रमे अनुष्ठानक्रमे वास्य प्रातरनुवाकस्य मध्याद्बृहतीच्छन्दो 'नैति' नापगच्छतीत्युत्तर मभिज्ञो ब्रूयात्। 'तेन' कारणेनाय मव्यूढः सम्पन्न इत्यगन्तव्यम् ॥

अथ प्रातरनुवाकं प्रशंसति—"आहुतिभागा वा अन्या देवता अन्या स्तोमभागाश्छन्दोभागास्ता या अग्नावाहुतयो हूयन्ते, ताभिराहुतिभागाः प्रीणात्यथ यत् स्तुवन्ति च शंसन्ति च तेन स्तोमभागाश्छन्दोभागाः"-इति। 'अन्याः' काश्चित् देवताः, अग्नौ हूयमाना माहुतिं भजन्ते इति; 'अन्याः' काश्चित् देवताः साम्न आवृत्तिप्रकारभेदेन निष्पन्नं त्रिवृत्पञ्चदशादि स्तोमं * भजन्ते; अपराः काश्चित् देवताः ऋग्गतगायत्र्यादि छन्दो भजन्ते। एवं सति 'ताः' विधिवाक्येषु प्रसिद्धाः आहुतयो याः सन्ति, ताभिराहुतिभागानां देवतानां प्रीतिः; उद्गातारः स्तोमयुक्तैः सामभिः स्तुवन्तीति यत्, तेन स्तोमभागानां प्रीतिः; होतारः छन्दोयुक्ताभिर्ऋग्भिः शंसन्तीति यत्, तेन छन्दोभागानां प्रीतिः। वेदनं प्रशं-

* सामब्राह्मणस्य 'तिसृभ्यो हिङ्करोति'-इत्याद्यध्यायद्वयं ( ता० ब्रा० २,३. ) द्रष्टव्यम्।

सति—"उभय्यो हास्यैता देवता: प्रीता अभीष्टा भवन्ति य एवं वेद"-इति । आहुतिभागा एको राशि:, स्तोमभागाश्छन्दोभागाश्च द्वितीयो राशि:, एता उभयविधा अपि देवता: वेदनेन प्रीता: सत्यो वेदितुरभीष्टप्रदा भवन्ति ॥

शंसनेन छन्दोभागानां प्रीत्यभिधानात् प्रातरनुवाकस्य प्रशंसा सम्पन्ना ; विभिन्ने प्रीतिनिमित्ते दृष्टान्तमभिप्रेत्य सोमं पशुं प्रशंसति —"त्रयस्त्रिंशद्वै देवा: सोमपा:, त्रयस्त्रिंशदसोमपा: । अष्टौ वसव:*, एकादश रुद्रा: †, द्वादशादित्या: ‡, प्रजापतिश्च, वषट्कारश्च §,

---

* "अग्निश्च जातवेदाश्च सहोजा अजिरा: प्रभु: । वैश्वानरो नर्यपाश्च पङ्क्तिराधाश्च सप्तम: । विसर्पेवाष्टमोऽग्नीना मेतेऽष्टौ वसव: क्षिता इति"-तै० आ० १. ९. १ । 'क्षिता इति'— एतदंशस्य व्याख्यान माह सायण:—'क्षिता:' सुखेन निवासं प्राप्ता: ( वसव: ) । 'इति'-शब्द उपधानप्रदर्शनार्थ:' । अस्मन्मते तु 'क्षितौ इति'-एवं पदच्छेदो युक्ततर: ; भूम्या मिति चार्थ उपदेश्य: । आह हि यास्क: 'अग्नि: पृथिवीस्थान:'-इति ( निरु० ६.२.१. ) ।

† "अथ वायोरेकादश ।—प्रभ्राजमाना व्यवदाता याश्च वासुकि-वैद्युता: । रजता: परुषा: श्यामा: कपिला अतिलोहिता: । ऊर्ध्वा अवपतन्ताश्च वैद्युत इत्येकादश"-इति तै० आ० १. ९. ४ । 'प्रभ्राजमाना इत्येकादश रुद्रा:'-इति च तत्कल्प: ।

‡ "कतम आदित्या इति ? द्वादश वै मासा: संवत्सरस्यैत आदित्या: ; एते हीदꣳ सर्व माददाना यन्ति ; ते यदिदꣳ सर्वं माददाना यन्ति, तस्मादादित्या इति"-इति बृ०उप० ३. ९. ५ । अपरथा च गम्यन्ते । तद्यथा—"त्वष्टा, सविता, भग:, सूर्य:, पूषा, विष्णु:, विश्वानर:, वरुण:, केशी ( केशिन: ), वृषाकपि:, यम:, अजएकपात्"-इति निघ० ५. ६ । एते हि अरुणोदयाद्यस्तान्तस्याह्नो द्वादशभागानां कर्त्तार: कालमात्रकृतपार्थक्याश्रया: सूर्या एव । तथाहि 'त्वष्टा दुहित्रे'-इत्यादि: 'वचनानीमानि'-इत्यन्तश्च ( १२. ११—३०. ) निरुक्तग्रन्थोऽत्रालोच्य: । धाता, मित्र:, अर्यमा, शक्र: भग:, विवस्वान्, पूषा, सविता, त्वष्टा, विष्णु:, इति च द्वादश महाभारते १. २५२३ ।

§ 'अष्टौ०—०दित्या इमे एव द्यावापृथिव्यौ त्रयस्त्रिंश्यौ, त्रयस्त्रिंशद्वै देवा: ; प्रजापतिश्चतुस्त्रिंश:'-इति शत० ब्रा० ४. ५. ७. २ । तत्रैवान्यविध मपि—'अष्टौ०—०दित्यास्त एकत्रिंशत्, इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति'-इति ११. ६. ३. ५ । 'अदितिर्जनया-

—एते देवाः सोमपाः। एकादश प्रयाजाः, एकादशानुयाजाः, एकादशोपयाजाः,—एते असोमपाः, पशुभाजनाः। सोमेन सोमपान् प्रीणाति, पशुना असोमपान्"-इति। वस्वादीनां वषट्कारान्तानां देवतानां सोमयागेन प्रीतिः। 'होता यक्षदग्नि मित्यादिमैत्रावरुणप्रैषमन्त्रेषु, 'समिद्धो अद्येत्यादियाज्यासु चाभिहिताः समिदाद्या एकादश प्रयाजदेवताः *। 'देवं बर्हिः सुदेव मित्यादिप्रैषमन्त्रेषु, 'देवं बर्हिर्वसुवन इत्यादियाज्यासु चाभिहिता बर्हिराद्या एकादशानुयाजदेवताः †। 'समुद्रं गच्छ स्वाहेत्यादिमन्त्रोक्ताः समुद्रादय एकादशोपयाजदेवताः ‡। सर्वा अपि सोमपानवर्जिताः पशु मेव भजन्ते; तासां पशुना तृप्तिः। वेदनं प्रशंसति— "उभय्यो हास्यैता देवताः प्रीता अभीष्टा भवन्ति य एवं वेद"-इति। अत्र सोमपाना मसोमपानां च भिन्नप्रीतिनिमित्ततया छन्दोभागानां देवताना मितरदेवताविलक्षणं प्रीतिनिमित्तं प्रातरनुवाक इत्यभिप्रायः॥

तस्य प्रातरनुवाकस्य समाप्ति मृचं विधत्ते—"अभूदुषा रुश-

---

मास वयस्त्रिंशत् शुभान् सुरान्। आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि'-इति च। रामा० ३. २०. १५।

* समिधः, तनूनपात् नराशंसो वा, इळः, बर्हिः, दुरः, उषासानक्ता, दैव्याहोतारा, तिस्रो देव्यः ( इडा, सरस्वती, भारती ), त्वष्टा, वनस्पतिः, स्वाहाकृतयः;—इत्येकादश प्रयाजदेवताः। तै० ब्रा० ३. ६. २, ३ द्रष्टव्याः।

† बर्हिः, द्वारः, उषासानक्ता, जोष्ट्री, ऊर्जाहुती, दैव्याहोतारा, तिस्रो देव्यः, नराशंसः, वनस्पतिः, बर्हिः, स्विष्टकृत्;—इत्येकादशानुयाजदेवताः। तै०ब्रा०३.६.१३,१४ द्रष्टव्याः।

‡ समुद्रः, अन्तरिक्षम्, सविता, अहोरात्रे, मित्रावरुणौ, सोमः, यज्ञः, छन्दांसि, द्यावापृथिवी, दिव्यं नभः, वैश्वानरः, आपः;—इत्येकादशोपयाजदेवताः तै०सं०१.५.११; ६. ४. १ द्रष्टव्याः। उपयजोपयाजशब्दावेकार्थौ।

त्पशुरिति ( सं० ५.७५.९. ) उत्तमया परिदधाति"-इति। अत्र कश्चिदाक्षेप मुत्थापयति— "तदाहुर्यत् त्रीन् क्रतूनन्वाहाग्नेय मुषस्य माश्विनं, कथ मस्यैकयर्चा परिदधतः सर्वे त्रयः क्रतवः परिहिता भवन्तीति"-इति। क्रतुशब्दः सोमयागसम्बन्धिनः प्रातरनुवाकभागानुपलक्षयति। ते च भागाः त्रयः ;—आग्नेयः, उषस्यः, आश्विनश्चेति। तत्र सर्वानसौ होता ब्रूते। तदानी मेक-यर्चा परिधानं कुर्वतः 'अस्य' होतुस्त्रयो भागाः सर्वेऽपि कथं समा-पिता भवन्ति? इत्याक्षेप माहुः। तत्र समाधानं दर्शयति— "अभूदुषा रुशत्पशुरित्युषसो रूप माग्निरधाय्यृत्विय इत्यग्ने-रयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हव मित्याश्विनोरेव मु हास्यैकयर्चा परिदधतः सर्वे त्रयः क्रतवः परि-हिता भवन्ति-भवन्ति"-इति। येयम् 'उषाः' सूर्योदयात् पूर्वभा-विनी, सेयं रुशत्पशुरभूत्। 'रुशन्तः' परस्परं ध्वनिं कुर्वन्तः पशवो यस्या मुषसि, सेयं 'रुशत्पशुः'। रात्रौ निद्रां कुर्वन्तः पशव उषः-काले प्राप्ते ध्वनिं कुर्वन्तीति प्रसिद्ध मेतत्। उषोदेवताया अस्मिन् पादे अभिहितत्वात् अयं प्रथमः पादः, उषसो 'रूपम्' अनु-कूल इत्यर्थः। 'ऋत्वियः' अरणिमथनरूपे ऋतुकाले भवस्तादृशो-ऽग्निः, 'आ' समन्तात् 'अधायि' आधानेन सम्पादितः। अतोऽग्ने-रभिधानाद् द्वितीयः पादोऽग्नेः रूपम्। 'वृषण्वसू' वर्द्धमानधनौ 'दस्रौ' हे अश्विनौ देवौ! 'वां' युवयोः 'अमर्त्यो रथः' मनुष्याणा मयोग्यः समीचीनो रथः 'अयोजि' अश्वाभ्यां योजितः। अतो 'माध्वी' मधुरया वाचा 'मम हवं' मदीय माह्वानं 'श्रुतं' युवां शृणुतम्। अस्मिन्नुत्तरार्द्धे अश्विनोरभिधानाद् अय मर्द्धोऽश्विनो रूपम्। तस्माद् 'एकयर्चा' देवतात्रयप्रतिपादिकया 'एव मु ह' एत

मेव प्रातरनुवाकं 'परिदधत:' समापयत: 'अस्य' होतु: 'त्रय: ऋतव:' प्रातरनुवाकभागा: सर्वे 'परिहिता:' समापिता भवन्ति॥ पदाभ्यासोऽध्यायसमाप्त्यर्थ: ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां द्वितीयाध्याये
अष्टम: खण्ड: ॥ ८ ( १८ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर: ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकाया: द्वितीयोऽध्याय: ॥

---

## ॥ अथ तृतीयाध्याय: ॥

( तत्र )

### ॥ अथ प्रथम: खण्ड: ॥



ऋषयो वै सरस्वत्यां सत्र मासत। ते कवष मैलूषं सोमादनयन्। दास्या: पुत्र: कितवो ऽब्राह्मण:। कथं नो मध्ये दीक्षिष्टेति। तं बहि*र्धन्वोदवहन्। न्नेनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति। स बहिर्धन्वो-दूळ्ह: पिपासया वित्त। एतदपोनप्त्रीय मपश्यत्। प्र देवत्रा ब्रह्मणे गातुरेत्विति। तेनापां प्रियं धामोपा-गच्छत्त मापो ऽनूदायंस्तं सरस्वती समन्तं पर्यधावत्त-स्माद्धाप्येतर्हि परिसारक मित्याचक्षते। यदेनं सरस्वती समन्तं परिससार। ते वा ऋषयो ऽब्रुवन्विदुर्वा इमं देवा उपेमं ह्वयामहा इति तथेति। त मुपाह्वयन्त। त मुपहूयैतदपोनप्त्रीय मकुर्वत। प्र देवत्रा ब्रह्मणे गातुरेत्विति। तेनापां प्रियं धामोपागच्छन्नुप देवाना मुपापां प्रियं धाम गच्छत्युप देवानां जयति परमं लोकं य एवं वेद। यश्चैवं विद्वानेतदपोनप्त्रीयं कुरुते।

* 'बहि०' टी० ख, टी० ग।

तत्सन्तत मनुब्रूयात् सन्ततवर्षी ह प्रजाभ्यः पर्जन्यो भवति यच्चैवं विद्वानेतत्सन्तत मन्वाह यदवग्राह मनुब्रूयाज्जीमूतवर्षी ह प्रजाभ्यः पर्जन्यः स्यात्तस्मात्सन्तत मेवानूच्यं तस्य त्रिः प्रथमां सन्तत मन्वाह तेनैव तत्सर्वं सन्तत मनूक्तं भवति ॥ १ ( १९ ) ॥

पर्यग्न्यादेर्विशिषांश्च श्लोकाः स्वाहाकृतीरपि ।
वपां चाधीयते प्रातरनुवाकविधिः परम् ॥

अथापोनप्त्रीयादयो वक्तव्याः ; तदर्थ मादावाख्यायिका माह —"ऋषयो वै सरस्वत्यां सत्र मासत ; ते कवष मैलूषं सोमादनयन् ; दास्याः पुत्रः कितवो ऽब्राह्मणः, कथं नो मध्ये दीक्षिष्टेति ; तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति ; स बहिर्धन्वोदूळ्हः पिपासया वित्त एतदपोनप्त्रीय मपश्यत्,— प्र देवत्रा ब्रह्मणे गातुरेत्विति ; तेनापां प्रियं धामोपागच्छत् ; त मापोऽनूदायंस्तं सरस्वती समन्तं पर्यधावत्"- इति । भृग्वङ्गिरःप्रभृतयः 'ऋषयः' कदाचित् 'सरस्वत्याम्' एतन्नामकनदीतीरे 'सत्र मासत'। द्वादशरात्र* मारभ्य उपरितनं त्रयोदशरात्रादिकं बहुयाजमानकं कर्म्म सत्र मित्युच्यते। तदुद्दिश्य तत्र स्थितवन्तः ; सत्र मन्वतिष्ठन्नित्यर्थः । तदानीं तेषां मध्ये कश्चिदिलूषाख्यस्य पुरुषस्य पुत्रः कवषनामकोऽवस्थितो ऽभूत् । 'तं' च ऋषयः, तं कवषं सोमयागात् निःसारितवन्तः । तेषा

* 'द्वादशाह' घ ।

मभिप्राय उच्यते—'दास्याः पुत्रः'-इत्युक्तिराक्षेपार्थः *। 'कितवः' द्यूतकारः ; तस्मादब्राह्मणोऽयम् । ईदृशो 'नः' अस्माकं शिष्टानां मध्ये स्थित्वा कथं दीक्षां कृतवानिति तेषा मभिप्रायः †। 'तं' कवषं सरस्वतीतीराद् 'बहिः' दूरे 'धन्व' जलरहितां भूमिं प्रति 'उदवहन्' उद्धृतवन्तः, बलादपसारितवन्तः। धन्वदेशे बलात्प्रेरयितॄणा मय मभिप्रायः,—'अत्र' जलवर्जितदेशे 'एनं' कवषं पिपासा मारयतु ;— सरस्वत्या नद्याः पवित्र मुदक मयम् पापिष्ठो मा पिबत्विति। 'सः' च कवषोऽत्र सरस्वत्याः 'बहिः' दूरं 'धन्व' निर्जलं देशं प्रति 'उदूळ्हः' उत्कर्षेणापसारितः, पिपासया 'वित्तः' लब्धः, आक्रान्तः। तत्परिहारार्थम् 'एतत्' प्रदेवत्रेत्यादिक मपोनप्तृदेवताकं सूक्तं (सं० १०.३०.) वेदमध्ये विचार्यापश्यत्। 'तेन' सूक्तेन जपितेन 'अपां' जलाभिमानिनीनां देवतानां प्रियं स्थान मुपागच्छत्। 'तं' चागतम् 'आपः' देवताः 'अनूदायन्' अनुग्रहेणोत्कर्षो यथा भवति तथा प्राप्तवत्यः। ततः 'सरस्वती' नदी 'तं' कवषं 'पर्यधावत्' परितः प्रवाहवेगेन प्रवृत्तासीत्। इम ‡ मर्थं लोकप्रसिद्ध्या दृढ़यति—"तस्माद्धाप्येतर्हि परिसारक मित्याचक्षते, यदेनं सरस्वती समन्तं परिससार"-इति। 'यद्' यस्मिन् स्थाने 'सरस्वती' 'नदी' 'एनं' कवषं 'समन्तं' सर्वासु दिक्षु परिससार, तत् स्थानम् 'एतर्ह्यपि' एतस्मिन्नपि काले तीर्थविशेषाभिज्ञाः पुराणकर्त्तारः परिसारक मित्येतन्नाम्ना व्यवहरन्ति। अथ सत्रानुष्ठायिनां तेषा मृषीणां कृत्यं दर्शयति—"ते वा ऋषयो ऽब्रुवन्,—विदुर्वा इमं देवा

---

* 'इत्युक्तिरधिक्षेपाय' घ। † 'उक्त' घ।

‡ अशिष्ट इति तस्य शिष्टाव्यवहार्यत्वम्, दास्याः पुत्र इति निन्दार्थमुक्तं न तु सत्यमित्याशयः।

उपेमं ह्वयामहा इति, तथेति ; त मुपाह्वयन्त ; त मुपहूयैत-दपोनप्त्रीय मकुर्वत,— प्र देवत्रा ब्रह्मणे गातुरेत्विति ; तेनापां प्रियं धामोपागच्छन्नुप देवानाम्"-इति। 'ते' भृग्वादयः परस्पर मिद मब्रुवन्,— 'इम" कवषं 'देवाः' सर्वेऽपि 'विदुः' विजानन्त्येव। अतोऽस्य कितवत्वादिदोषो नास्ति। तस्मादिम मस्मत्-समीपं प्रति आह्वयामः,—'इति' विचार्य त मुपह्वयन्ते। तेन दृष्ट मपोनप्तृदेवताकम् प्रदेवत्रेत्यादि सूक्तम् 'अकुर्वत' प्रयुक्तवन्तः। 'तेन' सूक्तेन जलदेवताना मन्यदेवतानां च प्रियं स्थान मुपागच्छन्। एतद्वेदनपूर्वक मनुष्ठानं च प्रशंसति—"उपापां प्रियं धाम यच्छत्युप देवानां जयति परमं लोकं य एवं वेद, यश्चैवं विद्वानेतदपोनप्त्रीयं कुरुते"-इति। यस्मादेवं प्रशस्तं तस्मादपोनप्त्रीयं कुर्यादिति विधिरुन्नेयः॥

तस्मिन्नपोनप्त्रीयसूक्ते प्रातरनुवाकवत्प्रसक्त मर्द्धर्चेऽवसानं निवारयितुं नैरन्तर्यं विधत्ते—"तत्सन्तत मनुब्रूयात्"-इति। होतुर्वेदनं प्रशंसति—"सन्ततवर्षी ह प्रजाभ्यः पर्जन्यो भवति, यश्चैवं विद्वानेतत्सन्तत मन्वाह"-इति। 'पर्जन्यः' मेघः 'सन्ततवर्षी' नैरन्तर्येण वृष्टिमान्,— यावती वृष्टिरपेक्षिता, सा सम्पूर्णा भवतीत्यर्थः। विपक्षे बाधकपूर्वकं स्वपक्ष मुपसंहरति—"यदवग्राह मनुब्रूयाज्जीमूतवर्षी ह प्रजाभ्यः पर्जन्यः स्यात्तस्मात्सन्तत मेवानूच्यम्"-इति। 'अवग्राहं' तस्मिन्नर्द्धर्चे पादे वा अवगृह्यावगृह्य पुनःपुनरवसानं कृत्वा यद्यनुब्रूयात्, तदा प्रजोपकारार्थं प्रवृत्तः पर्जन्यो 'जीमूतवर्षी' स्यात्। जीमूतः पर्वतः ; "जीमूतौ मेघपर्वतौ"-इत्युक्तत्वात् *। अनुपयुक्ते पर्वते एव वर्षति, न तूपयुक्तेषु

* अम० को० ३. ३. ५८।

सम्येष्वित्यर्थः । यस्मादेवं तस्मादवग्रहो न कार्यः, किन्तु सन्तत मेवानूच्यम् ॥

तस्मिन् सूक्ते प्रथमाया ऋच आवृत्तिसहितं सान्तत्यं विधीयते—"तस्य त्रिः प्रथमां सन्तत मन्वाह,—तेनैव तत्सर्वं सन्तत मनूक्तं भवति"-इति । अस्य सूक्तस्य प्रथमायाः त्रिरावृत्तिसान्तत्येन सर्वस्यापि सूक्तस्य सान्तत्यं सिध्यति । प्रथमायाः * सान्तत्य माश्वलायनो दर्शयति—"अर्धर्चकारं प्रथमा मृगावान मुत्तराः"-इति ( श्रौ० ५. १. ५. ) । त्रिरावृत्तायाः प्रथमायाः अर्धर्चेणावसानं कृत्वा पठेत् ; उत्तरासा मृचा मवसानं कृत्वा पाठः कर्त्तव्य इत्यर्थः ॥ २० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां तृतीयाध्याये प्रथमः खण्डः ॥ १ (२०) ॥

---

॥ अथ द्वितीयः खण्डः ॥

ता एता नवानन्तराय मन्वाह हिनोता नो अध्वरं देवयज्येति दशमी मावर्तितीरध नु द्विधारा

---

* 'प्रथमायां' घ ।

इत्यावृत्तास्वेकधनासु प्रति यदापो अद्दश्र मायती-रिति प्रतिदृश्यमानास्वा धेनवः पयसा तूर्ण्यर्था इत्यु-पायतीषु समन्या यन्त्युपयन्त्यन्या इति समायती-ष्वापो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामो वय मिति याश्चेमाः पूर्वेद्युर्वसतीवर्यो गृह्यन्ते याश्च प्रातरेकधनास्ता भृगुरपश्यदापो वै स्पर्धन्त इति ता एतयर्चा समज्ञपयत्समन्या यन्त्युपयन्त्यन्या इति ताः समजानत सञ्जानाना हास्यापो यज्ञं वहन्ति य एवं वेदापो न देवीरुपयन्ति होत्रिय मिति होतृचमसे समवनीयमानास्वन्वाह वसती-वरीष्वेकधनासु चाविरपो ऽध्वर्या३उ इति होता-ध्वर्युं पृच्छत्यापो वै यज्ञो विदो यज्ञाँ३ इत्येव तदाहोत मनन्नमुरित्यध्वर्युः प्रत्याहोतेमाः पश्येत्येव तदाह तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिं तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृह-स्पतिवते विश्वदेव्यावते यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत्प्र स जन्यानि तारिषो३मिति प्रत्युत्तिष्ठति प्रत्युत्थेया वा आपः प्रति वै श्रेयांस मायन्त मुत्ति-ष्ठन्ति तस्मात्प्रत्युत्थेया अनुपर्यावृत्या अनु वै श्रेयांसं

पर्यावर्त्तन्ते तस्मादनुपर्यावृत्या अनुब्रुवतैवानुप्रपत्त-व्यं मीश्वरो ह यद्यप्यन्यो यजेताथ होतारं यशो ऽर्त्तोस्तस्मादनुब्रुवतैवानुप्रपत्तव्य मम्बयो यन्त्यध्वभि-रित्येता मनुब्रुवन्ननुप्रपद्येत जामयो अध्वरीयतां* पृञ्चतीर्मधुना पय इति यो ऽमधव्यो यशोर्त्तो बुभूषे-दमूर्या उप सूर्ये याभिर्वा सूर्यः सहेति तेजस्कामो ब्रह्मवर्चसकामो ऽपो देवीरुपह्वये यत्र गावः पिबन्ति न इति पशुकामस्ता एताः सर्वा एवानुब्रुवन्ननुप्र-पद्येतैतेषां कामाना मवरुध्या एतान् कामानवरुन्धे य एवं वेदेमा अग्मन् रेवतीर्जीवधन्या इति साद्यमानास्वन्वाह वसतीवरीष्वेकधनासु चाग्मन्नाप उशतीर्बर्हिरेद मिति सन्नासु स एतया परि-दधाति॥ २ (२०)॥

तत्सूक्तवचने प्रकारविशेषं विधत्ते—"ता एता नवानन्तराय मन्वाह"-इति। प्र देवत्रेत्यारभ्य नवसङ्ख्याका ऋचो याः सन्ति, तासां द्वयोः ऋचोर्मध्ये 'अन्तरायः' विच्छेदो न भवति तथानु-ब्रूयात्। अपरं विशेषं विधत्ते—"हिनोता नो अध्वरं देवयज्येति दशमीम्"-इति। अध्ययनक्रमेण "आवर्वृतती"-इति दशमी (१०.३०.१०.); तां परित्यज्य तदुत्तरभाविनी "हिनोता नः"-इति (१०.३०.११.) 'दशमीं' कृत्वानुब्रूयात्। परित्यक्तायास्तस्या

* 'अध्वरीयतां३' ग।

अनुवचने कालविशेषं विधत्ते—"आववृततीरध नु द्विधारा इत्याहृत्तास्वेकधनासु"-इति ।

अत्रायं प्रयोगक्रमः ।— "सुत्यादिनात् पूर्वस्मिन् दिने अग्नीषोमीयं पशु मनुष्ठाय वसतीवरीसञ्ज्ञिताः सोमाभिषवकाले सवनीयाः * अपः स्वानीय वेद्या मवस्थाप्य अर्द्धरात्राद् ऊर्द्धं निद्रां परित्यज्य आग्नीध्रधिष्ण्यादींस्तत्तन्मन्त्रैरभिमृश्य सोमादीनां पात्राण्यासाद्य प्रातरनुवाकार्थं होतारं सम्प्रेष्यप्रातरनुवाकान्ते "शृणोत्वग्निः"-इति ( तै०सं०१.३.१३. ) मन्त्रेण हुत्वा तत एकधनाः † अपः आनेतुं गच्छन्नपोनप्त्रीयसूक्तार्थं होतारं सम्प्रेष्यति,—एकधना अप आनयेति । सोऽयं प्रयोगक्रमः आध्वर्यवसूत्रेषु द्रष्टव्यः । तत्र होतारं प्रति अपोनप्त्रीयविषये प्रैष मापस्तम्बो दर्शयति—"यत्राभिजानात्यभूदुषा रुशत्पशुरिति, तत्प्रचरण्या

* "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं स्यन्दमानाना मनस्तमिते"-इति कात्या० श्रौ० ८.९.७। 'सोमार्था आपो वसतीवरी-शब्देनोच्यन्ते'-इत्यादिश्च तद्वृत्तिः। "यत्र होतुः प्रातरनुवाक मनुब्रुवत उपशृणुयात्तदपोऽध्वर्युर्वहन्तीनां गृह्णाति"-इति आप० श्रौ० १२.५.५। 'यावत्यध्वनि प्रातरनुवाकस्य शब्दः श्रूयते, तावत्येव वहन्तीना मपो गृह्णाति'-इति च तद्वृत्तिः। 'वसतु नु न इद मिति तद्वसतीवरीणां वसतीवरीत्वम्'-इति तन्नामनिर्वचनम् तै० सं० ६.४.२.१। वसतीवरीग्रहणविध्यादिकं तु तत्रैव तत उत्तरं द्रष्टव्यम्। तत्तन्मन्त्रास्त्वाम्नातास्तत्र प्रथमे काण्डे ( ३.१२,१३. )।

† 'एकधनशब्दार्थं स्वय मेव व्याचष्टे—"[प्रत्यगेकधनानयुग्मान्] उदहरणांस्त्रिप्रभृत्या पञ्चदशभ्यः"-इति ( सू० )। उदकं ह्रियत एभिरित्युदहरणाः कलशाः। त्र्यादि पञ्चदशपर्यन्तम्। अयुग्मसङ्ख्यान् विषमसङ्ख्यान् ( शत० ब्रा० ३.९.३.३४. )। अग्निष्टोमे त्रयः पञ्च वा, अत्यग्निष्टोमेऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोडशिनि सप्त वा नव वा, वाजपेये नव वैकादश वा, अतिरात्रे एकादश वा त्रयोदश वा, अप्तोर्यामे त्रयोदश वा पञ्चदश वेति'-इत्यादिः कात्या० श्रौ० ९.२.२३ ह०। 'एकधनस्थानं चोत्तरस्य हविर्धानस्याधस्तादक्षस्य पश्चात्'-इति च तत्रैव ( ९.४.१. )।

जुहोति शृणोत्वग्निः समिधा हवं म इति। अपरं चतुर्गृहीतं गृहीत्वा सम्प्रेष्यत्यप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नी मुदानयोन्नेतर्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्यास्वेति"-इति (श्री०१२.५.१,२.)। अस्मात् प्रैषादूर्ध्वं होता सूक्त मनुब्रूयात्। तदाहाश्वलायनः—"परिहिते ऽप इष्य होतरित्युक्तो ऽनभिहिङ्कृत्यापोनप्त्रीया अन्वाह"-इति (श्री० ५.१.१.)। तत्र पूर्वोक्तादशमीसहिता ऋचो ऽनूच्य एकधनिनः पुरुषाः प्रेषिताः सन्तः एकधनाख्या अपः घटैर्गृहीत्वा यदा जलसमीपादावर्त्तन्ते, तदानीं तास्वेकधनास्वप्सु आवृत्तासु सतीषु तदावृत्तिं समीक्षमाणो होता पूर्वं परित्यक्ताम् "आववृतती:"—इति ( सं० १०. ३०. १०. ), एता मृचं तस्मिन् काले अनुब्रूयादित्यर्थः॥

ऋगन्तरकालं विधत्ते—"प्रति यदापो अदृश्र मायतीरिति प्रतिदृश्यमानासु"-इति। ता एकधनाख्या आपो ग्रहणस्थानात् प्रतिनिवृत्ताः पुरुषैरानीयमाना यदा होत्रा दृश्यन्ते, तदानीं "प्रति यदापः"—इति ( सं० १०, ३०. १३. ), एता मृच मनुब्रूयात्॥

पुनरप्यृगन्तरकालं विधत्ते—"आ धेनवः पयसा तूर्ण्यर्था इत्युपायतीषु"-इति। होत्रा दृष्टाः ता एकधनाख्या आपो यदा चात्वालसमीपं प्रत्यागच्छन्ति, तदानीम् 'उपायतीषु' समीप मागच्छन्तीषु तासु "आ धेनवः"-इति (सं०५.४३.१. ), एता मृचं ब्रूयात्॥

पुनरप्यृगन्तरकालं विधत्ते—"स मन्या यन्त्युपयन्त्यन्या इति समायतीषु"-इति। पूर्वत्र "उन्नेतर्होतृचमसेन वसतीवरीभिश्च

चात्वालं प्रत्यास्वेति"-इत्यापस्तम्बसूत्रोक्तः(१२.५.२.) प्रैष उदाहृतः। तत उन्नेता होतृसम्बन्धिनं चमसं वसतीवर्याख्याः पूर्वदिनानीता अपश्चात्वालसमीपे समानयति। मैत्रावरुणस्य चमसाध्वर्यवाद्रवेति-प्रेषितत्वान्मैत्रावरुणस्य परिचारकश्चमसाध्वर्युरपि तदीयं चमसं चात्वालसमीपे समानयति। तेन होतृचमसेन वसतीवर्यो गृह्यन्ते, मैत्रावरुणचमसेनैकधनाश्च गृह्यन्ते। ततो वसतीवरीसहिते होतृ-चमसे मैत्रावरुणचमसगतासु एकधनास्वध्वर्युणा समीपं नीतासु संयोजयितुं समागतासु "स मन्या यन्ति"-इत्यादिका मृचम् (सं० २.३५.३.) अनुब्रूयात्। त मेत मनुवचनकाल मापस्तम्बो विशदयति—"होतृचमसेन वसतीवरीभ्यो निषिच्योपरि चात्वाले होतृचमसं मैत्रावरुणचमसं च संस्पर्श्य वसतीवरीर्व्यानयति। स मन्या यन्तीत्यभिज्ञाय होतृचमसान्मैत्रावरुणचमस आनयति; मैत्रावरुणचमसाद्धोतृचमसे; एतद्वा विपरीतम्"-इति (श्रौ० १२. ६. १, २.)।

एतस्या ऋचः प्रशंसार्थ माख्यायिका माह—"आपो वा अस्पर्धन्त,—वयं पूर्वं यज्ञं वक्ष्यामो वय मिति; याश्चेमाः पूर्वे-द्युर्वसतीवर्यो गृह्यन्ते, याश्च प्रातरेकधनास्ता भृगुरपश्यदापो वै स्पर्धन्त इति; ता एतयर्चा समज्ञपयत्स मन्या यन्त्युपयन्त्यन्या इति; ताः समजानत"-इति। पूर्वेद्युः सम्पादिता वसतीवर्याख्या या आपः, याश्च परेद्युः सम्पादिता एकधनाख्याः, ता उभयविधा अपि यज्ञनिर्वहणे पूर्वभावितार्थं मन्योन्यं स्पर्द्धां कृतवत्यः। तदानीं भृगुनामक ऋषिः, आप एव परस्परं स्पर्द्धन्त इत्यपश्यत्। अर्थ-वादत्वादचेतनानां स्पर्द्धायां न चोदनीयम्। यद्वा, तत्तदभि-मानिन्य देवताः स्पर्द्धन्ते इत्यवगन्तव्यम्। ततो भृगुः स्पर्द्धां दृष्ट्वा

"स मन्या यन्ति"-इत्येतयर्चा 'ताः' उभयीरपः 'समज्ञपयत्' 'सञ्ज्ञानं' परस्पर मैकमत्यं प्रापयत्। ततो मन्त्रसामर्थ्यात् 'ताः' उभयविधा आपः 'समजानत' ऐकमत्यं प्राप्ताः। वेदनं प्रशंसति— "सञ्ज्ञानाना ह्यस्यापो यज्ञं वहन्ति य एवं वेद"-इति। या वसतीवर्यो याश्चैकधनाः, ता द्विविधा अपि 'सञ्ज्ञानानाः' परस्पर मैकमत्यं प्राप्ताः 'अस्य' विदुषः यज्ञं निर्वहन्ति ॥

ऋगन्तरकालं विधत्ते— "आपो न देवीरुपयन्ति होत्रिय मिति होतृचमसे समवनीयमानास्वन्वाह वसतीवरीष्वेकधनासु च"-इति। एतासु द्विविधास्वप्सु होतृचमसे सिच्यमानासु तस्मिन् काले "आपो न देवीः"-इति ( सं० १.८३.२. ) एता मृच मनु-ब्रूयात् ॥

अथ होतुः किञ्चिद्यजुरात्मकं मन्त्रं विधत्ते—"अवेरपो ऽध्वर्या३उ इति, होताध्वर्युं पृच्छति"-इति। हे अध्वर्यो! द्विविधा अपः किम् 'अवेः' लब्धवानसि ? अस्मिन्मन्त्रे प्लुतिः * प्रश्नार्था। त मेतं मन्त्रं व्याचष्टे—"आपो वै यज्ञो ऽविदो यज्ञाँ३ इत्येव तदाह"-इति। एतद्विविधा अप्यापः सोमाभिषवसाधनत्वेन यज्ञनिर्वाहकत्वात् यज्ञस्वरूपा एव। तथा सति 'यज्ञम्' अब्रूपम् 'अविदः' किं लब्धवानसि ? इत्यनेन प्रकारेण 'तदाह', 'तत्' मन्त्रवाक्यं ब्रूते। यज्ञा३मिति प्लुतिः † पूर्ववत् ॥

अध्वर्योः प्रत्युत्तरमन्त्रं विधत्ते—"उते मनन्नमुरित्यध्वर्युः प्रत्याह"-इति। 'उत'-शब्दोऽपिशब्दार्थः। 'ईम्'-इति ‡ वाक्य-

---

*, † पा० सू० ८. २. १०७. वा० १।

‡ "अथ ये प्रवृत्तेऽर्थे ऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ( कम्, ईम्, इत्, उ. )"-इति निरु० १. ३. ५।

पूरणार्थनिपातः, 'इमाः'-इत्यस्मिन्नर्थे वर्त्तते। 'इमाः' द्विविधा अप्यापः 'अनन्नमुः' अतिशयेन उपनताः, प्राप्ताः। 'इति' एतम्। अध्वर्योः उत्तरमन्त्रं व्याचष्टे—"उतेमाः पश्येत्येव तदाह"-इति। 'इमाः' द्विविधा अप्यापो हे होतः! पश्य। 'इति' अनेन प्रकारेण तन्मन्त्रवाक्यं ब्रूते। शाखान्तरेऽप्येतत्सर्वं श्रुतम्—'अध्वर्यो वेरपा३ इत्याह उते मनन्नमुरुतेमाः पश्येति वावैतदाह"-इति (तै० सं० ६. ४. ३. ४.)॥

अथ किञ्चिन्निगदरूपेण मन्त्रेण होतुः प्रत्युत्थानं विधत्ते—"तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिं तीव्रान्तं बहुरमध्यं, वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते, यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत्प्र स जन्यानि तारिषो३मिति प्रत्युत्तिष्ठति"-इति। 'तासु'-इत्यादिः 'ॐ'-इत्यन्तो निगदः। तेन मन्त्रेण होता द्विविधाना मप्यपां प्रत्युत्थानं कुर्यात्। हे 'अध्वर्यो!' द्विविधास्वप्सु 'सोमं सोता' सोमस्याभिषवकर्त्ता भव। कीदृशं सोमम् 'मधुमन्त' माधुर्यरसोपेतं, 'वृष्टिवनिं' वृष्टेः सम्भजनकर्त्तारं, वृष्टिप्रद मित्यर्थः। 'तीव्रान्त' तीव्र मवश्यम्भावि फल मन्तो यस्य सोमस्य सोऽयं तीव्रान्तः, अविघ्नेन सोमयागे समाप्ते सति सर्वथा फलत्येवेत्यर्थः; 'बहुरमध्यं' बहुल मङ्गादिक मनुष्ठानं मध्ये प्रारम्भसमाप्त्योरन्तराले यस्यासौ बहुरमध्यः; ऋत्विग्वरण मारभ्योदवसानीयेष्टेः पूर्वम्, दीक्षणीयाद्यङ्गकर्मभिः, उपांश्वन्तर्यामग्रहादिभिश्च प्रधानैः, अनुष्ठानबाहुल्यं प्रसिद्धम्। कीदृशायेन्द्राय? वसुरुद्रादित्यैः, अन्यैरप्यृभुभिदेवः, 'विभुभिः' समर्थैः भृत्यैः, 'वाजेन' अन्नेन, 'बृहस्पतिना' सुरगुरुणा, सर्वदेवहितैर्भोग्यैश्च युक्तत्वेन वस्वादिमते।

अथ मिन्द्रो 'यस्य' सोमस्य वल्लीरूपस्य रसं पीत्वा 'वृत्राणि' यजमानस्य शत्रून् पापानि च 'जङ्घनत्' विनाशितवान् । तादृशं सोम मिति पूर्वत्रान्वयः । अथवा, 'अस्य' यजमानस्य सम्बन्धिनं सोमं पीत्वेति व्याख्येयम् । 'सः' यजमानः 'जन्यानि' जनैः सम्भावितानि 'प्रतारिषत्' प्रकर्षेण तीर्णवान् भवति । 'ॐ'-इत्यङ्गीकारार्थः,— अयं युक्तार्थ एव भवेत्यङ्गीकारार्थः । एतन्मन्त्रसाध्यं प्रतुत्थान मुपपादयति—"प्रतुत्थेया वा आपः, प्रति वै श्रेयांस मायन्त मुत्तिष्ठन्ति ; तस्मात्प्रतुत्थेयाः"-इति । याश्च द्विविधा आपः, ताः 'प्रतुत्थेयाः' एव, दर्शनानन्तर मेव प्रतुत्थानं कर्त्तव्यम् । लोकेऽपि श्रेयांस मतिप्रशस्त माचार्यपित्रादिकम् 'आयन्तं' स्वसम्मुखत्वेन समागच्छन्तं प्रति शिष्यपुत्रादयः उत्तिष्ठन्त्येव * । तस्मादतिप्रशस्ता आपः प्रतुत्थानयोग्याः ॥

न केवलं प्रतुत्थानं किन्तु अनुवर्त्तन मपि कर्तव्य मिति विधत्ते—"अनुपर्यावृत्याः"-इति । 'अनु' पृष्ठतः 'पर्यावृत्याः' परितः सञ्चरणयोग्या द्विविधा आपः । तदेतदुपपादयति—"अनु वै श्रेयांसं पर्यावर्त्तन्ते ; तस्मादनुपर्यावृत्या अनुब्रुवतैवानुप्रपत्तव्यम्" -इति । 'श्रेयांसम्' आचार्यादिकम् 'मनु'गम्य शिष्यादयः परितः सञ्चरन्ति । तस्मादत्रापि शिष्यस्थानीयेन होत्रा पूर्वोक्त मपोनप्त्रीयं निगदम् 'अनुब्रुवतैव' तासा मपां पृष्ठतोऽनुगन्तव्यम् । ननु यागकर्त्तृत्वाद्यजमानस्यैवानुव्रजनं युक्तम्, न तु होतुरित्याशङ्क्याह—"ईश्वरो ह यद्यप्यन्यो यजेताथ होतारं यशो ऽर्त्तोस्तस्मादनुब्रुवतैवानुप्रपत्तव्यम्"--इति । यद्यपि होता यागकर्त्ता न भवति, अथाप्यनुव्रजनं होतारं 'यशः' कीर्तिः 'अर्त्तोरीश्वरः'

* म० सं० २अ० ११९, १२० श्लो० ।

ह' प्राप्तुं समर्थैव। तस्मात्कीर्तिहेतुत्वादनुब्रुवतैव होत्रा तासा मपा मनुगमनं कर्त्तव्यम् ॥

ननु प्र देवत्रेत्यादीना मृचां (३६३ पृ० ), तास्वध्वर्यवित्यादि-निगदस्य (३७४ पृ० ) च, पूर्वं मेवानूक्तत्वात् इतः पर मनुगमन-काले किं मनुवक्तव्य मित्याशङ्क्य अनुवक्तव्या मवशिष्टा मृचं विधत्ते— "अम्बयो यन्त्यध्वभिरिति ( सं० १. २३. १६. ), एता-मनुब्रुवन्ननुप्रपद्येत"--इति। अस्या ऋचो द्वितीयतृतीयपादावनु-वदति—"जामयो अध्वरीयतां पृञ्चतीर्मधुना पय इति"--इति। तस्याय मर्थः—'अम्ब'-इत्यव्ययं मातृवाचकः; तद्रूपत्वं यान्ती-त्यम्बयाः। छान्दसो ह्रस्वः। मातृसमाना एता द्विविधा आपः। 'अध्वभिः' नानाविधैर्मार्गैः 'यन्ति' गच्छन्ति। कीदृश्यः? 'अध्वरी-यताम्' अध्वरं यज्ञ मात्मन इच्छतां यजमानानां 'जामयः' सना-भयो भ्रातृस्थानीया इत्यर्थः। तथा स्वकीयं 'पयः' उदकं 'मधुना' मधुरेण सोमरसेन 'पृञ्चतीः' संयोजयन्त्यः। अस्या मृचि मधु-शब्दतात्पर्यं दर्शयति--"यो ऽमधव्यो यशोर्त्तो बुभूषेद्"–इति। 'यः' पुमान्, पूर्वम् 'अमधव्यः' मधुररसं सोमं नार्हति, स यदि 'यशोर्त्तः' सोमयागनिमित्तां कीर्त्तिं प्राप्तुं समर्थो भवितु मिच्छेत्, सः पुमान् पूर्वोक्ता मनुब्रुवन् अनुप्रपद्येतेत्यन्वयः ॥

ऋगन्तरं फलविशेषाय विधत्ते—"अमूर्या उप सूर्ये याभिर्वा सूर्यः सहेति तेजस्कामो ब्रह्मवर्चसकामः"–इति। शरीरकान्तिं श्रुताध्ययनसम्पत्तिं च कामयमानः पुमान् "अमूर्याः"–इति ( सं० १. २३. १७. ), एता मृच मनुब्रुयात्। फलान्तरार्थ मृगन्तरं विधत्ते—"अपो देवीरुपह्वये यत्र गावः पिबन्ति न इति पशुकामः"--इति। पशुप्राप्त्यर्थम् "अपो देवीः"–इति ( सं०

१.२३.१८. ), एता ऋच मनुब्रूयात् । 'अम्बयो यन्ति'-'अमूर्याः'-'अपो देवीः'-इत्येतासां तिसृणां विधि मुपसंहरति— "ता एताः सर्वा एवानुब्रुवन्ननुप्रपद्येतैतेषां कामाना मवरुध्यै"-इति। अथवा, नित्यानुष्ठानार्थोऽयं पुनर्विधिः ; एतेषा मित्यादिस्तत्प्रशंसार्थः। वेदनं प्रशंसति—"एतान् कामानवरुन्धे य एवं वेद"-इति ॥

ऋगन्तरस्य कालं विधत्ते—"एमा अग्मन्नेवतीर्जीवधन्या इति साद्यमानास्वन्वाह वसतीवरीष्वेकधनासु च"-इति। उक्ता द्विविधा आपो यदा वेद्यां साद्यन्ते, तदानीम् "एमा अग्मन्"-इति ( सं० १०. ३०. १४. ), एता मनुब्रूयात्।

ऋगन्तरेण समाप्तिं विधत्ते—"आग्मन्नाप उशतीर्बर्हिरेद मिति सन्नासु स एतया परिदधाति"--इति। द्विविधास्वप्सु वेद्यां स्थापितासु "आग्मन्नापः"-इति ( १०.३०.१५. ), एता मृच मनुब्रूयात्, 'सः' अनुवक्ता होता 'एतया' एवर्चा अनुवचनं समापयेत् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां तृतीयाध्याये
द्वितीयः खण्डः ॥ २ ( २० ) ॥

---

॥ अथ तृतीयः खण्डः ॥

शिरो वा एतद्यज्ञस्य यत्प्रातरनुवाकः प्राणापाना उपांश्वन्तर्यामौ वज्र एव वाङ्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत यदहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत वाचा वज्रेण यजमानस्य प्राणान्वीयाद्य एनं तत्र ब्रूयाद्वाचा वज्रेण यजमानस्य प्राणान् व्यगात्प्राण एनं हास्यतीति शश्वत्तथा स्यात्तस्मान्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत प्राणं यच्छ स्वाहा त्वा सुहव सूर्यायेत्युपांशु मनुमन्त्रयेत त मभिप्राणेत्प्राण प्राणं मे यच्छेत्यपानं यच्छ स्वाहा त्वा सुहव सूर्यायेत्यन्तर्याम मनुमन्त्रयेत त मभ्यपानेदपानापानं मे यच्छेति व्यानाय त्वेत्युपांशुसवनं ग्रावाण मभिमृश्य वाचं विसृजत आत्मा वा उपांशुसवन आत्मन्येव तद्धोता प्राणान् प्रतिधाय वाचं विसृजते सर्वायुः सर्वायुत्वाय सर्व मायुरेति य एवं वेद ॥ ३ ( २१ ) ॥

पूर्वस्मिन् खण्डे द्विविधास्वपसु वेद्यां सादितास्वपोनप्त्रीयानुवचनस्य समापन मुक्तम्। तत्र सादनप्रकार आपस्तम्बेन दर्शितः —"अपरया द्वारा हविर्द्धान मपः प्रपादयति; पूर्वया गतश्रियः।

पूर्वया यजमानः प्रपद्यते। दक्षिणस्य हविर्द्धानस्य प्रधुरे प्रचरणीं सादयति। यं कामयेत पण्डकः स्यादिति, तं प्रचरण्योपस्पृशेत्। एतस्यैव हविर्द्धानस्याधस्तात् पुरोऽक्षं मैत्रावरुणचमसम्, उत्तरस्यां वर्त्तन्यां पुरस्तात्र होतृचमसम्, उत्तरस्य हविर्द्धानस्याधस्तात् पुरोऽक्षं वसतीवरीः, पश्चादक्ष मैकधनाः। एतद्वा विपरीतम्। अदो * यजमानो ऽनुप्रपद्यते"-इति (श्रौ० १२. ६. ८—१३. ४.)। एवं सादितास्वप्सु, अपोनप्त्रीया ऋचः समाप्य होता अवतिष्ठते। ततोऽध्वर्युः दधिग्रहेण †, उपांशुग्रहेण, अदाभ्यग्रहेण, उपांशुग्रहेण, अन्तर्यामग्रहेण क्रमात्प्रचरति ‡। तावदयं होता वाचं नियम्यैवास्ते॥

तदिदं विधत्ते—"शिरो वा एतद्यज्ञस्य यत्प्रातरनुवाकः, प्राणापाना उपांश्वन्तर्यामौ, वज्र एव वाङ्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत"—इति। योऽयं प्रातरनुवाकः पूर्वं सुक्तः, सोऽयं यज्ञस्य शिरःस्थानीयः। उपांश्वन्तर्यामग्रहौ प्राणापानस्थानीयौ; "एष ते योनिः प्राणाय त्वा", "एष ते योनिरपानाय त्वा"—इति तदीयमन्त्रयोः श्रवणात् (तै० सं० १.४.२,३.)। होतुर्या वाक्, सा वज्रस्थानीया। अतएवान्यत्र श्रूयते—"यद्वै होताध्वर्यु मित्याह्वयते, वज्र मेव मभि प्रवर्त्तयति"-इति। एवं सत्यध्वर्युणोपांश्वन्तर्यामग्रहयोर्हुतयोः सतोः पश्चाद्धोता वाचं विसृजेत; तावत्पर्यन्तं वाचं नियच्छेत्॥

विपक्षबाधपूर्वकं स्वपक्ष मुपसंहरति—"यदहुतयोरुपांश्वन्तर्या-

* 'अपी' ए० सी० सु० आप० श्रौ०।

† 'दधिग्रहो नित्यः काम्यश्च। काम्याावितरौ (आज्यग्रहसोमग्रहौ)' आप० १२.७.८।

‡ ग्रहकाण्डं सब्राह्मणं (तै० सं० १.४.१–४२; ६.४,५.) चैतद् द्रष्ट मेव द्रष्टव्यम्।

सयोर्होता वाचं विसृजेत, वाचा वज्रेण यजमानस्य प्राणान्वीयाद्; य एनं तत्र ब्रूयाद्वाचा वज्रेण यजमानस्य प्राणान् व्यगात्प्राण एनं हास्यतीति; शश्वत्तथा स्यात्तस्मान्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत"-इति। उपांश्वन्तर्यामहोमात्पूर्वं वाचं विसृजन् होता वाग्वज्रेण यजमानस्य प्राणान् 'वीयात्' विगतान् कुर्यात्। कथं प्राणविगमः? इति, तदुच्यते— 'तत्र' तस्मिन् होतुर्वाग्विसर्गे सति, यः कश्चिदागत्यायं होता वाग्वज्रेण यजमानस्य प्राणान् 'व्यगात्' विगतानकरोत्, तस्मात्प्राणः 'एनं' यजमानं 'हास्यति' परित्यजति 'इति' एवं होतारं प्रति ब्रूयात्; तदानीं तेन पुरुषेण होतरि शप्ते सति, तदीयशापेन 'शश्वत्तथा स्यात्' अवश्यं यजमानप्राणविगमो होतुस्तद्वधप्रत्यवायश्च भवेत्। तस्मान्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत॥

उपांश्वन्तर्यामहोमादूर्ध्वं वाग्विसर्गप्रकारं विधत्ते—"प्राणं यच्छ स्वाहा त्वा सुहव सूर्यायेत्युपांशु मनुमन्त्रयेत, त मभिप्राण्य प्राण प्राणं मे यच्छेत्यपानं यच्छ स्वाहा त्वा सुहव सूर्यायेत्यन्तर्याम मनुमन्त्रयेत, त मभ्यपानेदपानापानं मे यच्छेति; व्यानाय त्वेत्युपांशुसवनं ग्रावाण मभिमृश्य वाचं विसृजते"-इति। शोभनो हवो होमो यस्येत्युपांशुग्रहस्य सोऽयं 'सुहवः'। 'हे सुहव!' 'सूर्याय' त्वदभिमानिसूर्यदेवताप्रीत्यर्थं 'त्वा' उपांशुग्रहरूपं 'स्वाहा' सुष्ठु हुतं करोमि। अतो यजमानसम्बन्धिनं प्राणं 'यच्छ' देहि। 'इति' अनेन मन्त्रेण उपांशुग्रहस्यानुमन्त्रणं कुर्यादिति। अन्वीक्ष्य मन्त्रण मनुमन्त्रणम्। ततः 'त मभिप्राण्येत्'। 'तम्' उपांशुग्रह मभिलक्ष्योच्छ्वासं कुर्यात्। तत्र प्राणेत्यादिको मन्त्रः। हे प्राणरूप, उपांशुग्रह! 'मे' मह्यं प्राणं 'यच्छ' देहि। हे 'सुहव!'

अन्तर्यामग्रहे त्वेतावान् विशेषः, अन्यत् पूर्ववत्— 'अपानित्' निश्वासं कुर्यात् । उपांशुग्रहार्थं सोमाभिषवहेतुर्यः पाषाणः, तं व्यानायत्वेति मन्त्रेणाभिमृशेत् । हे 'पाषाण' उपांशुसवनाख्य ! त्वां प्राणापानयोर्मध्यवर्त्ति-व्यानवायुसिद्ध्यर्थम्, अभिमृशामीति शेषः । अभिमर्शनादूर्द्ध्वं मौनं परित्यज्य वाग्व्यवहारं कुर्यात् ॥

उपांशुसवन मभिमर्शन मुपपादयति—"आत्मा वा उपांशुसवन आत्मन्येव तद्धोता प्राणान् प्रतिधाय वाचं विसृजते सर्वायुः सर्वायुत्वाय"–इति । योऽयम् 'उपांशुसवनः' ग्रावा, सोऽयम् 'आत्मा वै' शरीर मेतत् । तदीयाभिमर्शनेनायं होता शरीरे एव प्राणान् अवस्थाप्य स्वयं शतसंवत्सरपरिमितेन सर्वेणायुषा युक्तो वाचं विसृजते । तच्च यजमानस्य सम्पूर्णायुःप्राप्तये भवति । वेदनं प्रशंसति—"सर्व मायुरेति य एवं वेद"–इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां तृतीयाध्याये
तृतीयः खण्डः ॥ ३ (२१) ॥

---

॥ अथ चतुर्थः खण्डः ॥

तदाहुः सर्पे३त् न सर्पे३त् इति सर्पेदिति हैक आहुरुभयेषां वा एष देवमनुष्याणां भक्षो यद्बहि-

ष्पवमानस्तस्मादेन मभिसङ्गच्छन्त इति वदन्तस्तत्तन्ना-दृत्यं यत्सर्पेद्दच मेव तत्साम्नो ऽनुवर्त्मानं कुर्याद्य एनं तत्र ब्रूयादनुवर्त्मान्वा अयं होता सामगस्या-भूदुद्गातरि यशो ऽधादच्योष्टायतनाच्च्योष्यत आय-तनादिति शश्वत्तथा स्यात् तस्मात्तत्रैवासीनो ऽनुमन्त्रयेत यो देवाना मिह सोमपीथो यज्ञे बर्हिषि वेद्यां तस्यापि भक्षयामसीत्येव मु हास्यात्मा सोम-पीथादनन्तरितो भवत्यथो ब्रूयान्मुख मसि मुखं भूयास मिति मुखं वा एतद्यज्ञस्य यद्बहिष्पवमानो मुखं स्वेषु भवति श्रेष्ठः स्वानां भवति य एवं वेदा-सुरी वै दीर्घजिह्वी देवानां प्रातःसवन मवालेट् तद् व्यमाद्यत्ते देवाः प्राजिज्ञासन्त ते मित्रावरुणाव ब्रुवन् युव मिदं निष्कुरुत मिति तौ तथेत्यब्रूतां तौ वै वो वरं वृणावहा इति वृणाथा मिति तावेत मेव वर मवृणातां प्रातःसवने पयस्यां सैनयोरेषा च्युता वरवृता ह्येनयोस्तद्यदस्यै विमत्त मिव तदस्यै समृद्धं विमत्त मिव हि तौ तया निर-कुरुताम् ॥ ४ ( २२ ) ॥

अन्तर्यामग्रहहोमादूर्ध्वं महाभिषवं कृत्वैन्द्रवायव मारभ्य पव-मत्यन्तग्रहार्थं तत्तत्पात्रेषु सोमं गृहीत्वाऽऽसादितेषु वैप्रुषान् होमान्

हुत्वा बहिष्पवमानार्थं* प्रसर्पयेयुः। प्रसर्पणप्रकार मापस्तम्ब आह—"सप्तहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वोदञ्चः प्रह्वा बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति। अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्त्तारमुद्गातोद्गातारं ब्रह्मा, ब्रह्माणं यजमानः"-इति ( श्रौ० १२.१६.१७,१७.१. )। आश्वलायनोऽप्याह— "अध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात्† स्तोत्रायोपविशन्त्युद्गातारमभिमुखास्तान् होतानुमन्त्रयतेऽत्रैवासीनो यो देवाना मिह"-इति ( श्रौ० ८. १३. २३. )। ततो होतुः सर्पणं निवारयितुं पूर्वपक्ष मुपन्यस्यति— "तदाहुः, —सर्पे३त्, न सर्पे३त्? इति; सर्पेदिति हैक आहुरुभयेषां वा एष देवमनुष्याणां भक्षो यद्बहिष्पवमानस्तस्मादेन मभिसङ्गच्छन्त इति वदन्तः"-इति। 'तत्' तत्र, ऐन्द्रवायवादिग्रहणादूर्द्ध्वकाले अध्वर्युप्रमुखाणां सर्पणे केचित् 'आहुः' विचारयन्ति। किमयं होता तैः सह सर्पेत् न वेति। विचारार्थे प्लुतिः‡। अयं होतापि सर्पेदिति केचित्पूर्वपक्षिण आहुः। तत्रोपपत्तिं च कथयन्ति— उद्गातृभिर्गेयम् "उपास्मै गायता नरः"-इत्यादिकं

---

* "सामगाना मुत्तरा-ग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि। तत्र 'उपास्मै गायता नरः' -इत्याद्यं सूक्तम्, 'दविद्युतत्या रुचा'-इति द्वितीयम्, 'पवमानस्य ते कवे'-इति तृतीयम्। ज्योतिष्टोमस्य प्रातःसवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम्। तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमान मित्युच्यते; तत्रावस्थिताना मृचां पवमानार्थत्वाद्बहिः सम्बन्धाच्च। न खल्विदं स्तोत्रम् इतरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्भशाखायाः सन्निधौ प्रयुज्यते, किन्तु सदसो बहिःप्रसर्पद्भिः प्रयुज्यते"-इति सामसंहिताभाष्योपक्रमे सायणः।

† 'तेनान्तरेण प्रतिपद्यन्ते चात्वालं चोत्करं चैतद्वै देवानां तीर्थम्'-षड्वि०ब्रा० ३.१।

‡ पा० ८. २. १०७. वा० १।

स्तोत्रं ( सा० उ० आ० १.१.१-९. ) बहिष्पवमानशब्देनोच्यते। यो बहिष्पवमानः, एष एव देवानां मनुष्याणां च उभयेषां 'भक्षः'; तेन हि सर्वे तृप्यन्ति। अत एव सर्वत्र स्तोमभागानां स्तोत्रेण प्रीतिः श्रुता ( ३५५ पृ० )। 'तस्मात्' कारणात् 'एनं' बहिष्पवमानं देवमनुष्याः सर्वे अभिसङ्गच्छन्ते 'इति' एता मुपपत्तिं 'वदन्तः' पूर्वपक्षिणो यदाहुः, तन्निराकरोति—"तत्तन्नादृत्यम्"-इति। तस्मिन् सर्पणे 'तत्' पूर्वपक्षिमतं नादरणीयम्।

विपक्षे बाधं दर्शयति—"यत्सर्पेदृच मेव तत्साम्नो ऽनुवर्त्मानं कुर्याद्य एनं तत्र ब्रूयादनुवर्त्मान्वा अयं होता सामगस्याभूदुद्गातरि यशो ऽधादच्योष्टायतनाच्चरोष्यत आयतनादिति शश्वत्तथा स्यात्"-इति। यद्ययं होता तैः सह सर्पेत्, तदानीं* स्वकीया मृच मेव साम्नः 'अनुवर्त्मानं' पृष्ठगामिनीं कुर्यात्। तच्चायुक्तम्; ऋच आधारत्वात्, साम्न आधेयत्वात्। अत एव छन्दोगा आमनन्ति —"तदेतस्या मृच्यध्यूळ्हं साम; तस्मादृच्यध्यूळ्हं साम गीयते"-इति ( छा०उप०१.६.१. )। ततः पुरोगामिन्या ऋचः पश्चाद्गामित्व मयुक्तम्। 'तत्र' होतुः सर्पणे 'यः' कश्चिदागत्य 'एनं' होतारं ब्रूयात्। अयं होता 'सामगस्य' उद्गातुः 'अनुवर्त्मान्वै' पृष्ठगाम्येवाभूत्। अतो होता, स्वकीयां 'यशः' कीर्त्ति मुद्गातरि 'अधात्' स्थापितवान्; स्वयम्-'आयतनात्' स्वकीयपदात् 'अच्योष्ट' च्युतवान्, इतः पर मपि 'च्योष्यते' स्वकीयस्थानात् प्रच्युतो भविष्यति। 'इति' एवं पुरुषान्तरेण शप्तस्य होतुरवश्यं तथा भवेत्॥

सर्पणं निवार्यानुमन्त्रणं विधत्ते—"तस्मात्तत्रैवासीनो ऽनुमन्त्रयेत"-इति। यस्मात्प्रसर्पणे दोषाः सन्ति, तस्मादत्र पूर्वम्

* 'तदीया' ख, ग।

अवस्थितः, तत्रैवासीन इतरेषां सर्पण मन्वीच्यानुमन्त्रयेत ॥ तस्मिन्ननुमन्त्रणे मन्त्रं दर्शयति—"यो देवाना मिह सोमपीथो यज्ञे बर्हिषि वेद्यां तस्यापि भक्षयामसीति"-इति। 'इह' देशे क्रियमाणो 'यः' सोमयागः, तस्मिन् या वेदिः, यच्च तत्रत्यं बर्हिः, तत्र सर्वदेवानां सम्बन्धी 'सोमपीथः' सोमयागरूपो बहिष्पवमानाख्यो यो भक्षोऽस्ति, तस्याप्यंश' वयं भक्षयामः। 'इति' एषोऽनुमन्त्रणमन्त्रः। तं प्रशंसति—"एव मु हास्यात्मा सोमपीथादनन्तरितो भवति"-इति। एव मेवानुमन्त्रणे सति 'अस्य' होतुः 'आत्मा' जीवः सोमपानात् कदाचिदप्यन्तरितो न भवति ॥

मन्त्रान्तरं च विधत्ते—"अथो ब्रूयान्मुख मसि मुख' भूयास मिति"-इति। पूर्वोक्तान्मन्त्रादनन्तरं मुखमित्यादिकमपि मन्त्रं ब्रूयात्। हे बहिष्पवमान! यज्ञस्य त्वं 'मुख मसि यज्ञमध्ये मुख्योऽसि, अतस्त्वत्प्रसादादह मपि 'मुखं' मुख्यो भूयासम्। एतन्मन्त्रं प्रशंसति— "मुख' वा एतद्यज्ञस्य यद्बहिष्पवमानः"-इति। स्तोत्रेषु सर्वेषु आद्यत्वाद्बहिष्पवमानस्य मुखत्वम्*। वेदनं प्रशंसति —"मुख' स्वेषु भवति श्रेष्ठः स्वानां भवति य एवं वेद"-इति। मुखत्वं लोकव्यवहारप्रवर्त्तकत्वम्। श्रेष्ठत्वं विद्यावित्तादिसम्पत्तिः॥

अथ सवनीयपुरोडाशेषु येयं मैत्रावरुणी पयस्यास्ति, तत्सद्भाव

---

* उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्यस्त्रिभ्य ऊर्ध्वं यानि चत्वारि सूक्तान्याम्नातानि, तान्येव प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वारि आज्यस्तोत्राण्युच्यन्ते। तत ऊर्ध्वं यानि त्रीणि सूक्तानि, तान्येव माध्यन्दिनसवने गायत्रामहीयवरौरवयौधाजयौशनसामभिर्गीयमानानि पञ्च माध्यन्दिनपवमानस्तोत्राणि। तत आम्नातेषु चतुर्षु सूक्तेषु रथन्तर-वामदेव्य-नौधस-कालेय-सामभिः सम्पाद्यानि चत्वारि पृष्ठस्तोत्राणि माध्यन्दिनसवनीयान्येव। ततस्तृतीयसवने गेयानि गायत्र-संहित-सफ-पौष्कल-श्यावाश्वान्धीगव-सामभिर्निष्पाद्यानि आर्भवपवमानस्तोत्राणि षडिति।

आपस्तम्बेन दर्शितः— "प्राग्वंशे प्रतिप्रस्थाता सवनीयान् निर्वपति। सर्वे यवा भवन्ति लाजार्थान् परिहाप्य। इन्द्राय हरिवते धाना इन्द्राय पूषण्वते करम्भं सरस्वत्यै भारत्यै परिवाप मिन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्या मिति"–इति (श्रौ० १२.४.४-६.)। ता मेतां पयस्यां प्रशंसितु माख्यायिका माह— "आसुरी वै दीर्घजिह्वी देवानां प्रातःसवन मवालेट्, तद्, व्यमाद्यत्, ते देवाः प्राजिज्ञासन्त; ते मित्रावरुणावब्रुवन्,—युव मिदं निष्कुरुत मिति; तौ तथेत्यब्रूतां; तौ वै वो वरं वृणावहा इति,वृणाथा मिति; तावेत मेव वर मवृणातां,—प्रातःसवने पयस्यां; सैनयोरेषा च्युता; वरवृता ह्येनयोस्तद्यदस्यै विमत्त मिव तदस्यै समृद्धं; विमत्त मिव हि तौ तया निरकुरुताम्"–इति। दीर्घा जिह्वा यस्याः सा 'दीर्घजिह्वी', असुरजातावुत्पन्नत्वात् 'आसुरी'। तथाच तलवकारा आमनन्ति— "दीर्घजिह्वी वा आसुर्यास"–इति*। सा च देवानां सम्बन्धि प्रातःसवनम् 'अवालेट्' स्वकीयया जिह्वया तस्यावलेहं कृतवती। तत् प्रातःसवनं विषजिह्वालेहनेन 'व्यमाद्यत्' विविधं मत्त मभूत्; सर्वस्यापि सवनप्रयोगस्य विपर्यासो जातः। ते देवास्तत्परिहारोपायं 'प्राजिज्ञासन्त' प्रकर्षेण विचारितवन्तः। विचार्य च तत्परिहारसमर्थौ मित्रावरुणौ अब्रुवन्,—हे मित्रावरुणौ! 'युवं' युवाम् उभौ 'इदं' प्रातःसवनं 'निष्कुरुतम्' निर्गतदोषं† कुरुतम्। तत् तावदङ्गीकृत्य देवेभ्यो वरं याचित्वा प्रातःसवनगतां पयस्या

---

* 'दीर्घजिह्वी वा इदं‿ रची यज्ञहा'—इत्यादि ता० ब्रा० १३.६। 'श्वानं दीर्घजिह्वम्'—इति ऋ० सं० ६.१०१.१। 'दीर्घजिह्वी च च्छन्दसि'—इति (पा० ४. १. ५९.) निपातनादीकारः। महाभारते त्वियं मादिपर्वणि दानवीति, वनपर्वणि तु राक्षसीति।

† 'निर्गतविषाददोषं' घ।

मेव स्वकीयवरत्वेन वृतवन्तौ । पयसि भवा आमिक्षा 'पयस्या' । 'सा' एषा वरवृतत्वादेनयोः कदाचिदप्यविच्युता । तत्र प्रातःसवने यदङ्गम् 'अस्यै' अनया दीर्घजिह्व्या विमत्त मिव क्षत मासीत्, 'तत्' सर्वम् 'अस्यै' अस्मै, अनया पयस्यया सम्यक्‌छन्न मासीत् । यस्माद्द विमत्त मिव स्थितं प्रातःसवनं 'तौ' मित्रावरुणौ 'तया' पयस्यया 'निरकुरुतां' निवारितवन्तौ, तस्मात् सम्यग्युक्ता ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ( २२ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

देवानां वै सवनानि नाध्रियन्त त एतान् पुरोळाशानपश्यंस्ताननुसवनं निरवपन्त्सवनानां धृत्यै ततो वै तानि तेषा मध्रियन्त तद्यदनुसवनं पुरोळाशा निरुप्यन्ते सवनाना मेव धृत्यै तथा हि तानि तेषा मध्रियन्त पुरो वा एतान् देवा अक्रत यत्पुरोळाशांस्तत्पुरोळाशानां पुरोळाशत्वं तदाहुरनुसवनं पुरोळाशान् निर्वपेदष्टाकपालं प्रातःसवन एकादशकपालं माध्यन्दिने सवने द्वादशकपालं तृतीयसवने तथा हि सवनानां रूपं तथा

छन्दसा मिति तत्तन्नाद्दत्य मैन्द्रा वा एते सर्वे निरुप्यन्ते यदनुसवनं पुरोळाशास्तस्मात्तानेकादश-कपालानेव निर्वपेत् तदाहुर्यतो घृतेनानक्तं स्यात्ततः पुरोळाशस्य प्राश्नीयात्सोमपीथस्य गुप्त्यै घृतेन हि वज्रेणेन्द्रो वृत्र महन्निति तत्तन्नाद्दत्यं हविर्वा एतद्यदुत्पूतं सोमपीथो वा एष यदुत्पूतं तस्मात्तस्य यत एव कुतश्च प्राश्नीयात्सर्वतो वा एता स्वधा यजमान मुपचरन्ति यदेतानि हवींष्याज्यं धानाः करम्भः परिवापः पुरोळाशः पयस्येति सर्वत एवैनं स्वधा उपचरन्ति य एवं वेद ॥ ५ (२३) ॥

अथ सवनीयपुरोडाशान् * विधातु मादौ कथा माह—"देवानां वै सवनानि नाध्रियन्त ; त एतान् पुरोळाशानपश्यंस्ता-ननुसवनं निरवपन्त्सवनानां धृत्यै, ततो वै तानि तेषा मध्रियन्त" –इति। यानि प्रातःसवन-माध्यन्दिनसवन-तृतीयसवनानि सन्ति, तानि त्रीणि देवाना मर्थे 'नाध्रियन्त' नैव धृतानि, देवैरवरोद्धु मशक्यानि आसन्। 'ते' देवाः तद्धारणहेतून् पञ्च पुरोडाशान् दृष्ट्वा तान् प्रतिसवनं निरवपन्। तैः पुरोडाशैः तुष्टानि सवनानि देवाना मर्थे धृतान्यासन्॥ आख्यायिकया प्रशस्य पुरोडाशान् विधत्ते— "तद्यदनुसवनं पुरोळाशा निरुप्यन्ते, सवनाना मेव

---

* 'सवनेषु भवः सवनीयः। वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गै-स्तृतीयसवने तृतीयं वृहस्य:'—इति आश्व० श्रौ० ५. ३. १. तृ०।

ष्टत्यै ; तथा हि तानि तेषा मध्रियन्त"-इति । 'तत्' तस्माद्देवैर्निरूढत्वाद्यदि यजमानैः प्रतिसवनं पुरोडाशा निरुप्येरन् तदा स निर्वापः सवनानां धारणाय भवति । 'तथा' तेनैव हि प्रकारेण 'तानि' सवनानि 'तेषां' देवाना मर्थे ध्रियन्ते ; अतो मनुष्याणा मपि निर्वाप एव धारणोपायः ॥

इदानीं पुरोडाशशब्दं निर्वक्ति—"पुरो वा एतान् देवा अक्रत, यत्पुरोळाशास्तत् पुरोळाशानां पुरोळाशत्वम्"-इति । पुरोडाशाः सन्ति ; एतान् देवाः 'पुरो वै' सोमाहुतिभ्यः पुरस्ताद् देवाः 'अक्रत' कृतवन्तः । तस्मात् पुरोडाशेति नाम सम्पन्नम् । 'दा दाने'—इति धातुः*, पुरतो दीयमानं हविरित्यर्थः। यद्यप्यत्र धानादिषु हविःषु चतुर्थ एव † पुरोडाशः, तथापि छत्रिन्यायेन धानादीनां सर्वेषां पुरोडाशत्वोपचारः । यद्वा, पुरःशब्द एवं व्याख्येयः,—सवनानां धारणार्थं देवा एतानि हवींषि दुर्गस्थानि पुराण्यकुर्वतेति । यदि पुरस्ताद् यदि वा पुराणि सर्वथापि पुरोडाशशब्दो निष्पद्यते ॥

अथ पुरोडाशस्वरूपविशेषं निर्द्धारयितुं पूर्वपक्ष माह—"तदाहुरनुसवनं पुरोळाशान् निर्वपेदष्टाकपालं प्रातःसवन एकादशकपालं माध्यन्दिने सवने द्वादशकपालं तृतीयसवने ; तथा हि सवनानां रूपं तथा छन्दसा मिति"-इति । 'तत्' तेषु पुरोडाशेषु पूर्वपक्षिण आहुः ;— प्रतिसवनं निर्वपणीयेषु पुरोडाशेषु क्रमेण

---

* 'पुरो दाश्यते पुरोडाः'—इति सि० कौ० वै० ३ अ० । पा० ३.२, ७१ ।

† "एतानि हवींषि—आज्यं, धानाः, करम्भः, परिवापः, पुरोळाशः, पयस्येति"—इति ( ३८८ पृ० ८ पं० ) श्रुतेर्यद्यपि पुरोडाशस्य पञ्चमत्वं गम्यते, पर मुत्तरखण्डे "धानाः करम्भः परिवापः पुरोळाशः पयस्यातेऽय वै यज्ञो हविष्पंक्तिः"—इत्यादिश्रुतेश्चतुर्थत्व मेव ।

कपालसङ्ख्याष्टत्वादिरूपा द्रष्टव्या। सवनानां रूपस्य तथाविधत्वात्। तच्च छन्दोद्वारेण द्रष्टव्यम्। गायत्री, त्रिष्टुप्, जगती चेति छन्दांसि सवननिष्पादकानि; "गायत्रं प्रातःसवनं०—०त्रैष्टुभं माध्यन्दिनं सवनं०—०जागतं तृतीयसवनम्"-इति श्रुत्यन्तरात् *। तथा सति तत्तच्छन्दोगताक्षरसङ्ख्यानुसारेण कपालसङ्ख्या युक्तेति † पूर्वपक्षः। तं निराकृत्य सिद्धान्तं दर्शयति—"तत्तन्नादृत्य मैन्द्रा वा एते सर्वे निरुप्यन्ते, यदनुसवनं पुरोळाशास्तस्मात्तानेकादशकपालानेव निर्वपेत्"-इति। पञ्चसु हविःषु धानादिषु मध्ये चतुर्थस्य पुरोडाशस्येन्द्रदेवताकत्वादैन्द्रयाज्यत्वैकादशकपाल एव प्रायेण विधीयते इति तत्प्रयत्नावगमात् ‡ अत्रापि त्रिष्वपि सवनेष्वैन्द्रान् पुरोडाशानेकादशकपालानेव निर्वपेत्। शाखान्तरेऽपि विधिविलोमदोषेण § पूर्वपक्षं निराकृत्य सिद्धान्तोऽभिहितः—"एकादशकपालानेव प्रातःसवने कुर्यात्,एकादशकपालान् माध्यन्दिने सवने"-इत्यादि (तै०ब्रा०१.५.११.४.)।

* आग्नावैष्णव मष्टाकपालं निर्वपेत् प्रातःसवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवन मेव तेनाप्नोति। आग्नावैष्णव मेकादशकपालं निर्वपेन्माध्यन्दिनस्य सवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिन मेव सवनं तेनाप्नोत्याग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद् द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवन मेव तेनाप्नोति"-इति तै० सं० २.२.९। भाष्य मेतस्य मन्त्रकाण्डे ( तै० सं० १.८.२२. ) द्रष्टव्यम्।

† अतएव श्रुतं तैत्तिरीये— 'तं वसवोऽष्टाकपालेन प्रातःसवने भिषज्यन्, रुद्रा एकादशकपालेन माध्यन्दिने सवने, विश्वेदेवा द्वादशकपालेन तृतीयसवने'—इति ब्रा० १.५.११.३।

‡ 'विधीयते+ +मद्दीमाद्दृ वाग्विसर्गं तत्प्रयत्नावगमाद्' घ।

§ तथाहि—'स यदष्टाकपालान् प्रातःसवने कुर्यात्, एकादशकपालान् माध्यन्दिने सवने, द्वादशकपालाꣳस्तृतीयसवने, विलोम तद्यज्ञस्य क्रियेत'—इति तै० ब्रा० १.५.११.४।

आपस्तम्बस्तु शाखाभेद मनुसृत्य पक्षद्वय मप्युदाहरति—"अष्टौ पुरोडाशकपालान्येकादश माध्यन्दिने द्वादश तृतीयसवने। सर्वानैन्द्रानेकादशकपालाननुसवन मेके समामनन्ति"–इति (श्रौ० १२. ४. १, २.)॥

अथ तत्पुरोडाशशेषभक्षणे कञ्चित् पूर्वपक्ष मुपन्यस्यति—तदाहुर्यतो घृतेनानक्तं स्यात्तत: पुरोळाशस्य प्राश्नीयात्सोमपीथस्य गुप्त्यै घृतेन हि वज्रेणेन्द्रो वृत्र महन्निति"–इति। तत्सोमपानस्य रक्षणाय भवति। यस्मादिन्द्रो घृत मेव वज्रं कृत्वा तेन वृत्रं हतवान्, तस्मात् तस्य क्रूरत्वात् घृतरहितं सकलं भक्ष्यमिति पूर्वपक्षिण आहु:। तं निराकृत्य सिद्धान्तं दर्शयति—"तत्तन्नादृत्यं;-हविर्वा एतद्यदुत्पूतं, सोमपीथो वा एष यदुत्पूतं, तस्मात्तस्य यत एव कुतश्च प्राश्नीयात्; सर्वतो वा एता स्वधा यजमान मुपक्षरन्ति; यदेतानि हवींष्याज्यं धाना: करम्भ: परिवाप: पुरोळाश: पयस्येति"–इति। घृतरहितभाग एव भक्षणीय इति मतं नादरणीयम्। उत्पवनसंस्काररहितस्य घृतस्य वज्रत्वेऽपि यदुत्पूतं घृतं तद्धविरेव। किञ्च यदुत्पूतं तत्सोमपीथसदृश मेव। तस्मात् 'तस्य' पुरोडाशस्य यत: कुतश्च घृतयुक्ताद् घृतरहिताद्वा यस्मात् कस्मादपि भागात् प्राश्नीयात्। आज्यं धानादीनि यानि हवींषि सन्ति, ता एता: सर्वत: 'स्वधा' अन्नम्, तद्रूपा एव भूत्वा यजमानम् 'उपक्षरन्ति' स्रवन्ति; तस्मात् सर्वत: प्राशन मुपपन्नम्। वेदनं प्रशंसति—"सर्वत एवैनं स्वधा उपक्षरन्ति य एवं वेद"–इति॥ ५॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां तृतीयाध्याये
पञ्चम: खण्ड:॥ ५ (२३)

॥ अथ षष्ठः खण्डः ॥

यो वै यज्ञं हविष्पंक्तिं वेद हविष्पंक्तिना यज्ञेन राध्नोति धानाः करम्भः परिवापः पुरोळाशः पयस्ये-त्येष वै यज्ञो हविष्पंक्तिर्हविष्पंक्तिना यज्ञेन राध्नोति य एवं वेद यो वै यज्ञ मक्षरपंक्तिं वेदाक्षरपंक्तिना यज्ञेन राध्नोति सुमत्पद्वग्द इत्येष वै यज्ञोऽक्षर-पंक्तिरक्षरपंक्तिना यज्ञेन राध्नोति य एवं वेद यो वै यज्ञं नराशंसपंक्तिं वेद नराशंसपंक्तिना यज्ञेन राध्नोति द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्य-न्दिनं सवनं सकृन्नाराशंसं तृतीयसवन मेष वै यज्ञो नराशंसपंक्तिर्नराशंसपंक्तिना यज्ञेन राध्नोति य एवं वेद यो वै यज्ञं सवनपंक्तिं वेद सवनपंक्तिना यज्ञेन राध्नोति पशुरुपवसथे त्रीणि सवनानि पशुरनूबन्ध्य इत्येष वै यज्ञः सवनपंक्तिः सवनपंक्तिना यज्ञेन राध्नोति य एवं वेद हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूप इति हविष्पंक्त्या यजत्यृक्सामे वा इन्द्रस्य हरी पशवः पूषान्नं करम्भः सरस्वतीवान् भारतीवानिति वागेव सरस्वती प्राणो भरतः परि-वाप इन्द्रस्यापूप इत्यन्न मेव परिवाप इन्द्रिय मपूप

एतासा मेव तद्देवतानां यजमानं सायुज्यं सरूपतां सलोकतां गमयति गच्छति श्रेयसः सायुज्यं गच्छति श्रेष्ठतां य एवं वेद हविरग्ने वीहीत्यनुसवनं पुरोळाशः स्विष्टकृतो यजत्यवत्सारो वा एतेनाग्नेः प्रियं धामोपागच्छत्स परमं लोक मजयदुपाग्नेः प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद यश्चैवं विद्वानेतया हविष्पंक्त्या यजते यजतीति च यजतीति च ॥ ६ (२४) ॥

॥इत्यैतरेयब्राह्मणे द्वितीयपञ्चिकायां तृतीयोऽध्यायः ॥३॥

विहितान् सवनीयपुरोडाशान् धानादिरूपान् प्रशंसति—"यो वै यज्ञं हविष्पंक्तिं वेद हविष्पंक्तिना यज्ञेन राध्नोति ;—धानाः, करम्भः, परिवापः, पुरोळाशः पयस्येत्येष वै यज्ञो हविष्पंक्तिर्हविष्पंक्तिना यज्ञेन राध्नोति य एवं वेद"--इति। हविषां धानादिद्रव्यरूपाणां पंक्तिः समूहो यस्मिन् सोमयागे सोऽयं 'हविष्पंक्तिः'; तादृशं यज्ञं यो वेद, स तथैव तादृशेन यज्ञेन समृद्धो भवति। भृष्टा यवतण्डुला 'धानाः'। तदाहापस्तम्बः:— "कपालाना मुपधानकाले प्रथमकपालमन्त्रेण धानार्थं लाजार्थं कपाले अधिश्रित्य तण्डुलानोप्य धानाः करोति। व्रीहीनोप्य लाजान् करोति। पुरोडाश मधिश्रित्यामिक्षावत्पयस्यां करोति। उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति। अर्धाः पिष्टाना मावृता सक्तून् करोति। मन्थं संयुतं करम्भ इत्याचक्षते। लाजान् परिवाप इति। नखैर्लाजेभ्यः

स्रुषान् संहरति"-इति ( श्रौ० १२. ४. ८—१४. )। पुरोडाशः प्रसिद्धः ; अन्ये धाना-करम्भ-परिवाप-पयस्या-शब्दा आपस्तम्बेन व्याख्याताः। एतैर्हविर्भिर्युक्तो यज्ञो हविष्पंक्तिः। हविष्पंक्ति-नित्यादि पुनर्वचन मुपसंहारार्थम्। यद्वा पूर्वं वेदनपूर्वकानुष्ठान-प्रशंसा, इह तु वेदनमात्रप्रशंसा द्रष्टव्या। हविषां पञ्चसंख्यानां समूहरूपा या पंक्तिः, सा शाखान्तरेऽप्याम्नाता—"ब्रह्मवादिनो वदन्ति,—नर्चा न यजुषा पंक्तिराप्यते ऽथ किं यज्ञस्य पांक्तत्व मिति ? धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या ; तेन पंक्तिराप्यते ; तद्यज्ञस्य पांक्तत्वम्"—इति ( तै० सं० ६. ५. ११. ४, ५. )। अत्रार्थवादेन धानादीनां पुरोडाशद्रव्याणां विधि-रुन्नेतव्यः ॥

अनेनैव न्यायेनाक्षराणां पञ्चानां विध्युन्नयनं दर्शयति— "यो वै यज्ञ मक्षरपंक्तिं वेदाक्षरपंक्तिना यज्ञेन राध्नोति ;—सुमत्पद्वग्दे इत्येष वै यज्ञो ऽक्षरपंक्तिरक्षरपंक्तिना यज्ञेन राध्नोति य एवं वेद" –इति। पञ्चसंख्याकाना मक्षराणां समूहोऽक्षरपंक्तिः। 'सु'-इत्येक मक्षरम्, 'मत्'-इति द्वितीय मक्षरम्, 'पद्'-इति तृतीय मक्षरम्, 'वक्'-इति चतुर्थ-मक्षरम्, 'दे'-इति पञ्चम मक्षरम् ; तान्येतान्य-क्षराणि होतृजपादौ प्रयोक्तव्यानि *। तथाच सम्प्रदायविद आहुः—

"एतद्धोतृजपाख्यस्य त्वादितो ऽक्षरपञ्चकम्।
एकैक मक्षरं चात्र परस्य ब्रह्मणो वपुः॥
'सु' पूजितं, 'मत्' प्रहृष्टं, 'पत्' सर्वव्यापि, तच्च 'वक्'—
सर्वस्य वक्तृ ब्रह्मैव, 'दे' फलानां प्रदातृ तत् ॥"-इति।

अन्यत् पूर्ववद् व्याख्येयम् ॥

---

* "पराङ्ङध्वर्यावावृत्ते सुमत्पद्वग्दे"-इत्यादि आश्व० श्रौ० ५.९.१।

तथा पञ्चविधनाराशंसस्य विध्युन्नयनं दर्शयति— "यो वै यज्ञं नराशंसपंक्तिं वेद, नराशंसपंक्तिना यज्ञेन राध्नोति ; द्विनाराशंसं प्रातःसवनं, द्विनाराशंसं माध्यन्दिनं सवनं, सकृन्नाराशंसं तृतीयसवन मेष वै यज्ञो नराशंसपंक्तिर्नराशंसपंक्तिना यज्ञेन राध्नोति य एवं वेद"-इति। भक्षि(तोप)गोयितानासादितानां चमसानां नराशंसशब्दः संज्ञा। अत उक्त माचार्येण *—"आप्यायितांश्चमसान्सादयन्ति, ते नाराशंसा भवन्ति"-इति। (श्रौ० ५. ६. ३०.)। भक्षितेषु चमसेषु पुनः पूरण माप्यायनम्। तथाविधाश्चमसाः प्रातःसवने द्विः प्रयुज्यन्ते, तथा माध्यन्दिनसवनेऽपि ; तृतीयसवने तु सकृदेव ; एवं पञ्चसंख्योपेतत्वात् नराशंसानां पंक्तिर्यज्ञे विद्यते ॥

तथैव सवनपंक्तिं दर्शयति— "यो वै यज्ञं सवनपंक्तिं वेद, सवनपंक्तिना यज्ञेन राध्नोति ; पशुरुपवसथे त्रीणि सवनानि पशुरनूबन्ध्य इत्येष वै यज्ञः सवनपंक्तिः ; सवनपंक्तिना यज्ञेन राध्नोति य एवं वेद"-इति। परेद्युर्यक्ष्यमाणस्य यजमानस्य समीपे पूर्वेद्युर्देवतास्तदीयं यज्ञं प्रतीक्षमाणा वसन्ति ; तस्मात् 'उप' समीपे वसन्त्यस्मिन्दिवस इति पूर्वदिवसः ; उपवसथाख्ये पूर्वदिवसे यः पशुरग्नीषोमीयः, सोऽप्यत्र सवनसमीपवर्त्तित्वात्सवनत्वेन गण्यते। प्रातःसवनादीनि तु त्रीणि प्रसिद्धान्येव सवनानि। सवनेभ्य ऊर्ध्व मनुष्ठेयोऽनुबन्ध्याख्यः पशुरपि पूर्ववत्सवनत्वेन गण्यते। अतः पञ्चानां सवनानां पंक्त्या समूहेन युक्तो यो यज्ञ एष एव सवनपंक्तिः। एवं हविष्पंक्ति-प्रसङ्गेनाक्षर-

---

* एतत्सूत्रकारेण आश्वलायनेनेति यावत्। तत्र "अध्वर्य उपहवस्व"-इत्यादीनि सूत्राणि द्रष्टव्यानि ५.६.२—३०।

पंक्तिर्नराशंसपंक्तिः सवनपंक्तिश्चेत्येतावदभिहितम्। एतदेवाभिप्रेत्य तत्र तत्र "पांक्तो यज्ञः"-इति श्रूयते * ॥

अथ प्रकृतानां सवनीयपुरोडाशानां क्रमेण याज्यां विधत्ते— "हरिवाँ इन्द्रो धाना अत्तु, पूषण्वान् करम्भं, सरस्वतीवान् भारतीवान् परिवाप, इन्द्रस्यापूप इति हविष्पंक्त्या यजति"-इति। हरिनामानौ द्वावश्वौ अस्य स्त इति 'हरिवान्' इन्द्रः। सोऽयं धानाः 'अत्तु' भक्षयतु। सेयं प्रथमहविषो याज्या। पोषकत्वात् पशवः पूषच्छब्देनोच्यन्ते, तत्स्वामी देवः 'पूषण्वान्'। स तु करम्भम्, अत्त्वित्यनुवर्त्तते। सेयं द्वितीयहविषो याज्या। सरस्वती वाक्, सास्यास्तीति देवविशेषः 'सरस्वतीवान्'। स एव 'भारतीवान्';— शरीरभरणाद्भरणः प्राणः, तस्य सम्बन्धिनी देहे ऽवस्थितिर्भारती, तद्युक्तो देवो 'भारतीवान्'। अयं विशेषणद्वयोपेतो देवः 'परिवापः' परिवापाख्यं हविरत्तु। इयं तृतीयस्य हविषो याज्या। इन्द्रस्य 'अपूपः' पुरोडाशः, प्रिय इति शेषः। तथा सतीन्द्रोऽपूपमत्त्वित्यर्थादवगम्यते। सेयं चतुर्थहविषो याज्या। पञ्चमहविःस्वरूपायाः पयस्यायाः शाखान्तरादत्रोपसंहर्तव्या †। एवं 'हविष्पंक्त्या यजति' हविष्पंक्तिविषयां याज्यां पठेदित्यर्थः ॥

प्रथमयाज्यां व्याचष्टे— "ऋक्सामे वा इन्द्रस्य हरी, पशवः पूषान्नं करम्भः सरस्वतीवान् भारतीवानिति; वागेव सरस्वती, प्राणो

---

* उपरिष्टादिहैव ३.२.९। शत० ब्रा० १.१.२.१६। तै० सं० ७. १. १०. ४।

† तथाहि तैत्तिरीयकम्—"तदश्विनौ धानाभिरभिषिज्यताम्, पूषा करम्भेण, भारती परिवापेण, मित्रावरुणौ पयस्यया"-इति ब्रा० १. ५. ११. २। 'धाना भृष्टयवाः, करम्भो यवपिष्ट माज्यसंयुतम्, परिवापो लाजाः, पयस्या आमिक्षा'-इति च तत्र सा० भा०। "पयस्या भवति पयो हि वा एतस्मादपक्रामति"-इति च पयस्यास्वरूपश्रुतिः तै० सं० २. ३. १३. २।

भरतः, परिवाप इन्द्रस्यापूप इत्यन्न मेव परिवाप इन्द्रिय मपूपः"-इति। ऋग्देवता सामदेवता चेत्युभयदेवतारूपाविन्द्रस्याश्वौ ; ६ अतो हरिवानितिमन्त्रोक्तिरित्यर्थः। द्वितीययाज्यां व्याचष्टे—पशव इति। पोषकत्वात्पशूनां पूषत्वम्, स्वादु पोषकत्वात् करम्भस्यान्नत्वम्। अतः पशुस्वामिनः करम्भो योग्य इत्यर्थः। तृतीययाज्यां व्याख्यापूर्वं व्याचष्टे— सरस्वतीवानिति। अत्र सरस्वतीवान् भारतीवानिति व्याख्येय मनूद्य वागित्यादिना तद्व्याख्यानं क्रियते। 'वागेव सरस्वती'-इत्येत' लोकप्रसिद्धम्; न त्वत्र किञ्चिद्वाक्य मस्तीत्येवशब्दस्यार्थः। शरीरभरणहेतुत्वात् प्राणो भरतशब्दवाच्यः, तदीयवृत्तिर्भारती। तदुभयोपेतं मत्प्रत्ययस्यार्थ इति द्रष्टव्यम्। तृतीययाज्याया उत्तरार्द्धं चतुर्थयाज्यां चानूद्य व्याचष्टे—परिवाप इति। परिवापशब्दवाच्यानां लाजानां मृदुत्वेनात्तुं सुकरत्वादन्नत्वम्। इन्द्रियवृद्धिहेतुत्वादपूपस्येन्द्रियत्वम्। अत्र हरिपूषादिविशेषणरूपदेवताभेदाद्याज्याभेदेऽपि यजनीयविशेषस्य इन्द्रस्य एकत्वादेकयाज्यात्व मभिप्रेत्य हविष्पंक्त्या यजतीत्येकप्रधानविधिरिति द्रष्टव्यम् * ॥

होतुरुक्तयाज्यावेदनं प्रशंसति— "एतासा मेव तद्देवतानां यजमानं सायुज्यं सरूपतां सलोकतां गमयति,— गच्छति श्रेयसः सायुज्यं, गच्छति श्रेष्ठतां य एवं वेद"-इति। य एवं वेदिता होता यजमान मिन्द्रादिदेवतानां 'सायुज्यं' सहवासं, 'सरूपतां' समानशरीरत्वं, 'सलोकताम्' एकलोकावस्थानं च प्रापयति,—स्वयं च

* अतएव श्रूयते—'अथ कस्मादेतेषाꣳ हविषा मिन्द्र मेव यजन्तीति एता ह्येनं देवता इति ब्रूयात्"-इति तै० ब्रा० १.५.११.९। 'यस्मादेताः सर्वा देवता एन मिन्द्र मुपजीवन्तीति शेषः, तस्मादिन्द्रस्यैव धानादिहविःस्वामित्वं युक्तम्'—इति च तत्र सा०भा०।

होता 'श्रेयसः' अतिप्रशस्तस्येन्द्रादेः 'सायुज्यं' सहवासं प्राप्नोति, भागाधिक्येन श्रेष्ठतां च प्राप्नोति ॥

सवनीयपुरोडाशसम्बन्धिनः स्विष्टकृतो याज्यां विधत्ते— "हविरग्ने वीहीत्यनुसवनं पुरोळाशः स्विष्टकृतो यजति"-इति। हे अग्ने! इद मस्माभिर्दत्त हविः 'वीहि' भक्षय। एता मेव त्रिष्वपि सवनेषु याज्यां पठेत् ॥ एता मेव प्रशंसति— "अवत्सारो वा एतेनाग्नेः प्रियं धामोपागच्छत्स परमं लोक मजयदुपाग्नेः प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद, यश्चैवं विद्वानेतया यजते हविष्पंक्त्या यजतीति च यजतीति च"-इति। अवत्सारनामकः कश्चिदृषिः हविरित्येतेन मन्त्रेणाग्निदेवतायाः प्रियं स्थानं प्राप्य तत ऊर्द्धं ततोऽप्युत्कृष्टं लोकं जितवान्। अथ सर्वत्र यजुःस्वरूपैव याज्या। तदेतन्मन्त्रवेदनं तत्पूर्वक मनुष्ठानं च प्रशंसति— उपाग्नेरिति। यस्मात्र वेदिनः फलतया हविष्पङ्क्तिं स्वार्थं मनुष्ठितो यजमानस्य, परार्थं याज्यां पठतो होतुश्च फलं भवति। उभयविवक्षयात्मनेपदपरस्मैपदप्रयोगः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां तृतीयाध्याये षष्ठः खण्डः ॥ ६ (२४)॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमार्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायाः तृतीयोऽध्यायः ॥

द्वितीय

## ॥ अथ चतुर्थाध्यायः ॥

( तत्र )

### ॥ अथ प्रथमः खण्डः ॥

देवा वै सोमस्य राज्ञो ऽग्रपेये न समपादयन्नहं प्रथमः पिबेय महं प्रथमः पिबेय मित्येवाकामयन्त ते सम्पादयन्तो ऽब्रुवन् हन्ताजि मयाम स यो न उज्जेष्यति स प्रथमः सोमस्य पास्यतीति तथेति त आजिमयुस्तेषा माजिं यता मभिसृष्टानां वायुर्मुखं प्रथमः मत्यपद्यतायेन्द्रो ऽथ मित्रावरुणावथाश्विनौ सो ऽवेदिन्द्रो वायु मुद्वै जयतीति त मनु परापतत्स ह नावयोज्जयावेति स नेत्यब्रवीदह मेवोज्जेष्यामीति तृतीयं मे ऽथोज्जयावेति नेति हैवाब्रवीदहमेवोज्जेष्यामीति तुरीयं मे ऽथोज्जयावेति तथेति तं तुरीये ऽत्यार्जत तत्तुरीयभागिन्द्रो ऽभवत् त्रिभाग्वायुस्तौ सहैवेन्द्रवायू उदजयतां सह मित्रावरुणौ सहाश्विनौ त एषा मेते यथोज्जितं भक्षा इन्द्रवायूः प्रथमो ऽथ मित्रावरुणयोरथाश्विनोः स एष इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायवस्तदेतदृषिः पश्यन्नभ्यनूवाच नियुत्वाँ इन्द्रसारथिरिति तस्माद्गा-

**प्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति तुरीये हैव सङ्गृहीतारो वदन्तेऽमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत् ॥ १ ( २५ ) ॥**

अपोनप्त्रीयतच्छेष उपांश्वादिग्रहा अपि ।
सवनीयाः पुरोडाशाः पवमानाय सर्पणम् ॥

इदानीं मैन्द्रवायवादीन् द्विदेवत्यान् ग्रहान् विधातु माख्यायिका माह— "देवा वै सोमस्य राज्ञो अग्रपेये न समपादयन्नहम्प्रथमः पिबेय महम्प्रथमः पिबेय मित्येवाकामयन्त; ते सम्पादयन्तो ऽब्रुवन्,—हन्ताजि मयाम स यो न उज्जेष्यति, स प्रथमः सोमस्य पास्यतीति ; तथेति ; त आजि मयुस्तेषा माजिं यता मभिसृष्टानां वायुर्मुखम्प्रथमः प्रत्यपद्यतायेन्द्रो ऽथ मित्रावरुणावथाश्विनौ"-इति। पुरा कदाचिद् देवाः सोमस्य 'अग्रपेये' प्रथमपाने निमित्तभूते सति 'न समपादयन्' सम्पादनं सम्पत्तिं न प्राप्ताः, किन्तु अह मेव प्रथमः पिबेय मिति सर्वेऽप्यकामयन्त ; सर्वे समयबन्धपुरःसरम् 'आजिं' धावनावधिं कञ्चिद् वृक्षं पाषाण मन्यद्वा किञ्चिद् 'अयाम' प्राप्नुवाम। स यो यः कश्चिदपि 'नः' अस्माकं मध्ये 'उज्जेष्यति' तस्मिन् धावने उत्कर्षेण जयं प्राप्स्यति, स एक एव प्रथमो भूत्वा 'सोमस्य' सोमं पास्यति। ते देवाः तथेत्यङ्गीकृत्य 'आजिं' धावनमर्यादाम् 'अयुः' प्राप्तवन्तः। आजिं 'यतां' प्राप्नुवतां अभिसृष्टाना मभितः प्रवृत्तानां तेषां मध्ये वायुः प्रथमो भूत्वा 'मुखम्' अवधेः सम्मुखं प्रत्यपद्यत। वायोः पृष्ठतः इन्द्रः, तस्य पृष्ठतो मित्रावरुणौ, तयोः पृष्ठतोऽश्विनौ। एवं क्रमेण सर्वे धावनं प्रारब्धवन्तः। तस्मिन् धावने वायोरिन्द्रस्य च

परस्परं संवादं दर्शयति— "सो ऽवेदिन्द्रो वायु मुद्वै जयतीति ; त मनु परापतत् ; सह नावयोज्जयावेति ; स नेत्यब्रवीदह मेवोज्जेष्यामीति ; तृतीयं मे ऽथोज्जयावेति ; नेति हैवाब्रवीदह मेवोज्जेष्यामीति ; तुरीयं मे ऽथोज्जयावेति ; तथेति ; तं तुरीये-ऽत्यार्जत ; तत्तुरीयभागिन्द्रो ऽभवत् त्रिभाग्वायुः"-इति । अयं वायुरुत्कर्षेण जयत्येवेति स इन्द्रः 'अवेत्' स्वमनसि ज्ञातवान् । ज्ञात्वा च 'तं' वायुम् 'अनु' पृष्ठतः 'परापतत्' सहसैवाधावत् । आगत्य चेद मुक्तवान्—हे वायो ! 'नौ' आवयोरुभयोः सह सोम-पान मस्तु,— तवार्द्धम्, ममार्द्धम् । अथ तस्मात् कारणात् आवा मुभौ सहैवोत्कर्षेण जयं प्राप्नुवावेति । 'सः' वायुः 'नेति' निराकृत्य अह मेक एवोज्जेष्यामीत्यब्रवीत् । ततः स इन्द्र एव मुवाच,— ममार्द्धं माभूत् किन्तु 'तृतीयं' त्रिषु भागेषु भागो ऽस्तु, तव द्वौ भागौ । अथैवं सति सहैवावा मुज्जयावेति । पुनरपि नेत्येव निराकृत्य स वायुरह मेवोज्जेष्यामीत्यब्रवीत् । ततः स इन्द्रः पुन-रप्युवाच,— तृतीयो माभूत् किन्तु मे 'तुरीय मस्तु' चतुर्थो भागो ऽस्तु, तव त्रयो भागाः । अथैवं सत्यावा मुभावुज्जयावेति । ततो वायुरङ्गीकृत्य 'तम्' इन्द्रं 'तुरीये' चतुर्थभागे 'अत्यार्जत' अतिशयेन स्थापितवान् । तस्मात्कारणादिन्द्रश्चतुर्थांशभागभूत्, वायुरंशत्रय-भागवान् ॥

अथ विजयक्रमेण सोमपानक्रमं दर्शयति— "तौ सहैवेन्द्रवायू उदजयतां, सह मित्रावरुणौ, सहाश्विनौ ; त एषा मेते यथोज्जितं भक्षाः,—इन्द्रवाय्वोः प्रथमो ऽथ मित्रावरुणयोरथाश्विनोः"-इति । इन्द्रवायू उभौ सहैव 'उदजयतां' धावता मवधिदेशं प्राप्नुतः । तयोः पृष्ठतो मित्रावरुणौ सह प्राप्नुतः । तयोः पृष्ठतो ऽश्विनौ सह

प्राप्नुतः। 'एषां' देवानां 'यथोज्जितम्' तत्तज्जय मनतिक्रम्य त एते 'भक्षाः' सोमपानरूपाः अभवन्। इन्द्रवाय्वोः प्रथमं सोमपानम्, ततो मित्रावरुणयोः सोमपानम्, ततोऽश्विनोः सोमपान मित्येवं द्विदेवत्यग्रहाणां क्रमो व्यवस्थितः॥

इदानी मैन्द्रवायवग्रहं विधत्ते— "स एष इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायवः"-इति। योऽय मिन्द्रवायुदेवताको ग्रहः, स एष 'इन्द्रतुरीयः' इन्द्रस्य तुरीयभागो यस्मिन् ग्रहे सोऽय मिन्द्रतुरीयः, तादृशं ग्रहं गृह्णीयात्॥

उक्तभागविशेषं मन्त्रसंवादेन दृढ़यति— "तदेतदृषिः पश्यन्नभ्यनूवाच, नियुत्वाँ इन्द्रसारथिरिति"-इति। तदेतच्चतुर्थभागत्वं दिव्यदृष्ट्या पश्यन् कश्चिन्मन्त्रात्मक ऋषिः *, तेन मन्त्रेण 'अभ्यनूवाच' साकल्येन तदुक्तवान्। नियुत्वानित्यादिको मन्त्रः (सं० ४. ४६. २.)। नियुत्वच्छब्दो वायुसम्बन्धिनां मन्त्राणां वाचकः; "अध वायुं नियुतः सश्चत स्वाः"-इत्यादिमन्त्रेष्वभिधानात् (सं० ७. ९०. ३.)। नियुतो यस्य वायोः सन्ति, सोऽयं 'नियुत्वान्' †। इन्द्रः सारथिर्यस्य वायोः, सोऽयम् 'इन्द्रसारथिः'। अत्र सारथित्वाभिधानादिन्द्रस्य चतुर्थभागप्राप्तिर्दर्शिता॥

उक्त मर्थं लोकव्यवहारेण दृढ़यति— "तस्माद्धाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति; तुरीये हैव सङ्ग्रहीतारो वदन्ते ऽमुनैवानूकाशेन,— यदद इन्द्रः सारथिरिव भूत्वोदजयत्"-इति। यस्मात् सारथिरूपस्येन्द्रस्य चतुर्थभागः पूर्वं प्राप्तः, 'तस्मात् धा' तत एव कारणात् 'एतर्ह्यपि' इदानी मपि 'भरताः'

* इह कर्तृकरणयोरेकत्व मुपगतं सायणस्येत्यालोच्यम्।

† 'नियुतो वायोः'-इति निघ० १. १५. १०।

भरः सङ्ग्रामः तं तन्वन्ति विस्तारयन्तीति भरता योद्धारः। 'सत्वनां' सारथीनां 'वित्तिं' वेतनं जीवितरूपाम् 'प्रयन्ति' प्रकर्षेण सम्पादयन्ति। ते च 'सङ्ग्रहीतारः' सारथयः 'तुरीये हैव' युद्ध-लब्धस्य द्रव्यस्य चतुर्थभाग एव 'वदन्ते' अस्माक मेतावदुचित मिति कथयन्ति। तदौचित्ये युक्ति माह— 'अमुनैव' पूर्वोक्तेनैव 'अनूकाशेन' दृष्टान्तेन। स एव दृष्टान्तो यदद इत्यादिना स्पष्टीक्रियते। यस्मात् कारणादिन्द्रो वायोः सारथिरिव भूत्वा 'अदः' चतुर्थांशरूपं सोमात्मकं धन मुदजयत्, तस्माल्लोकेऽपि तथैव प्रवृत्त मित्यर्थः ॥१॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये
प्रथमः खण्डः ॥ १ ( २४ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

ते वा एते प्राणा एव यद् द्विदेवत्या वाक् च प्राणश्चैन्द्रवायवश्चक्षुश्च मनश्च मैत्रावरुणः श्रोत्रं चात्मा चाश्विनस्तस्य हैतस्यैन्द्रवायवस्याप्येके ऽनुष्टुभौ पुरोनुवाक्ये कुर्वन्ति गायत्र्यौ याज्ये वाक् च वा एष प्राणश्च ग्रहो यदैन्द्रवायवस्तदपि छन्दोभ्यां यथायथं कल्पेते * इति तत्तन्नादृत्यं व्यूढं वा-

---

* 'कॢप्स्येते' क, ग, ङ ; टी० ख, टी० ग।

एतद्यज्ञे क्रियते यत्र पुरोनुवाक्या ज्यायसी याज्यायै यत्र वै याज्या ज्यायसी तत्समृद्धं मथो यत्र समे यस्यो तत्कामाय तथा कुर्यात्प्राणस्य च वाचश्चाचैव तदुपाप्तं वायव्या पूर्वा पुरोनुवाक्यै-न्द्रवायव्युत्तरैवं याज्ययोः सा या वायव्या तया प्राणं कल्पयति वायुर्हि प्राणो ऽथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति वाग्घैन्द्र्युपो तं काम माप्नोति यः प्राणे च वाचि च न यज्ञे विषमं करोति॥ २ (२६ )॥

अथैन्द्रवायवमैत्रावरुणाश्विनाख्यान् द्विदेवत्यग्रहान् प्राणरूपत्वेन प्रशंसति— "ते वा एते प्राणा एव यद् द्विदेवत्याः"–इति । तेषां त्रयाणां प्राणरूपत्वं विभज्य दर्शयति— "वाक् च प्राणश्चैन्द्र-वायवश्चक्षुश्च मनश्च मैत्रावरुणः श्रोत्रं चात्मा चाश्विनः"–इति । उच्छ्वासादिवृत्तिभेदवर्त्ती वायुः प्राणः । वागादीनीन्द्रियाणि; तेषां प्राणरूपत्वाभावेऽपि प्राणाधीनवृत्तिलाभत्वेन पूर्वत्र प्राणा इति निर्देशः कृतः । इम मर्थं वाजसनेयिन आमनन्ति— "त एतस्यैव सर्वं रूप मभवंस्तस्मादेत एतेनाख्यायन्ते प्राणाः"–इति (शत० ब्रा० १४.४.३.३२. * )। तत्र वायुरूपो मुख्यः प्राणो वाक् चेत्ये-तदुभय मैन्द्रवायवग्रहस्वरूपम् । चक्षुर्मनश्चेतीन्द्रियद्वयं मैत्रावरुण-ग्रहस्वरूपम् । श्रोत्रं जीवात्मा चेत्युभय माश्विनग्रहस्वरूपम् ॥

* "पञ्चधा विहितो वा अयं॰ शीर्षन् प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्रम्"–इत्यादि च शत० ब्रा० ९.२.२.५ ; १.५.२.५ ; ३.१.३.१९–२१ ; ५.२.४.१० ; ११.७.१.७ ; १३.१.७.२ ।

वक्ष्यमाणयाज्यानुवाक्योपयोगित्वेन प्राणरूपतया प्रशस्यैन्द्रवायवग्रहस्य याज्यानुवाक्ये विधातुं पूर्वपक्षमाह— "तस्य हैतस्यैन्द्रवायवस्याप्येके ऽनुष्टुभौ पुरोनुवाक्ये कुर्वन्ति, गायत्री याज्ये" –इति। योऽय मैन्द्रवायवग्रहः पूर्वं मुक्तः, तस्यैके ह याज्ञिकाः अनुष्टुप्छन्दस्के ऋचौ पुरोनुवाक्ये कृत्वा गायत्रीच्छन्दस्के ऋचौ याज्ये इति कुर्वन्ति। 'अपि' शब्दो वानर्थकः, यदापि कुर्वन्तीत्येवं पूर्वपक्षानुवादार्थो वा। तेषां पूर्वपक्षिणा मभिप्रायं दर्शयति— "वाक् च वा एष प्राणश्च ग्रहो यदैन्द्रवायवस्तदपि छन्दोभ्यां यथायथं कल्प्स्येते इति"-इति। योऽय मैन्द्रवायवग्रहः, स एष प्राणात्मकः; तत्रेन्द्रो वाचो व्याकरणरूपायाः कर्त्ता, "ता मिन्द्रो मध्यतो वाचं व्याकरोत्"--इतिश्रुत्यन्तरात् ( तै० सं० ६. ४. ७. ४.* )। अतः इन्द्रद्वारा वाग्रूपत्वम्; "यः प्राणः स वायुः"– इतिश्रुत्यन्तरात् † प्राणरूपत्वम्। तावुभावपि यथोक्ताभ्या मनुष्टुब्गायत्रीच्छन्दोभ्यां 'यथायथं' स्वस्वसम्बन्ध मनतिक्रम्य 'कल्प्स्येते' कल्पितौ भविष्यतः। "वाग्वा अनुष्टुप्"--इतिश्रुत्यन्तरात् ( प० ३. २. ४. ) अनुष्टुप्छन्दसो वाग्रूपत्वम्, "प्राणो वा गायत्री"–इतिश्रुत्यन्तराद्गायत्र्याः प्राणरूपत्वम्। अत्र मन्त्रविशेषाः शाखान्तरे द्रष्टव्याः ‡। सोऽयं पूर्वपक्षिणा मभिप्रायः॥

पूर्वपक्षनिराकरणपूर्वकं सिद्धान्तं दर्शयति— "तत्तन्नादृत्यं; व्यृद्धं वा एतद्यज्ञे क्रियते,—यत्र पुरोनुवाक्या ज्यायसी याज्यायै;

---

* "ता मिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्"–इति संहितापाठः। १का० ४प्र० ४ अनु०-भाष्ये ह्यस्य व्याख्यानं द्रष्टव्यम्।

† "यो वै प्राणः स वातः + + + अयं वै प्राणो योऽयं पवते"–इति शत० ब्रा० ५.२.४.९।

‡ "आ वायो भूष शुचिपाः"—इत्यादयः तै० सं० १ का० ४ प्र० ४ अनु०।

यत्र वै याज्या ज्यायसी तत्समृद्ध, मथो यत्र समे ; यस्यो तत् कामाय तथा कुर्यात्, प्राणस्य च वाचश्चात्रैव तदुपाप्तम्"--इति । 'तत्' पूर्वपक्षमतं नादरणीयम्। तत्र हेतुरुच्यते.— यस्मिन् कर्म्मणि याज्यायाः सकाशात् पुरोनुवाक्याक्षरैरभ्यधिका, तत्कर्म्म 'व्यृद्धं' समृद्धिरहितम् ; पूर्वपक्षिणश्चात्रान्यूनां याज्यां पुरोनुवाक्या मधिकां कुर्वन्ति ; तस्मादेतन्मत मयुक्तम्। 'यत्र वै' यस्मिंस्तु कर्म्मणि पुरोनुवाक्यायाः सकाशात् अभ्यधिका याज्या भवति, 'तत्' कर्म्म समृद्धम्। अपि च यत्र कर्म्मणि याज्यानुवाक्ये समे भवतः, तदपि कर्म्म समृद्धम्। साम्यपक्षेऽन्योऽपि गुणोऽस्ति, तत्कथ मिति तदुच्यते,— 'प्राणस्य च वाचश्च' प्राणवाचोर्मध्ये यस्य यस्य वस्तुनः 'कामाय' अपेक्षितफलसिद्धये 'तत् तथा कुर्यात्' तेन पूर्वोक्तप्रकारेणाष्टुब्गायत्रीजन्य मनुष्ठानं पूर्वपक्षिणः कुर्वन्ति, तत्सर्वं विफलम्। तत्रैव याज्यानुवाक्ययोः साम्यानुष्ठान एव 'उपाप्तं' शीघ्रं प्राप्तं भवति। तस्मात् साम्यपक्ष एवादरणीय इत्यर्थः। साम्य-पक्षे पूर्वपक्ष्यभिप्रेतं प्रयोजनं कथं सिध्येदित्याशङ्क्याह— "वायव्या पूर्वा पुरोनुवाक्यैन्द्रवायव्युत्तरैवं याज्ययोः ; सा या वायव्या तया प्राणं कल्पयति, वायुर्हि प्राणो, ऽथ यदैन्द्रवायवो तस्यै यदैन्द्रं पदं, तेन वाचं कल्पयति, वाग्घ्यैन्द्ररूपो तं काम माप्नोति यः प्राणे च वाचि च; न यज्ञे विषमं करोति"-इति। द्वयोः पुरोनुवाक्ययोर्मध्ये या पूर्वा पुरोनुवाक्या, सा 'वायव्या' वायुदेवताका ; "वायवा याहि दर्शत"--इत्यस्या ऋचि ( सं० १. २. १. ) वायोः श्रवणात्। या तूत्तरा पुरोनुवाक्या, सेयम् 'ऐन्द्रवायवी'; "इन्द्रवायू इमे सुताः" -इत्यस्या ऋचि ( सं० १. २. ४. ) इन्द्रवाय्वोः श्रवणात्। एवं याज्ययोरपि द्रष्टव्यम्। उभयोर्याज्ययोर्मध्ये या पूर्वा, सा वायव्या ;

"अयं पिबा मधूनाम्"-इत्यस्या ऋचि ( सं० ४. ४६. १. ) 'सुतं वायो दिविष्टिषु'-इति वायोः श्रवणात्। योत्तरा याज्या, सैन्द्रवायवी; "शतेना नो अभिष्टिभिः"-इत्यस्या ऋचि (सं० ४.४६.२.) 'नियुत्वाँ इन्द्रसारथिः'-इतीन्द्रः श्रूयते, 'वायो सुतस्य'-इति वायुरपि श्रूयते ; तस्मादियमैन्द्रवायवी। एवं सति या वायव्या पुरोनुवाक्या याज्या च, तया प्राणकल्पितः स्वव्यापारसमर्थो भवति ; "यः प्राणः स वायुः"-इतिश्रुत्यन्तरेण वायुप्राणयोरैकत्वस्य पूर्वपञ्चिकाप्यङ्गीकर्त्तव्यत्वात्। अथ यैन्द्रवायवी पुरोनुवाक्या,याज्या वा, 'तस्यै' तस्या मुभयविधायां यत् 'ऐन्द्रम्' इन्द्रसम्बन्धि पदं विद्यते, तेन पदेन वाचं 'कल्पयति' समर्थां करोति। 'हि' यस्मात्कारणाद्वागैन्द्री,— इन्द्रस्य व्याकरणकर्तृत्वात् *, तस्माद्वाचा सामर्थ्यं भवति। एव मनुतिष्ठन् पुरुषो वाक्प्राणयोर्यः कामोऽस्ति, तं प्राप्नोति,—यत्र च छन्दःसाम्यं, विषम मनुष्ठानं न करोति ॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये
द्वितीयः खण्डः ॥ २ ( २६ ) ॥

---

* पुरासीदैन्द्रं व्याकरणमिति प्रवादाश्रित मेतदुक्तम्। वस्तुतः 'इन्द्रश्चन्द्रः'-इति बोपदेवीयकविकल्पद्रुममुखबन्धादौ लिखितत्वादिन्द्राचार्यस्य कस्यचिच्छाब्दिकत्वमात्रं प्रतीयते, न तु व्याकरणप्रणेतृत्वम् ( नि० आ० जौ.); तथात्वेऽपि नैवैतरेयब्राह्मणपूर्वजत्वं तस्य सम्भाव्यते।

॥ अथ तृतीयः खण्डः ॥

प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते तस्मात्प्राणा एकनामानो द्विपात्रा हूयन्ते तस्मात्प्राणा द्वन्द्वं येनैवाध्वर्युर्यजुषा प्रयच्छति तेन होता प्रतिगृह्णात्येष वसुः पुरूवसुरिह वसुः पुरूवसुर्मयि वसुः पुरूवसुर्वाक्पा वाचं मे पाहीत्यैन्द्रवायवं भक्षयत्युपहूता वाक् सह प्राणेनोप मां वाक् सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मा म्रषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयत एष वसुर्विदद्वसुरिह वसुर्विदद्वसुर्मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीति मैत्रावरुणं भक्षयत्युपहूतं चक्षुः सह मनसोप मां चक्षुः सह मनसा ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मा म्रषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयत एष वसुः संयद्वसुरिह वसुः संयद्वसुर्मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीत्याश्विनं भक्षयत्युपहूतं श्रोत्रं सहात्मनोप मां

श्रोत्रं सहात्मना ह्वयता मुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मा ऋषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते पुरस्तात्प्रत्यञ्च मैन्द्रवायवं भक्षयति तस्मात्पुरस्तात्प्राणापानौ पुरस्तात्प्रत्यञ्चं मैत्रावरुणं भक्षयति तस्मात्पुरस्ताच्चक्षुषी सर्वतः परिहार माश्विनं भक्षयति तस्मान्मनुष्याश्च पशवश्च सर्वतो वाचं वदन्तीं शृण्वन्ति ॥ ३ (२७) ॥

अथ द्विदेवत्याना मैन्द्रवायवमैत्रावरुणाश्विनग्रहाणां त्रयाणां ग्रहणहोमयोः पात्रवैषम्यं विधत्ते— "प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते, तस्मात्प्राणा एकनामानो द्विपात्रा ह्रयन्ते ; तस्मात्प्राणा द्वन्द्वम्"-इति। द्वे देवते युग्मरूपे येषां ग्रहाणां ते द्विदेवत्याः। इन्द्रश्च वायुश्चेत्येकं युग्मम्, मित्रश्च वरुणश्चेति द्वितीयं युग्मम्; यावश्विनौ तौ तृतीयं युग्मम् ; त एते द्विदेवत्यग्रहाः। प्राणा वै इन्द्रियरूपा एव ; "वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्र माश्विनः" -इतिश्रुत्यन्तरात् (४१३ पृ०)। ते च ग्रहा एकपात्रा ग्रहीतव्याः ; —इन्द्रवाय्वोरेकस्मिन् पात्रे ग्रहणम्, मित्रावरुणयोरेकस्मिन्निति। यस्मात्प्राणरूपाणां ग्रहाणा मेकपात्रत्वं तस्माद्वाक्-चक्षुः-श्रोत्ररूपाः प्राणाः 'एकनामानः' प्राणा इत्येव मेतेषां नाम। ते च ग्रहा होमकाले द्विपात्रा होतव्याः। तत्तद्ग्रहणपात्रेणाध्वर्युर्जुहोति,—प्रतिप्रस्थाता पात्रान्तरेण जुहोतीति। यस्माद्धोमकाले पात्रद्वयं,

तस्माच्चक्षुरादयः प्राणाः स्वस्वगोलकेषु 'द्वन्द्व' द्वौ द्वौ भूत्वा वर्त्तन्ते। अयमर्थः श्रुत्यन्तरे प्रश्नोत्तराभ्यामाम्नातः — "ब्रह्मवादिनो वदन्ति,— कस्मात्सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते, द्विपात्रा हूयन्त इति? यदेकपात्रा गृह्यन्ते, तस्मादेकोऽन्तरतः प्राणो;— द्विपात्रा हूयन्ते, तस्माद् द्वौद्वौ बहिष्टात् प्राणाः"-इति (तै० सं० ६. ४. ६. ३.)। होमकाले द्विपात्रत्वमापस्तम्बेन स्पष्टोकृतम्— "हविर्धानङ्गच्छन्त्सम्प्रेष्यति वायव इन्द्रवायुभ्यामनुब्रूहीत्युपयामगृहीतोऽसि वाचसदसीत्यादित्यपात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न सादयत्यैन्द्रवायवमादायाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानमुभौ निष्क्रम्य दक्षिणतोऽवस्थाय दक्षिणं परिधिसन्धिमन्ववहृत्याध्वरो यज्ञोऽयमस्तु देवा इति परिप्लवया ऽऽघारमाघारयति०—०आश्राव्यप्रत्याश्राविते सम्प्रेष्यति वायव इन्द्रवायुभ्यां प्रेष्येति वषट्कृते जुहोति। एवमुत्तराभ्यां ग्रहाभ्यां प्रचरतः"-इति (श्रौ० १२.२०.१८-२४.*)॥

अथ होतुर्ग्रहशेषभक्षप्रतिग्रहमन्त्रं विधत्ते—"येनैवाध्वर्युर्यजुषा प्रयच्छति, तेन होता प्रतिगृह्णाति"-इति। अध्वर्योः प्रदानमन्त्रः आपस्तम्बेन दर्शितः—"ग्रहमध्वर्युरादाय क्षिप्रꣳ होतारमभिद्रुत्य मयि वसुः पुरूवसुरिति ग्रहꣳ होत्रे प्रयच्छति। एतेनैव होता प्रतिगृह्य दक्षिण ऊरावासाद्य हस्ताभ्यां निगृह्यास्ते"-इति (श्रौ०१२.२१.५,६.)॥ अथ होतुः समन्त्रकं भक्षणं विधत्ते—"एष वसुः पुरूवसुरिह वसुः पुरूवसुर्मयि वसुः पुरूवसुर्वाक्पा वाचं मे पाहीत्यैन्द्रवायवं भक्षयति"-इति। 'एषः' ऐन्द्रवायवग्रहो 'वसुः' निवासहेतुः 'पुरूवसुः' प्रभूतनिवासहेतुः। कस्मिन् लोके निवास-

* "जुहोमि। पुनर्वषट्कृते जुहुतः"—इत्येव पाठो मौलिकः।

हेतुरित्याकाङ्क्षानिवृत्त्यर्थम् 'इह वसुः'-इत्यादिक मुच्यते,— अस्मिन्नेव मनुष्यलोके निवासं करोति, तत्रापि प्रभूतनिवासं करोति। कस्मिन् पुरुषे ग्रहस्य निवास इत्याकाङ्क्षानिवृत्त्यर्थम् 'मयि वसुः'-इत्यादिक मुच्यते। मयि होतरि निवसति, तदापि प्रभूतनिवासं करोति। स तादृशो ग्रहो 'वाक्पाः' वाचं पालयति। हे ग्रह! मे वाचं पालय। 'इति' अनेन मन्त्रेणैन्द्रवायवशेषं भक्षयेत्। तस्य मन्त्रस्यावशिष्टभागं पठति— "उपहूता वाक् सह प्राणेनोप मां वाक् सह प्राणेन ह्वयता मुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मा ऋषयो दैव्यासो ह्वयन्तां, तनूपावानस्तन्वस्तपोजा इति"-इति। प्राणेन सह वाग् देवता मया 'उपहूता' अनुज्ञाता, तस्मात् प्राणसहिता सा वाग्देवता माम् 'उपह्वयताम्' अनुजानातु। तथा ऋषयः 'उपहूताः' मयानुज्ञाताः। कीदृशा ऋषयः? 'दैव्यासः' देवेषु भवाः। 'तनूपावानः' अस्मच्छरीरपालकाः; 'तन्वः' शरीरस्यास्मदीयस्य सम्बन्धिन इति शेषः। 'तपोजाः' पूर्वजन्मानुष्ठितात् तपसो जाताः। यस्मादीदृशा ऋषयो मयानुज्ञाताः, तस्मात् तेऽपि यथोक्तविशेषणाः माम् 'उपह्वयन्ताम्' अनुजानन्तु। 'इति' एष मन्त्रशेषः। अस्य शेषस्य तात्पर्यं दर्शयति— "प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते"-इति। यथोक्तविशेषणविशिष्टा ऋषयः प्राणस्वरूपा एव, तस्मात् तेन मन्त्रशेषपाठेन 'तानेव' प्राणाननुजानाति॥

मैत्रावरुणग्रहस्य समन्त्रकं शेषभक्षणं मन्त्रशेषव्याख्यानं च दर्शयति— "एष वसुर्विदद्वसुरिह वसुर्विदद्वसुर्मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीति मैत्रावरुणं भक्षयत्युपहूतं चक्षुः सह मन-

सोप मां चक्षुः सह मनसा ह्वयता मुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मा मृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ; प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते"--इति । 'एषः' मैत्रावरुणग्रहः, 'विद्द्वसुः' ज्ञानपूर्वकनिवासहेतुः । अन्यत् सर्वं पूर्ववत् ॥

आश्विनग्रहशेषस्य समन्त्रकं भक्षणं मन्त्रशेषव्याख्यानं च दर्शयति— "एष वसुः संयद्वसुरिह वसुः संयद्वसुर्मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीत्याश्विनं भक्षयत्युपहूतं श्रोत्रं सहात्मनोप मां श्रोत्रं सहात्मना ह्वयता मुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मा मृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ; प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते"–इति । 'एषः' आश्विनग्रहः, 'संयद्वसुः' नियतनिवासः । अथवा वसुशब्दः सर्वत्र धनपरत्वेन व्याख्येयः । मन्त्रशेषस्य पृथक् पाठो व्याख्येयत्वप्रदर्शनार्थः ॥

भक्षणे कञ्चिद्विशेषं विधत्ते–– "पुरस्तात्प्रत्यञ्चं मैन्द्रवायवं भक्षयति, तस्मात् पुरस्तात् प्राणापानौ ; पुरस्तात् प्रत्यञ्चं मैत्रावरुणं भक्षयति, तस्मात् पुरस्ताच्चक्षुषी ; सर्व्वतः परिहार माश्विनं भक्षयति, तस्मान्मनुष्याश्च पशवश्च सर्वतो वाचं वदन्तीं शृण्वन्ति"--इति । प्राङ्मुखो होता स्वस्य पुरस्तात्सन्त मैन्द्रवायवं 'प्रत्यञ्चं' तथैव स्ववक्त्रसमीपवर्त्तिनं कृत्वा भक्षयेत् । अत एव पुरुषस्य प्राणापानवायू पुरोभागे सम्पन्नौ । मैत्रावरुणेऽपि समानन्यायः । आश्विनं तु 'सर्वतः परिहारं' सर्वासु दिक्षु परितो हरणं कृत्वा, शिरः प्रदक्षिणीकृत्येत्यर्थः । यस्माच्छ्रोत्ररूपस्याश्विनस्य परितो हरणं, तस्माच्छ्रोत्रेण 'सर्वतः शृण्वन्ति' पुरतः पृष्ठतः पार्श्वयोः 'वाचं वदन्तीं'

स्वार्थ मभिदधानां वाचं शृण्वन्ति। यथा होतुरीदृश' भक्षणं, तथाध्वर्योरपि शाखान्तरे श्रूतम् – "वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रा-वरुणः श्रोत्र माश्विनः; पुरस्तादैन्द्रवायवं भक्षयति, तस्मात् पुर-स्ताद्वाचा वदति; पुरस्तान् मैत्रावरुणं, तस्मात् पुरस्ताच्चक्षुषा पश्यति; सर्वतः परिहार माश्विनं, तस्मात् सर्वतः श्रोत्रेण शृणोति (तै० सं० ६. ४. ९. ४.)"-इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये तृतीयः खण्डः ॥ ३ (२७) ॥

---

॥ अथ चतुर्थः खण्डः ॥

प्राणा वै द्विदेवत्या' अनवानं द्विदेवत्यान्यजेत्' प्राणानां सन्तत्यै' प्राणाना मव्यवच्छेदाय प्राणा वै द्विदेवत्या न द्विदेवत्याना मनुवषट् कुर्याद् यद् द्विदे-वत्याना मनुवषट् कुर्यादसंस्थितान् प्राणान्त्संस्था-पयेत्संस्था वा एषा यदनुवषट्कारो' य एनं तत्र ब्रूयादसंस्थितान् प्राणान्त्समतिष्ठिपत्' प्राण एनं हास्यतीति शश्वत्तथा स्यात्तस्मान्न द्विदेवत्याना मनु-वषट् कुर्यात्' तदाहुर्द्विरागूर्य मैत्रावरुणो द्विः प्रेष्यति'

सकृदागूर्य होता द्विर्वषट्करोति का होतुरागूरिति प्राणा वै द्विदेवत्या आगूर्वज्रस्तद्यदत्र होतान्तरेणा-गुरेतागुरा वज्रेण यजमानस्य प्राणान् वीयाद्य एनं तत्र ब्रूयादागुरा वज्रेण यजमानस्य प्राणान् व्यगा-त्प्राण एनं हास्यतीति शश्वत्तथा स्यात् तस्मात्तत्र होतान्तरेण नागुरेताथो मनो वै यज्ञस्य मैत्रावरुणो वाग्यज्ञस्य होता मनसा वा इषिता वाग्वदति यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा तद्यदेवात्र मैत्रावरुणो द्विरागुरते सैव होतु-रागूः ॥ ४ ( २८ ) ॥

अथ द्विदेवत्यग्रहेषु होत्रा प्रयोक्तव्यानां मन्त्राणां मध्ये उच्छ्वासं विधत्ते—"प्राणा वै द्विदेवत्याः; अनवानं द्विदेवत्यान्यजेत्, प्राणानां सन्तत्यै,—प्राणाना मव्यवच्छेदाय"–इति। द्विदेवत्यग्रहेषु याज्यां पठन् होता 'अनवानं यजेत्' मन्त्रमध्ये उच्छ्वास मकृत्वा यजेत्। द्विदेवत्यानां प्राणरूपत्वादयं नैरन्तर्यपाठः प्राणानां सन्ततावस्थापनाय भवति। ततस्तेषां व्यवच्छेदो न भवति। सन्ततिरव्यवच्छेदश्चेत्येक एवार्थोऽन्वयव्यतिरेकाभ्या मुच्यते। इतरेषु ग्रहेषु याज्यान्ते वषट्कारेण सकृद्धुत्वा सोमस्य "अग्ने वीहि"–इत्यनु-वषट्कारेण (१५८पृ०) पुनर्यजति। अतः प्रसक्त मनुवषट्कारमन्त्रं निषेधति— "प्राणा वै द्विदेवत्याः; न द्विदेवत्याना मनुवषट्कुर्यात्" –इति। विपक्षे बाधपुरःसरं स्वपक्षं निगमयति—"यद् द्विदेवत्याना मनुवषट् कुर्यादसंस्थितान् प्राणान्त्संस्थापयेत्; संस्था वा एषा यदनु-

वषट्कारो,—य एनं तत्र ब्रूयादसंस्थितान् प्राणान्त्समतिष्ठिपत्, प्राण एनं हास्यतीति, शश्वत्तथा स्यात्; तस्मान्न द्विदेवत्याना मनुवषट् कुर्यात्"-इति। यदि होता द्विदेवत्येष्वनुवषट्कारमन्त्रं पठेत्, तदानीं मसंस्थितानसमाप्तानननुपरतान् प्राणान् 'संस्थापयेत्' उपरतान् कुर्यात्। योऽय मनुवषट्कारः, एषैव 'संस्था' ग्रहस्य समाप्तिः। अतो ग्रहरूपाणां प्राणाना मप्युपरतिः स्यात्। 'तत्र' अनुवषट्कारकाले यः कोऽपि 'एनं' होतारं 'ब्रूयात्' शपेत्। कथ मिति तदुच्यते,— अनुपरतान् प्राणानुपरतानकरोत्। तस्मात् 'एनं' होतारं प्राणः परित्यजतीति। ततोऽपराधिनो होतुरवश्यं तथा भवेत्। तस्मादेतेष्वनवषट्कारमन्त्रं न पठेत्॥

अथैन्द्रवायवे कञ्चिद्विशेषं वक्तुं प्रश्न मुत्थापयति— "तदाहुर्द्विरागूर्य मैत्रावरुणो द्विः प्रेष्यति; सकृदागूर्य होता द्विर्वषट् करोति, का होतुरागूरिति"--इति। 'आगूः'-शब्देन प्रतिज्ञा अभिधीयते। मैत्रावरुणो 'द्विरागूर्य' द्विः प्रतिज्ञाय 'द्विः प्रेष्यति'; द्वावस्य प्रैषमन्त्रौ—"होता यक्षद्वायु मग्रेगाम्"--इत्येकः, "होता यक्षदिन्द्रवायू अर्हन्त"-इति द्वितीयः*। तयोरुभयोरप्यादौ अयं† "होता यक्षत्"-इति द्विः प्रतिजानाति। द्वयोर्मन्त्रयोरन्ते 'होतर्यज', 'होतर्यज' इति द्विः प्रेष्यति। होता तु "अग्रं पिबा मधूनाम्"--इत्यादिके (सं० ४.४६.१,२.) द्वे याज्ये पठितु मादौ "ये यजामहे"--इति ( वा० सं० १९.२४. ) सकृदेव प्रतिजानीते; द्वयोर्याज्ययोरन्ते वौषड्वौषडिति द्विर्वषट्करोति। तत्र न्यायेन द्वितीयमन्त्रादावपि "ये यजामहे"-इत्यागूःकरण मपेक्षितम्;

---

* "होता यक्षद्वायु मग्रेगाम्, होता यक्षदिन्द्रवायू अर्हन्तेति प्रैषानवानम्"—इति आश्व० श्रौ० ५.५.२।

† मैत्रावरुणः।

तच्च न क्रियते। तस्माद्धोतुर्द्वितीययाज्यादावागूः का नाम स्यात्? इति प्रश्नः। द्वितीययाज्यादौ मा भूदेवागूरित्येतदुत्तरम्॥

विपक्षबाधपूर्वकं सिद्धान्तं दर्शयति—"प्राणा वै द्विदेवत्या आगूर्वज्रस्तद्यदत्र होतान्तरेणागुरेतागुरा वज्रेण यजमानस्य प्राणान्वीयाद्; य एनं तत्र ब्रूयादागुरा वज्रेण यजमानस्य प्राणान् व्यगात्, प्राणा एनं हास्यतीति; शश्वत्तथा स्यात्; तस्मात्तत्र होतान्तरेण नागुरेत"—इति। द्विदेवत्यग्रहाः प्राणरूपाः। येय मागूः "ये यजामहे"—इति प्रतिज्ञा, सा वज्ररूपा। तथा सति 'अत्र' कर्म्मणि 'अन्तरेण' याज्ययोर्म्मध्ये यदि होता 'आगुरेत' प्रतिजानीयात्। तदानी मागूः-स्वरूपेण वज्रेण यजमानस्य प्राणान् 'वीयात्' विगतान् कुर्यात्। 'तत्र' तस्या मागुरि क्रियमाणायां यः कोऽपि 'एनं' होतारं शपेत्। कथ मिति तदुच्यते,— आगुरा वज्रेण होता यजमानस्य प्राणान् 'व्यगात्' विगतान् अकरोत्। तस्मात् प्राणः 'एनं' यजमानं होतारं वा परित्यजतीति तेन कृतः शापो ऽवश्यं तथैव स्यात्। तस्मात् 'तत्र' तयोः याज्ययोः 'अन्तरेण' मध्ये होता नागुरेत॥

तत्रैव युक्त्यन्तर माह— "अथो मनो वै यज्ञस्य मैत्रावरुणो, वाग्यज्ञस्य होता, मनसा वा इषिता वाग्वदति; यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा; तद्यदेवात्र मैत्रावरुणो द्विरागुरते, सैव होतुरागूः"—इति। अपि च मैत्रावरुणो यज्ञस्य मनःस्थानीयः, होता तु वाक्स्थानीयः; लोके हि मनसा प्रेरिता 'वाक्' वक्तव्यं ब्रूते। यस्त्वन्यमनस्को यां वाचं वदति, तत्र सा वागसुरेभ्यस्तामसेभ्यो हिता; तेषा मसम्बन्धप्रलापप्रियत्वात्। न त्वसौ वाक् सात्विकानां देवानां प्रिया। तस्मात् मनःपूर्विकैव

वाग्वक्तव्या। तथा सत्यत्र मनोरूपो मैत्रावरुणो 'द्विरागुरते' इति यदस्ति, सैव तत्प्रेषितस्य वाग्रूपस्य 'होतुरागूः' द्वितीया भविष्यति। तस्माद्याज्ययोर्मध्ये होता नागुरेत ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये चतुर्थः खण्डः ॥ ४ (२८) ॥

---

॥ अथ पञ्चमः खण्डः ॥

प्राणा वा ऋतुयाजास्तद्यदृतुयाजैश्चरन्ति प्राणानेव तद्यजमाने दधति षळृतुनेति यजन्ति प्राण मेव तद्यजमाने दधति चत्वार ऋतुभिरिति यजन्त्य-पान मेव तद्यजमाने दधति द्विर्ऋतुनेत्युपरिष्टाद् व्यान मेव तद्यजमाने दधति स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति तद्यदृतुन-ऋतुभिर्ऋतुनेति यजन्ति प्राणानां सन्तत्यै प्राणाना मव्यवच्छेदाय प्राणा वा ऋतुयाजा नर्तुयाजाना मनुवषट् कुर्यादसंस्थिता वा ऋतव एकैक एवं यदृतु-याजाना मनुवषट् कुर्यादसंस्थितानृतून्त्संस्थापये-त्संस्था वा एषा यदनुवषट्कारो य एनं तत्र ब्रूया-

दसंस्थितानृतून्त्समतिष्ठिपद् दुष्षमं भविष्यतीति शश्वत्तथा स्यात्तस्मान्नर्त्तुयाजाना मनुवषट् कुर्यात् ॥ ५ ( २९ ) ॥

ऋतुग्रहयागान्विधत्ते— "प्राणा वा ऋतुयाजास्तद्यदृतुयाजैश्चरन्ति, प्राणानेव तद्यजमाने दधति"-इति। मधुमाधवादय ऋतुदेवा यत्रेज्यन्ते, त एते 'ऋतुयाजाः' *। ते च प्राणस्वरूपाः प्राणशब्देन प्राणापानव्यानास्त्रयोऽपि विवक्षिताः। तैः ऋतुयाजैरनुतिष्ठेयुः, तेन प्राणानेव यजमाने स्थापयन्ति॥

ऋतुग्रहाश्च द्वादशसङ्ख्याकाः; तत्राद्येषु षट्सु कञ्चिद्विशेषं विधत्ते—"षळृतुनेति यजन्ति, प्राण मेव तद्यजमाने दधति"-इति। अध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषसूक्तगतैर्मन्त्रैः क्रमेण होत्रादीन् प्रेष्यति; तेन प्रेषिता होत्रादयः "ऋतुना सोमम्"-इत्येवं यजेयुः। एतेषां षसा मृतुयाजानां प्राणस्वरूपत्वात् होत्रादयः षड़पि यजमाने प्राणं स्थापयन्ति। सप्तम मारभ्य दशमान्ते विशेषं विधत्ते—"चत्वार ऋतुभिरिति यजन्ति, अपान मेव तद्यजमाने दधति"-इति। अध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषसूक्तगतैः सप्तमादिभिश्चतुर्भिः मन्त्रैः होत्रादीन् क्रमेण चतुरः प्रेष्यति। ते "ऋतुभिः सोमम्"-इति बहुवचनान्तप्रयोगेण चत्वारोऽपि यजेयुः। तेषां चतुर्णां मृतुयाजाना मपानवायुस्वरूपत्वात्तद्यागेनापान मेव यजमाने स्थापयन्ति। एकादश-

---

* 'ऋतुयाजैश्चरन्ति'-इत्यादीनि आश्व० श्रौ० ५. ८. १—७। शत० ब्रा० ४. ३. १. २—२०। कात्या० श्रौ० ९. १३. १—१९। तै० सं० १. ४. १४; ६. ५. ३। आप० १२. २६. ८—२७। निरु० ८. १. २।

द्वादशयोर्विशेषं विधत्ते— "द्विर्ऋतुनेत्युपरिष्टाद् व्यान मेव तद्यजमाने दधति"-इति। अध्वर्युप्रेषितो मैत्रावरुणः प्रैषसूक्तगताभ्या मेकादश-द्वादशाभ्यां मन्त्राभ्यां प्रेष्यति। तेन प्रेषितौ द्वावध्वर्युयजमानौ "ऋतुना सोमम्"-इत्येव मेकवचनान्तप्रयोगेण यजेताम्। अन्त्ययोर्द्वयोर्यागयोर्व्यानस्वरूपत्वात् तद्यागेन व्यान मेव यजमाने सर्वेऽपि ऋत्विजः स्थापयन्ति। अनेनैव क्रमेण मैत्रावरुणं प्रति अध्वर्योः प्रैष आपस्तम्बेन दर्शितः— "ऋतुना प्रेष्येति त्रिष्वाद्येष्वध्वर्युः सम्प्रेष्यत्येवं प्रतिप्रस्थाता; पात्रयोर्मुखे पर्याहृत्यर्तुभिः प्रेष्येति द्वयोरध्वर्युरेवं प्रतिप्रस्थाता; पुनः पर्याहृत्यर्तुना प्रेष्येति सकृदध्वर्युरेवं प्रतिप्रस्थाता"-इति ( श्रौ० १२.२६.१०—१९.)। तदेकवचनान्तबहुवचनान्तैकवचनान्तैः ऋतुशब्दैरुदाहृतः प्रैषः तैत्तिरीयब्राह्मणे * सङ्गृह्याम्नातः— "ऋतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून् प्रीणाति द्विः पुनर्ऋतुनाह द्विपद एव प्रीणाति"-इति (तै०सं०६.५.३.२.)। तानेतानृतुयाजान् प्रशंसति— "स वा अयं प्राणस्त्रेधा विहितः,—प्राणोऽपानो व्यान इति; तद्यदृतुनर्तुभिर्ऋतुनेति यजन्ति, प्राणानां सन्तत्यै,— प्राणाना मव्यवच्छेदाय"-इति। शरीरमध्ये स्थितस्य प्राणवायोः प्राणापानव्यानाख्याभिर्वृत्तिभिस्त्रिविधत्वात् ऋतुशब्दप्रयोगेण त्रिविधेन यजमानस्य प्राणाः सन्तता भवन्ति, न तु व्यवच्छिद्यन्ते॥

तेषु ऋतुयाजेष्वनुवषट्कारं निषेधति— "प्राणा वा ऋतुयाजा नर्तुयाजाना मनुवषट् कुर्यादसंस्थिता वा ऋतव एकैक

* मन्त्रभागीये इति ज्ञेयम्; तैत्तिरीयशाखाया ब्राह्मणग्रन्थेऽपि मन्त्रा आम्नाताः, तथा मन्त्रभागेऽपि ब्राह्मणवचनानीति।

एव"-इति । लोके वसन्तादय ऋतवः 'असंस्थिताः' असमाप्ताः, अनुपरताः ; एकैकस्यानन्तर मेव द्वितीय इत्येव मेकैकक्रमेण वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराख्याः प्रत्येकं मासद्वयेन द्वादश-मासात्मकाः, घटीयन्त्रवत् * पुनःपुनरावर्त्तन्ते । अतो न कदाचिदपि ऋतूना मुपरतिरस्ति ॥

विपक्षबाधपूर्वकं स्वपक्ष मुपसंहरति— "यदृतुयाजाना मनुवषट् कुर्यादसंस्थितानृतून्संस्थापयेत् संस्था वा एषा यदनुवषट्कारो य एनं तत्र ब्रूयादसंस्थितानृतून्समतिष्ठिपद् दुष्षमं भविष्यतीति शश्वत्तथा स्यात्, तस्मान्नर्त्तुयाजाना मनुवषट् कुर्यात्"-इति । 'दुष्षमं' रोगदारिद्र्यादिरूपं विषमं किञ्चिदस्वास्थ्यम् । अन्यत् पूर्ववद् व्याख्येयम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये
पञ्चमः खण्डः ॥ ५ ( २८ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

प्राणा वै द्विदेवत्याः पशव इळा द्विदेवत्यान् भक्षयित्वेळा मुपह्वयते पशवो वा इळा पशूनेव तदुपह्वयते पशून् यजमाने दधाति तदाहुरवा-

---

* 'उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहिः'—इति अम० को० २. १०. २७।

न्तरेळां पूर्वां प्राश्नीयाइत्' होतृचमसं भक्षयेइत्' इति अवान्तरेळा मेव पूर्वां प्राश्नीयादथ होतृचमसं भक्षयेद्यद्वाव द्विदेवत्यान् पूर्वान् भक्षयति' तेनास्य सोमपीथः पूर्वो भक्षितो भवति' तस्मादवान्तरेळा मेव पूर्वां प्राश्नीयादथ होतृचमसं भक्षयेत्' तदुभयतो ऽन्नाद्यं परिगृह्णाति सोमपीथाभ्या मन्नाद्यस्य परिगृहीत्यै' प्राणा वै द्विदेवत्या' आत्मा होतृचमसो द्विदेवत्यानां संस्रवान्' होतृचमसे समवनयत्यात्मन्येव तद्धोता' प्राणान्त्समवनयते' सर्वायुः सर्वायुत्वाय' सर्व मायुरेति य एवं वेद' ॥ ६ (३०) ॥

सवनीयपशुपुरोडाशप्रचारादूर्ध्वं तदङ्ग मिळोपह्वान मवस्थाप्य द्विदेवत्यग्रहप्रचारः कृतः। तत ऊर्ध्वं तद्ग्रहशेषभक्षण मपि प्राप्तम्। तत्र इळोपह्वानग्रहशेषभक्षणयोः किं पूर्वं कि मपर मिति क्रमस्य ज्ञातु मशक्यत्वात् तं क्रमं विधत्ते— "प्राणा वै द्विदेवत्याः पशव इळा, द्विदेवत्यान् भक्षयित्वेळा मुपह्वयते; पशवो वा इळा पशूनेव तदुपह्वयते,— पशून् यजमाने दधाति" –इति। द्विदेवत्यानां वागादिप्राणरूपत्वं पूर्व मेवोक्तम्; इळा देवता च "गौर्वा अस्यै शरीरम्"–इतिश्रुतेः पशुरूपा। तत्रैवं स्थिते प्रथमतो द्विदेवत्यग्रहशेषान् भक्षयित्वा पश्चादिळोपह्वानं कुर्यात्। तथा सतीळायाः पशुरूपत्वेन पशूनेव उपहूतवान् भवति। तांश्च पशून् स्वकीयैः प्राणैः सुस्थिते यजमाने स्थापयति। अय मेवार्थो व्यतिरेकमुखेन श्रुत्यन्तरे प्रतिष्ठापितः— "प्राणा वा एते यद्

द्विदेवत्याः पशव इडाः *; यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत, पशुभिः प्राणानन्तर्दधीत, प्रमायुकः स्यात्; द्विदेवत्यान् भक्षयित्वेडा मुपह्वयते, प्राणानेवात्मन् धित्वा पशूनुपह्वयते"--इति ( तै० सं० ६. ४. ९. ३. )। इत्थं द्विदेवत्यभक्षणस्य पूर्वभावित्व मिळोपह्वानस्य पश्चाद्भावित्वं च व्यवस्थापितम्। तदेतदिळापात्रभाग मवदाय क्रियमाण मुपह्वानम्।

या तु होतुर्हस्तसम्पादितावान्तरेळा †, तत्प्राशनस्य होतृचमसभक्षणस्य च पौर्वापर्यं विचार्य निश्चिनोति— "तदाहुर-वान्तरेळाम्पूर्वां प्राश्नीया३त् होतृचमसम्भक्षये३त् इति अवान्तरेळा मेव पूर्वां प्राश्नीयादथ होतृचमसम्भक्षयेत्"-इति। विचारार्थं प्लुतिद्वयम् ‡। अवान्तरेळाप्राशनं पूर्वभावि, चमसभक्षणं पश्चाद्भावीति निर्णयः। तदेतदुपपादयति— "यद्वाव द्विदेवत्यान् पूर्वान् भक्षयति, तेनास्य सोमपीथः पूर्वो भक्षितो भवति; तस्मादवान्तरेळा मेव पूर्वां प्राश्नीयादथ होतृचमसं भक्षयेत्; तदुभयतो ऽन्नाद्यं परिगृह्णाति, सोमपीथाभ्या मन्नाद्यस्य परिगृहीत्यै"–इति। द्विदेवत्यानां भक्षणं पूर्वभावीति यदस्ति, तेन सोमपानरूपस्य भक्षस्येळाप्राशनात् पूर्वत्वं सिध्यति। तत इळां प्राश्य होतृचमसभक्षणे सति उपरिष्टादपि सोमभक्षणसिद्धेरिळायाः 'उभयतः' पार्श्वद्वयेऽपि सोमपानाभ्या मयं होता अन्नाद्यं परिगृह्णाति, तच्च यजमानस्यान्नाद्यपरिग्रहाय भवति ॥

---

*, † इह भाष्यपुस्तकेषु क्वचित् 'इळा' इति, क्वचित् 'इडा' इति पाठः; वस्तुतः ऋक्प्रातिशाख्ये उभयस्वरमध्यगतस्य डकारस्य ळकारो विहित इति ( १५ पृ० ) तद्भाष्यादावपि सर्वत्रैव ळएव उचितः, तैत्तिरीयोद्धृतपाठादौ तु डएवेत्यवधाकम्।

‡ "विचार्यमाणानाम्"–इति पा० सू० ८. २. ९७।

द्विदेवत्यग्रहशेषस्य विन्दोर्होतृचमसे प्रक्षेपं विधत्ते— "प्राणा वै द्विदेवत्या आत्मा होतृचमसो द्विदेवत्यानां संस्रवान् होतृचमसे समवनयत्यात्मन्येव तद्धोता प्राणान्त्समवनयते सर्वायुः सर्वायुत्वाय"-इति । संस्रवा विन्दवः ; तत्प्रक्षेपेण द्विदेवत्यरूपान् प्राणान् 'आत्मन्येव' शरीरे होतृचमसरूपे होता प्रक्षिपति । प्राणाना मवस्थापनात् स्वयं 'सर्वायुः' अपमृत्युरहितो भवति । तद्यजमानस्य सर्वायुत्वाय सम्पद्यते ॥

वेदनं प्रशंसति— "सर्व मायुरेति य एवं वेद"-इति ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये
षष्ठः खण्डः ॥ ६ ( ३० ) ॥

---

॥ अथ सप्तमः खण्डः ॥

देवा वै यदेव यज्ञे ऽकुर्वंस्तदसुरा अकुर्वंस्ते समावद्वीर्या एवासन्न व्यावर्तन्त ततो वै देवा एतं तूष्णींशंस मपश्यंस्त मेषा मसुरा नान्ववायंस्तूष्णीं सारो वा एष यत्तूष्णींशंसो देवा वै यं य मेवं वज्र मसुरेभ्य उदयच्छंस्तं त मेषा * मसुराः प्रत्यबुध्यन्त ततो वै देवा एतं तूष्णींशंसं वज्र मपश्यंस्त मेभ्य उद-

---

* '०स्त मेषा' ख, ग ।

यच्छंस्त मेषा मसुरा न प्रत्यबुध्यन्त त मेभ्यः प्राहरं-स्तेनैनानप्रतिबुद्धेनाघ्नंस्ततो वै देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ते वै देवा विजितिनो मन्यमाना यज्ञ-मतन्वत त मेषा मसुरा अभ्यायन् यज्ञवेशस मेषां करिष्याम इति तान्त्समन्त मेवोदारान् परियत्ता-नुदपश्यंस्ते ऽब्रुवन्त्संस्थापयामेमं यज्ञं यज्ञं नो ऽसुरा मा वधिषुरिति तथेति तं तूष्णींशंसे संस्थापयन् भूरग्निर्ज्योतिर्ज्योतिरग्निरित्याज्यप्रउगे संस्थापय-न्निन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति निष्केवल्य-मरुत्वतीये संस्थापयन्त्सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति वैश्वदेवाग्निमारुते संस्थापयंस्त मेवं तूष्णीं-शंसे संस्थापयंस्त मेवं तूष्णींशंसे संस्थाप्य तेना-रिष्टेनोदृच माश्नुवत स तदा वाव यज्ञः सन्ति-ष्ठते यदा होता तूष्णींशंसं शंसति स य एनं शस्ते तूष्णींशंस उप वा वदेदनु वा व्याहरेत्तं ब्रूयादेष एवैता मार्त्तिं मारिष्यति प्रातर्वाव वय मद्येमं शस्ते तूष्णींशंसे संस्थापयामस्तं यथा गृहानितं कर्मणा-नुसमियादेव मेवैन मिद मनुसमिम इति स ह वाव ता मार्त्तिं मृच्छति य एवं विद्वान्त्संशस्ते तूष्णींशंस

उप वा वदत्यनु वा व्याहरति तस्मादेवं विद्वाञ्छंशस्ते तूष्णींशंसे नोपवदेन्नानुव्याहरेत् ॥ ७ ( ३१ )॥

अथ तूष्णींशंसविधानार्थ मितिहास माह— "देवा वै यदेव यज्ञे ऽकुर्वंस्तदसुरा अकुर्वंस्ते समावद्वीर्या एवासन्न व्यावर्तन्त ; ततो वै देवा एतं तूष्णींशंस मपश्यंस्त मेषा मसुरा नान्ववायंस्तूष्णींसारो वा एष यत्तूष्णींशंसः"—इति। देवाः पुरा स्वकीये यज्ञे यदेवाङ्ग मन्वतिष्ठन्, असुरा अप्यवेक्ष्य तदेवान्वतिष्ठन्, तदा ते देवाश्चासुराश्च परस्परं 'समावद्वीर्याः' तुल्यसामर्थ्या एवाभवन्,— एकस्य वर्गस्य सामर्थ्याधिक्य मितरस्य न्यून मित्येवं व्यावृत्तिं न प्राप्ताः। ततो देवाः सामर्थ्याधिक्यलक्षणव्यावृत्तिहेतुं वेदेष्वन्विच्छन्तः। एवं वक्ष्यमाणं तूष्णींशंसं तदुपायत्वेन दृष्टवन्तः। सर्वेष्वपि शस्त्रेष्वप्यृचः पठ्यन्ते, अस्मिंस्तु शस्त्रे न पठ्यन्ते इति तूष्णींशंसत्व मृक्पाठराहित्येन गूढ़म्। 'एषां' देवानां तूष्णींशंस मसुराः 'नान्ववायन्' नानुगतवन्तः, एतदनुष्ठान मविज्ञाय न कृतवन्त इत्यर्थः। योऽयं तूष्णींशंस एषः 'तूष्णींसारो वै' ऋक्पाठराहित्यलक्षणः तूष्णीम्भाव एवास्मिन् शस्त्रे शस्तः; असुराणां तु निष्फलं तूष्णी मवस्थान मिति निश्चयः॥

अस्य तूष्णींशंसस्यासुरविनाशहेतुत्वं दर्शयति— "देवा वै यं य मेव वज्र मसुरेभ्य उदयच्छंस्तं त मेषा मसुराः प्रत्यबुध्यन्त ; ततो वै देवा एतं तूष्णींशंसं वज्र मपश्यंस्त मेभ्य उदयच्छंस्त मेषा मसुरा न प्रत्यबुध्यन्त ; त मेभ्यः प्राहरंस्तेनैनानप्रतिबुद्धेनाघ्नंस्ततो वै देवा अभवन् परासुराः"—इति। देवाः असुरविनाशार्थ मायुधरूपं मन्त्ररूपम् अभिचाररूपं वा यं यं वज्रं प्रयुक्तवन्तः,

'एषां' देवानां तं तं वज्र मसुराः 'प्रत्यबुध्यन्त' तदा तदा प्रतिकारं ( मन्त्ररूप मभिचाररूपं वा * ) कुर्वन्ति। ततो देवा एतं तूष्णींशंसनम् वज्रत्वेन दृष्ट्वा तदसुरविनाशार्थं प्रयुक्तवन्तः। असुरास्तु देवानां तं तूष्णींशंस मज्ञात्वा प्रतिकारं न कृतवन्तः। ततो निर्विघ्नेन देवास्तं तूष्णींशंसं वज्र मसुराणा मुपरि 'प्राहरन्' तद्विनाशार्थं प्रयुक्तवन्तः। असुरैरविज्ञातेन तेनैवासुरान् हतवन्तः। ततो देवा विजयिनो ऽभवन्। मुख्येष्वसुरेषु हतेष्ववशिष्टा असुराः पराभूताः॥ एतद्वेदनं प्रशंसति— "भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद"-इति॥

अथोपाख्यानमुखेनैव तूष्णींशंसस्य स्वरूपं दर्शयति,— "ते वै देवा विजितिनो मन्यमाना यज्ञ मतन्वत; त मेषा मसुरा अभ्यायन्,—यज्ञवेशस मेषां करिष्याम इति; तान्त्समन्त मेवोदारान् परियत्तानुदपश्यंस्ते ऽब्रुवन्त्संस्थापयामेमं यज्ञं यज्ञं नो ऽसुरा मा वधिषु रिति; तथेति; तं तूष्णींशंसे संस्थापयन्; भूरग्निर्ज्योतिरग्निरित्याज्यप्रउगे संस्थापयन्निन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति निष्केवल्यमरुत्वतीये संस्थापयन्त्सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति वैश्वदेवाग्निमारुते संस्थापयंस्त मेवं तूष्णींशंसे संस्थापयंस्त मेवं तूष्णींशंसे संस्थाप्य तेनारिष्टेनोदृच माश्नुवत"-इति। मुख्याना मसुराणां हतत्वात् ते देवाः 'विजितिनः' विजयवन्तो वय मिति मन्यमाना यज्ञं विस्तारितवन्तः। 'एषां' देवानां यज्ञ मभिलक्ष्यासुरास्तत्र गताः। केनाभिप्रायेणेति, तदुच्यते— 'एषां' देवानां 'यज्ञवेशसं' यज्ञविघातं करिष्याम इति तदभिप्रायः। ततो देवाः 'समन्त मेव' पुरतः पृष्ठतः पार्श्वयोश्च समागतान्, 'उदारान्'

---

* अस्मच्चिह्नान्तःपाठो ख-घ-पुस्तकयोर्नास्ति।

उद्गतान्, 'पर्य्यत्तान्' * अत्यन्तसन्निधीन् 'उदपश्यन्' उदङ्मुखाः सन्तो दृष्टवन्तः। दृष्ट्वा च परस्पर मिद मब्रुवन्.—इमं यज्ञं 'संस्थापयामः' शीघ्रं समापयामः। तथा सति 'नः' अस्मदीयं यज्ञ मसुराः 'मा वधिषुः' मा विनाशयन्तु; विलम्बे सति विनाशयिष्यन्ति, तन्माभूदिति। तद्वचनं परस्पर मङ्गीकृत्य स्वकीयं तं यज्ञं तूष्णींशंसे 'संस्थापयन्' शीघ्रं समापितवन्तः। यद्वा तूष्णींशंसस्य वज्ररूपेण रक्षकत्वाद्रक्षार्थं तस्मिन् स्थापितवन्तः। कोऽयं तूष्णींशंस इति, स उच्यते— "भूरग्निर्ज्योतिर्ज्योतिरग्निः"-'इति' एष नवाक्षरात्मको मन्त्र एकस्तूष्णींशंसभागः। आज्यं प्रउगं चेति उभे प्रातःसवनकालीने शस्त्रे; तदुभय मप्युक्ते तूष्णींशंसभागे स्थापितवन्तः। "इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः"-'इति' एष दशाक्षरात्मको मन्त्रो द्वितीयस्तूष्णींशंसभागः। निष्केवल्यं मरुत्वतीयं चेत्युभे माध्यन्दिनसवनकालीने शस्त्रे; तदुभय मिन्द्रोज्योतिरित्यस्मिंस्तूष्णींशंसभागे स्थापितवन्तः। "सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यः"-'इति' एव नवाक्षरात्मको मन्त्रस्तृतीयस्तूष्णींशंसभागः। वैश्वदेव मग्निमारुतं चेत्युभे तृतीयसवनकालीने शस्त्रे; तदुभयं सूर्योज्योतिरित्यादिके तूष्णींशंसभागे स्थापितवन्तः †। 'तं' सवनत्रयगतैः षड्भिः शस्त्रैरुपेतं यज्ञम् 'एवम्' उक्तप्रकारेण तूष्णींशंसे स्थापितवन्त इत्येव मुक्तार्थस्योपसंहारः। पुनस्तमेव मित्यादिः उक्तार्थानुवादः। षड्विधशस्त्रसंस्थापनादूर्द्ध्वम् 'अरिष्टेन' हिंसारहितेन

---

* मद्दृष्टेषु सर्वेष्वेव, मूलपुस्तकेषु 'परियत्तान्'-इति तथा टीकापुस्तकेषु 'पर्य्यत्तान्'-इति विभिन्नौ पाठौ। किञ्च टीकाग्रन्थेषूद्धृतमूलग्रन्थपाठोऽपि 'परियत्तान्'-इत्येव।

† "भूरग्निर्ज्योतिर्ज्योतिरग्नीम्, इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रोम्, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्योमिति त्रिपदस्तूष्णींशंसः"—इति आश्व० श्रौ० ५.९.११।

'तेन' यज्ञेन 'उदृचम्' उत्तमा मृचं यज्ञसमाप्तिम् 'आश्नुवत' प्राप्तवन्तः ॥

इत्थ माख्यायिकामुखेन तूष्णींशंसस्वरूप मभिधाय तदनुष्ठानं विधत्ते— "स तदा वाव यज्ञः सन्तिष्ठते, यदा होता तूष्णींशंसं शंसति"-इति। यस्मिन् काले होता त मिमं मन्त्रं शंसेत्, तदैव स यज्ञो निर्विघ्नः समाप्यते ; तस्मात् होत्रा तच्छस्त्रं शंसनीयम्। तत्प्रकार आश्वलायनेन दर्शितः—"सुमत्पद्वग्दे पिता मातरिश्वा छिद्रापधादच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथानिनेषद् बृहस्पतिरुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्व मायुः, क इदं शंसिष्यति, स इदं शंसिष्यतीति जपित्वा ऽनभिहिङ्कृत्य शोंसावो मित्युच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणव मसन्तन्वन्नेव आहावः प्रातःसवने शस्त्रादिषु"-इति ( श्रौ० ५.९.१,२.)। अस्याय मर्थः— ऋतुपात्रभक्षणानन्तरं होतुर्मुखतः आसीनोऽध्वर्युः पराङ्मुखः सन्नावर्त्तते, तदानीं होता सुमदित्यादि स इदꣳ शंसिष्यतीत्यन्तं मन्त्रं जपित्वा, अभिहिङ्कार मकृत्वा, शोंसावो मित्यनेन मन्त्रेणाध्वर्यु मुच्चैराहूय, भूरग्निरित्यादिकं प्रणवसहित मुपांशु पठेत्। प्रणवेन सह असन्तत मविच्छेदनं कुर्यात्। एष शोंसावो मिति मन्त्रो ऽध्वर्योराह्वानरूपत्वादाहाव इत्युच्यते। स च प्रातःसवने शस्त्रादिषु प्रवर्त्तते इति ॥

उक्तं तूष्णींशंसनं प्रशंसति—"स य एनं शस्ते तूष्णींशंस उप वा वदेदनु वा व्याहरेत्, तं ब्रूयादेष एवैता मार्त्ति मारिष्यति प्रातर्वाव वय मद्येमं शस्ते तूष्णींशंसे संस्थापयामस्तं यथा गृहा-नितं कर्मणानुसमियादेव मेवैन मिद मनुसमिम इति स ह वाव ता मार्त्ति मृच्छति य एवं विद्वांस्तंशस्ते तूष्णींशंसे उप वा वदत्यनु

वा व्याहरति ; तस्मादेवं विद्वान्त्संशस्ते तूष्णींशंसे नोपवदेन्नानुव्याहरेत्"–इति । होता तूष्णींशंसे शस्ते सति 'एनं' होतारं सः 'उपवदेद्वा अनुव्याहरेद्वा' यः कोऽप्यन्यः पुरुषो निन्देत् शपेत् वा;— उपवादो निन्दा, अनुव्याहारः शापः; तदानी मयं होता निन्दितारं शप्तारं वा ब्रूयात् । कथं ब्रूयादिति, तदुच्यते— यो निन्दिता शप्ता वास्ति, एष एव निन्दारूपां शापरूपां वा 'आर्त्तिं' विनाशम् 'आरिष्यति' प्राप्स्यति, न त्वहं प्राप्स्यामि । तत्र हेतुरुच्यते— 'प्रातर्वाव' प्रातःसवने एव 'वयं' होतारः 'अद्य' अस्मिन्दिवसे अस्माभिः शस्ते तूष्णींशंसे त मिमं यज्ञं 'संस्थापयामः' समापयामः । यथा लोके 'गृहानितं' स्वकीयान् गृहान् प्राप्त मतिथिं 'कर्म्मणा' आतिथ्यसत्काररूपेण 'अनुसमियात्' आनुकूल्येन सम्यक् प्राप्नुयात्, उपचरेदित्यर्थः । 'एवम्' एव मपि 'इदं' तूष्णींशंसानुष्ठानं कृत्वा 'एनं' यज्ञं 'अनुसमिमः' आनुकूल्येन सम्यक् प्राप्नुमः, उपचरेम इत्यर्थः । एष एवेत्यादिकोऽनुसमिम इत्यन्तः, निन्दाशापपरिहारार्थो मन्त्रः; तं होता ब्रूयात् । तस्मिन्नुक्ते सति यः पुमान् स्वयं विद्वानेव सन् तूष्णींशंसस्य शंसनादूर्द्ध्वं निन्दति शपति वा, स एव ता मार्त्तिम् आप्नोति । तस्मात् कारणात् 'एवम्' उक्तार्थं विद्वान् पुरुषः तूष्णींशंसपाठादूर्द्ध्वं होतारं न निन्देत् नापि शपेत् ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये
सप्तमः खण्डः ॥ ७ ( ३१ ) ॥

———

॥ अथ अष्टमः खण्डः ॥

चक्षूंषि वा एतानि सवनानां यत्तूष्णींशंसो भूरग्निर्ज्योतिर्ज्योतिरग्निरिति प्रातःसवनस्य चक्षुषी इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति माध्यन्दिनस्य सवनस्य चक्षुषी सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति तृतीयसवनस्य चक्षुषी चक्षुष्मद्भिः सवनै राध्नोति चक्षुष्मद्भिः सवनैः स्वर्गं लोक मेति य एवं वेद चक्षुर्वा एतद्यज्ञस्य यत्तूष्णींशंस एका सती व्याहृतिर्द्वेधोच्यते तस्मादेकं सच्चक्षुर्द्वेधा मूलं वा एतद्यज्ञस्य यत्तूष्णींशंसो यं कामयेतानायतवान्स्यादिति नास्य यज्ञे तूष्णींशंसं शंसेदुन्मूल मेव तद्यज्ञं पराभवन्त मनु पराभवति तदु वा आहुः शंसेदेवापि वै तदृत्विजे हितं यद्धोता तूष्णींशंसं न शंसत्यृत्विजि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानस्तस्माच्छंस्तव्यः शंस्तव्यः ॥ ८ ( ३२ ) ॥

॥ इत्यैतरेयब्राह्मणे द्वितीयपञ्चिकायां चतुर्थोऽध्यायः॥४॥

अथ प्रकारान्तरेण तूष्णींशंसं प्रशंसति—"चक्षूंषि वा एतानि सवनानां यत्तूष्णींशंसो; भूरग्निर्ज्योतिर्ज्योतिरग्निरिति प्रातःसवनस्य चक्षुषी, इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति माध्यन्दिनस्य सवनस्य चक्षुषी, सूर्यो ज्योतिर्ज्योतिः स्वः

सूर्य इति तृतीयसवनस्य चक्षुषी"-इति। यत्तूष्णींशंसोऽस्ति, 'एतानि' एव तद्गतानि पदानि त्रयाणां सवनानां चक्षुःस्थानीयानि। कथ मेतदिति तदेव, स्पष्टीक्रियते—'भूरग्निर्ज्योतिः'-इति प्रथमस्य तूष्णींशंसपादस्य पूर्वो भागः, स च प्रातःसवनस्य दक्षिणचक्षुःस्थानीयः; 'ज्योतिरग्निः'-इत्यय मुत्तरो भागो वामचक्षुःस्थानीयः; भूलोकवर्ती योऽग्निः, स एवैको गोलकद्वये प्रकाशक इत्यर्थः। 'इन्द्रो ज्योतिः'-इति अयं द्वितीयस्य पूर्वो भागो माध्यन्दिनसवनस्य दक्षिणं चक्षुः; 'भुवो ज्योतिः'-इत्यय मुत्तरो भागो वामचक्षुः; अन्तरीक्षलोकवर्त्ती परमैश्वर्ययुक्तो वायुर्गोलकद्वये भासक इत्यर्थः। 'सूर्यो ज्योतिः'-इत्येष तृतीयस्य पूर्वभागस्तृतीयसवनस्य दक्षिणं चक्षुः; 'ज्योतिः स्वः सूर्यः'-इत्यय मुत्तरो भागो वामचक्षुः; स्वर्लोकवर्त्ती सूर्यः गोलकद्वये भासक इत्यर्थः * ॥

वेदनं प्रशंसति—"चक्षुष्मद्भिः सवनै राध्नोति चक्षुष्मद्भिः सवनैः स्वर्गं लोक मेति य एवं वेद"-इति। राधिरिह लोके समृद्धिः † ॥

तूष्णींशंसस्य चक्षुःस्वरूपत्व मुपपादयति—"चक्षुर्वा एतद्यज्ञस्य यत्तूष्णींशंस एका सती व्याहृतिर्द्वेधोच्यते, तस्मादेकं सच्चक्षुर्द्वेधा" ति। यद्यपि भूरित्येकैव व्याहृतिः, तथापि तद्योगादग्निर्ज्योति-

---

* "यद्यु वै षट्पदः, पूर्वैर्ज्योतिःशब्दैरर्धेऽवस्येत्"-इति आश्व० श्रौ० ५.९.११। 'त्रिपदः षट्पदी वायं शंसव्यः। त्रिपदपक्षे यथापठित मेव (४३० पृ० ३ प०, ४२७ पृ० '†') षट्पदपक्षे त्रीणि त्रीणि वाक्यानि द्विधा कृत्वा शंसेत्। तत्र द्विधाकरणे ऽवसानस्थानं पूर्वैर्ज्योतिःशब्दैरर्धे ऽवस्येत्'—इति तद्वृत्तिः।

† "राद्धः समृद्धो भवति"—इति च शत० ब्रा० १४.७.१.३२।

रिति अपि पदद्वयं व्याहृतित्वेनोच्यते। सेयं व्याहृतिरेकैव सती आरोहावरोहाभ्यां द्वेधोच्यते *। यस्मादेवं तस्माच्चक्षुरिन्द्रिय मप्येक मेव सद्गोलकद्वये द्विधा वर्त्तते। तस्माच्चतुष्टं युक्तम् ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "मूलं वा एतद्यज्ञस्य यत् तूष्णींशंसो ; यं कामयेतानायतनवान्त्स्यादिति, नास्य यज्ञे तूष्णींशंसं शंसेदुन्मूल मेव तद्यज्ञं पराभवन्त मनु पराभवति"– इति। 'यं' यजमान मुद्दिश्य होता द्वेषादेवं कामयेत,— 'अनायतनवान्' स्वर्गसाधनरूपेणायतनेनाश्रयेण रहितोऽयं यजमानः स्यादिति, तदानीम् 'अस्य' द्वेष्यस्य यजमानस्य यज्ञे तूष्णींशंसं होता न शंसेत्। तथा सति वृक्षमूलवत् यज्ञमूलत्वेनावस्थितस्य तूष्णींशंसस्य पाठाभावादयं यज्ञो मूलरहितः 'पराभवति' विनश्यति ;— त मनु यजमानोऽपि विनश्यति। तदेवं द्वेष्यस्य विनाशहेतुत्वेन प्रशंसा कृता ॥

पुनरप्यृत्विजो होतुरनुकूलत्वेन प्रशंसति— "तदु वा आहुः" — शंसेदेवापि वैतदृत्विजे हितं यद्धोता तूष्णींशंसं न शंसत्यृत्विजि हि सर्वो यज्ञः प्रतिष्ठितो, यज्ञे यजमानस्तस्माच्छंस्तव्यः शंस्तव्यः"-इति। 'तदु वै' तत्रैव तूष्णींशंसविषये ब्रह्मवादिनः आहुः। कि मिति, तदुच्यते— यद्यपि यजमाने प्रीतिरहितो होता, तथापि शंसेदेव— 'अपि वा'-इति पूर्वोक्तापेक्षया पक्षान्तरोपन्यासार्थम्। होता न शंसतीति यदस्ति, तदेत-

---

* "व्याहृतीर्मनसानुद्रवेत् भूर्भुवःस्वरिति"—इति षड्विं० ब्रा० १.६। "सोऽताम्यत्। स भूरिति व्याहरत्। + + +। स भुव इति व्याहरत्। + + +। स सुवरिति व्याहरत्। + + +। एता वै व्याहृतय इमे लोकाः"—इति तै० ब्रा० २.२.४.३। आरोहावरोहौ चात्र क्रमव्युत्क्रमाभ्यां पाठौ ;—'अग्निः ज्योतिः', 'ज्योतिः अग्निः'—इतीव मिति।

ऋत्विजे होत्रे ऽप्यहितम्; भ्रष्टे यज्ञे दक्षिणाया अलाभात्। यस्मात् ऋत्विजि सर्वो यज्ञः प्रतिष्ठितः, तस्माद्यज्ञयजमानयोः प्रतिष्ठा-द्वारा होतुर्हितत्वेनायं तूष्णींशंसः शस्तव्यः ॥

अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां चतुर्थाध्याये अष्टमः खण्डः ॥ ८ ( ३२ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादिष्टेन भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायाः चतुर्थोऽध्यायः ॥

———

## ॥ अथ पञ्चमाध्यायः ॥

( तच )

### ॥ अथ प्रथमः खण्डः ॥



ब्रह्म वा आहावः क्षत्रं निविद्विट् सूक्त माह्वयते ऽथ निविदं दधाति ब्रह्मण्येव तत्क्षत्र मनुनियुनक्ति निविदं शस्त्वा सूक्तं शंसति क्षत्रं वै निविद्विट् सूक्तं क्षत्र एव तद् विश मनुनियुनक्ति यं कामयेत क्षत्रेणैनं व्यर्द्धयानीति मध्य एतस्यै निविदः सूक्तं शंसेत्क्षत्रं वै निविद्विट् सूक्तं क्षत्रेणैवैनं तद् व्यर्द्धयति यं कामयेत विशैनं व्यर्द्धयानीति मध्य एतस्य सूक्तस्य निविदं शंसेत्क्षत्रं वै निविद्विट् सूक्तं विशैवैनं तद् व्यर्द्धयति य मु कामयेत सर्वं मेवास्य यथापूर्व मृजुक्लृप्तं स्यादित्याह्वयेताथ निविदं दध्यादथ सूक्तं शंसेत्सो सर्वस्य क्लृप्तिः प्रजापतिर्वा इद मेक एवाग्र आस सो ऽकामयत प्रजायेय भूयान्त्स्यामिति स तपो ऽतप्यत स वाच मयच्छत्स संवत्सरस्य परस्ताद् व्याहरद् द्वादशकृत्वो द्वादशपदा वा एषा निविदेतां वाव तां निविदं व्याह-

र्त्तां सर्वाणि भूतान्यन्वसृज्यन्त तदेतदृषिः पश्यन्नभ्यनूवाच स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनामिति तद् यदेतां पुरस्तात्सूक्तस्य निविदं दधाति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥ १ ( ३३ ) ॥

ऋतुयाजा द्विदेवत्यास्तद्विशेषफला स्तुतिः ।
तूष्णींशंसप्रशंसा च नवमाध्यायचोदना ॥

अथाहावादयो वक्तव्याः; आहावं निविदं सूक्तं च विधत्ते—"ब्रह्म वा आहावः, क्षत्रं निविद्, विट् सूक्त माह्वयते ; ऽथ निविदं दधाति, ब्रह्मण्येव तत् क्षत्र मनुनियुनक्ति; निविदं शस्त्वा सूक्तं शंसति,—क्षत्रं वै निविद्, विट् सूक्तं, क्षत्र एव तद्विश मनुनियुनक्ति"–इति। "शोंसावोम्"–इत्यनेन मन्त्रेण शंसनकाले होताध्वर्यु माह्वयति,सोऽयम् 'आहावः'*; "अग्निर्देवेद्धः"–इत्यादिभिर्द्वादशभिर्वक्ष्यमाणैः पदैः † युक्ता तत्समूहरूपा 'निवित्' ; "प्र वो देवायाग्नये"–इत्यादिकं सप्तर्चं 'सूक्तम्' (सं० ३.१३.१—७.) । तदेतत् त्रयं क्रमेण ब्राह्मणक्षत्रियवैश्यरूपम् । तत्र ब्राह्मणरूपत्वेन प्रथमम् 'आह्वयते' मन्त्रेणाध्वर्योराह्वानं कुर्यात्। 'अथ' अनन्तरं क्षत्रियरूपत्वेन 'निविदं दधाति' अग्निर्देवेद्ध इत्यादि पदसमूहं

---

* सांखत्रा० ब्रा० १४. ३ । आश्व० श्रौ० ५. ९. १ ।

† तद्यथा निविदध्याये—"अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निः सुषमित् । होता देववृतः । होता मनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता । तूर्णिर्हव्यवाट् । आ देवो देवान् वक्षत् । यक्षदग्निर्देवो देवान् । सो अध्वरा करति जातवेदाः"–इति ( १. १—१२. ) । उत्तरस्मिन् खण्डे चैमानि पदानि विधास्यन्ते ।

( निवि० १, १—१२ ) वदेत्। तथा सति 'ब्रह्मण्येव' ब्राह्मणजातावेव 'क्षत्रं' क्षत्रियजातिम् 'अनुनियुनक्ति'। प्रथमतो ब्राह्मणजातिः, पश्चात् क्षत्रियजातिरित्येवं नियोगः कृतो भवेत्। तां निविदं शस्त्वा पश्चात् "प्र वो देवाय"–इति सूक्तं शंसेत्। तथा सति क्षत्रियजातिरूपायां निविदि वैश्यजातिरूपं सूक्तम् 'अनुनियुनक्ति' आनुकूल्येन पश्चादवस्थापयति। यः पूर्वं मुक्तस्तूष्णींशंसः, ये च निवित्सूक्ते, तदेतत् त्रय माज्यनामकशस्त्रस्य रूपम्। तदुक्तं सम्प्रदायविद्भिः— 'तूष्णींशंसनिवित्सूक्तैराज्यशस्त्रं त्रिपूर्वकम्'-इति * ॥

अथ कञ्चिदभिचारप्रयोगं विधत्ते— "यं कामयेत क्षत्रेणैनं व्यर्धयानीति, मध्य एतस्यै निविदः सूक्तं शंसेत्; क्षत्रं वै निविद्, विट् सूक्तं, क्षत्रेणैवैनं तद् व्यर्धयति"-इति। येयं द्वादशपदात्मिका निविदस्ति, तस्या मध्ये सूक्तशंसने सति क्षत्रियजातिरूपायाः निविदः खण्डितत्वात् 'एनं' यजमानं क्षत्रियजात्या 'व्यर्ध' वियुक्तं विरोधिनं करोति। अतो यजमान मुद्दिश्य होता यत्कामितं तत्सिध्यतीत्युक्तं भवति। अभिचारान्तरं विधत्ते— "यं कामयेत विशैनं व्यर्धयानीति, मध्य एतस्य सूक्तस्य निविदं शंसेत्; क्षत्रं वै निविद्, विट् सूक्तं, विशैवैनं तद् व्यर्धयति"-इति। "प्र वो देवाय"-इत्यस्य सूक्तस्य वैश्यस्थानीयस्य मध्ये निविदः शंसने सति वैश्यजातेः खण्डितत्वात् तद्विरोधो यजमानस्य भवति ॥

प्रतिकूलं प्रयोगद्वयं विधायानुकूलं प्रयोगं विधत्ते— "य मु कामयेत सर्वं मेवास्य यथापूर्वं मृजुक्लृप्तं स्यादित्याह्वयेताथ निविदं दध्यादथ सूक्तं शंसेत्सो सर्वस्य क्लृप्तिः"-इति। 'यमु' यन्तु यजमानं

* "प्र वो देवायेत्याज्य मुपसन्तनुयात्"-इति आश्व० श्रौ० ५.९.१५।

प्रति। पूर्वोक्तस्य द्वेष्यस्य यजमानस्य व्यावृत्त्यर्थः 'उ'-शब्दः। 'अस्य' यजमानस्य 'सर्व मेव' ब्राह्मणक्षत्रियवैश्यजातिरूपं 'यथापूर्वम्' उत्तमजातेः पूर्वता मनतिक्रम्य 'ऋजुक्लृप्तं' सम्यक् सम्पादितं स्यादिति कामनायां "शोंसावोम्"–इत्याहावः प्रथमः, ततः "अग्निर्देवेद्धः"–इति निवित्, ततः "प्र वो देवाय"–इति सूक्तं शंसेत्। 'सो' सैव उक्तानुष्ठितिरेव 'सर्वस्य' जातित्रयस्य 'क्लृप्तिः' समीचीनकल्पना भवति॥

अथ निविदः प्रशंसितु माख्यायिका माह— "प्रजापतिर्वा इद मेक एवाग्र आस; सो ऽकामयत प्रजायेयं भूयान्त्स्या मिति; स तपो ऽतप्यत, स वाच मयच्छत्, स संवत्सरस्य परस्ताद् व्याहरद् द्वादशकृत्वो; द्वादशपदा वा एषा निविदेतां वाव तां निविदं व्याहरत्, तां सर्वाणि भूतान्यन्वसृज्यन्त"–इति। 'इदम्' इदानीं दृश्यमानं जगत् 'अग्रे' स्वोत्पत्तेः पुरा 'प्रजापतिः' ईश्वर एक एव आस वै। स च अकामयत,– अह मेव 'प्रजायेय' प्रजारूपेणो-त्पद्येय। तथा सति पूर्वस्मादद्वितीयरूपाद् 'भूयान्' अतिप्रभूतः स्या मिति। कामयित्वा 'सः' प्रजापतिः सृष्टिसाधनं तपः कृत-वान्। तस्मिंस्तपसि 'वाचम् अयच्छत्' मौनव्रतं कृतवान्। तथा कृत्वा संवत्सरादूर्ध्वं द्वादशकृत्वो वाच मुच्चारितवान्। सेय मुच्चा-रिता वागेषा द्वादशपदोपेता निवित् सम्पन्ना। ता मेता मेव निविदं प्रजापतिर्व्याहृतवान्। 'तां' निविदम् 'अनु' तत्सामर्थ्यात् सर्वाणि भूतानि असृज्यन्त॥

उक्तार्थं दृढयितुं कञ्चिन्मन्त्र मुदाहरति— "तदेतदृषिः पश्य-न्नभ्यनूवाच,—स पूर्वया निविदा कव्यतायोरिमाः प्रजा अज-नयन्मनूना मिति"–इति। 'तदेतत्' प्रजापतेः सर्जनं दिव्यदृष्ट्या

पश्यन् कुत्सनामको महर्षिः मन्त्रेणाभ्यनूवाच। "स पूर्वया"—इत्यादिर्मन्त्रः (सं० १.९६.२.)। 'सः' प्रजापतिः 'पूर्वया' प्रथमं प्रादुर्भूतया 'निविदा' द्वादशपदरूपया 'कव्यता' कवित्वं शब्दस्रष्टृत्वम् 'आयोः' आगतवान् प्राप्तवानित्यर्थः। तत ऊर्ध्वं 'मनूनां' वैवस्वतादीनां सम्बन्धिनीः 'इमाः' ब्राह्मणक्षत्रियादिरूपाः 'प्रजाः' 'अजनयत्'। 'इति' अयं मन्त्रः पूर्वोक्तमेवार्थं ब्रूते॥

निविदं प्रशस्य तदनुष्ठानं प्रशंसति—"तद्यदेतां पुरस्तात् सूक्तस्य निविदं दधाति प्रजात्यै"—इति। यस्मात् प्रजापतिनैवं कृतम्, तस्माद्यदि होता सूक्तस्य पुरस्तात् 'एतां' निविदं दध्यात्, तदा सा निविद्यजमानस्य 'प्रजात्यै' प्रजोत्पादनाय सम्पद्यते॥

वेदनं प्रशंसति — "प्रजायते प्रजया पशुभिर्य एवं वेद"—इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
प्रथमः खण्डः॥१ ( ३३ )॥

---

॥ अथ द्वितीयः खण्डः॥

अग्निर्देवेद्ध इति शंसत्यसौ वा अग्निर्देवेद्ध एतं हि देवा इन्धत एतमेवं तदेतस्मिँल्लोक* आयातयत्यग्निर्मन्विद्ध इति शंसत्ययं वा अग्निर्मन्विद्ध इमं हि मनुष्या इन्धतेऽग्निमेवं तदस्मिँल्लोक

* 'तदेतस्मिँल्लोक' ख; 'तदेतस्मिंल्लोक' ग, घ, टी० ख, ग, घ; 'तदेस्मिंल्लोक' ङ।

आयातयत्यग्निः सुषमिदिति शंसति वायुर्वा अग्निः सुषमिद्वायुर्हि स्वय मात्मानं समिन्धे स्वय मिदं सर्वं यदिदं किञ्च वायु मेव तदन्तरिक्षलोक आयातयति होता देववृत इति शंसत्यसौ वै होता देववृत एष हि सर्वतो देवैर्वृत एत मेव तदेतस्मिँल्लोक आयातयति होता मनुवृत इति शंसत्ययं वा अग्निर्होता मनुवृतो ऽयं हि सर्वतो मनुष्यैर्वृतो ऽग्नि मेव तदस्मिँल्लोक आयातयति प्रणीर्यज्ञाना मिति शंसति वायुर्वै प्रणीर्यज्ञानां यदा हि प्राणित्यथ यज्ञो ऽथाग्निहोत्रं वायु मेव तदन्तरिक्षलोक आयातयति रथीरध्वराणा मिति शंसत्यसौ वै रथीरध्वराणा मेष हि यथैतच्चरति रथीरिवैत मेव तदेतस्मिँल्लोक आयातयत्यतूर्तो होतेति शंसत्ययं वा अग्निरतूर्तो होतेमं ह न कश्चन तिर्यञ्चं तरत्यग्नि मेव तदस्मिँल्लोक आयातयति तूर्णिर्हव्यवाळिति शंसति वायुर्वै तूर्णिर्हव्यवाड् वायुर्हीदं सर्वं सद्यस्तरति यदिदं किञ्च वायुर्देवेभ्यो हव्यं वहति वायु मेव तदन्तरिक्षलोक आयातयत्या देवो देवान्वक्षदिति शंसत्यसौ वै देवो देवानावहत्येत मेव तदेतस्मिँल्लोक आयातयति यक्षदग्निर्देवो देवानिति शंसत्ययं

वा अग्निर्देवो देवान् यजत्यग्नि मेव तदस्मिँल्लोक-आयातयति सो अध्वरा करति जातवेदा इति शंसति वायुर्वै जातवेदा वायुर्हीदं सर्वं करोति यदिदं किञ्च वायु मेव तदन्तरिक्षलोक आयातयति ॥ २ ( ३४ ) ॥

द्वादशपदोपेतायाः निविदः प्रथमं पदं विधत्ते— "अग्नि-र्देवेद्ध इति शंसत्यसौ वा अग्निर्देवेद्धः ; एतं हि देवा इन्धते,—एत मेव तदेतस्मिँल्लोक आयातयति"–इति । देवैरिद्धः प्रज्वालितोऽग्नि-रित्येष निविदि प्रथमभागस्यार्थः । तं भागं होता शंसेत् । 'असौ वै' आदित्यमण्डलेऽवस्थित एव प्रकाशो देवैरिद्धोऽग्निः । यस्मात् 'एतं' द्युलोकवर्त्तिनं प्रकाशं देवाः 'इन्धते' इद्धं दीपितं समृद्धं कुर्वन्ति, 'तत्' तेन प्रथमभागपाठेन एतदेवादित्यरूपं प्रकाशम् 'एतस्मिन्' द्युलोके 'आयातयति' प्रसारयति ॥

द्वितीयं पदं विधत्ते— "अग्निर्मन्विद्ध इति शंसत्ययं वा अग्निर्मन्विद्धः ; इमं हि मनुष्या इन्धते,—ऽग्नि मेव तदस्मिँल्लोक आयातयति"–इति । अङ्गाररूपोऽग्निर्भूलोकवर्त्तिमनुष्यैः प्रज्वा-ल्यते । अन्यत् पूर्ववत् ॥

तृतीयं पदं विधत्ते— "अग्निः सुषमिदिति शंसति, वायुर्वा अग्निः सुषमिद् ; वायुर्हि स्वय मात्मानं समिन्धे,—स्वय मिदं सर्वं यदिदं किञ्च, वायु मेव तदन्तरिक्षलोक आयातयति"–इति । शोभना समित् प्रकाशनं सञ्चरणरूपं यस्य वायोः, सोऽयं 'सुषमित्' । तस्याग्नित्वं गतिहेतुत्वाद्यौगिकम् । 'अगि गतौ'–

इत्यस्माद्धातोरुत्पन्नोऽयं शब्दः *। प्रथमपर्यायेऽप्यादित्यपरत्व मेवं योजनीयम्। वायुर्हि स्वात्मानं सर्वं जगच्च 'समिन्धे' सम्यक् प्रकाशयति, व्यापारक्षमं करोतीत्यर्थः॥

चतुर्थं पदं विधत्ते— "होता देवव्रत इति शंसत्यसौ वै होता देवव्रतः; एष हि सर्वतो देवैर्वृतः,—एत मेव तदेतस्मिँल्लोक आयातयति"-इति। 'असौ' आदित्यः स्वोदयास्तमयाभ्यां सायं प्रातर्होमनिष्पादकत्वेन 'होता'। स वै द्युलोके वर्त्तमानत्वात् 'देवैर्वृतः'॥

पञ्चमं पदं विधत्ते— "होता मनुर्व्रत इति शंसत्ययं वा अग्निर्होता मनुर्व्रतो; ऽयं हि सर्वतो मनुष्यैर्वृतो,—ऽग्नि मेव तदस्मिँल्लोक आयातयति"-इति। भूलोकेऽवस्थितोऽग्निः होमाधिकरणत्वात् 'होता', यजमानर्त्विग्भिश्चेष्टितत्वात् 'मनुर्व्रतः'॥

षष्ठं पदं विधत्ते— "प्रणीर्यज्ञाना मिति शंसति; वायुर्वै प्रणीर्यज्ञानां; यदा हि प्राणित्यथ यज्ञो ऽथाग्निहोत्रं; वायु मेव तदन्तरिक्षलोक आयातयति"-इति। यज्ञान् प्रकर्षेण नयति वायुस्तस्मादेष 'यज्ञानां प्रणीः'; यस्मिन् काले पुरुषः 'प्राणिति' प्राणवायुना चेष्टते, तदा यज्ञो भवति। तस्यैव व्याख्यान मुदाहरणरूप मथाग्निहोत्र मिति; प्राणवायुचेष्टया अग्निहोत्रगताधिकरणादिव्यापारा निष्पद्यन्ते॥

सप्तमं पदं विधत्ते— "रथी रध्वराणा मिति शंसत्यसौ वै रथीरध्वराणा मेष हि यथैतच्चरति रथीरिवैत मेव तदेतस्मिँल्लोक आयातयति"-इति। 'असौ' आदित्योऽध्वराणां प्रकाशनाय 'रथीः' भवति। रथवान् भूत्वा सञ्चरति। अय मेवार्थः एषः हीत्यादिनोच्यते। यथा लोके 'रथीरिव' कश्चन रथवानिव 'एतत्'

---

* भू० प०, धा० पा० ५. ३८। उणा० ४. ५१. १।

गन्तव्यस्थानं प्रति चरति, तथैव आदित्योऽपि रथयुक्त एव चरति। शाखान्तरे तु तदीयरथप्रदर्शनपूर्वक मेव मन्त्रो व्याख्यातः—"रथी रध्वराणा मित्याह एष हि देवरथः"–इति (तै० सं० २. ५. ८. २.)॥

अष्टमं पदं विधत्ते— "अतूर्तो होतेति शंसत्ययं वा अग्नि-रतूर्तो होतेमं ह न कश्चन तिर्यञ्चं तरत्यग्नि मेव तदस्मिँल्लोक आयातयति"–इति। भूलोकवर्ती वह्निः 'अतूर्तः' केनाप्यतीर्णः; मार्गमध्ये 'तिर्यञ्चं' मार्गस्यावरोधकत्वेनावस्थितं प्रौढं दावाग्निं कश्चिदपि तरितुं न समर्थः॥

नवमं पदं विधत्ते— "तूर्णिर्हव्यवाळिति शंसति; वायुर्वै तूर्णिर्हव्यवाड्; वायुर्हीदं सर्वं सद्यस्तरति यदिदं किञ्च, वायु-र्देवेभ्यो हव्यं वहति,—वायु मेव तदन्तरिक्षलोक आयातयति"–इति। तरतीति 'तूर्णिः'; वायोः सर्वतरणसामर्थ्यं प्रसिद्धम्। हव्यं वहतीति 'हव्यवाट्' हविर्वहनस्य क्रियारूपस्य वायुनिष्पाद्यत्वादसौ हव्यं वहति॥

दशमं पदं विधत्ते— "आ देवो देवान्वक्षदिति शंसत्यसौ वै देवानावहत्येत मेव तदेतस्मिँल्लोक आयातयति"–इति। 'असौ' आदित्यो देवः, स्वोदयास्तमयाभ्यां होमकालसूचनेन देवानाम् 'आ वक्षत्' आवहति॥

एकादशं पदं विधत्ते— "यक्षदग्निर्देवो देवानिति शंसत्ययं वा अग्निर्देवो देवान् यजत्यग्नि मेव तदस्मिँल्लोक आयातयति"–इति। 'अयम्' भूमौ दृश्यमानोऽग्निः देवो देवान् यजतीति प्रसिद्धम्॥

द्वादशं पदं विधत्ते— "सो अध्वरा करति जातवेदा इति

शंसति ; वायुर्वै जातवेदा, वायुर्हीदं सर्वं करोति यदिदं किञ्च,—वायु मेव तदन्तरिक्षलोक आयातयति''–इति । उच्छ्वासनिश्वासप्रदानेन जातं प्राणिनं वेदयति जीवनयुक्तत्वेन ज्ञापयतीति वायुः 'जातवेदाः'। स च 'अध्वरा' सर्वयज्ञान् 'करोति' निष्पादयति ; व्यापाररूपस्यानुष्ठानस्य वायुधीनत्वात् ॥

एषु द्वादशसु पदेषु सूर्याग्निवायवस्तुरावृत्ताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
द्वितीयः खण्डः ॥ २ ( ३४ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

प्र वो देवायाग्नय इत्यनुष्टुभः प्रथमे पदे विहरति तस्मात् स्त्रूरू विहरति समस्यत्युत्तरे पदे तस्मात्पुमानूरू समस्यति तन्मिथुनं मिथुन मेव तदुक्थमुखे करोति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद प्र वो देवायाग्नय इत्येवानुष्टुभः प्रथमे पदे विहरति वज्र मेव तत्परोवरीयांसं करोति समस्यत्येवोत्तोत्तरे पदे आरम्भणतो वै वज्रस्याणिमाथो दण्डस्याथो परशोर्वज्र मेव तत्प-

हरति' द्विषते भ्रातृव्याय वधं' योऽस्य स्तृत्यस्तस्मै स्तर्तवै'॥ ३ (३५) ॥

निविदो यानि द्वादश पदानि भागरूपाणि, तान्युक्तानि; अथ तदनन्तरम्भावि सूक्तं विधत्ते— "प्र वो देवायाग्नय इत्यनुष्टुभः"-इति। प्र व इत्यादि सूक्तस्य ( सं० ३. १३. ) प्रतीकम्। तस्मिन् सूक्ते याः सप्तसङ्ख्याका अनुष्टुप्छन्दस्का ऋचः सन्ति, ताः शंसेदिति शेषः। प्रथमाया ऋचि यौ प्रथमद्वितीयपादौ, तयोः विहरणं विधत्ते— "प्रथमे पदे विहरति, तस्मात् स्त्र्यूरू विहरति"-इति। विहरणम् पृथक्करणम्। द्वयोः पादयोर्मध्ये विहारं विच्छेदं कृत्वा पठेत्। यस्मादत्र पादयोः परस्परवियोगः, तस्माल्लोकेऽपि स्त्रीसम्भोगकाले स्वकीये ऊरू 'विहरति' वियोजयति। तस्या ऋचि तृतीयचतुर्थपादयोरविच्छेदं विधत्ते— "समस्यत्युत्तरे पदे तस्मात् पुमानूरू समस्यति; तन्मिथुनं;—मिथुन मेव तदुक्थ-मुखे करोति प्रजात्यै"-इति। यस्मात् तृतीयचतुर्थपादयोरुत्त-रार्द्धगतयोः संयोजनं, तस्माल्लोकेऽपि उपरिवर्त्ती पुमान् भोगकाले स्वकीये ऊरू 'समस्यति' संयोजयति। तदुभयं मिलित्वा मिथुनं भवति। तस्मात् 'उक्थमुखे' शस्त्रस्योपक्रमे मिथुन मेव करोति; तच्च यजमानस्य प्रजननाय सम्पद्यते। वेदनं प्रशंसति— "प्रजा-यते प्रजया पशुभिर्य एवं वेद"-इति॥

पुनरप्युक्त मेवानूद्य प्रकारान्तरेण प्रशंसति— "प्र वो देवा-याग्नय इत्यनुष्टुभः प्रथमे पदे विहरति; वज्र मेव तत्परोवरीयांसं करोति,—समस्यत्येवोत्तरपदे; आरम्भणतो वै वज्रस्याणिमा, ऽथो दण्डस्याथो परशोर्वज्र मेव तत्प्रहरति,—द्विषते भ्रातृव्याय वधं

योऽस्य स्तृत्यस्तस्मै स्तर्तवै"-इति । -'इत्येवानुष्टुभः'-इति योऽय मेवकारः, स पूर्वस्यानुवादः ; न तु नूतनविधिरिति ज्ञापनार्थः । 'परोवरीयांसं' परस्युत्तरभागे अतिशयेन स्थूलम्, ईदृशं वज्रं सूक्त-पठनेन सम्पादयति । प्रथमाया ऋच उत्तरार्द्धे पदे, तत्पादयोः समसनम्, तदपि वज्रसादृश्यार्थम् । वज्रस्य ह्यारम्भणतः 'अणिमा' मूले सौक्ष्म मित्यर्थः । वज्रशब्देन खड्गादिरूप मायुध मभि-धीयते ; तस्य हि 'मूले' मुष्टिबन्धनस्थले सूक्ष्मता भवति, उपरि तु विस्तारः । दण्डशब्देन गदा विवक्षिता । सापि हस्तग्रहणस्थाने मूले सूक्ष्मा, प्रहारस्थाने अग्रे स्थूला । परशुरपि तथाविधः । यथायं त्रिविधो वज्रः, एव मिद मपि सूक्तं प्रथमार्द्धर्चपाद-विहरणेन सूक्ष्मम्, उत्तरार्द्धर्चपादसमासेन स्थूलम् । अत ईदृशं सूक्तद्वयं वज्र मेव, द्वेषं कुर्वतो भ्रातृव्यस्य वध मुद्दिश्य प्रहरति ;— यः शत्रुरस्य 'स्तृत्यः' हन्तव्यः, 'तस्मै स्तर्तवै' तस्य हिंसायैव भवति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
तृतीयः खण्डः ॥ ३ ( ३५ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

**देवासुरा वा एषु लोकेषु समयतन्त ते वै देवाः सद एवायतन मकुर्वत तान्त्सदसो ऽजयंस्त आग्नीध्रं**

सम्प्रापद्यन्त ते ततो न पराजयन्त तस्मादाग्नीध्र उपवसन्ति न सदस्याग्नीध्रे ह्यधारयन्त यदाग्नीध्रे ऽधारयन्त तदाग्नीध्रस्याग्नीध्रत्वं तेषां वै देवाना मसुराः सदस्यानग्नीन्निर्वापयाञ्चक्रुस्ते देवा आग्नीध्रादेव सदस्यानग्नीन्विहरन्त तैरसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना आग्नीध्रादेव सदस्यानग्नीन्विहरन्त्यसुररक्षांस्येव तदपघ्नते ते वै प्रातराज्यैरेवाजयन्त आयन् यदाज्यैरेवाजयन्त आयंस्तदाज्याना माज्यत्वं तासां वै होत्राणा मायतीना माजयन्तीना मच्छावाकीया हीयत तस्या मिन्द्राग्नी अध्यास्ता मिन्द्राग्नी वै देवाना मोजिष्ठौ बलिष्ठौ सहिष्ठौ सत्तमौ पारयिष्णुतमौ तस्मादैन्द्राग्न मच्छावाकः प्रातःसवने शंसतीन्द्राग्नी हि तस्या मध्यास्तां तस्माद् पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति पश्चाच्छावाकः पश्चेव हि हीनो ऽनुसञ्जिगमिषति तस्माद्यो ब्राह्मणो बह्वृचो वीर्यवान्स्यात्सो ऽस्याच्छावाकीयां कुर्यात्तेनैव सा ऽहीना भवति ॥ ॥ ४ ( ३६ ) ॥

अथाग्नीध्रीयवासादिसिध्यर्थं माख्यायिका माह— "देवासुरा वा एषु लोकेषु समयतन्त ; ते वै देवाः सद एवायतन मकुर्वत ;

तान्सदसो ऽजयंस्त आग्नीध्रं सम्प्रापद्यन्त; ते ततो न पराजयन्त ; तस्मादाग्नीध्र उपवसन्ति, न सदस्याग्नीध्रे ह्यधारयन्त ; यदाग्नीध्रे ऽधारयन्त, तदाग्नीध्रस्याग्नीध्रत्वम्"–इति । पुरा कदाचिद् देवा-श्चासुराश्च लोकविषये 'समयतन्त' सङ्ग्रामं कृतवन्तः । वय मेवैषु लोकेषु निवसामो न तु यूय मिति एवं परस्परस्पर्द्धा । तदानीं देवाः सौमिकवेद्यां प्राग्वंशस्य पूर्वस्यां दिशि येयं सदोऽभिधाना शाला, ता मेव स्वस्य निवासस्थानं कृतवन्तः । तत्रावस्थितान् तान् देवान्, असुराः 'सदसः अजयन्' जित्वा सदसो निःसारित-वन्त इत्यर्थः । ततो देवा निर्गताः सन्तः आग्नीध्राभिधां शालां प्राप्तवन्तः । ते देवाः प्राप्य तत आग्नीध्रीयं 'न पराजयन्त' तत्रासु-राणा मेव पराजयो न तु देवानाम् । यस्मादेवं तस्मादाग्नीध्र-शालाया मुपवसथे दिने यजमानाः 'उपवसन्ति' अग्नीसमीपे निवसेयुः ; न तु सदसि निवासः कर्त्तव्यः । आग्नीध्रे हि देवाः पलायनं परित्यज्य स्वात्मानं धारितवन्तः, तस्मात् तत्र निवासो युक्तः । यस्मादाग्नीध्रे धारितवन्तः, तस्मादाग्नीध्रत्वं नाम सम्प-न्नम् ; अग्निसमीपे स्वात्मधारणस्य प्रवृत्तिनिमित्तत्वात् ॥

अथ सदस्यवस्थितेषु धिष्ण्येष्वाग्नीध्रादग्निविहरणं विधत्ते—"तेषां वै देवाना मसुराः सदस्यानग्नीन्निर्वापयाञ्चक्रुस्ते देवा आग्नीध्रादेव सदस्यानग्नीन्विहरन्त ; तैरसुररक्षांस्यपाघ्नत ;—तथैवै-तद्यजमाना आग्नीध्रादेव सदस्यानग्नीन्विहरन्त्यसुररक्षांस्येव तद-पघ्नते"–इति । पुरा देवानां सम्बन्धिनो येऽग्नयः सदस्यवस्थि-तेषु धिष्ण्येष्वासन्, तान् सर्वान् देवपलायनेन सदःप्रविष्टा असुराः 'निर्वापयाञ्चक्रुः' जलप्रक्षेपेणाग्नीन् शान्तान् अकुर्वत । तदानीं ते देवा आग्नीध्रे स्थित्वा तत्रत्यान् सदस्यान् अग्नीन् 'विहरन्त'

सद्यस्ववस्थितेषु धिष्ण्येषु पृथक् पृथक् अग्नीन् 'विहृतवन्तः' स्थापितवन्तः। तैः प्रबलैरग्निभिः असुरान् रक्षांसि च सदसि हतवन्तः। यथा देवैर्विहरणं कृतम्, तथैवैतस्मिन्नपि काले यजमाना आग्नीध्रादेव वह्नेः सदस्यानग्नीन्विहरेयुः। तेन विहरणेन असुरान् रक्षांसि च 'तदपघ्नते' तत्तदानीं नाशयन्ति। सोऽयमर्थः सर्वोऽपि शाखान्तरे सङ्गृह्याम्नातः— "देवा वै यज्ञं पराजयन्त, त माग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान् विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते"-इति (तै० सं० ६. ३.१.१.)॥

इत्थं शंसनस्थानगतेषु धिष्ण्येषु अग्निविहरणं विधाय तत्र शंसनीयानां शस्त्राणां यदेतदाज्यनामकत्वं तदेतच्छब्दनिर्वचनेन विस्पष्टयति— "ते वै प्रातराज्यैरेवाजयन्त आयन्; तदाज्यैरेवाजयन्त आयंस्तदाज्याना माज्यत्वम्"-इति। त एव देवाः प्रातःसवने यान्याज्यनामकानि शस्त्राणि, तैरेवासमन्ताज्जयं प्राप्नुवन्तः आगच्छन्; यस्मादेवं तस्मादा समन्ताज्जयन्त्येभिरिति व्युत्पत्त्या शस्त्राणा माज्यनाम सम्पन्नम्। अनेनैव न्यायेन सामवेदे "पञ्चदशान्याज्यानि"-इतिवाक्येन (ता० ब्रा० २०. ३. १.) विहितानां पञ्चदशस्तोमयुक्तानां स्तोत्राणा माज्यनामत्वं द्रष्टव्यम् *॥

अथाच्छावाकस्य शस्त्रं विधत्ते— "तासां वै होत्राणा मायतीना माजयन्तीना मच्छावाकीया हीयत; तस्या मिन्द्राग्नी अध्यास्ता मिन्द्राग्नी वै देवाना मोजिष्ठौ बलिष्ठौ सहिष्ठौ सत्तमौ

---

* "प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत् तेऽन्योऽन्यस्मा अग्राय नातिष्ठन्त तानब्रवीदाजि मयिन्नितेति त आजि मायन्यदाजि मायᳲस्तदाज्याना माज्यत्वम्"-इत्याद्याखण्डसमाप्ति द्रष्टव्यम् (ता० ब्रा० ७. २.)।

पारयिष्णुतमौ ; तस्मादैन्द्राग्न मच्छावाकः प्रातःसवने शंसतीन्द्राग्नी हि तस्या मध्यास्ताम्"–इति । प्रशास्ता, ब्राह्मणाच्छंसी, अच्छावाक इति एते शस्त्रिणो होत्रका यद्यपि पुरुषाः, तथापि तदीयतनुविवक्षया 'तासाम्'–इत्यादिः स्त्रीलिङ्गनिर्देशः । यास्तनवः पूर्वं मसुरान् अपाघ्नत, तासा मेव 'होत्राणां' होत्रकतनूनाम् 'आयतीनां' सदः प्रवेष्टु मागच्छन्तीनाम्, 'आजयन्तीनां' सर्वतो जयं प्राप्नुवन्तीनां मध्ये 'अच्छावाकीया' अच्छावाकसम्बन्धिनी तनुः 'अहीयत' हीना अभूत् ; सदः समागन्तुं नाशक्नोदित्यर्थः । तदनुग्रहार्थं 'तस्यां' तन्वा मिन्द्राग्नी 'अध्यास्ताम्' अधिष्ठाय निवासं कृतवन्तौ । युज्यते हि इन्द्राग्न्योरनुग्रहीतत्वम् ; यस्माद् देवानां मध्ये इन्द्राग्नी 'ओजिष्ठौ' ओजसा बलहेतुना अष्टमधातुना अत्यन्त मुपेतौ । अतएव 'बलिष्ठौ' अतिशयेन शरीरशक्तियुक्तौ । तत एव 'सहिष्ठौ' अतिशयेन शत्रूनभिभवितारौ । स्वभक्तविषये तु 'सत्तमौ' अतिशयेन सन्तौ, सन्मार्गवर्त्तिना मनुग्रहीताराविर्त्यर्थः । अतएव 'पारयिष्णुतमौ' स्वभक्तैरनुष्ठीयमानं कर्म्मातिशयेन पारं नेतुं सदोद्युक्तौ । तस्मादय मच्छावाक इन्द्राग्नीदेवताकं शस्त्रं प्रातःसवने शंसेत् । "इन्द्राग्नी आगतम्"–इत्यादिकं (सं० ३. १२.) तच्छस्त्रम् * । यस्मादिन्द्राग्नी तस्या मच्छावाकतन्वा मध्यास्ताम्, तस्मादैन्द्राग्नशस्त्रं तस्य युक्तम् ॥

इदानी मच्छावाकस्य सदःप्रवेशे विशेषं विधत्ते— "तस्माद् पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति, पश्चाच्छावाकः ; पश्चेव हि हीनोऽनुसञ्जिगमिषति"–इति । यस्मादच्छावाकव्यतिरिक्ताः प्रशा-

* "इन्द्राग्नी आगतं सुतम्"—इति आश्व० श्रौ० ५. १०. २८ ।

स्त्वादयो होत्रकाः सहसा गन्तुं शक्नुवन्ति, न त्वच्छावाकः; तस्मात्प्रशास्त्रादयः पुरस्तात्सदः प्रसर्पेयुः, अच्छावाकस्तु पश्चात्प्रसर्पेत्। लोकेऽपि हि 'हीनः' अशक्तः 'पश्चेव हि' पश्चादेव जिगमिषमीति प्रसिद्धम्। अत्र पुरस्तात्-पश्चा-शब्दौ देशतः कालतश्चेति वेदितव्यौ॥

अच्छावाकीयशस्त्रं प्रशंसति— "तस्माद्यो ब्राह्मणो बह्वृचो वीर्यवान्त्स्यात्सो ऽस्याच्छावाकीयां कुर्यात्तेनैव सा ऽहीना भवति" –इति। यस्मादिन्द्राग्नी तस्यां तन्वा मधिष्ठाय निवसतः, तस्माल्लोके यः कोऽपि ब्राह्मणो 'बह्वृचः' ऋग्वेदाध्यायी, 'वीर्यवान्' वेदपाठसामर्थ्यातिशयोपेतः स्यात्, सः 'अस्य' यजमानस्य 'अच्छावाकीयां कुर्यात्' अच्छावाकसम्बन्ध मैन्द्राग्नशस्त्रं पठेत्। 'तेनैव' पाठेन 'सा' तदीयतनुः 'अहीना' व्यवहर्त्तुं समर्था भवति॥ ४॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
चतुर्थः खण्डः॥ ४ ( २६ )॥

---

॥ अथ पञ्चमः खण्डः॥

देवरथो वा एष यद्यज्ञस्तस्यैतावन्तरौ रश्मी यदाज्यप्रउगे तद्यदाज्येन पवमान मनु शंसति प्रउगेणाज्यं देवरथस्यैव तदन्तरौ रश्मी विहरत्यलोभाय ता मनु कृतिं मनुष्यरथस्यैवान्तरौ रश्मी विहरन्त्यलोभाय नास्य देवरथो लुभ्यति न मनुष्यरथो य

एवं वेद। तदाहुर्यथा वाव स्तोत्र मेवं शस्त्रं। पाव-
मानीषु सामगा स्तुवत। आग्नेयं होताज्यं शंसति।
कथ मस्य पावमान्यो ऽनुशस्ता भवन्तीति। यो वा
अग्निः स पवमानस्तदप्येतदृषिणोक्त। मग्निर्ऋषिः
पवमान इत्येव मु हास्याग्नेयीभिरेव। प्रतिपद्यमानस्य
पावमान्यो ऽनुशस्ता भवन्ति। तदाहुर्यथा वाव स्तोत्र
मेवं शस्त्रं। गायत्रीषु सामगा स्तुवत। आनुष्टुभं होताज्यं
शंसति। कथ मस्य गायत्र्यो ऽनुशस्ता भवन्तीति।
सम्पदेति ब्रूयात्। सप्तैता अनुष्टुभस्तास्त्रिः प्रथमया
त्रिरुत्तमयैकादश भवन्ति। विराड् याज्या द्वादशी। न
वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्यां। ताः
षोळश गायत्र्यो भवन्त्येव मु हास्यानुष्टुब्भिरेव।
प्रतिपद्यमानस्य। गायत्र्यो ऽनुशस्ता भवन्त्यग्न इन्द्रश्च
दाशुषो दुरोण इत्याग्नेन्द्र्या * यजति। न वा एता-
विन्द्राग्नी सन्तौ व्यजयेता। मामेन्द्रौ वा एतौ सन्तौ
व्यजयेतां। तद्यदाग्नेन्द्र्या † यजति। विजित्या एव सा
विराट्। त्रयस्त्रिंशदक्षरा भवति। त्रयस्त्रिंशद्वै देवा। अष्टौ
वसव एकादश रुद्रा। द्वादशादित्याः प्रजापतिश्च
वषट्कारश्च। तत्प्रथम उक्थमुखे देवता। अक्षरभाजः
करोत्यक्षर मक्षर मेव तद् देवता अनुप्रपिबन्ति।

देवपात्रेणैव तद् देवतास्तृप्यन्ति तदाहुर्यथा वाव शस्त्र मेवं याज्याग्नेयं होताज्यं शंसत्यथ कस्मादा-ग्नेन्द्र्या‡ यजतीति या वा आग्नेन्द्र्यैन्द्राग्नी वै सा सेन्द्राग्न मेतदुक्थं ग्रहेण च तूष्णींशंसेन चेन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् अस्य पातं धिये-षितेत्यैन्द्राग्न मध्वर्युर्ग्रहं गृह्णाति भूरग्निर्ज्योति-र्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति होता तूष्णींशंसं शंसति तद्यथैव शस्त्र मेवं याज्या ॥ ५ (३७) ॥

अथाज्यशस्त्रस्य बहिष्पवमानस्तोत्रोत्तरत्वम्, प्रउगशस्त्रस्याज्य-स्तोत्रोत्तरत्वं विधत्ते— "देवरथो वा एष यद्यज्ञस्तस्यैतावन्तरौ रश्मी,—यदाज्यप्रउगे ; तद्यदाज्येन पवमान मनु शंसति, प्रउगे-णाज्यं, देवरथस्यैव तदन्तरौ रश्मी विहरत्यलोभाय"–इति। यो यज्ञोऽस्ति, एष देवानां रथ एव। 'तस्य' रथरूपस्य यज्ञस्य आज्यं प्रउगं च यच्छस्त्रद्वयं, तत् 'अन्तरौ रश्मी' अश्वबन्धनरज्जू ; रथस्यो-पर्यवस्थितेन सारथिना ध्रियमाणत्वात् तयोरभ्यन्तरत्वम्। यस्मादेवं तस्माद्यद्याज्यशस्त्रेण बहिष्पवमानम् 'अनु' पश्चात् शंसेत्, प्रउग-शस्त्रेण च आज्यस्तोत्र मनु शंसेत्, तदानीं देवरथस्यैव सम्बन्धिना-वभ्यन्तरौ 'रश्मी' प्रग्रहौ 'विहरति' विशेषेण सम्पादयति ; तच्च 'अलोभाय' व्यामोहराहित्याय सम्पद्यते। रश्मिराहित्ये दुष्टाभ्या

*, †, ‡ "०ग्नेन्द्रिया" ख।

मन्त्राभ्यां यत्र क्वापि दुर्गमे देशे रथनयने सति रथभङ्गरूपो व्यामोहः स्यात्, तन्माभूदिति शस्त्रद्वयं क्रमेण प्रयोक्तव्यम् ॥

लौकिकफलप्रदर्शनेन रश्मिस्थानीयं शस्त्रद्वयं प्रशंसति—"ता मनु कृतिं मनुष्यरथस्यैवान्तरौ रश्मी विहरन्त्यलोभाय"—इति। तां 'कृतिं' देवरथे शस्त्रद्वयरूपरश्मिकरणम् 'अनु' पश्चान्मनुष्यरथस्यैवान्तरौ सारथिनां ग्रहणयोग्यौ 'रश्मी' प्रग्रहौ 'विहरन्ति' सम्पादयन्ति; तच्च मनुष्यरथस्यालोभाय सम्पद्यते; अभग्नो मनुष्यरथो यजमानस्य सम्भवतीत्यर्थः। वेदनं प्रशंसति—"नास्य देवरथो लुभ्यति न मनुष्यरथो य एवं वेद"—इति ॥

इदानीं स्तोत्रशस्त्रयोः वैय्यधिकरण्यरूपं चोद्य मुद्भावयति—"तदाहुर्यथा वाव स्तोत्र मेवं शस्त्रं पावमानीषु सामगा स्तुवते;—आग्नेयं होताज्यं शंसति; कथ मस्य पावमान्यो ऽनुशस्ता भवन्तीति? यो वा अग्निः, स पवमानः;—तदप्येतदृषिणोक्त मग्निर्ऋषिः पवमान इति"—इति। 'तत्' तस्मिन्नाज्यशस्त्रे ब्रह्मवादिनः 'आहुः' चोदयन्ति। यथैव स्तोत्रं सामगैरुक्तं, तथैव बह्वृचैः शस्त्रं वक्तव्यम्; "स्तुत मनु शंसति"—इतिविधानात् *। अत्र तु सामगाः "उपास्मै गायता नरः पवमानाय"—इत्यादिषु 'पावमानीषु' पवमानदेवताकास्वृक्षु (उ० आ० १.१,१–३.१–९.) बहिष्पवमानाख्येन स्तोत्रेण स्तुवते †; बह्वृचस्तु होता "प्र वो

* "ऋग्भिः शंसन्ति, यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति"—इति निरु० १३.७। "स्तुतते ऽय शंसति"—इति शत० ब्रा० ८. १. ३. ३। "स्तोत्र मग्रे शस्त्रात्"—इति च आश्व० श्रौ० ५. १०. १।

† ३८३ पृ० "*" द्रष्टव्यम्। किञ्च "बहिष्पवमानं सर्पन्ति"—इति (६.७.९.)—इत्येवमादिविषयः, "नवभिः स्तुवन्ति"—इति (६.८.), "उपास्मै गायता नर इति"—इति (६.९), "इमे वे लोका गायत्रं त्र्यावृद्द गेयम्"—इति (७.१.) खण्डाश्च पर्यालोच्याः (ता० ब्रा०)।

देवायाग्नये ( सं० ३.१३.१–७. )"–इत्यादिक माज्यशस्त्रं शंसति। तथा सति कथ मस्य होतुः 'पावमान्यः' ऋचोऽनुशस्ता भवेयुः ? न हि पवमानः शस्त्रस्य देवता किन्त्वग्निरिति चोद्यम् ॥ तस्य परिहार माह—'यो वा अग्निः, स पवमानः'-इति। अग्निपवमान-देवतयोः परस्परप्रीत्या अभेदादाग्नेय मपि सूक्तं पावमान मिति वक्तुं शक्यते। तेन पावमान्यो ऽनुशस्ताः सम्पद्यन्ते। अग्निपवमानयो-रेकत्वे कश्चिन्मन्त्र मुदाजहार—'तदप्येतदिति ( सं० ९.६६.२०.)। 'ऋषिः' अतीन्द्रियद्रष्टा। योऽय मग्निः, स एव पवमानो वायुः; प्रीत्यतिशयेन एकत्वप्रतिभासात्। यद्वा, शोधकत्वादग्निरेव पव-मान इति मन्त्रार्थः *॥ परिहार मुपपाद्य निगमयति— "एव मु हास्याग्नेयीभिरेव प्रतिपद्यमानस्य पावमान्यो ऽनुशस्ता भवन्ति"–इति। अग्निदेवताकाभिः सूक्तगताभिः ऋग्भिः शस्त्रं प्रारभमाणस्य होतुर्बहिष्पवमानस्तोत्रगताः पवमानदेवताकाः ऋचो ऽनुशस्ता भवन्ति ॥

देवताप्रयुक्तं वैय्यधिकरण्यं परिहृत्य छन्दःप्रयुक्तं वैय्यधिकरण्य-रूपं चोद्यं पूर्ववदुद्भावयति— "तदाहुर्यथा वाव स्तोत्र मेवं शस्त्रं,— गायत्रीषु सामगा स्तुवते, आनुष्टुभं होताज्यं शंसति; कथ मस्य गायत्र्यो ऽनुशस्ता भवन्तीति ?"–इति। बहिष्पवमानस्तोत्रगताः "उपास्मै गायता"-इत्याद्या ऋचो गायत्रीच्छन्दस्काः ( उ० आ० १.१.१–३.१–९. ), "प्र वो देवाय"–इत्यादिक माज्यशस्त्रम् ( सं० ३. १३.१-७.) अनुष्टुप्छन्दस्क मिति वैय्यधिकरण्यं चोद्यम् ॥

तस्य परिहार माह— "सम्पदेति ब्रूयात्"-इति। अनु-ष्टुप्सु गायत्रीत्वे सम्पादिते सति, तया 'सम्पदा' वैय्यधिकरण्य-

* "अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। त मीमहे महागयम्"–इति सं०९.६६.२०।

परिहारादनुकूलशंसनं भवतीति परिहारं ब्रूयात् ॥ सम्पादनप्रकारं दर्शयति—"सप्तैता अनुष्टुभस्तास्त्रिः प्रथमया त्रिरुत्तमयैकादश भवन्ति ; विराड्याज्या द्वादशी ; न वा एकेनाक्षरेण च्छन्दांसि वियन्ति, न द्वाभ्यां ; ताः षोळश गायत्र्यो भवन्ति"–इति। आद्यन्तयोर्ऋचोस्त्रिरावृत्तौ सत्यां स्वभावतः सप्ताना मनुष्टुभा मेकादशत्वं सम्पद्यते। "अग्न इन्द्रश्च"–इति ( सं०३.२५.४. ) याज्या * विराट्छन्दस्का ; सा द्वादश्यनुष्टुबिति गणनीया। यद्यपि तस्य विराजस्त्रयस्त्रिंशदक्षरत्वादेक मक्षर मनुष्टुप्त्वादतिरिच्यते, तथाप्यल्पेन वैकल्येन छन्दस्त्वं नापैतीति न्यायः पूर्वं मप्युदाहृतः (५३पृ०.१२पं०)। एवं सति द्वादशसु अनुष्टुप्सु द्वादश पादान् अपनीय अवशिष्टैः पादैस्त्रिपदा गायत्र्यो द्वादश सम्पादनीयाः ; अपनीतैश्च पादैश्च तिस्रो गायत्र्य इत्यनेन प्रकारेण षोड़शसङ्ख्याका गायत्र्य एव सम्पद्यन्ते। परिहारं निगमयति – "एव मु हास्यानुष्टुब्भिरेव प्रतिपद्यमानस्य गायत्र्यो ऽनुशस्ता भवन्ति"–इति ॥

इदानी मैन्द्राग्नग्रहस्य याज्यां विधत्ते— "अग्न इन्द्रश्च दाशुषो दुरोण इत्याग्नेन्द्र्या यजति"–इति। नन्वैन्द्राग्नग्रहे पूर्वभावित्व मिन्द्रस्य प्रतीयते, अग्नेस्तु पश्चाद्भावित्वम् ; याज्यायां तु तद्विपर्ययः कस्मात् क्रियते ? इत्याशङ्क्याह – "न वा एताविन्द्राग्नी सन्तौ व्यजयेता माग्नेन्द्रौ वा एतौ सन्तौ व्यजयेतां ; तद्यदाग्नेन्द्र्या यजति, विजित्या एव सा विराट्"–इति। असुरैः सह देवानां विजययुद्धे सति विजयार्थं मिन्द्रस्य पुरोगमन मग्नेः पश्चाद्गमन मित्येवं न सम्पन्नम्, किन्त्वग्निः पुरोगतः इन्द्रस्तु पश्चाद्गतः। अतो विजय-

---

* "अग्न इन्द्रश्च दाशुषो दुरोण इति (सं० ३.२५.४.) याज्या"–इति आश्व० श्रौ० ५.९.२६।

कालीनक्रमेणैवाग्निपूर्वकत्वप्रतिपादिकया यजने सति यजमानस्य विजयाय सम्पद्यते ॥

एवं याज्यागतान्यक्षराणि प्रशंसति— "त्रयस्त्रिंशदक्षरा भवति; त्रयस्त्रिंशद्वै देवाः,—अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च; तत्प्रथम उक्थमुखे देवता अक्षरभाजः करोति,— अक्षर मक्षर मेव तद् देवता अनुप्रपिबन्ति; देव-पात्रेणैव तद् देवतास्तृप्यन्ति"–इति। अक्षराणां देवतानां च सङ्ख्यासाम्यम् 'उक्थमुखे' शस्त्राणां मध्ये मुख्ये 'प्रथमे' आज्यशस्त्रे देवताः प्रत्येव मक्षरभाजः करोति,—तास्तत्तदक्षर मेवानुसृत्य ता देवताः सोमं प्रकर्षेण पिबन्ति। तथा सति स्वयोग्येनाक्षर रूपेण देवपात्रेणैव देवतास्तृप्ता भवन्तीति ॥

शस्त्रयाज्ययोर्देवताप्रयुक्तं वैय्यधिकरण्यरूपं चोद्य मुद्भावयति— "तदाहुर्यथा वाव शस्त्र मेवं याज्या ऽऽग्नेयं होताज्यं शंसत्यथ कस्मादाग्नेन्द्र्या यजतीति?"–इति। शस्त्रस्याग्निरेक एव देवता, याज्यायास्त्वग्निरिन्द्रश्चेति द्वयोर्मिलितयोर्देवतात्व मिति वैय्यधि-करण्यम् ॥

अस्य चोद्यस्य परिहार माह— "या वा आग्नेन्द्र्यैन्द्राग्नी वै सा सैन्द्राग्न मेतदुक्थं ग्रहेण च तूष्णींशंसेन च"–इति। येयम् 'आग्नेद्री' याज्या, सेयम् 'ऐन्द्राग्नी' अपि भवति; द्वयोः पौर्वापर्य मविसंवादेऽपि तस्या ऋचो द्विदेवत्यत्वसद्भावाद् देवतयोः क्रम-विपर्यासमात्रे ऽङ्गीकृते सति याज्याया ऐन्द्राग्नत्व मुपचरितं यथा सम्पद्यते तथैवैतद् 'उक्थम्' आज्यशस्त्र मपि ग्रहद्वारा तूष्णींशंस-द्वारा चेन्द्राग्नीदेवतासहितं सम्पद्यते। तथा सत्यैन्द्राग्नत्वस्योप-चरितस्य याज्याशस्त्रयोः सद्भावात् नास्ति वैय्यधिकरण्यम् ॥

आज्यशस्त्रस्य ग्रहद्वारकं तूष्णींशंसद्वारकं चैन्द्राग्नत्वं दर्शयति— "इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम्, अस्य पातं धियेषितेत्यैन्द्राग्न मध्वर्युर्ग्रहं गृह्णाति ; भूरग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति होता तूष्णींशंसं शंसति ; तद्यथैव शस्त्र मेवं याज्या"–इति । हे इन्द्राग्नी ! 'सुतम्' अभिषुतं सोमं प्रति 'आ गतम्' आगच्छतम् । कीदृशं सुतम् ? 'गीर्भिः' स्तुतिभिः, युक्त मिति शेषः । 'नभः' आकाशस्वरूपम्, आकाशवत् महदित्यर्थः । 'वरेण्य' वरणीयम् । आगत्य च युवां 'धिया इषिता' स्वबुद्धा प्रेषितौ सन्तौ 'अस्य' सोमस्य सारं 'पातं' पिबतम् ( सं ३. १२. १. ) । 'इति' अनेनैन्द्राग्नदेवताकमन्त्रेण अध्वर्युरैन्द्राग्नं ग्रहं गृह्णाति । तूष्णींशंसे "भूरग्निः"–इत्यग्निराम्नातः, "इन्द्रो ज्योतिः"–इतीन्द्रोऽप्याम्नातः ( ४२४ पृ० ) । तत उभयसद्भावात् तूष्णींशंसोऽप्यैन्द्राग्नः । ईदृशस्य ग्रहस्य, तूष्णींशंसस्य च सम्बन्धादाज्यशस्त्र मप्यैन्द्राग्नं भवति । तस्माच्छस्त्रयाज्ययोरैन्द्राग्नत्वसम्पादनात् नास्ति वैय्यधिकरण्यम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
पञ्चमः खण्डः ॥ ५ ( ३७ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

होतृजपं जपति रेतस्तत्सिञ्चत्युपांशु जपत्युपांश्विव वै रेतसः सिक्तिः पुराह्वावाज्जपति यद्वै किञ्चो-

इमाहावांच्छस्वस्यैव तत्पराञ्चं चतुष्पद्यासीन मध्या-
ह्वयते तस्मात् पराञ्चो भूत्वा चतुष्पादो रेतः सिञ्चन्ति
सम्यङ् द्विपाद् भवति तस्मात्सम्यञ्चो भूत्वा द्विपादो
रेतः सिञ्चन्ति पिता मातरिश्वेत्याह प्राणो वै पिता
प्राणो मातरिश्वा प्राणो रेतो रेतस्तत्सिञ्चत्यच्छिद्रा
पदाधा इति रेतो वा अच्छिद्र मतो ह्यच्छिद्रः
सम्भवत्यच्छिद्रोक्था कवयः शंसन्निति ये वा अनू-
चानास्ते कवयस्त इद मच्छिद्रं रेतः प्रजनयन्नित्येव
तदाह सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्था-
मदानि शंसिषदिति ब्रह्म वै बृहस्पतिः क्षत्रं सोमः
स्तुतशस्त्राणि नीथानि चोक्थामदानि च दैवेन
चैवैतद् ब्रह्मणा प्रसूतो दैवेन च क्षत्रेणोक्थानि
शंसत्येतौ ह वा अस्य सर्वस्य प्रसवस्येशाते यदिदं
किञ्च तद्यदेताभ्या मप्रसूतः करोत्यकृतं तदकृत
मकरिति वै निन्दन्ति कृत मस्य कृतं भवति नास्या-
कृतं कृतं भवति य एवं वेद वागायुर्विश्वायुर्विश्व
मायुरित्याह प्राणो वा आयुः प्राणो रेतो वाग्योनि-
र्योनिं तदुपसन्धाय रेतः सिञ्चति क इदं शंसिष्यति
स इदं शंसिष्यतीत्याह प्रजापतिर्वै कः प्रजापतिः
प्रजनयिष्यतीत्येव तदाह ॥ ६ (३८) ॥

पूर्वत्र "पराङ्ङध्वर्यो"-इत्याद्याश्वलायनसूत्रोदाहरणेन होतुर्यो जपो दर्शितः ( ४२८पृ० * ), त मिमं जपं विधत्ते— "होतृजपं जपति, रेतस्तत्सिञ्चति"-इति । होतुः कर्त्तव्यो यो जपः, त मनुतिष्ठेत् । तेन प्रजोत्पादनार्थं मादौ रेतः सिक्तं भवति ॥

तत्रोच्चारणप्रकारविशेषं विधत्ते— "उपांशु जपत्युपांश्विव वै रेतसः सिक्तिः"-इति । ओष्ठस्पन्दन मेव परैर्दृश्यते, न तु शब्दः श्रूयते, तादृश मुपांशुत्वम् । लौकिके रेतःसेचनेऽपि ध्वनेरश्रवणाद् युक्तं तथाविधत्वम् ॥

तस्य जपस्य "शोंसावोम्"-इत्येतस्मादाहावात् पूर्वभावित्वं विधत्ते— "पुरा ऽऽहावाज्जपति ; यद्वै किञ्चोर्द्ध माहावाच्छस्त्रस्यैव तत्"-इति । अध्वर्युराह्वयते येन शोंसावो मितिमन्त्रेण, तस्मात् पूर्वभावी होतृजपः । तथा चाश्वलायनेनोदाहृतम्— "जपित्वा ऽनभिहिङ्कृत्य शोंसावो मित्युच्चैराहूय"-इति ( श्रौ० ५. ९. १. ) । आहावादूर्द्ध यत्किञ्चित्पठ्यते, तत्सर्वं शस्त्रस्यैव सम्बन्धि भवेत् ; आहावमन्त्रेण शस्त्रानुष्ठानस्य प्रवृत्तत्वात् । अतो होतृजपस्य शस्त्रान्तर्भावं निवारयितुं पूर्वकालीनत्वम् ॥

अथाहावे प्रकारविशेषं विधत्ते— "पराङ् चतुष्पद्यासीन मभ्याह्वयते ; तस्मात्पराञ्चो भूत्वा चतुष्पादो रेतः सिञ्चन्ति"-इति । अस्मिन् काले अध्वर्युः 'पराङ् भवति' होतुर्विमुखो भवति । तथा 'चतुष्पदी' गौरिव हस्तौ भूमाववस्थाप्य आसीनो भवति ; तादृश मध्वर्युं सम्बोध्य अभिमुखो यथा भवति तथा होता शोंसावो मितिमन्त्रेण आह्वयते । यस्मादाह्वानकाले ईदृशो

---

* २९४ पृ० "*" तत्सूत्रारम्भपाठो द्रष्टव्यः ।

ऽध्वर्युस्तस्माल्लोकेऽपि 'चतुष्पादः' गवादयः 'पराञ्चः' सम्भोगावस्थायां परस्पराभिमुखरहिता भूत्वा रेतः सिञ्चन्ति ॥

आह्वावादूर्द्ध्व मध्वर्योश्चतुष्पात्त्वं परित्यज्य सम्यगुत्थानं विधत्ते— "सम्यङ् द्विपाद् भवति; तस्मात्सम्यञ्चो भूत्वा द्विपादो रेतः सिञ्चन्ति"–इति। ऊर्द्ध्वत्वेनोत्थानं सम्यक्त्वम्; तथाविधो भूत्वा रेतः सिञ्चति। जपितव्यो यो मन्त्रस्तस्यादौ "सु-मद्-पद्-वग्-दे"–इति पञ्चाक्षराणि पठितव्यानि। तानि च पूर्व मेवाक्षर-पङ्क्तिप्रशंसायां ( ३८२ पृ० ) विहितानि ॥

तेभ्य ऊर्द्ध्वं यो जपितव्यो मन्त्रः, तस्य प्रथमभाग मनूद्य व्याचष्टे— "पिता मातरिश्वेत्याह;— प्राणो वै पिता, प्राणो मातरिश्वा, प्राणो रेतो, रेतस्तत्सिञ्चति"–इति। तस्मिन् मन्त्रे यजमानस्य नूतनं जन्म सम्पाद्यते, अतोऽत्र मातरिश्वा वायुः पितृत्वेन वर्ण्यते। त मिमं पितेत्यादिकं मन्त्रं * होता ब्रूयात्। प्राण एव लोके 'पिता'; मृतात्पितृदेहात् जन्मासम्भवात्। वायुश्च प्राणः; प्राणस्य वायुकार्यत्वात्। रेतश्च प्राणः; प्राण-युक्तस्यैव रेतसो जननहेतुत्वात्। अतएवारण्यके समाम्नायते †— "यद्वा ऋते प्राणाद्रेतः सिच्येत, पूयेन्न सम्भवेत्"–इति ‡। 'तत्' तेन प्रथमभागपाठेन यजमानस्य पुनर्जन्मार्थं रेतः सिक्तं भवति ॥

द्वितीयभाग मनूद्य व्याचष्टे— "अच्छिद्रा पदा ऽधा इति;— रेतो वा अच्छिद्र मतो ह्यच्छिद्रः सम्भवति"–इति। स वायुरूपः

---

* एष मन्त्रोऽन्यशाखीय इति आश्वलायनेन प्रपठ्य विहितः—"पिता मातरिश्वाच्छिद्रा पदाधादच्छिद्रोक्था कवयः शंसन्। सोमो विश्वविन्नीथा निनेषद् बृहस्पति रुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्व मायुः क इदं शंसिष्यति स इदं शंसिष्यतीति"–इति श्रौ० ५.९.१। 'पदाधाः'–'पदाधात्'—इति ब्राह्मणसूत्रयोः पाठौ।

† "समाम्नास्यते" घ।  ‡ ऐ० आ० २.२.१.५।

पिता छिद्ररहितं पदं प्रापणीयं रेतः 'अधाः' गर्भाशये स्थापितवान्। अत्रोक्त मच्छिद्रं वस्तु रेत एव। अतो हि रेतसः पुमान् अच्छिद्र उत्पद्यते॥

तृतीयभाग मनूद्य व्याचष्टे— "अच्छिद्रोक्था कवयः शंसन्निति;— ये वा अनूचानास्ते कवयस्त इद मच्छिद्रं रेतः प्रजनयन्नित्येव तदाह"–इति। 'कवयः' पुरुषाः 'अच्छिद्रोक्था शंसन्' छिद्ररहित मुक्थं शस्त्रं शंसन्ति। अत्र कविशब्देनानूचानाः षड़ङ्गसहितवेदाध्यायिनः उच्यन्ते। ते वेद मच्छिद्रं रेतः प्रजनयन् उत्पादयन्तीति। अनेनैव प्रकारेण तदच्छिद्रोक्थेति वाक्यम् 'आह' ब्रूते॥

चतुर्थभाग मनूद्य व्याचष्टे— "सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषदिति;— ब्रह्म वै बृहस्पतिः, क्षत्रं सोमः; स्तुतशस्त्राणि नीथानि चोक्थामदानि च, दैवेन चैवैतद् ब्रह्मणा प्रसूतो दैवेन च क्षत्रेणोक्थानि शंसति"–इति। 'विश्ववित्' सर्वज्ञः सोमो 'नीथानि' नेतव्यानि अनुष्ठेयानि स्तोत्रशस्त्राणि 'निनेषत्' नेतु मिच्छां कृतवान्, प्रयुक्तवानित्यर्थः। तथा बृहस्पतिः 'उक्थामदानि' शस्त्ररूपाणि सन्तोषकारणानि 'शंसिषत्' शंसितु मिच्छति, शस्तवानित्यर्थः। अस्मिन् भागे बृहस्पतिसोमशब्दाभ्यां ब्राह्मणक्षत्रियजातिद्वयं दैवं विवक्षितम्, नीथशब्देन उक्थामदशब्देन च स्तोत्रशस्त्राणि विवक्षितानि। अतएवैतद्भागपाठे सति देवसम्बन्धिना ब्राह्मणेन क्षत्रियेण च प्रेरितः शस्त्राणि शंसति। सोमबृहस्पत्योः सर्वकर्मप्रेरकत्वप्रसिद्धिं दर्शयति— "एतौ ह वा अस्य सर्वस्य प्रसवस्येशाते यदिदं किञ्च"–इति। यत्नेऽनुष्ठितं यत्किञ्चिदस्ति, अस्य सर्वस्य प्रसवो यत्

प्रेरणं, तस्य सोमबृहस्पती एव स्वामिनौ। व्यतिरेकमुखेनैतदेव दृढ़यति— "तद्यदेताभ्या मप्रसूतः करोत्यकृतं तदकृत मकरिति वै निन्दन्ति"–इति। 'तत्' तथा द्वयोः प्रेरकस्वामित्वे सति 'यत्' अङ्ग मेताभ्या मप्रेरितः करोति, 'तत्' अङ्ग मकृतं मेव भवति। लोकेऽपि स्वाम्यनुज्ञा मन्तरेण यत् क्रियते, तत्र 'अकृतम् अकः' अकर्त्तव्यं कृतवानिति जना निन्दन्ति॥ वेदनं प्रशंसति— "कृत मस्य कृतं भवति, नास्याकृतं कृतं भवति, य एवं वेद"–इति। 'अस्य' वेदितुः 'कृतं' कर्त्तव्य मेव 'कृतं भवति', न तु 'अकृतम्' अकर्त्तव्यं कृतं भवति॥

पञ्चमभाग मनूद्य व्याचष्टे— 'वागायुर्विश्वायुर्विश्व मायुरित्याह;—प्राणो वा आयुः, प्राणो रेतो, वाग्योनिर्योनिन्तदुपसन्धाय रेतः सिञ्चति"–इति। येयं 'वाक्' इन्द्रियरूपा, यदपि 'आयुः' जीवनम्, तदुभयम्, अस्त्विति शेषः। न चाप्यायुरल्पं विवक्षितं किन्तु 'विश्वायुः' विश्वं समस्तं शतसंवत्सरपरिमित मायुर्विवक्षितम्; तस्माद्विश्व मायुः यजमानः प्राप्नोत्वित्यध्याहारः। त मिमं भागं पठेत् अत्रायुःशब्देन प्राण एव विवक्ष्यते; "यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः"–इतिश्रुतेः। रेतसः प्राणत्वं पूर्वं मेवोदाहृतं (४६० पृ०) वाक्शब्देन योनिरुपलक्ष्यते। तथा सति तद्भागपाठेन योनि मुपसन्धाय गर्भस्थान मभिलक्ष्य रेतः सिञ्चति॥

षष्ठं भाग मनूद्य व्याचष्टे— "क इदं शंसिष्यति, स इदं शंसिष्यतीत्याह;— प्रजापतिर्वै कः प्रजापतिः प्रजनयिष्यतीत्येव तदाह"–इति। 'कः' प्रजापतिः 'इदं' शस्त्रं 'शंसिष्यति' शंसितु मिच्छति। अतः स एवेदं शंसिष्यति। त मिम मन्तिमभागं

ब्रूयात्। अत्र क-शब्देन प्रजापतिरुक्तत्वात् स एव यजमान मुत्पादयिष्यति 'इति' अनेनैव प्रकारेण तन्मन्त्रवाक्यं ब्रूते ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये षष्ठः खण्डः ॥ ६ (३८) ॥

---

॥ अथ सप्तमः खण्डः ॥

आहूय तूष्णींशंसं शंसति रेतस्तत् सिक्तं विकरोति सिक्तिर्वा अग्रे ऽथ विकृतिरुपांशु तूष्णींशंसं शंसत्युपांश्विव वै रेतसः सिक्तिस्तिर इव तूष्णींशंसं शंसति तिर इव वै रेतांसि विक्रियन्ते षट्पदं तूष्णींशंसं शंसति षड्विधो वै पुरुषः षळङ्ग आत्मान मेव तत् षड्विधं षळङ्गं विकरोति तूष्णींशंसं शस्त्वा पुरोरुचं शंसति रेतस्तद्विकृतं प्रजनयति विकृतिर्वा अग्रे ऽथ जातिरुच्चैः पुरोरुचं शंसत्युच्चैरेवैनं तत् प्रजनयति द्वादशपदां पुरोरुचं शंसति द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः सो ऽस्य सर्वस्य प्रजनयिता स यो ऽस्य सर्वस्य प्रजनयिता स एवैनं तत्प्रजया पशुभिः प्रजनयति प्रजात्यै प्रजा-

यते प्रजया पशुभिर्य एवं वेद जातवेदस्यां पुरोरुचं शंसति जातवेदोन्यङ्गां तदाहुर्यत्तृतीयसवन मेव जातवेदस आयतन मथ कस्मात् प्रातःसवने जातवेदस्यां पुरोरुचं शंसतीति प्राणो वै जातवेदाः स हि जातानां वेद यावतां वै स जातानां वेद ते भवन्ति येषा मु न वेद किमु ते स्युर्यो वा आज्य आत्मसंस्कृतिं वेद तत्सुविदितम् ॥ ७ ( ३८ ) ॥

आहावात् पूर्वकालीनं जप मुक्तोत्तरकालीनं तूष्णींशंसं विधत्ते— "आहूय तूष्णींशंसं शंसति। रेतस्तत्सिक्तं विकरोति ;— सिक्तिर्वा अग्रे ऽथ विकृतिः"–इति। शोंसावो मितिमन्त्रेण अध्वर्यु मुपहूय पश्चात् तूष्णींशंसं पठेत्। तथा सति होतृजपेन सिक्तं रेतो ऽनेन 'विकरोति' पिण्डाद्याकारं रेतसि जनयति। सेकः पूर्वभावी, विकारः पश्चाद्भावीति युक्तोऽयं क्रमः ॥

शंसनकाले ध्वनिराहित्यं विधत्ते— "उपांशु तूष्णींशंसं शंसत्युपांश्विव वै रेतसः सिक्तिः"–इति। परैर्ध्वनेरश्रवणादपठितसदृशं भवतीत्यस्य तूष्णींशंस इति नामधेयम्। तस्मात्तदनुसारेणोपांशूच्चारयेत्; रेतःसेकोऽप्युपांशुसदृशः, रहसि क्रियमाणत्वात् ॥ उपांशुत्वेन होतृजपसाम्यप्रसक्तौ वैषम्यं विधत्ते— "तिर इव तूष्णींशंसं शंसति, तिर इव वै रेतांसि विक्रियन्ते"–इति। यथा कुड्यगृहादिव्यवहित मन्यैरधीयमानं वाक्य मीषत् प्रतीयते, न तु स्पष्टम्, तद्वत् तूष्णींशंसोऽपि अस्पष्टो यथा भवति तथा शंसेत्; तदिदं 'तिर इव'–इत्युच्यते; होतृजपादीषदुच्चैरित्यर्थः ॥

तूष्णींशंसस्येयत्तां विधत्ते—"षट्पदं तूष्णींशंसं शंसति; षड्विधो वै पुरुषः, षळङ्ग आत्मान मेव तत् षड्विधं षळङ्गं विकरोति"-इति। 'षट्पद" षड्भागम्;— भूरग्निर्ज्योतिरित्येको भागः, ज्योतिरग्निरिति द्वितीयो भागः; एव मुत्तरत्रापि द्रष्टव्यम् *। तथाविधशंसने पुरुषसाम्यं भवति। पुरुषस्य षड्विधत्व मेव 'षळङ्गः'-इत्यनेन स्पष्टीक्रियते। पुरुषावयवषट्कं शाखान्तरे दर्शितम्— "षोढ़ा विहितो वै पुरुष आत्मा च शिरश्चत्वार्यङ्गानि"-इति (तै० सं० ५.६.८.१.)। द्वौ हस्तौ द्वौ पादावित्यङ्गचतुष्टयम्। आत्मशब्दो मध्यदेहवाची। भागत्रयोपेते तूष्णींशंसे तत्तद्भागमध्येष्ववसाने षड्भागत्वं भवति। आश्वलायन आह— "भूरग्निर्ज्योतिर्ज्योतिरग्नी मिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रं सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो मिति त्रिपदस्तूष्णींशंसो यद्यु वै षट्पदः पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत्"-इति (५. ९. ११.)। अतः षट्पदे तूष्णींशंसेन यजमानस्य शरीर मेव षड़ङ्गोपेतं कृत्वा विकरोति॥

एतदानन्तर्यं निविदो विधत्ते— "तूष्णींशंसं शस्त्वा पुरोरुचं शंसति, रेतस्तद्विकृतं प्रजनयति; विकृतिर्वा अग्रे ऽथ जातिः" -इति। "प्र वो देवाय"-इत्यादिः सूक्तात् पुरतो दीप्यते रोचते इति पुरोरुक्शब्देन निविदुच्यते; तां तूष्णींशंसादूर्द्ध्वं पठेत्। तेनोर्द्ध्वपाठेन षड़ङ्गतया विकृतं रेतः शरीररूपेणोत्पादितं भवति। विकारः पूर्वभावी, जन्म पश्चाद्भावि; तस्मात् तदानन्तर्यं निविदो युक्तम्॥

होतृजपगतं यदुपांशुत्वं, तूष्णींशंसगतं च यदीषदुच्चध्वनित्वं,

* ४३१पृ० "*" टीप्पनी द्रष्टव्या।

तस्मादुभयस्मादेतल्लक्षण्यं निविदो विधत्ते— "उच्चैः पुरोरुचं शंसत्यु-च्चैरेवैनं तत्प्रजनयति"-इति । उत्पादनकाले प्रसवे वेदनया तन्मातोच्चैर्ध्वनिं करोति, तदिदम् 'उच्चैः प्रजनयति'-इत्युच्यते ॥

निविदां न्यूनाधिकभागशङ्काव्युदासाय सङ्ख्यां विधत्ते— "द्वादशपदां पुरोरुचं शंसति, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, सो ऽस्य सर्वस्य प्रजनयिता ; स एवैनं तत्प्रजया पशुभिः प्रजनयति प्रजात्यै"-इति । निविदो द्वादशभागाः पूर्व मेव तद्व्याख्याने विवेचिताः ( ४३८—४४३ पृ० ) ; अतो मास-सङ्ख्यासाम्यान्माससंवत्सरद्वारा सर्वस्य जगत उत्पादकत्वेन प्रसिद्धः प्रजापतिरेवेयं पुरोरुक् भवति । तादृश्याः पाठे सति प्रसिद्धिः । सर्वस्योत्पादको यः प्रजापतिरस्ति, स एव 'एनं' यजमानं प्रजा-पशुसहितं प्रजनयति । तस्मादेतच्छंसनं प्रजात्यै सम्पद्यते ॥

वेदनं प्रशंसति— "प्रजायते प्रजया पशुभिर्य एवं वेद"-इति ॥

देवताद्वारा पुरोरुचं प्रशंसति— "जातवेदस्यां पुरोरुचं शंसति जातवेदोन्यङ्गाम्"-इति । जातवेदा देवता यस्याः पुरोरुचः, सा 'जातवेदस्या'। जातवेदःशब्दरूपं 'न्यङ्ग' नितरामङ्गं चिह्नं यस्याः पुरोरुचः सा 'जातवेदोन्यङ्गा' ; तस्याः पुरोरुचो ऽन्तिमे भागे,— "सो अध्वरा करति जातवेदाः"-इति ( ४४०पृ० २पं० ) जात-वेदः-शब्दः पठ्यते ॥

उक्त मर्थ माक्षिपति— "तदाहुर्यत् तृतीयसवन मेव जातवेदस आयतन मथ कस्मात्प्रातःसवने जातवेदस्यां पुरोरुचं शंसतीति"-इति । तृतीयसवनस्य जातवेदसं प्रत्यायतनत्व माग्निमारुतशस्त्रे देवत्वादवगन्तव्यम् । तथा च सम्प्रदायविद आहुः— "जात-वेदास्तु देवोऽयं वर्त्तत आग्निमारुते"-इति । यस्मादेवं तस्मात्

प्रातःसवने जातवेदस्यायाः शंसने कारणं नास्तीति आक्षेपं तद्वादिन आहुः ॥

तस्य परिहारं दर्शयति—"प्राणो वै जातवेदाः, स हि जातानां वेद, यावतां वै स जातानां वेद, ते भवन्ति ; येषा मु न वेद, किमु ते स्युर्यो वा आज्य आत्मसंस्कृतिं वेद, तत् सुविदितम्" -इति। अत्र जातवेदः-शब्देन प्राण एवाभिधीयते, न त्वग्निः ; अत एवान्तिमभागव्याख्याने "वायुर्वै जातवेदाः"-इत्याम्नातं (४४०पृ० २ पं०)। यस्मात् स प्राणो 'जातानाम्' उत्पन्नानां शरीराणां स्वरूपं 'वेद' जानाति, लभत इत्यर्थः, तस्मात् प्राणस्य जातवेदा इति नामधेयम्। एवं सति प्राणो यावता मुत्पन्नानां शरीराणां स्वरूपं 'वेद' लभते, 'ते' देहा भवन्ति, स तान् भजन्ते ; येषां तु देहानां स्वरूपं प्राणो 'न वेद' न लभते, 'ते' देहाः 'किमु स्युः' किमु विद्यमानतां भजेयुः ? न भजेयुरित्यर्थः। एवं सति जातवेदोनामकस्य प्राणस्य प्रतिपादिकायाः पुरोरुचोऽन्तपाठे यजमानो लब्धप्राणः सन् विद्यमानो भवति। अन्यथा अय मसत्कल्पः स्यात्। 'एवम्' उक्तप्रकारेण 'यः' यजमान आज्यशस्त्रे पुनर्जन्मस्वरूपां संस्कृतिं वेद, तत् तस्य यजमानस्य 'सुविदितं' सम्यक् ज्ञान मुत्पन्नम्। अनेन होतृजप मित्यारभ्य प्रोक्ते प्रघट्टके ऽवस्थितस्यार्थवादस्य सर्वस्याप्युपसंहारो जातः ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
सप्तमः खण्डः ॥ ७ ( ३९ ) ॥

---

॥ अथ अष्टमः खण्डः ॥

प्र वो देवायाग्नय इति शंसति प्राणो वै प्र प्राणं हीमानि सर्वाणि भूतान्यनु प्रयन्ति प्राण मेव तत्सम्भावयति प्राणं संस्कुरुते दीदिवांस मपूर्व्य मिति शंसति मनो वै दीदाय मनसो हि न किञ्चन पूर्व मस्ति मन एव तत्सम्भावयति मनः संस्कुरुते स नः शर्माणि वीतय इति शंसति वाग्वै शर्म तस्माद्वाचानुवदन्त माह शर्मवदास्मा अयांसीति * वाच मेव तत्सम्भावयति वाचं संस्कुरुत उत नो ब्रह्मन्नविष इति शंसति श्रोत्रं वै ब्रह्म श्रोत्रेण हि ब्रह्म शृणोति श्रोत्रे ब्रह्म प्रतिष्ठितं श्रोत्र मेव तत्सम्भावयति श्रोत्रं संस्कुरुते स यन्ता विप्र एषा मिति शंसत्यपानो वै यन्तापानेन ह्ययं यतः प्राणो न पराङ् भवत्यपान मेव तत्सम्भावयत्यपानं † संस्कुरुत ऋतावा यस्य रोदसी इति शंसति चक्षुर्वा ऋतं तस्माद्यतरो विवदमानयोराहाह मनुष्या चक्षुषादर्श मिति तस्य श्रद्दधति चक्षुरेव तत्सम्भावयति चक्षुः संस्कुरुते नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वस्वित्युत्तमया परिधात्यात्मा वै समस्तः सहस्रवांस्तोकवान् पुष्टिमाना-

* "अयांसि" 'क'-भिन्नमूलपुस्तकानाम् ; "आयांसि" भाष्यपुस्तकानाम्।

† "०त्यपान मेव" क।

त्मान मेव तत्समस्तं सम्भावयत्यात्मानं समस्तं संस्कु-रुते याज्यया यजति प्रत्तिर्वै याज्या पुण्यैव लक्ष्मीः पुण्यामेव तल्लक्ष्मीं * सम्भावयति पुण्यां लक्ष्मीं संस्कु-रुते स एवं विद्वांश्छन्दोमयो देवतामयो ब्रह्ममयो ऽमृतमयः सम्भूय देवता अप्येति य एवं वेद यो वै तद्वेद यथा छन्दोमयो देवतामयो ब्रह्ममयो ऽमृतमयः सम्भूय देवता अप्येति तत्सुविदित मित्य-ध्यात्म मथाधिदैवतम् ॥ ८ ( ४० ) ॥

अथ सूक्तगतां प्रथमा मृचं विधत्ते— "प्र वो देवायाग्नय इति शंसति ; प्राणो वै प्र ; प्राणं हीमानि सर्वाणि भूतान्यनु प्रयन्ति ; प्राण मेव तत्सम्भावयति, प्राणं संस्कुरुते"–इति । अस्याः प्रथमाया ऋच आदौ प्रेतिशब्दः श्रूयते, स प्राणस्वरूपः ; नाम्न आद्यक्षर-साम्यात् । 'हि' यस्मात् कारणात् 'सर्वाणि' इमानि 'भूतानि' जीवजातानि 'प्राण मनु प्रयन्ति' प्राणः प्रथमतो गच्छति, त मनु पश्चाद्देहाः प्रयन्ति ; प्राणप्रेरणादूर्द्ध्वं देहानां चलनात् । 'तत्' तथा सति 'प्र'-शब्दयुक्ताया ऋचः शंसनेन प्राणं 'सम्भावयति' सम्भावितं पूजितं करोति । अनया पूजया प्राणः संस्कृतः सन् स्वव्यापार-समर्थो भवति । तस्मात्प्रवोदेवायेत्येषा ( सं०३.१३.१.) शंसनीया ॥

द्वितीया मृचं विधत्ते— "दीदिवांस मपूर्व्य मिति शंसति ; मनो वै दीदाय ; मनसो हि न किञ्चन पूर्व मस्ति ; मन एव

* "तं लक्ष्मीं" क, ग, घ, टी० ख, ग, घ ।

तत्सम्भावयति, मनः संस्कुरुते"–इति। यद्यप्यध्ययनक्रमेणेयं ऋक् पञ्चमी ( सं० ३. १३. ५. ), तथापि द्वितीयात्वेन प्रयोक्तव्या ; ब्राह्मणक्रमस्यानुष्ठानार्थत्वात्। 'दीदिवांसं' दीप्तियुक्तम्, 'अपूर्व्यम्' अस्मादन्येन पूर्वेण रहितम् ;—इत्येताभ्यां मन्त्रपदाभ्यां मनोऽभिधीयते ; तच्च मनः सर्वार्थप्रकाशकत्वात् 'दीदाय' दीप्तियुक्तं भवति। तथा अमनसोऽपि न किञ्चिदपीन्द्रियव्यापारवत्तास्ति ; मनसा सङ्कल्पितेष्वर्थेषु पश्चाद्वागादीन्द्रियाणां व्याप्रियमाणत्वात्। अत एवारण्यकाण्डे वक्ष्यति— "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति"–इति *। अतो दीदिवांस मपूर्व्यमितिपदद्वयस्यार्थस्य मनसि विद्यमानत्वात् तच्छंसनेन मनसः सम्भावनासंस्कारौ सम्पद्येते। अत्राध्ययनक्रमादन्य मनुष्ठानक्रम मभिप्रेत्याश्वलायन आह— "अनुब्राह्मणं वानुपूर्व्यम्"–इति ( आ० ५. ६. १३. )॥

अध्ययनक्रमेण चतुर्थीम् ( सं० ३.१३.४.) अनुष्ठानाय तृतीयात्वेन विधत्ते— "स नः शर्माणि वीतय इति शंसति ; वाग्वै शर्म ; तस्माद्वाचानुवदन्त माह शर्मवदास्मा अयांसीति ; वाच मेव तत्सम्भावयति, वाचं संस्कुरुते"–इति। 'सः' अग्निः 'नः' अस्माकं 'वीतये' कामाय 'शर्माणि' सुखानि 'यच्छतु' इति मन्त्रपादस्यार्थः।

---

* "यद्धि मनसा ध्यायति, तद् वाचा वदति"–इति, "यत् पुरुषो मनसाभिगच्छति, तद् वाचा वदति"–इति, "यद्धि मनसा जयते, तद् वाचा वदति ०—० यद्धि मनसा चेतयते, तद्वाचा वदति ०—० यद्धि मनसाभिगच्छति, तत् करोति"–इति च तै० सं० २.२. ११.५ ; ५.१.३.३ ; ६.१.७.३। "महदाख्य माद्यं कार्यं तन्मनः"–इति कपि० सू० १.७२। "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"–इति गौत० सू० १.१६। "मनो नाम सङ्कल्पविकल्पात्मिकान्तःकरणवृत्तिः"–इति वेदां० सा०। "सुखदुःखाद्युपलब्धिसाधन मिन्द्रियं मनः"–इति त० सं०।

अत्र शर्मशब्देन वागेव विवक्षिता। यस्मादेवं तस्माल्लोके स्वगुरूक्त मर्थं स्ववाचा सम्यगनुवदन्तं पुरुष मितरः प्रामाणिक एव आह— 'अस्मै' गुरूक्तार्थस्य सम्यगनुवादिने शिष्याय 'शर्मवत्' सुखयुक्तं जीवनं सम्पन्नं यस्मात्, तस्मात् हे शिष्य! 'आयांसि' समन्ततः नियतोऽसि; आङ्पूर्वस्य 'यमु उपरमे'-इत्यस्य धातोश्छान्दसं रूपम्। 'आस्मै'-इत्याकारश्छान्दसः। इत्येवं वाङ्नियमितस्य सुखस्य लौकिकेनोच्यमानत्वात् मन्त्रोक्त-'शर्म'-शब्देन वाग्विवक्षोपपन्ना। तन्मन्त्रपाठेन वाचः सम्भावनासंस्कारौ भवतः॥

अध्ययनक्रमेण षष्ठी मृचम् (सं० ३. १३. ६.) अनुष्ठानाय चतुर्थीत्वेन विधत्ते— "उत नो ब्रह्मन्नविष इति शंसति; श्रोत्रं वै ब्रह्म; श्रोत्रेण हि ब्रह्म शृणोति, श्रोत्रे ब्रह्म प्रतिष्ठितं; श्रोत्र मेव तत् सम्भावयति, श्रोत्रं संस्कुरुते"—इति। 'उत' अपि च हे 'ब्रह्मन्' देवेषु ब्राह्मणरूपाग्ने! 'नः' अस्मान् 'अविषः' रक्षसि। अस्मिन् मन्त्रे ब्रह्मशब्देन श्रोत्र मुपलक्ष्यम्; श्रोत्रेण हि 'ब्रह्म' वेदपुरुषः शृणोति, 'श्रोत्रे' अवगतं 'ब्रह्म' वेदवाक्यं 'प्रतिष्ठितं' कदाचिदप्यविस्मृतं भवति। तस्मात्तन्मन्त्रपाठेन श्रोत्रस्य सम्भावनासंस्कारौ भवतः॥

अध्ययनक्रमेण तृतीया मृचम् (सं० ३. १३. ३.) अनुष्ठानाय पञ्चमीत्वेन विधत्ते—"स यन्ता विप्र एषा मिति शंसति; अपानो वै यन्ता; अपानेन ह्ययं यतः प्राणो न पराङ् भवति; अपान मेव तत्सम्भावयत्यपान मेव संस्कुरुते"—इति। 'सः' अग्निः 'विप्रः' देवेषु ब्राह्मणः सन् 'एषां' मनुष्यविप्राणां 'यन्ता' नियमनकर्त्ता। अस्मिन् मन्त्रे यन्तृशब्देनापानवायुरुपलक्ष्यते; निःश्वासरूपेण अपानेन 'यतः' नियमितः प्राणवायुः 'पराङ् भवति' परं वाह्यं दूरदेशम् अञ्चति

गच्छतीति पराङ्। यद्ययं बहिर्मुख उच्छासरूपः प्राणवायु रपानवायुना न नियम्येत, तदा बहिरेव गच्छेत्, न पुनर्निवर्त्तेत, ततः पुरुषो म्रियेत, अतो ऽपानस्य नियन्तृत्वं युक्तम्। एतन्मन्त्रपाठेनापानवायोः सम्भावनासंस्कारौ भवतः॥

अध्ययनक्रमेण द्वितीया मृचं (सं० ३. १३. २.) षष्ठीत्वेनानुष्ठानाय विधत्ते— "ऋतावा यस्य रोदसी इति शंसति; चक्षुर्वा ऋतं, तस्माद्यतरो विवदमानयोराहाह मनुष्ठ्या चक्षुषादर्शमिति, तस्य श्रद्दधति, चक्षुरेव तत् सम्भावयति, चक्षुः संस्कुरुते" –इति। 'रोदसी' द्यावापृथिव्यौ 'यस्य' अग्नेः 'ऋतावा' सत्यवत्यौ। अस्मिन् मन्त्रगत ऋतशब्देन चक्षुरुपलक्ष्यते; यस्मादेवं तस्माल्लोके विवदमानयोः पुरुषयोः मध्ये यतरः पुमान् एव माह। कथमिति? तदुच्यते— "अहं 'अनुष्ठ्या' अनुष्ठित्या प्रयत्नेन चक्षुषा 'अदर्शं' दृष्टवानस्मि"–इति, 'तस्य श्रद्दधति' तदीयवचनं सर्वे विश्वसन्ति। दूरस्थे चूतवृक्षे फल मस्ति न वेति निश्चेतुं राजा द्वौ पुरुषौ प्रेषयति, तयोरलसः कश्चिदापाततो दृष्ट्वा नास्तीति ब्रूते, अपरस्तु तत्र प्रयत्नेन दृष्ट्वा; यत्र क्वापि पर्णैनाच्छन्नं फलं सम्यक् दृष्टवानस्मि इति ब्रूते, तस्य वचने सर्वेषां विश्वासो जायते। तस्मात् सम्यग्दर्शिनश्चक्षुष ऋतत्वं युक्तम्। एतन्मन्त्रपाठेन चक्षुषः सम्भावनासंस्कारौ भवतः॥

अध्ययनक्रमेणानुष्ठानक्रमेण च सप्तम्या (सं० ३.१३.७.) शस्त्रसमाप्तिं विधत्ते — "नू नो रास्व सहस्रवत्तोकवत् पुष्टिमद्वस्वित्युत्तमया परिदधाति; आत्मा वै समस्तः सहस्रवांस्तोकवान् पुष्टिमानात्मान मेव तत्समस्तं सम्भावयत्यात्मानं समस्तं संस्कुरुते"– इति। यद् 'वसु' धनं 'सहस्रवत्' सहस्रसङ्ख्योपेतं 'तोकवत्'

अपत्योपेतं 'पुष्टिमत्' समृद्धियुक्त मस्ति, तादृशं धनं 'नः' अस्मभ्यं 'नु' क्षिप्र मेव 'रास्व' अग्ने ! देहि । अनया अन्तिमया आज्यशस्त्रं समापयेत् । अत्र 'समस्तः' पूर्वोक्तप्राणमनोवागादिभिः सर्वैरिन्द्रियैः सम्पूर्णः 'आत्मा वै' पुरुषः एव, सहस्रसङ्ख्योपेतधनयुक्तः, बहुभिरपत्यैरुपेतः, समृद्धियुक्तश्च विवक्षितः ; अतस्तत्पाठेन तादृशस्य पुरुषस्यैव सम्भावनासंस्कारौ भवतः ॥

शस्त्रस्यान्ते याज्यां विधत्ते— "याज्यया यजति ;—प्रत्तिर्वै याज्या, पुण्यैव लक्ष्मीः, पुण्या मेव तल्लक्ष्मीं सम्भावयति, पुण्यां लक्ष्मीं संस्कुरुते"-इति । "अग्न इन्द्रश्च"-इति येयं याज्या पूर्व मुक्ता *, तया 'यजति' यागार्थं याज्यां पठेत् । याज्या च 'प्रत्तिर्वै' प्रदानरूपैव । तथाच हविष आदाने प्रदाने क्रमेण पुरोनुवाक्यायाज्याधाने श्रुत्यन्तरे श्रूयेते— "पुरोनुवाक्यया ऽऽदत्ते, प्रयच्छति याज्यया"-इति † । अतः प्रदानरूपत्वादियं पुण्यैव लक्ष्मीः ; शास्त्रीयत्वात् पुण्यत्वम्, फलस्य लब्धिहेतुत्वाल्लक्षणस्य दर्शनहेतुत्वाद्वा लक्ष्मीत्वम् । अतो याज्यापाठेन पुण्याया एव लक्ष्म्याः सम्भावनासंस्कारौ भवतः ॥

उक्तक्रमेणानुष्ठातृवेदित्रोः फलं दर्शयति— "स एवं विद्वांश्छन्दोमयो देवतामयो ब्रह्ममयो ऽमृतमयः सम्भूय देवता अप्येति य एवं वेद"-इति । 'एवं विद्वान्'-इत्यत्र 'अनुतिष्ठन्ति'-इत्याहार्यम् ।

---

* ४५५ पृ० ३, ६, १५ पं०, टीप्पनी च द्रष्टव्याः ।

† "ह्वयति वा अनुवाक्यया प्रयच्छति याज्यया ०——० सा या पुरस्ताल्लक्षणा सानुवाक्या स्यात् ०——० अथ योपरिष्टाल्लक्षणा सा याज्या स्यात्"-इति च शत० ब्रा० १. ७. २. १७-१९ । 'पुरोऽनुवाक्या देवतास्मरणार्था, याज्या च हविः-प्रदानार्था'-इति कात्या० श्रौ० १. ८. ९. वृ० ।

वेदनपूर्वको ऽनुष्ठाता गायत्र्यादिच्छन्दःस्वरूपो वह्न्यादिदेवतास्वरूप ऋगादिवेदस्वरूपो मरणरहितो मोक्षस्वरूपः सन् 'सम्भूय' सर्वं जगदेकीकृत्य सर्वा देवताः प्राप्नोति। तदेतदनुष्ठातुः फलं य एवं वेदेत्यत्रापि विदुषः फलत्वेन छन्दोमयत्वादिक मावर्त्तनीयम्। अथवा य एवं वेदेत्युक्तस्यैव स एवं विद्वानित्यनूद्यमानत्वान्नेदं वाक्य मावर्त्तनीयम्। वेदनमात्रस्य कथ मीदृशं फल मित्याशङ्क्य सुवेदनत्वाद् युक्तं फल मित्येतद् दर्शयति— "यो वै तद्वेद यथा छन्दोमयो देवतामयो ब्रह्ममयो ऽमृतमयः सम्भूय देवता अप्येति तत् सुविदितम्"-इति। येन प्रकारेण छन्दःप्राप्त्यादिपूर्वकं सर्वदेवताप्राप्तिर्भवति, 'तत्' तादृशं प्रकारं यो वेद, 'तद्' वेदनं 'सुविदितं' शोभनं ज्ञानम्, तस्माद् युक्तं फल मित्यर्थः॥

उक्तवक्ष्यमाणयोः शङ्कापरिहाराय विभागं दर्शयति— "इत्यध्यात्म मथाधिदैवतम्"-इति। आत्मानं शरीर मधिकृत्य वर्त्तते इति 'अध्यात्मम्'। अस्मिन् खण्डे शरीररूपत्वेन प्रशंसन माज्यशस्त्रस्योक्तम्, उत्तरखण्डे तु 'अधिदैवतम्' देवताविषय माज्यशास्त्रप्रशंसन मुच्यते॥ ८॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
अष्टमः खण्डः॥ ८ (४०)॥

॥ अथ नवमः खण्डः ॥

षट्पदं तूष्णींशंसं शंसति षड् वा ऋतव ऋतूनेव तत्कल्पयत्यृतूनप्येति द्वादशपदां पुरोरुचं शंसति द्वादश वै मासा मासानेव तत्कल्पयति मासानप्येति प्र वो देवायाग्नय इति शंसत्यन्तरिक्षं वै प्रान्तरिक्षं हीमानि सर्वाणि भूतान्यनु प्रयन्त्यन्तरिक्षमेव तत्कल्पयत्यन्तरिक्ष मप्येति दीदिवांस मपूर्व्यमिति शंसत्यसौ वै दीदाय यो ऽसौ तपत्येतस्माद्धि न किञ्चन पूर्व मस्त्येत मेव तत्कल्पयत्येत मप्येति स नः शर्माणि वीतय इति शंसत्यग्निर्वै शर्माण्यन्नाद्यानि यच्छत्यग्नि मेव तत्कल्पयत्यग्नि मप्येत्युत नो ब्रह्मन्नविष इति शंसति चन्द्रमा वै ब्रह्म चन्द्रमस मेव तत्कल्पयति चन्द्रमस मप्येति स यन्ता विप्र एषा मिति शंसति वायुर्वै यन्ता वायुना हीदं यत मन्तरिक्षं न समृच्छति वायु मेव तत्कल्पयति वायु मप्येत्यृतावा यस्य रोदसी इति शंसति द्यावापृथिवी वै रोदसी द्यावापृथिवी एव तत्कल्पयति द्यावापृथिवी अप्येति नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वस्वितुप्रत्तमया परिदधाति संवत्सरो वै समस्तः सहस्रवांस्तोकवान् पुष्टिमान्त्संवत्सर मेव तत्समस्तं

कल्पयति संवत्सरं समस्त मपेराति याज्यया यजति वृष्टिर्वै याज्या विद्युदेव विद्युद्धीदं वृष्टि मन्नाद्यं सम्प्रयच्छति विद्युत मेव तत्कल्पयति विद्युत मपेराति स एवं विद्वानेतन्मयो देवतामयो भवति भवति ॥ ६ ( ४१ ) ॥

॥इत्यैतरेयब्राह्मणे द्वितीयपञ्चिकायां पञ्चमोध्यायः॥५॥

पूर्वोक्तक्रमेणैव देवताविषयशस्त्रप्रशंसनं विवक्षित्वा प्रथमं भूरग्निरित्यस्य प्रशंसां दर्शयति— "षट्पदं तूष्णींशंसं शंसति ; षड् वा ऋतव ऋतूनेव तत् कल्पयत्यृतूनप्येति"–इति । भूरग्नि-रित्यादीनां भागानां षट्सङ्ख्यासाम्याद् ऋतुत्वे सति तत्पाठेन ऋतून् स्वभोगप्रदानसमर्थान् करोति, ततः ऋतून् देवान् प्राप्नोति ॥

निविदः प्रशंसां दर्शयति— "द्वादशपदां पुरोरुचं शंसति ; द्वादश वै मासा मासानेव तत्कल्पयति, मासानप्येति"–इति । निविदां पाठेन मधुमाधवादीन् मासान् * स्वात्मभोगाय सम्पा-दयति, प्राप्नोति च ॥

सूक्तप्रथमा मृचं प्रशंसति— "प्र वो देवायाग्नय इति ( सं० ३. १३. १. ) शंसत्यन्तरिक्षं वै प्रान्तरिक्षं ह्वीमानि सर्वाणि भूता-न्यनुप्रयन्त्यन्तरिक्ष मेव तत्कल्पयत्यन्तरिक्ष मप्येति"–इति । सर्वे

---

* "मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च"–इति तै० सं० १. ४. १४ ।

प्राणिनो ऽन्तरिक्ष मनुसृत्य तिष्ठन्ति । तस्मिन्नवकाशे प्रकृष्टगमनादन्तरिक्षस्य 'प्र'-शब्दवाच्यत्वम् ॥

अनुष्ठानक्रमेण द्वितीया मृचं प्रशंसति— "दीदिवांस मपूर्व्य मिति ( सं० ३. १३. ५. ) शंसत्यसौ वै दीदाय यो ऽसौ तपत्येतस्माद्धि न किञ्चन पूर्व मस्त्येत मेव तत्कल्पयत्येत मप्येति"–इति । 'यो ऽसौ' आदित्यः 'तपति' जगति सन्तापं करोति, असौ वै 'दीदाय' दीप्यते; तस्योदयात् पूर्वम् अन्धकारे किमपि प्राणिजातं स्वव्यापारकर्त्तृ नास्ति । तस्मादादित्यस्य दीदिवांस मपूर्व्य मितिपदद्वयाभिधेयत्वम् ॥

तृतीया मृचं दर्शयति— "स नः शर्माणि वीतय इति ( सं० ३. १३. ४. ) शंसत्यग्निर्वै शर्माण्यन्नाद्यानि यच्छत्यग्नि मेव तत् कल्पयत्यग्नि मप्येति"–इति । सुखकराणि अत्तुं योग्यानि अन्नानि पाकेन प्रयच्छतीति अग्नेः शर्मशब्दवाच्यत्वम् ॥

चतुर्थी मृचं दर्शयति— "उत नो ब्रह्मन्नविष इति ( सं० ३. १३. ६. ) शंसति ; चन्द्रमा वै ब्रह्म ; चन्द्रमस मेव तत् कल्पयति, चन्द्रमस मप्येति"–इति । नक्षत्रादिप्रकाशेषु बृहत्त्वाच्चन्द्रमसो ब्रह्मत्वम् ॥

पञ्चमी मृचं दर्शयति— "स यन्ता विप्र एषा मिति ( सं० ३.१३.३. ) शंसति ; वायुर्वै यन्ता ; वायुना हीदं यत मन्तरिक्षं न समृच्छति ; वायु मेव तत् कल्पयति, वायु मप्येति"–इति । 'इदं' दृश्यमानं सूर्यचन्द्रनक्षत्रादिमण्डलं सर्वं वायुना 'यतं' नियमितं सत् अन्तरिक्षं 'न समृच्छति' सम्यक् न प्राप्नोति, वायुनियमाभावे सम्यक् प्राप्नुयात्,—अन्तरिक्षस्य निरवधिकत्वेन तस्मिन् यत्र क्वापि गच्छेदित्यर्थः । तस्माद्वायुरेव नियन्ता ॥

षष्ठी मृचं दर्शयति— "ऋतावा यस्य रोदसी इति ( सं० ३. १३. २. ) शंसति ; द्यावापृथिवी वै रोदसी ; द्यावापृथिवी एव तत् कल्पयति, द्यावापृथिवी अप्येति"–इति । रोदः–शब्द-वाच्यत्वं द्यावापृथिव्योर्लोकेऽपि प्रसिद्धम् ॥

सप्तमी मृचं दर्शयति— "नू नो रास्व सहस्रवत्तोकवत् पुष्टि-मद्वस्वित्युत्तमया (सं० ३.१३.७.) परिदधाति ; संवत्सरो वै समस्तः, सहस्रवांस्तोकवान् पुष्टिमान्त्संवत्सर मेव तत् समस्तं कल्पयति, संवत्सरं समस्त मप्येति"–इति । चैत्रादिफाल्गुनान्तः 'समस्तः' संवत्सरः, सहस्रादिविशेषणयुक्तः ; संवत्सरेण हि धनिकानां वृद्धिः सहस्रसङ्ख्याका सम्पद्यते, 'तोकानि' अपत्यानि गर्भधारण मारभ्य संवत्सरमध्ये एवोत्पद्यन्ते, रोगैः कृशानां शरीराणा मारोग्ये सति संवत्सरमध्ये पुष्टिर्भवति ॥

शस्त्रयाज्यां दर्शयति— "याज्यया यजति ; वृष्टिर्वै याज्या विद्युदेव, विद्युद्धीदं वृष्टि मन्नाद्यं सम्प्रयच्छति, विद्युत मेव तत् कल्पयति, विद्युत मप्येति"–इति । याज्यया प्रक्षिप्तं हवि-र्वृष्टिपर्यवसितं भवति । तथा च स्मर्यते ( म० सं० ३.७६. )—

"अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"–इति । वृष्टिश्च विद्युत्-पुरःसरत्वाद् 'विद्युदेव', यस्मात् मेघेषु उत्पन्ना विद्युत् वृष्टिं सम्पाद्य तद्वारेणान्नं प्रयच्छति, तस्माद्वृष्टिर्विद्युदेव ॥

वेदनं प्रशंसति— "स एवं विद्वानेतन्मयो देवतामयो भवति भवति"–इति । 'एतन्मयः' वसन्तग्रीष्मादिविद्युदन्तवस्तु-मयो भूत्वा तदभिमानिदेवतानां भोगं प्राप्नोति ॥

अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायां पञ्चमाध्याये
नवमः खण्डः ॥ ९ ( ४१ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकायाः पञ्चमोऽध्यायः ॥

यज्ञेन वै दश(१)। देवा वै यज्ञ मष्टौ(२)। ऋषयो
वै षट्(३)। देवा वै सोमस्याष्टौ(४)। ब्रह्म वै नव(५) ॥२*॥
यज्ञेन वै, देवा वै, शिरो वा एतद्, देवा वै
यद्देवैकादश ॥ २ † ॥

॥ इति द्वितीयपञ्चिका समाप्ता ॥

---

*, † २१६ पृ० टीप्पनीदयं द्रष्टव्यम् ।

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

Published by

THE ASIATIC SOCIETY OF BENGAL.

New series Nos. 847, 849, 850, 852, and 861.

---

# THE AITAREYA BRÁHMAṆA

OF THE ṚG-VEDA,

WITH THE

Commentary of Sáyaṇa Áchárya.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAS'RAMÍ,

*Associate Member of the Asiatic Society of Bengal; Editor, Author, Commentator, Annotator, Compiler, Translator, & Publisher of different Vedic Works &c. &c.*

## VOL. I.

---

Calcutta:

Printed by M. N. Sarkár, SATYA PRESS.

1895.

# ॥ ऐतरेयब्राह्मणम् ॥

( ऋग्वेदस्य )

भगवत्सायणाचार्यकृत-'वेदार्थप्रकाश'-नामभाष्ययुतम् ।

---

वङ्गदेशीयास्यायितिकसमितेरनुमत्या व्ययेन च,

सामश्रमिश्रीसत्यव्रतशर्म्मणा

यथामति संशोध्य सटीक्य च सम्पादितम् ।

## ॥ प्रथमभागः ॥

( प्रथमद्वितीयपञ्चिकात्मकः )

---

कलिकाता-राजन्वत्याम्,

१८५२-संवत्समायां सत्ययन्त्रेण यत्नतो मुद्रितम् ॥

# ॥ सम्पादकोक्तिः ॥

—०⌒०—

अथैतदैतरेयं नाम बह्वृचब्राह्मणं दाक्षिणात्येषु महाराष्ट्रीयादि-ब्राह्मणाना मध्ययनाध्यापनाविच्छेदात् यदि च नाद्यापि लुप्त-कल्पतां गतम्, तथापि 'स्वाध्यायोऽध्येतव्यः'–इत्येवमादिश्रुत्यादेः पाठमात्रविधिपर्यवसायित्वमितिमन्यमानानां तेषां प्रायोविलुप्ता-र्थाध्ययनप्रवृत्तेः एतदर्थाधिगमाय कृतस्यानतिप्राचीनस्यापि माध-वीयवेदार्थप्रकाशनामभाष्यस्य दुरापत्वं नितरां सम्पन्नम्। तदद्य तत्सहितस्यैवास्य प्रकटनाय यतमानोऽहमेशियातिकसमितेरनु-मति मवाप्य सम्पादने प्रवृत्तः।

ब्राह्मणश्रुतमन्त्रादीनां भाष्योद्धृतश्रुत्यादीनां च सङ्केताक्षरैः स्थानानि निर्देष्टुं, तत्रत्ययाज्ञिकपदानि च याज्ञिकग्रन्थादिभिरेव परिचाययितुं, टीप्पन्यादिभिर्भाष्याक्षराणां दुर्बोधत्व मपनोदयि-तुञ्चास्तीह मे प्रयासः। सञ्जातेऽस्य सम्पादने समालोचनं विशेष-सूचीसङ्कलनं च करिष्यामि यथाज्ञान मित्येवमपेक्षा विद्यते।

एतस्य पाठशुद्धिं पाठभेदांश्चापादयितु मनुपदं विवरिष्यमाणानि द्वादश पुस्तकानि सङ्गृह्य कार्य मारब्धम्; अद्याप्यधिकपुस्तक-सङ्ग्रहाय यत्नो मे न विलयं गतः।

तदिदं सम्पादन मीशकृपया सम्पूर्णता माप्य बह्वृचाना मनू-चानानां, विविधविद्यालोचनपरायणानां तदनुवर्त्तिनां च सर्वेषां समादरणीयता चेदुपागमिष्यत्, फलित मभविष्यन्मे मनोरथ-द्रुमेणेति शम्॥

कलिकाता। संवत् १९५२। | सामश्रमिश्रीसत्यव्रतशर्म्मा। (सम्पादकः)

## ॥ अथ द्वादशादर्शपुस्तकविवरणम् ॥

क … ऐतरेयब्राह्मणम्—सम्पादकपुस्तकालयीयम्; खी०१८६३ डा०हौग्-सम्पादितम्, सम्पूर्णम्, शुद्धम्।

ख … ऐतरेयब्राह्मणम्—गवर्णमेण्टपुस्तकालयीयम्;१७९६-संवल्लिखितम्, अतृतीयपञ्चमपञ्चिकम्, विशुद्धम्।

ग … ऐतरेयब्राह्मणम्—गवर्णमेण्टपुस्तकालयीयं द्वितीयम्; १६६०शकलिखितम्, सम्पूर्णम्, विशुद्धम्।

घ … ऐतरेयब्राह्मणम्—वेनारस्कलेजपुस्तकालयीयम्; १८३६-संवल्लिखित मसप्तमपञ्चिकम्, प्रायःशुद्धम्।

ङ … ऐतरेयब्राह्मणम्—काशीवासिपण्डितश्रीविन्ध्येश्वरीप्रसादस्य; १८६३-संवल्लिखितम् सम्पूर्णम्, शुद्धम्।

च … ऐतरेयब्राह्मणम्—आस्यायितिकसोसाइटीपुस्तकालयीयम्; षष्ठसप्तमपञ्चिकाद्वयमात्रम्प्राचीनं विशुद्धञ्च।

छ वा टी०क ऐतरेयभाष्यम्—आदिब्राह्मसमाजपुस्तकालयीयम्; १९०५-संवल्लिखितम्प्रथमद्वितीयपञ्चिकामात्रं शुद्धम्।

ज वा टी०ख सभाष्यैतरेयकम्—वेनारस्कलेजपुस्तकालयीयम्; अनतिप्राचीनम्, अतृतीयपञ्चिकम्, प्रायःशुद्धम्।

झ वा टी०ग सभाष्यैतरेयकम्—गवर्णमेण्टपुस्तकालयीयम्; १९-३२-संवल्लिखितम, ५-७-८-पञ्चिकाहीन मनत्यशुद्धम्।

ञ वा टी०घ सभाष्यैतरेयकम्—कलिकातासंस्कृतकलेजस्य;१६६९-संवल्लिखितम्, द्वितीयपञ्चिकातः पूर्ण मतिशुद्धम्।

ट वा टी० ङ सभाष्यैतरेयकम्—कलिकातासंस्कृतकलेजस्य;१९३६-संवल्लिखितम्, चतुर्थपञ्चमपञ्चिकाद्वयम्, शुद्धम्।

ठ वा टी० च सभाष्यैतरेयकम्—आस्यायितिकसोसाइटीतोलब्धं; त्रयोदशाध्यायीयपञ्चमखण्डतः पूर्णम, अनतिशुद्धम्।

## ॥ सङ्केताक्षरसूची ॥

| | | | |
|---|---|---|---|
| अ० | ... अध्यायः । | कपि०सू० | ... कपिलसूत्रम् । |
| अथ०सं० | ... अथर्वसंहिता । | का० १ | ... प्रथमं काण्डम् । |
| अदा० | ... अदादिगणीयः । | का०छ०अ० | ... कात्यायनीय-छन्दोऽनुक्रमणी । |
| अधि० | ... अधिकरणम् । | कात्या० | ... कात्यायनीयम् । |
| अधि०मा० | .. अधिकरणमाला । | को० | ... कोषः । |
| अनु० | ... अनुवाकः । | ख० | ... खण्डः । |
| अने० | ... अनेकार्थसङ्ग्रहः । | गा० ना० | गार्ग्यनारायणीया । |
| अम० | ... अमरः । | गृ० | ... गृह्यसूत्रम् । |
| अर्थ० | ... अर्थसङ्ग्रहः । | गो० | ... गोभिलीयम् । |
| अव्य० | ... अव्ययकाण्डम् । | गौ० | ... गौतमीयम् । |
| आ० वा आर० | आरण्यकम् । | छ० आ० | ... छन्दआर्चिकः । |
| आ०त० | ... आह्निकतत्त्वम् । | छा० | ... छान्दोग्यम् । |
| आप०य०प०सू० | ... आपस्तम्बीययज्ञपरिभाषासूत्रम् । | जै० | ... जैमिनीयम् । |
| आश्व० | ... आश्वलायनीयम् । | टी० | ... टीका । |
| उ० | ... इहैव उपरिष्टात् । | त०सं० | ... तर्कसङ्ग्रहः । |
| उ० आ० | ... उत्तरार्चिकः । | ता०ब्रा० | ... ताण्ड्यब्राह्मणम् । |
| उणा० | ... उणादिः । | तै०आ० | ... तैत्तिरीयारण्यकम् । |
| उप० | ... उपनिषत् । | तै०ब्रा० | ... तैत्तिरीयब्राह्मणम् । |
| ऋ० सं० | ... ऋग्वेदसंहिता । | तै० सं० | ... तैत्तिरीयसंहिता । |
| ए.सो. | ...एसियाइटिक्सोसाइटी । | द्र० | ... द्रष्टव्यम् । |
| ऐ० आ० | ... ऐतरेयारण्यकम् । | धा०पा० | ... धातुपाठः । |
| ऐ० ब्रा० | ... ऐतरेयब्राह्मणम् । | ना० शि० | ... नारदीया शिक्षा । |

नि० वा निरु० ... निरुक्तम् ।
नि०आ० ... निरुक्तालोचनम् ।
निघ० ... निघण्टुः ।
निवि० ... निविदध्यायः ।
पं० ... इतः परस्तात् ।
पं० ... पङ्क्तिः ।
पा० ... पाणिनीयम् ।
पा०१ ... प्रथमः पादः ।
पा० महाभा० ...पातञ्जलं महाभाष्यम् ।
पा० शि० पाणिनीया शिक्षा ।
पि० ... पिङ्गलसूत्रम् ।
पु० ... इतः पुरस्तात् ।
पृ० ... पृष्ठा ।
प्र० ... प्रपाठकः ।
प्राति० ... प्रातिशाख्यम् ।
बृह० ... बृहदारण्यकम् ।
ब्रा० ... ब्राह्मणम् ।
भा० ... भाष्यम् ।
भा०१ ... प्रथमो भागः ।
भाग०पु० ... भागवतपुराणम् ।
भू० ... भूमिका ।
भू०प० ... भूवादि-परस्मैपदी ।
भ्वा० ... भ्वादिगणीयः ।

म० सं० ... मनुसंहिता ।
महाभा० ... महाभारतम् ।
मी० ... मीमांसा ।
मी०प० ... मीमांसापरिभाषा ।
मु० ... मुद्रितम् ।
मेदि० ... मेदिनीकरस्य ।
याज्ञ०सं० ... याज्ञवल्क्यसंहिता ।
या० दे० ... याज्ञिकदेवः (का०श्रौ०सू०टीकाकारः)
रघु० ... रघुवंश-काव्यम् ।
रामा० ... वाल्मीकिरामायणम् ।
लाट्या० ... लाट्यायनीयम् ।
लौ० ... लौगाक्षिभास्करः ।
वा० ... कात्यायनवार्त्तिकम् ।
वा०सं० ... वाजसनेयसंहिता ।
विश्व० ... विश्वकोषः ।
वृ० ... वृत्तिः ।
वेदा०सा० ... वेदान्तसारः ।
वै० ... वैदिकीप्रकरणम् ।
शत०ब्रा० ... शतपथब्राह्मणम् ।
शबर: ... शबरस्वामी (मीमांसासूत्राणां भाष्यकारः) ।
सुश्रु० ... सुश्रुतः ।
श्रौ० ... श्रौतसूत्रम् ।

| | | | |
|---|---|---|---|
| श्लो० | ... श्लोकः । | साङ्ख्या० ... | साङ्ख्यायनीयम् । |
| षड्०ब्रा० | षड्विंशब्राह्मणम् । | सि० कौ० ... | सिद्धान्तकौमुदी । |
| सं० | ... संहिता । | सू० ... | सूत्रम् । |
| सा० | ... सायणीयम् । | हे० ... | हेमचन्द्रस्य । |

---

## ॥ अथ परिच्छेदसूची ॥

### ॥ अथ प्रथमपञ्चिका ॥

---

# ॥ अथ याज्ञिकशब्दसूची ॥

# ॥ अथेहालोच्यस्थानसूची ॥

| पृ० | पं० | पृ० | पं० | पृ० | पं० | पृ० | पं० | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|
| १२ | ६ | ३४ | ३ | ४८ | १ | ५३ | १२ | ५४ | २ |
| ५४ | ८ | ६० | १८ | ६० | २० | ६१ | २ | ६१ | ३ |
| ६१ | ४ | ६१ | ६ | ८४ | १४ | ९२ | ७ | ९२ | ८ |
| ९६ | ६ | ९६ | १३ | ११२ | ११ | ११७ | १३ | ११७ | २० |
| ११८ | २० | ११९ | २ | १४७ | १० | १५१ | ६ | १५९ | १५ |
| १८० | १३ | १८१ | ७ | १८१ | ९ | १८१ | १० | १९५ | ७ |
| २०० | १६ | २१३ | ५ | २१३ | ९ | २२२ | १३ | २४२ | १ |
| २५१ | ११ | २५१ | १७ | २५२ | २ | २५२ | ४ | २६८ | १ |
| २७१ | १८ | २७२ | १३ | २८५ | १९ | २९४ | १९ | २९५ | २ |
| ३०० | ११ | ३०१ | २ | ३०१ | ५ | ३११ | १६ | ३१२ | ७ |
| ३२० | १६ | ३३० | १४ | ३३१ | ७ | ३३१ | १० | ३३५ | १७ |
| ३४७ | ९ | ३४७ | १२ | ३४७ | १६ | ३४८ | १ | ३४८ | ८ |
| ३५५ | ७ | ३५५ | ११ | ३६३ | ५ | ३८२ | २ | ३८८ | ८ |
| ४०० | १ | ४०९ | ८ | ४१४ | ८ | ४१७ | १३ | ४१४ | १८ |
| ४२० | ९ | ४३९ | १६ | ४४३ | १८ | ४४६ | १६ | ४५० | १ |
| ४५१ | १० | ४५१ | १७ | ४५७ | २१ | ४६२ | १० | ४६३ | १२ |
| ४६२ | १७ | ४६८ | ५ | ४६८ | १५ | ४६८ | १९ | ४६९ | ४ |

अथ

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथ तृतीयपञ्चिका ॥

( तत्र )

### ॥ प्रथमाध्यायस्य प्रथमः खण्डः ॥



॥ ॐ ॥ ग्रहोक्थं वा एतद्यत्प्रउगं नव प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते स्तुते स्तोमे दशमं गृह्णाति हिङ्कार इतरासां दशमः सो सा सम्मा वायव्यं शंसति तेन वायव्य उक्थवानैन्द्रवायवं शंसति तेनैन्द्रवायव उक्थवान् मैत्रावरुणं शंसति तेन मैत्रावरुण उक्थवानाश्विनं शंसति तेनाश्विन उक्थवानैन्द्रं शंसति तेन शुक्रामन्थिना उक्थवन्तौ वैश्वदेवं शंसति तेनाग्रयण उक्थवान्त्सारस्वतं शंसति न सारस्वतो ग्रहो ऽस्ति वाक् तु सरस्वती ये तु के च वाचा ग्रहा गृह्यन्ते ते ऽस्य सर्वे शस्तोक्था उक्थिनो भवन्ति य एवं वेद ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

आहावं निविदः सूक्त मच्छावाकस्य चोदनाम् ।
यजमानपुनर्जन्म ब्रुवते साधिदैवतम् ॥

इत्थ माज्यशस्त्रं निरूप्य प्रउगशस्त्रं निरूपयितुं प्रस्तौति—"ग्रहोक्थं वा एतद्यत् प्रउगं ; नव प्रातर्ग्रहा गृह्यन्ते, नवभि-र्बहिष्पवमाने स्तुवते, स्तुते स्तोमे दशमं गृह्णाति, हिङ्कार इतरासां दशमः सो सा सम्मा"–इति । प्रउगाख्यं 'यत्' शस्त्र मस्ति, तत् 'ग्रहोक्थं वै' ऐन्द्रवायवादिग्रहाणा मुक्थं, तदीयदेवताप्रशंसारूप मित्यर्थः । नवेत्यादिना ग्रहसम्बन्ध एव स्पष्टीक्रियते । प्रातःसवने ऐन्द्रवायवमैत्रावरुणादयो * धाराग्रहा नवसङ्ख्याका † गृह्यन्ते ।

* अन्तर्यामादय इति वक्तव्यम् ; नान्यथा हि नवसङ्ख्या पूर्येत । अतएव कातीयभाष्ये 'तस्याः सन्ततं स्रवन्त्याः धारायाः येषा मन्तर्यामादीनां ध्रुवपर्यन्तानां ग्रहणम् ( ९.६.१. )'–इत्यादुक्तम्, ततः 'अन्तर्यामादि-ध्रुवपर्यन्तान् धाराग्रहान्'–इत्यादि च ( २५. ) । आपस्तम्बो-ऽप्याह—"धाराया अन्तर्यामं गृह्णाति, सर्वांश्चातो ग्रहानाध्रुवात्"–इति ( श्रौ० १२.१३.५. ) । यत्तूक्तं जैमिनीयन्यायमालायाम् 'ऐन्द्रवायवादिग्रहेषु'–इति ( ५. ४ १. ), तत् खलु "वाग् वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्र माश्विनः"–इति ( तै० सं० ६.४.९. ) द्विदेवत्यग्रहविध्यर्था-नुवादवाक्यानुगतम् ; तथा आश्विनग्रहस्य तृतीयत्व मपि द्विदेवत्यग्रहेष्वेव बोध्यम् ।

† गृह्यते सोमरस एभिरिति ग्रहाः, वैकङ्कतादीनि पात्राणि ; इह तु तानि सोम-रसपूर्णान्येव विवक्षितानि । "ग्रहवृदृनिश्चिगमश्च"–इति ( पा० ३. ३. ५८. ) करणे अप् प्रत्ययः । ते च ग्रहा अग्निष्टोमे त्रयस्त्रिंशत्सङ्ख्याकाः । तान् परिगणयामः—उपांशुरेकः ; अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवश्चेति नव धाराग्रहाः ; तत्र चैन्द्रवायवादयस्त्रयो द्विदेवत्याः ; अथ ऋतुग्रहा द्वादश ; ऐन्द्राग्नः, वैश्व-देवश्चेति चतुर्विंशतिः प्रातःसवनग्रहाः ; त्रयो मरुत्वतीयाः, माहेन्द्रश्चेति चत्वारो माध्य-न्दिनसवनग्रहाः ; आदित्यः, सावित्रः, वैश्वदेवः, पात्नीवतः, हारियोजनश्चेति पञ्चैव तृतीय-सवनग्रहाः ; अत्यग्निष्टोमे तु चत्वारोऽधिकाः—अंशुः, अदाभ्यः, दधिग्रहः, षोड़शी चेति सङ्कलनया सप्तत्रिंशत् । एषु अन्तर्यामादयो नवैव धाराग्रहाः । उन्नेता आधवनीयकल-

गृहीता चाध्वर्युः *। तथा बहिष्पवमानाख्ये स्तोत्रे उद्गातारो 'नवभिः' नवसङ्ख्याभिः ऋग्भिः 'स्तुवते';—"उपास्मै गायता"-इत्येकस्तृचः †; "दविद्युतत्या"-इति द्वितीयः, "पवस्व"-इति तृतीयः (उ० आ० १. १. १—३.)। एतेषु त्रिषु तृचेषु नवसङ्ख्याका ऋचो विद्यन्ते, ता आवृत्तिरहिता गीयन्ते। एवं 'स्तोमे' बहिष्पवमानस्तोत्रे उद्गातृभिः 'स्तुते' सति अध्वर्युः 'दशमं' ग्रहम्, आश्विनाख्यं गृह्णाति। यद्यप्याध्वर्यवयोः मन्त्रब्राह्मणकाण्डयोः ‡ आश्विनग्रहो धाराग्रहेषु तृतीयत्वेनाम्नातः, तथाप्यसौ दशमत्वेन गृहीतव्यः; "आश्विनो दशमो गृह्यते, तं तृतीयं जुहति"-इति श्रुत्यन्तरवचनात् §। तथा च ग्रहेषु दशमः सम्पन्नः ‖। तथैव 'इतरासां' बहिष्पवमानस्तोत्रगताना मृचां 'हिङ्कारः' दशमत्वेन

---

शादुदञ्चेन सोम मादाय यजमानहस्तस्थिते होतृचमसे निग्राभ्यास्वासिञ्चति। ततः यजमानः निग्राभ्याः पवित्रे द्रोणकलशस्योपरि उद्गातृभिर्विस्तार्यं धृते आसिञ्चति सन्ततम्। ततः सन्ततं स्रवन्त्या धारायाः सकाशात् अन्तर्यामादीन् ध्रुवग्रहान्तान् नव ग्रहान् गृह्णातीत्यत एवैते धाराग्रहा उच्यन्ते। कात्या० श्रौ० ९. ५. १७; ६. १; आप० श्रौ० १२. १२. १२—१३. ५. द्रष्टव्यानि। ये तु न धाराग्रहाः, ते "द्रोणकलशात् परिप्लवया गृह्यन्ते; वचनादन्यतः"-इति आप० श्रौ० १२. १८. ११।

* "ग्रह मध्वर्युरादाय क्षिप्रं होतार मभिद्रुत्य मयिवसुरिति ग्रहं होत्रे प्रयच्छति"-इति आप० श्रौ० १२. २१. ५।

† "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि"-इति पा० ६. १. ३४. वा० १।

‡ तै० सं० १.४.३—२६ ; ६. ४, ५। वा० स० ७,८ अ० ; शत० ब्रा० ४.१.१.१–१८।

§ एष एव पाठो मीमांसाभाष्येऽपि दृश्यते (जै० सू० ५.४.१.), स्यादेतत्तद्भाष्यकारस्यैव भाषणम्? श्रुतिपाठस्त्वेवम्—"बहिष्पवमाने स्तुत आश्विनो गृह्यते"-इति तै० सं० ६. ४, ९। व्याख्यातं चैतद् वचनं मन्त्रकाण्डे (तै० सं० १. ४. ६,७)। तत्रैव जैमिनिन्यायमालीयाधिकरण मपाकृतं सायणेन (५. ४. १ अधि०)।

‖ उपांशुप्रभृतिषु प्रातःसवनग्रहेष्विति ज्ञेयम्, न तु धाराग्रहेषु ; उपांशोर्धाराग्रहत्वाभावाद्दशमत्वानुपपत्तेरिति।

गणनीयः*। तथा सति ग्रहाणां स्तोत्रियाणां च सङ्ख्यासाम्यं भवति। तदिदं 'सो सा सम्मा'-इतिवाक्येनोच्यते। उकारो निपातः समुच्चयार्थः सन् स्त्रीलिङ्गाभ्यां तच्छब्दाभ्यां सम्बध्यते। तथा सति 'सा' च ग्रहसङ्ख्या, 'सा' च स्तोत्रियसङ्ख्येत्युक्तं भवति। 'सम्मा'-इत्यत्र द्वितीयो मकारश्छान्दसः। तस्मिन्नुपगते सति 'समा' तुल्येत्युक्तं भवति। एवं सति यथा बहिष्पवमानस्य स्तोत्रस्य ग्रहसम्बन्धः, तथा प्रउगशस्त्रस्यापि ग्रहसम्बन्धो द्रष्टव्य इत्यभिप्रायः॥

अथ प्रउगशस्त्रे विद्यमानानां तृचानां मध्ये प्रथमं तृचं विधत्ते— "वायव्यं शंसति, तेन वायव्य उक्थवान्"-इति। वायुर्देवता यस्य तृचस्य सोऽयं 'वायव्यः',— "वायवा याहि दर्शत"-इत्यादिकः (सं॰ १.२.१-३.) ; तं शंसेत्। 'तेन' शंसनेन 'वायव्यः' ग्रहः 'उक्थवान्' शस्त्रवान् भवति। यद्यपि वायव्यः पृथक् ग्रहो नास्ति, तथाप्यैन्द्रवायवस्य ग्रहस्य पूर्वभागो वायव्य इत्युच्यते। स च प्रथमम् "आ वायो भूष"-इत्यनेन (सं॰७.९२.१.) केवलवायुदेवताकेन मन्त्रेण गृह्यते, तेन वायव्यो भवति ; पश्चात् "इन्द्रवायू इमे सुताः"-इत्यनेनेन्द्रसहितवायुदेवताकेन मन्त्रेण (सं॰१.२.४.) गृह्यते, तेनैन्द्रवायवोऽपि भवति। अत एव वायोर्द्विर्ग्रहणं तैत्तिरीया

* "हिं२ इति हिङ्कृत्य"-इति (१.२.३.) आश्वलायनोक्तस्तु हिङ्कारो बह्वृचानाम्, छन्दोगानां तु "हु ं२ इति हिङ्कारः"-इति (७.११.७.) लाट्यायनोक्तो ग्राह्यः। साम्नां साप्तभक्तिकत्वे पाञ्चभक्तिकत्वे च स एवाद्या भक्तिः (छा॰ उप॰ २.२.१ ; ८.१.)। इहोपदिष्टो हिङ्कारस्तु उक्ताभ्यां भिन्नो मन्त्रात्मक एव। स चाम्नातश्छान्दोग्ये। तथाहि— "ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येव मासस्पुस्तेह समुपविश्य हिञ्चक्रुः:— 'ओं३ मदा३मों३ पिबा३मों३ देवो वरुणः प्रजापतिः सविता२ऽन्न मिहा२हरदन्नपते ऽन्न मिहा हरा२ऽऽहरो३म्-इति''—इति १.१२.५.॥।

अधीयन्ते— "सकृदिन्द्राय मध्यतो गृह्णाति द्विर्वायवे"–इति (तै० सं० ६.४.७.४.) * । तत्र प्रथमभागरूपो वायव्यो ग्रहः, केवलेन वायव्यतृचेन शस्त्रवान् सम्पद्यते ॥

द्वितीयं तृचं विधत्ते— "ऐन्द्रवायवं शंसति, तेनैन्द्रवायव उक्थवान्"–इति। इन्द्रश्च वायुश्च मिलिता † देवता यस्य तृचस्य सोऽयम् 'ऐन्द्रवायवः',—"इन्द्रवायू इमे सुताः"–इत्यादिकः (सं० १.२.४–६); तं शंसेत् । तच्छंसनेनैन्द्रवायवग्रहस्योत्तरभागः शस्त्रवान् भवति ॥

तृतीयं तृचं विधत्ते— "मैत्रावरुणं शंसति, तेन मैत्रावरुण उक्थवान्"–इति। मित्रो वरुणश्च मिलिता ‡ देवता यस्य तृचस्य सोऽयं 'मैत्रावरुणः',—"मित्रं हुवे पूतदक्षम्"–इत्यादिकः (सं० १. २, ७-९.)। तं शंसतीत्यादिकं पूर्ववद्योज्यम् ॥

चतुर्थं तृचं विधत्ते— "आश्विनं शंसति, तेनाश्विन उक्थवान्"–इति। अश्विनौ मिलिता § देवता यस्य तृचस्य सोऽयम् 'आश्विनः',–"अश्विना यज्वरीरिषः"–इत्यादिकः (सं० १.३.१–३.)॥

पञ्चमं तृचं विधत्ते— "ऐन्द्रं शंसति, तेन शुक्रामन्थिना उक्थवन्तौ"–इति। इन्द्रो देवता यस्य तृचस्य सोऽयम् 'ऐन्द्रः',— "इन्द्रा याहि चित्रभानो"–इत्यादिक ऐन्द्रस्तृचः (सं० १. ३. ४–६.)। तेन शुक्रग्रहमन्थिग्रहयोरुभयोः शस्त्रवत्त्वम् ॥

षष्ठं तृचं विधत्ते— "वैश्वदेवं शंसति, तेनाग्रयण उक्थवान्" –इति। "ओमासश्चर्षणीधृतः"–इत्येषः (सं० १. ३. ७–९.) वैश्वदेवस्तृचः। तेनाग्रयणग्रहस्य यद्यपि शस्त्रवत्त्वं नास्ति, तथापि

---

* 'आ वायो'–'इन्द्रवायू'–इतीमौ मन्त्रौ एकस्मिन्ननुवाके यथाक्रमेणाम्नातौ तै०सं०१.४.४।

†, ‡, §, 'मिलिता' घ।

विश्वेदेवदेवताकत्वात् 'वैश्वदेवम्'। एवं सर्वत्र ग्रहशस्त्रयोरेक-देवताकत्वं द्रष्टव्यम् ॥

सप्तमं तृचं विधत्ते— "सारस्वतं शंसति"-इति। "पावका नः सरस्वती"-इत्यादिकः ( सं०१.३.१०-१२. ) सारस्वतस्तृचः ॥

ननु पूर्ववदत्रापि ग्रहस्य शस्त्रवत्त्वं कुतो नोपन्यस्यते ? इत्या-शङ्क्याह— "न सारस्वतो ग्रहोऽस्ति"-इति। आध्वर्यवमन्त्रकाण्डे सारस्वतमन्त्रस्यापठितत्वाद्, ब्राह्मणे विध्यभावाच्च ग्रहाभावः। तर्हि ग्रहोक्थेऽस्मिन्नस्य सारस्वतस्य तृचस्य किमर्थं शंसन माम्नात मित्याशङ्क्याह—"वाक् तु सरस्वती, ये तु के च वाचा ग्रहा गृह्यन्ते, ते ऽस्यसर्वे शस्तोक्थाः"-इति। सरस्वती हि वाग्देवता, ग्रहाणां च वाचा गृह्यमाणत्वात् सारस्वतत्वम्, तेन सर्वेऽपि ग्रहाः 'शस्तोक्थाः' पठितशस्त्रा भवन्ति ॥

वेदनं प्रशंसति। "उक्थिनो भवन्ति य एवं वेद"-इति। तस्य वेदितुः सर्वे ग्रहाः शस्त्रवन्तो भवन्ति, ग्रहदेवतास्तुष्य-न्तीत्यर्थः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
प्रथमः खण्डः ॥ १ ॥

---

॥ अथ द्वितीयः खण्डः ॥

अन्नाद्यं वा एतेनावरुन्धे यत्प्रउग मन्यान्या देवता प्रउगे शस्यते ऽन्यदन्यदुक्थं प्रउगे क्रियते ऽन्यदन्य-

दस्यान्नाद्यं गृहेषु ध्रियते य एवं वेदैतद्वै यजमानस्याध्यात्मतम मिवोक्थं यत् प्रउगं तस्मादेनेनैतदुपेच्यतम मिवेत्याहुरेतेन ह्येनं होता संस्करोतीति वायव्यं शंसति तस्मादाहुर्वायुः प्राणः प्राणो रेतो रेतः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति यद्वायव्यं शंसति प्राण मेवास्य तत्संस्करोत्यैन्द्रवायवं शंसति यत्र वाव प्राणस्तदपानो यदैन्द्रवायवं शंसति प्राणापानावेवास्य तत्संस्करोति मैत्रावरुणं शंसति तस्मादाहुश्चक्षुः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति यन्मैत्रावरुणं शंसति चक्षुरेवास्य तत्संस्करोत्याश्विनं शंसति तस्मात् कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्यायतीति यदाश्विनं शंसति श्रोत्र मेवास्य तत्संस्करोत्यैन्द्रं शंसति तस्मात् कुमारं जातं संवदन्ते प्रतिधारयति वै ग्रीवा अथो शिर इति यदैन्द्रं शंसति वीर्य मेवास्य तत्संस्करोति वैश्वदेवं शंसति तस्मात् कुमारो जातः पद्भ्येव प्रचरति वैश्वदेवानि ह्यङ्गानि यद्वैश्वदेवं शंसत्यङ्गान्येवास्य तत्संस्करोति सारस्वतं शंसति तस्मात् कुमारं जातं जघन्या वागाविशति वाग्घि सरस्वती यत् सारस्वतं शंसति वाच मेवास्य तत्संस्करोत्येष वै

जातो जायते सर्वाभ्य एताभ्यो देवताभ्यः सर्वेभ्य उक्थेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः प्रउगेभ्यः सर्वेभ्यः सवनेभ्यो य एवं वेद यस्य चैवंविदुष एतच्छंसन्ति ॥ २ ॥

विहितं प्रउगशस्त्रं प्रशंसति— "अन्नाद्यं वा एतेनावरुन्धे यत् प्रउग मन्यान्या देवता प्रउगे शस्यते ऽन्यदन्यदुक्थं प्रउगे क्रियते"-इति। यदेतत् प्रउगाख्यं शस्त्र मस्ति, तदेतदत्तुं योग्यस्यान्नस्य साधनम्। अतस्तेनान्नं प्राप्नोति। यस्मादस्मिन् शस्त्रे पृथक् पृथगेव देवता शस्यते,— प्रथमतृचे केवलो वायुः, द्वितीयस्मिन्निन्द्रवायू, तृतीयस्मिन्मित्रावरुणावित्यादिर्देवताभेदः; यथैव देवता भिद्यन्ते, तथैवास्मिन् शस्त्रे 'अन्यदन्यत् उक्थं',— "वायवायाहि"–"इन्द्रवायू"–इत्यादिकं परस्परविलक्षणं शस्त्राङ्गं क्रियते; तस्मादोदनशाकसूपादिविलक्षणभक्ष्यभोज्यलेह्यचोष्यसाम्यादन्नाद्यहेतुत्वं युक्तम् ॥

वेदनं प्रशंसति— "अन्यदन्यदस्यान्नाद्यं गृहेषु ध्रियते य एवं वेद"-इति। 'अन्यदन्यत्' परस्परविलक्षणं मधुराम्लादिरूपम् ॥

प्रकारान्तरेण प्रउगं प्रशंसति— "एतद्व वै यजमानस्याध्यात्मतम मिवोक्थं यत् प्रउगं; तस्मादेनेनैतदुपेक्ष्यतम मिवेत्याहुरेतेन ह्येनं होता संस्करोति"-इति। प्रउगाख्यं यच्छस्त्र मस्ति, एतदेव यजमानस्य 'अध्यात्मतम मिव' आत्मानं शरीर मधिकृत्य वर्त्तत इत्यध्यात्मम्, शरीरसम्बन्धीत्यर्थः। पूर्वत्राज्यशस्त्रस्य यजमानशरीरनिष्पत्तिहेतुत्वाभिधानात् (१भा०४७४पृ०) तदध्यात्मम्,

इदं तूत्पन्नस्य शरीरस्य संस्कारत्वादतिशयेनैवाध्यात्मम्; यस्मादेवं तस्मात् 'एनेन' यजमानेन 'एतत्' प्रउगशस्त्रम् 'उपेच्यतम मिव' अतिशयेनोप समीपे ईचणीय मादरणीय मित्यर्थः। 'इति' एव मभिज्ञा आहुः। तेषा मय मभिप्रायः,— 'एतेन' प्रउगशस्त्रेण 'एनं' यजमान माज्यशस्त्रादुत्पन्नं * होता संस्करोति, तस्मादाहरणं युक्तम् ॥

अथ प्रथमतृचं विहित मनूद्य स्तौति— "वायव्यं शंसति;— तस्मादाहुर्वायुः प्राणः, प्राणो रेतो, रेतः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति; यद्वायव्यं शंसति, प्राण मेवास्य तत् संस्करोति"- इति। पूर्वोक्तो विधिर्वायव्यं शंसतीति (४ पृ०) वाक्येनानूद्यते। यस्माद्वायव्यं शंसनीयं, तस्मादभिज्ञा एव माहुः,— प्राणस्य वायु-कार्यत्वेन वायुरेव प्राणः, रेतसः प्राणाधारकशरीरनिष्पादकत्वा-द्रेतः प्राणः, प्राणस्वरूपं तत्सदृशं रेतः 'सम्भवतः' उत्पद्यमानस्य 'पुरुषस्य' देहस्य कारणत्वेन पितृदेहे प्रथमं सम्भवति। एव मभिज्ञैरुक्तत्वाद्वायव्यस्तृचः समीचीनः। तच्छंसनेन होता यज-मानस्य प्राण मेव संस्करोति ॥

द्वितीयं विधि मनूद्य स्तौति— "ऐन्द्रवायवं शंसति;— यत्र वाव प्राणस्तदपानो; यदैन्द्रवायवं शंसति, प्राणापानावेवास्य तत् संस्करोति"-इति। उच्छ्वासरूपः प्राणो यत्रास्ति, तत्र निश्वास-रूपोऽपानोऽप्यस्ति; इन्द्रवायू च प्राणापानस्वरूपौ; तस्मात् तेन सूक्तेन प्राणापानयोः संस्कारः ॥

तृतीयं विधि मनूद्य स्तौति— "मैत्रावरुणं शंसति; तस्मा-दाहुश्चक्षुः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति; यन्मैत्रावरुणं

* '०दुत्पन्न' घ।

शंसति, चक्षुरेवास्य तत् संस्करोति"-इति। श्रुत्यन्तरे "चक्षु-मैत्रावरुणः"-इति (तै० सं० ६.४.६.४.)। मित्रावरुणसम्बन्धस्य ग्रहस्य चक्षुष्ट्वाभिधानात् तृचोऽपि चक्षुःस्वरूप एव। तच्चक्षुः अन्यस्मात् श्रोत्रादीन्द्रियात् प्रथम मुत्पद्यते। अस्यार्थस्यागमगम्य-त्वादाहुरभिज्ञा इत्युक्तम्। एवंविध चक्षुःस्वरूपेण मैत्रावरुण-तृचेन यजमानचक्षुषः संस्कारः॥

चतुर्थं विधि मनूद्य स्तौति— "आश्विनं शंसति; तस्मात् कुमारं जातं संवदन्त, उप वै शुश्रूषते नि वै ध्यायतीति; यदा-श्विनं शंसति, श्रोत्र मेवास्य तत् संस्करोति"-इति। उत्पन्नं वालं मुख मेवेक्षमाणा मातृपित्रादयः परस्पर मेव माहुः,—नानाविधै रुपलालनैराहूतो वालकोऽस्मन्मुख मवलोकयति, तस्मादय मस्म-दीयां वाचं श्रोतु मिच्छति, नैरन्तर्येणावलोकनेन मा मेव ध्यायतीति। तदेतन्मित्रावरुणानुग्रहकृतम्। तस्मात् तच्छंसनेन श्रोत्रस्य संस्कारः॥

पञ्चमं विधि मनूद्य स्तौति— "ऐन्द्रं शंसति; तस्मात् कुमारं जातं संवदन्ते, प्रतिधारयति वै ग्रीवा अथो शिर इति; यदैन्द्रं शंसति, वीर्य मेवास्य तत् संस्करोति"-इति। दोलायां शयानं वाल मवेक्ष्य परस्पर मेव माहुः,— अय मिदानीं 'ग्रीवाः प्रतिधारयति' उत्थातु मादौ गल मुन्नमयति, ततः शिर उन्नमय-तीति। एतस्य व्यापारस्य वीर्यनिमित्तत्वादिन्द्रस्य च वीर्यप्रद-त्वात् तदीयतृचेन शक्तेः संस्कारः॥

षष्ठं विधि मनूद्य स्तौति— "वैश्वदेवं शंसति; तस्मात् कुमारो जातः पश्चेव प्रचरति; वैश्वदेवानि ह्यङ्गानि; यद्वैश्वदेवं शंसत्यङ्गान्येवास्य तत् संस्करोति"-इति। उत्पन्नो वालः 'पश्चेव'

दर्शनश्रवणग्रीवोन्नमनादिक्रियाभ्यः पश्चादेव समर्थः सन् हस्ताभ्यां पादाभ्यां चेतस्ततः प्रचरति; हस्तादीन्यङ्गानि च बहुदेवताकानि; तस्मात् वैश्वदेवतृचेनाङ्गसंस्कारः ॥

सप्तमं विधिं मनूद्य स्तौति— "सारस्वतं शंसति; तस्मात् कुमारं जातं जघन्या वागाविशति; वाग्घि सरस्वती, यत् सारस्वतं शंसति, वाचमेवास्य तत् संस्करोति"-इति। हस्तपादप्रचारावस्थाया ऊर्ध्वं वक्तुमारभते, अतो 'जघन्या वाक्' इत्युच्यते। वाचः सरस्वतीरूपत्वात् तदीयतृचेन तस्याः संस्कारः ॥

वेदितारमनुष्ठातारं च प्रशंसति— "एष वै जातो जायते सर्वाभ्य एताभ्यो देवताभ्यः सर्वेभ्य उक्थेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः प्रउगेभ्यः सर्वेभ्यः सवनेभ्यो य एवं वेद, यस्य चैवंविदुष एतच्छंसन्ति"-इति। 'यः' होता यथोक्तप्रकारेण वेद, एष एव पूर्वं स्वमातृपितृभ्यां जातोऽपि पुनर्देवतादिभ्यो जातो भवति। यथोक्तार्थं विदुषो 'यस्य' यजमानस्य होता 'एतत्' प्रउगं शंसति, सोऽपि यजमानो देवतादिभ्यः पुनर्जायते। देवता वाय्वादयः। उक्थानि आज्यप्रउगादीनि। छन्दांसि गायत्र्यादीनि। प्रउगानि तदवयवास्तृचाः। सवनानि त्रीणि प्रसिद्धानि। एतेभ्यः सर्वेभ्यः पुनरुत्पत्तिः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
द्वितीयः खण्डः ॥ २ ॥

———

॥ अथ तृतीयः खण्डः ॥

प्राणानां वा एतदुक्थं यत्प्रउगं सप्त देवताः शंसति सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत्प्राणान् दधाति किं स यजमानस्य पापभद्र माद्रियेतेति ह स्माह यो ऽस्य होता स्यादित्यत्रैवैनं यथा कामयेत तथा कुर्याद् यं कामयेत प्राणेनैनं व्यर्द्धयानीति वायव्य मस्य लुब्धं शंसेदृचं वा पदं वातीयात्तेनैव तल्लुब्धं * प्राणेनैवैनं तद् व्यर्द्धयति यं कामयेत प्राणापानाभ्या मेनं तद् व्यर्द्धयानीत्यैन्द्रवायव मस्य लुब्धं शंसेदृचं वा पदं वातीयात्तेनैव तल्लुब्धं प्राणापानाभ्या मेवैनं तद् व्यर्द्धयति यं कामयेत चक्षुषैनं व्यर्द्धयानीति मैत्रावरुण मस्य लुब्धं शंसेदृचं वा पदं वातीयात्तेनैव तल्लुब्धं चक्षुषैवैनं तद् व्यर्द्धयति यं कामयेत श्रोत्रेणैनं व्यर्द्धयानीत्याश्विन मस्य लुब्धं शंसेदृचं वा पदं वातीयात्तेनैव तल्लुब्धं श्रोत्रेणैवैनं तद् व्यर्द्धयति यं कामयेत वीर्येणैनं व्यर्द्धयानीत्यैन्द्र मस्य लुब्धं शंसेदृचं वा पदं वातीयात् तेनैव तल्लुब्धं वीर्येणैवैनं तद् व्यर्द्धयति यं कामयेताङ्गैरेनं व्यर्द्धयानीति वैश्वदेव मस्य लुब्धं शंसे-

* 'तं लुब्धं' क ; एव मिह सर्वत्र ।

दृचं वा पदं वातीयात्तेनैव तल्लुब्ध मङ्गैरेवैनं तद् व्यर्द्धयति यं कामयेत वाचैनं व्यर्द्धयानीति सारस्वत मस्य लुब्धं शंसेद्दृचं वा पदं वातीयात्तेनैव तल्लुब्धं वाचैवैनं तद् व्यर्द्धयति य मु कामयेत सर्वैरेन मङ्गैः सर्वेणात्मना समर्द्धयानीत्येतदेवास्य यथापूर्वं मृजुक्लृप्तं शंसेत्सर्वैरेवैनं तदङ्गैः सर्वेणात्मना समर्द्धयति सर्वैरङ्गैः सर्वेणात्मना समृध्यते य एवं वेद ॥ ३ ॥

प्रकारान्तरेण प्रउगशस्त्रं प्रशंसति— "प्राणानां वा एतदुक्थं यत् प्रउगं; सप्त देवताः शंसति,— सप्त वै शीर्षन् प्राणाः शीर्षन्नेव तत् प्राणान् दधाति"-इति । शिरोगतसप्तच्छिद्रवर्त्तिप्राणानां पूर्वोक्तसप्ततृचगतवाय्वादिदेवतानां च सङ्ख्यासाम्यात् शस्त्रस्य प्राणरूपत्वम्, तेन यजमानस्य शिरसि प्राणधारणं भवति ॥

अथ प्रश्नोत्तराभ्यां प्रउगशस्त्रस्य सामर्थ्यं दर्शयति— "किं स यजमानस्य पापभद्र माद्रियेतेति ह स्माह, योऽस्य होता स्यादित्यत्रैवैनं यथा कामयेत तथा कुर्यात्"-इति । 'अस्य' यजमानस्य 'यः' होता स्यात्, स तस्य 'पापभद्रं किं माद्रियेत' पाप मनिष्टफलं, भद्र मिष्टफलं, तादृशं फलं किं सम्पादयितुं समर्थः ? इति प्रश्नः । अत्रैव जन्मनि 'एनं' यजमानं प्रति यथा होता कामयेत, तथा कर्तुं शक्नोति इत्युत्तरम् ॥

तत्र प्रथमतृचप्रयुक्त मनिष्टं दर्शयति— "यं कामयेत प्राणेनैनं व्यर्द्धयानीति, वायव्य मस्य लुब्धं शंसेदृचं वा पदं वातीयात्, तेनैव तल्लुब्धं प्राणेनैवैनं तद् व्यर्द्धयति"-इति । 'यं'

यजमान मुद्दिश्य होता कामयेत। कथ मिति, तदुच्यते—'एनं' यजमानं प्राणेन 'व्यर्द्धयानीति' तद्वियुक्तं करवाणीति। एवं कामयमानो होता 'अस्य' यजमानस्य सम्बन्धिनं 'वायव्यं' तृचं 'लुब्धं' व्यामूढं यथा भवति तथा 'शंसेत्' स्तम्भयेत्, न पठेदित्यर्थः। 'लुभ विमोहने' इति धातुः (तु० २५)। व्यामोहप्रकार उच्यते— एका मृचं वा तदीय मेकं पदं वा 'अतीयात्' स्तम्भयेत्, न पठेदित्यर्थः। तावता 'तत्' तृचस्वरूपं 'लुब्धं' व्यामूढं भवति; तथा सति प्राणरूपत्वेन पूर्वनिरूपितस्य वायोः क्रोधात् 'एनं' यजमानं प्राणेन वियोजयति॥

द्वितीयतृचनिमित्त मनिष्टं दर्शयति— "यं कामयेत प्राणापानाभ्या मेनं तद् व्यर्द्धयानीत्यैन्द्रवायव मस्य लुब्धं शंसेदृचं वा पदं वातीयात्, तेनैव तल्लुब्धं प्राणापानाभ्या मेवैनं तद् व्यर्द्धयति"—इति। पूर्ववत् व्याख्येयम्॥

तृतीयतृचनिमित्त मनिष्टं दर्शयति— "यं कामयेत चक्षुषैनं व्यर्द्धयानीति, मैत्रावरुण मस्य लुब्धं शंसेदृचं वा पदं वातीयात्, तेनैव तल्लुब्धं चक्षुषैवैनं तद् व्यर्द्धयति"—इति। पूर्ववत् व्याख्येयम्॥

चतुर्थतृचप्रयुक्त मनिष्टं दर्शयति— "यं कामयेत श्रोत्रेणैनं व्यर्द्धयानीत्याश्विन मस्य लुब्धं शंसेदृचं वा पदं वातीयात्, तेनैव तल्लुब्धं श्रोत्रेणैवैनं तद् व्यर्द्धयति"—इति। पूर्ववत् व्याख्येयम्॥

पञ्चमतृचप्रयुक्त मनिष्टं दर्शयति— "यं कामयेत वीर्येणैनं व्यर्द्धयानीत्यैन्द्र मस्य लुब्धं शंसेदृचं वा पदं वातीयात्, तेनैव तल्लुब्धं वीर्येणैवैनं तद् व्यर्द्धयति"—इति। पूर्ववत् व्याख्येयम्॥

षष्ठतृचप्रयुक्त मनिष्टं दर्शयति— "यं कामयेताङ्गैरेनं व्यर्द्धयानीति, वैश्वदेव मस्य लुब्धं शंसेदृचं वा पदं वातीयात्,

तेनैव तल्लुब्ध मङ्गैरेवैनं तद् व्यर्द्धयति"–इति । पूर्ववत् व्याख्येयम् ॥

सप्तमतृचप्रयुक्त मनिष्टं दर्शयति—"यं कामयेत वाचैनं व्यर्द्धयानीति, सारस्वत मस्य लुब्धं शंसेद्दचं वा पदं वातीयात्, तेनैव तल्लुब्धं वाचैवैनं तद् व्यर्द्धयति"–इति । पूर्ववत् व्याख्येयम् ॥

अथास्य शस्त्रस्येष्टफलसामर्थ्यं दर्शयति—"य मु कामयेत सर्वैरेन मङ्गैः सर्वेणात्मना समर्द्धयानीत्येतदेवास्य यथापूर्व मृजुक्लृप्तं शंसेत्,—सर्वैरेवैनं तदङ्गैः सर्वेणात्मना समर्द्धयति"–इति । पूर्वोक्तानि प्राणादीनि, सर्वाख्यङ्गानि, सम्पूर्णो देहः, सर्व आत्मा, तत्समृद्धिकामो होता 'अस्य' यजमानस्य सम्बन्धि 'तत्' एव प्रउगशस्त्रं 'यथापूर्वं' गुरोः समोपे पारायणक्रमेण पठितं, तथैव 'ऋजुक्लृप्तं' कस्यचिदवयवस्यान्यथात्वाभावादृजुत्वं, तथा क्लृप्तं सम्पादितं कृत्वा शंसेत् । ततः काम्यमानसमृद्धिः सिध्यति ॥

वेदनं प्रशंसति – "सर्वैरङ्गैः सर्वेणात्मना समृद्ध्यते य एवं वेद"–इति । स्पष्टोऽर्थः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
तृतीयः खण्डः ॥ ३ ॥

---

॥ अथ चतुर्थः खण्डः ॥

तदाहुर्यथा वाव स्तोत्र मेवं शस्त्र। माग्नेयीषु सामगा * स्तुवते। वायव्यया होता प्रतिपद्यते। कथ मस्याग्नेय्यो ऽनुशस्ता भवन्तीत्यग्नेर्वा एताः सर्वास्तन्वो। यदेता देवताः। स यदग्निः प्रवानिव दहति। तदस्य वायव्यं रूपं। तदस्य तेनानुशंसत्यथ यद् द्वैध मिव कृत्वा दहति। द्वौ वा इन्द्रवायू। तदस्यैन्द्रवायवं रूपं। तदस्य तेनानुशंसत्यथ यदुच्च हृष्यति नि च हृष्यति। तदस्य मैत्रावरुणं रूपं। तदस्य तेनानुशंसति। स यदग्निर्घोरसंस्पर्शस्तदस्य वारुणं रूपं। तं यद् घोरसंस्पर्शं सन्तं मित्रकृत्येवोपासते। तदस्य मैत्रं रूपं। तदस्य तेनानुशंसत्यथ यदेनं द्वाभ्यां बाहुभ्यां। द्वाभ्या मरणीभ्यां मन्थन्ति। द्वौ वा अश्विनौ। तदस्याश्विनं रूपं तदस्य तेनानुशंसत्यथ यदुच्चैर्घोष † स्तनयन् बबबा कुर्वन्निव दहति। यस्माद् भूतानि विजन्ते। तदस्यैन्द्रं रूपं। तदस्य तेनानुशंसत्यथ यदेन मेकं सन्तं बहुधा विहरन्ति। तदस्य वैश्वदेवं रूपं। तदस्य तेनानुशंसत्यथ यत्स्फूर्जयन् वाच मिव वदन् दहति। तदस्य सारस्वतं रूपं। तदस्य तेनानुशंसत्येव मु

* 'सामगाः' क। † 'यदुच्चैर्घोषः' क।

हास्य वायव्ययैव प्रतिपद्यमानस्य तृचेन तृचेनैवैता-भिर्देवताभि* स्तोत्रियो ऽनुशस्तो भवति विश्वेभिः† सोम्यं मध्वग्न इन्द्रेण वायुना पिबा मित्रस्य धामभिरिति वैश्वदेव मुक्थं शस्त्वा वैश्वदेव्या यजति यथाभागं तद् देवताः प्रीणाति ॥ ४ ॥

अथ स्तोत्रशस्त्रयोः देवतावैलक्षण्यरूप माक्षेप मुत्थापयति— "तदाहुर्यथा वाव स्तोत्र मेवं शस्त्र माग्नेयीषु सामगा स्तुवते, वायव्यया होता प्रतिपद्यते, कथ मस्याग्नेय्योऽनुशस्ता भवन्तीति"-इति। सामगानां यान्याज्यस्तोत्राणि, तत्र ऋच आग्नेय्य आम्नाताः; "अग्न आ याहि"-इत्यादिषु ( उ॰आ॰१.१.४-७. ) सामगैराज्य-स्तोत्रपाठात्‡। होता तु "वायवा याहि"-इत्यनया (सं॰१.२.१.) वायव्यया प्रउगशस्त्रं प्रारभते। अतो ऽनेन विलक्षणदेवताकेन शस्त्रेणाग्नेय्य ऋचः कथ मनुशस्ता भवन्ति ? अनुकूलशंसनाभावे "स्तुत मनु शंसति"-इति ( ता॰ ब्रा॰ ९. ८. १०. )§ शाखान्तरं विरुध्येतेति आक्षेपः ॥

तस्योत्तरं दर्शयति— "अग्नेर्वा एताः सर्वास्तन्वो यदेता देवताः"-इति। सप्तसु तृचेषु ( १-१५पृ॰) या एता वाय्वादयो देवताः प्रतीयन्ते, ताः सर्वा अग्नेरेव शरीरभूताः; अतोऽग्नि-विषय मेव कृत्स्नं शस्त्रं सम्पद्यत इति। स्तोत्रगता आग्नेय्यः ऋचो ऽनुशस्ता भवन्ति ॥

---

* '॰वताभिः, क, ग, घ। † 'विश्वेभ्यः' ङ।

‡ ता॰ ब्रा॰ २. ४—६ ; ७. २ ; ११. २. २।

§ १ भा॰ ४५२ पृ॰ 'A' द्रष्टव्यम्।

अग्नेः प्रथमतृचप्रतिपादितायाः वायुदेवतायाः स्वरूपं दर्शयति— "स यदग्निः प्रवानिव दहति, तदस्य वायव्यं रूपं, तदस्य तेनानुशंसति"–इति। 'प्रवानिव' प्रकर्षवानिव सन्नधिकज्वालया दहत्यग्निरिति यदस्ति, तत्प्रकर्षात्मकं वायुसम्बन्धि रूपम्; वायुना ज्वालाधिक्योदयात्। अतोऽस्य प्रउगशस्त्रस्य सम्बधिना तेन वायुरूपेणायं होता तदग्निरूप मनुशंसति॥

द्वितीयतृचप्रतिपादितायाः इन्द्रवायुदेवतायाः सारूप्यं दर्शयति— "अथ यद् द्वेध मिव कृत्वा दहति, द्वौ वा इन्द्रवायू तदस्यैन्द्रवायवं रूपं, तदस्य तेनानुशंसति"–इति। ज्वालाद्वय मिव कृत्वा यदा दहति, तदा द्वित्वसाम्यात् तज्ज्वालाद्वय मिन्द्रवायुसम्बन्धि रूपं भवति। अन्यत् पूर्ववत्॥

तृतीयतृचे सारूप्यं दर्शयति— "अथ यदुच्च ह्रष्यति, नि च ह्रष्यति, तदस्य मैत्रावरुणं रूपं, तदस्य तेनानुशंसति"–इति। ज्वलतोऽग्नेरौन्नत्यम् 'उद्धर्षः', ज्वालाशान्त्या नीचत्वं* 'निहर्षः'। तदुभयं मित्रावरुणसम्बन्धि रूपम्;— मित्रं दृष्टवतो हर्षेणोन्नतत्वात् तन्मित्ररूपम्; वरुणसम्बन्धिनीना मपां नीचगामित्वात् एतद् वरुणस्य रूपम्। तदीयत्वेनाग्निरनुशस्तो भवति। तत्रैव युक्त्यन्तर माह— "स यदग्निर्घोरसंस्पर्शस्तदस्य वारुणं रूपं, तं यद् घोरं संस्पर्शं सन्तं मित्रकृत्येवोपासते, तदस्य मैत्रं रूपं, तदस्य तेनानुशंसति"–इति। सोऽग्निः 'घोरसंस्पर्शः' उष्णसंस्पर्शः इति यदस्ति, तदस्याग्नेर्वरुणसम्बन्धि रूपम्; वरुणस्योग्रत्वात्। घोरसंस्पर्शं सन्तं स्प्रष्टु मशक्य मपि त मग्निं शीतार्त्ताः प्राणिनो 'मित्रकृत्या' मित्रस्य कृतिः कार्यं समीपे ऽवस्थानं तेनैव 'एनम्

* 'ज्वालया अत्यन्तनीचत्व' घ।

ऽयासते' शीतपरिहाराय हस्तौ उदरं पृष्ठं च वह्निसमीपे प्रतापयन्तो वह्निं सेवन्ते 'तत्' एतत्सेवनम् 'अस्य' अग्नेः मित्रसम्बन्धि रूपम्। ततोऽस्याग्नेः सम्बन्धिना 'तेन' मैत्रावरुणरूपेणायं होता वह्निमनुशंसति ॥

चतुर्थतृचे सारूप्यं दर्शयति— "अथ यदेनं द्वाभ्यां बाहुभ्यां द्वाभ्या मरणीभ्यां मन्थन्ति, द्वौ वा अश्विनौ, तदस्याश्विनं रूपं, तदस्य तेनानुशंसति"–इति। अश्विनोर्द्वित्वाद्धस्तद्वयेनारणिद्वयेन च मन्थनम् 'अस्य' अग्नेः आश्विनं रूपम् ॥

पञ्चमतृचे सारूप्यं दर्शयति— "अथ यदुच्चैर्घोष स्तनयन् बबबा कुर्वन्निव दहति, यस्माद् भूतानि विजन्ते, तदस्यैन्द्रं रूपं, तदस्य तेनानुशंसति"–इति। 'स्तनयन्' ध्वनिं कुर्वन्। स एव ध्वनिः त्रिभिर्बकारैरनुक्रियते। यत् ईदृशात् ध्वनिसहितादग्नेः रूपात् 'भूतानि' प्राणिनो 'विजन्ते' बिभ्यति, 'तत्' भयकारणं सहित मिन्द्रस्य सङ्ग्रामार्थ मास्फोटनं कुर्वतः शत्रुभयकारिणो रूपम् ॥

षष्ठतृचे सारूप्यं दर्शयति— "अथ यदेन मेकं सन्तं बहुधा विहरन्ति, तदस्य वैश्वदेवं रूपं, तदस्य तेनानुशंसति"–इति। अग्नेराहवनीयादिस्थानेषु आग्नीध्रादिधिष्णियेषु च बहुधा विहरणं यदस्ति, तद्विश्वेषां देवानां रूपम्; तेषा मपि बहुत्वात् ॥

सप्तमतृचे सारूप्यं दर्शयति— "अथ यत् स्फूर्जयन् वाच मिव वदन् दहति, तदस्य सारस्वतं रूपं, तदस्य तेनानुशंसति"–इति। यथा जनो वाचं वदति, तथैवाग्निः 'स्फूर्जयति' ईषद्विच्छिद्य विलक्षणोच्चारण मिव शब्दं करोति। तदेतद्वागुच्चारणसदृशं ध्वनिकरणं सरस्वतीसम्बद्धरूपम् ॥

इत्थ मग्नेर्वाय्वादिदेवतानां च सारूप्यद्वारानुशंसन मुपपाद्योपसंहरति— "एव मु ह्वास्य वायव्ययैव प्रतिपद्यमानस्य तृचेन तृचेनैवैताभिर्देवताभि स्तोत्रियो ऽनुशस्तो भवति"–इति। 'एव मु ह' अनेनैवोक्तप्रकारेण "वायवा याहि"–इत्येतया वायुदेवताकयैवर्चा शस्त्रं प्रारभमाणस्य होतुः तेनतेनोक्ततृचेनैव प्रतिपादिताभिर्वाय्वादिभिः देवताभिरग्निसदृशीभिः 'स्तोत्रियः' स्तोत्रसम्बन्धितृचो "अग्न आ याहि"–इत्यादिकः (उ० आ० १.१.४–७.) आग्नेयोऽपि 'अनुशस्तो भवति' तस्यानुकूल्यं यथा भवति तथा प्रउगशस्त्र मनुष्ठितं भवति इत्यर्थः ॥

अथ शस्त्रयाज्यां विधत्ते— "विश्वेभिः सोम्यं मध्वग्न [illegible] वायुना पिबा मित्रस्य धामभिरिति ( सं० १.१४.१०. ) [illegible] मुक्थं शस्त्वा वैश्वदेव्या यजति, यथाभागं तद्देवताः प्रीणाति" इति। हे अग्ने ! 'विश्वेभिः' सर्वैः देवैः सह, विशेषतः [illegible] वायुना च सह, तथा मित्रस्य 'धामभिः' स्थानैर्युक्तः सन् 'सोम्यं मधु' सोमसम्बन्धिनं मधुरं रसं पिब। विश्वेभिरित्यादिका [illegible] ऋक् वैश्वदेवी, तया 'यजति' तां याज्यां पठेत् *। कदा पठेदिति, तदुच्यते—'वैश्वदेवं' बहुदेवताकम् 'उक्थं' शस्त्रं प्रउगनामकं शस्त्वा पश्चात्पठेत्। तथा सति स्वस्वभाग मनतिक्रम्य सर्वा देवतास्तर्पयति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
चतुर्थः खण्डः ॥ ४ ॥

* आश्व० श्रौ० ५.१०.१०। 'याज्यान्तानि शस्त्राणि'–इति च तत्रैव तदुत्तरम् (५.१०.२१.)।

॥ अथ पञ्चमः खण्डः ॥

देवपात्रं वा एतद्यद् वषट्कारो वषट् करोति देवपात्रेणैव तद् देवतास्तर्पयत्यनुवषट् करोति तद्यथादो ऽश्वान् वा गा वा पुनरभ्याकारं तर्पयन्त्येवमेवैतद्देवताः पुनरभ्याकारं तर्पयन्ति यदनुवषट् करोतीमानेवाग्नीनुपासत इत्याहुर्धिष्ण्यानथ कस्मात्पूर्वस्मिन्नेव जुह्वति पूर्वस्मिन् वषट् कुर्वन्तीति यदेव सोमस्याग्ने वीहीत्यनुवषट् करोति तेन धिष्ण्यान् प्रीणात्यसंस्थितान्त्सोमान् भक्षयन्तीत्याहुर्येषां नानुवषट् करोति को नु सोमस्य स्विष्टकृद्भाग इति यद्वाव सोमस्याग्ने वीहीत्यनुवषट् करोति तेनैव संस्थितान्त्सोमान् भक्षयन्ति स उ एव सोमस्य स्विष्टकृद्भागो वषट् करोति ॥ ५ ॥

अथ शस्त्रयाज्यान्ते पठनीयं वषट्कारं विधत्ते— "देवपात्रं वा एतद्यद्वषट् करोति, देवपात्रेणैव तद् देवतास्तर्पयति"-इति। "वौषट्"-इति मन्त्रो वषट्कारः। स च 'देवपात्र' देवानां पानसाधनम्; तस्माद् 'वषट् (करोति)' कुर्यात्, वौषड़ित्येवं पठेत्*। तथा सति देवाना मुचितेनैव पानसाधनेन सर्वा देवतास्तर्पयतीति ॥

ततः ऊर्द्ध्वं पठनीय मनुवषट्कारं विधत्ते— "अनुवषट् करोति, तद्यथादो ऽश्वान्वा गा वा पुनरभ्याकारं तर्पयन्त्येव मेवैतद्

* परस्मिन् खण्डे द्रष्टव्यम् ( २४ पृ० ९ पं० )।

देवताः पुनरभ्याकारं तर्पयन्ति यदनुवषट् करोति"-इति। "सोमस्याग्ने वीहि"-इत्ययं मन्त्रोऽनुवषट्कारः*, तं पठेत्। 'तत्' तत्र लोके 'अदः' किञ्चिदिदं निदर्शन मस्ति; कथ मिति, तदुच्यते— यथा मनुष्याः स्वकीयानश्वान्वा स्वकीयान् गाः वा 'पुनरभ्याकारं' पौनःपुन्येन तृणोदकादिभिरभिमुखीकृत्य 'तर्पयन्ति' कण्डूयनेन प्रियशब्देन वा लालयित्वा यथेष्टघासं प्रयच्छन्ति, एव मेवैतेन अनुवषट्कारेण पुनःपुनर्देवता अभिमुखीकृत्य यजमानो हविषा तर्पयति॥

अनुवषट्कारप्रशंसार्थं चोद्य मुद्भावयति— "इमानेवाग्नीनुपासत इत्याहुर्धिष्ण्यानथ कस्मात् पूर्वस्मिन्नेव जुह्वति पूर्वस्मिन् वषट् कुर्वन्तीति?"-इति। सोममध्यवर्त्तिषु धिष्ण्येषु आग्नीध्राद्यग्नयो ये विहिताः, तानग्नीन् ऋत्विजः समीपे स्थित्वा 'उपासत एव' सेवन्त एव केवलम्;— न तु तेषु जुह्वति, नापि वषट् कुर्वन्ति। 'पूर्वस्मिन्नेव' उत्तरवेदिस्थितेऽग्नौ ऋत्विजो जुह्वति, तत्रैव वषट् कुर्वन्ति च। अप्येवं सति धिष्ण्यगताना मग्नीनां प्रीतिर्नास्ति। कस्मादेवं वैषम्यं क्रियते? इति चोद्यवादिन आहुः। तत्रोत्तरं दर्शयति— "यदेव सोमस्याग्ने वीहीत्यनुवषट् करोति, तेन धिष्ण्यान् प्रीणाति"-इति। हे अग्ने! इति जात्याकारेणाग्निं सम्बोध्य 'सोमस्य' सोमरसं 'वीहि' पिब, 'इति' अनेन मन्त्रेण होता अनुवषट् करोति, इति यदस्ति, तेन 'धिष्ण्यान्' अग्नीन् होता तर्पयति। तस्मात् न वैषम्यम्॥

प्रकारान्तरेण प्रशंसितुं पुनश्चोद्यद्वय मुद्भावयति— "असंस्थितान्त्सोमान् भक्षयन्तीत्याहुर्येषां नानुवषट् करोति, को नु

* "सोमस्याग्ने वीहीत्य[illegible]" [illegible] आश्व०श्रौ०सू०५.१३.६। १भा० १६२५१ द०।

सोमस्य स्विष्टकृद्भाग इति"–इति । 'येषां' द्विदेवत्यग्रहाणा मर्ध्ये होता नानुवषट् करोति, ते द्विदेवत्याः सोमाः 'असंस्थिताः' असमाप्ताः ; देवतार्थहोमस्यासमाप्तौ कथ मृत्विजः 'तान्' द्विदेवत्यान् भक्षयन्ति ? इत्येकं चोद्य माहुः । दर्शपूर्णमासादिषु स्विष्टकृद्भागेन ततः पूर्वेषां हविषां संस्कारो भवति, ततः सोमस्यापि संस्काराय को नाम स्विष्टकृद्भागः ? इति द्वितीयं चोद्यम् । तत्रोत्तर माह— "यदाव सोमस्याग्ने वीहीत्यनुपषट् करोति, तेनैव संस्थितान्त्सोमान् भक्षयन्ति, स उ एव सोमस्य स्विष्टकृद्भागो वषट् करोति"–इति । मन्त्रे सोमस्येति जातिमात्र मुद्दिश्य अनुवषट् करोति इति यदेवास्ति, तेनैवानुवषट्काररहिता द्विदेवत्यादयः सर्वे सोमाः 'संस्थिताः' समाप्ताः ; तस्मात् संस्थितानेव द्विदेवत्यान् ऋत्विजो भक्षयन्ति । 'स उ' स एव, यथोक्तोऽनुवषट्कार एव सोमस्य स्विष्टकृभागः ; अतो ऽनुवषट् करोति । उक्तस्य सर्वस्य प्रयोजनस्य सिद्ध्यर्थ मनुवषट् कुर्यादित्यर्थः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
पञ्चमः खण्डः ॥ ५ ॥

---

॥ अथ षष्ठः खण्डः ॥

वज्रो वा एष यद्वषट्कारो यं द्विष्यात्तं ध्यायेद् वषट्करिष्यंस्तस्मिन्नेव तं वज्र मास्थापयति षळिति

वषट् करोति षड् वा ऋतव ऋतूनेव तत्कल्पयत्यृतून् प्रतिष्ठापयत्यृतून्वै प्रतितिष्ठत इदं सर्वमनु प्रतितिष्ठति यदिदं किञ्च प्रतितिष्ठति य एवं वेद तद्ध स्माह हिरण्यदन् वैद एतानि वा एतेन षट् प्रतिष्ठापयति द्यौरन्तरिक्षे प्रतिष्ठितान्तरिक्षं पृथिव्यां पृथिव्यप्स्वापः सत्ये सत्यं ब्रह्मणि ब्रह्म तपसीत्येता एव तत्प्रतिष्ठाः प्रतितिष्ठन्तीरिदं सर्वमनु प्रतितिष्ठति यदिदं किञ्च प्रतितिष्ठति य एवं वेद वौषळिति वषट् करोत्यसौ वाव वावृतवः षळेत मेव तदृतुष्वादधात्यृतुषु प्रतिष्ठापयति यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति ॥ ६ ॥

अथ वषट्कार माश्रित्यैव अभिचारप्रयोग उच्यते— "वज्रो वा एष यद्वषट्कारो यं द्विष्यात् तं ध्यायेद् वषट्करिष्यंस्तस्मिन्नेव वज्र मास्थापयति"-इति। वषट्कारस्य वज्ररूपत्वात् तत्कालध्यानेन द्वेष्ये वज्रप्रहारी भवति ॥

अथ "वौषट्"-इत्यस्य वषट्कारस्य उत्तरभागं प्रशंसति— षळिति वषट् करोति, षड् वा ऋतव ऋतूनेव तत् कल्पयत्यृतून् प्रतिष्ठापयत्यृतून् वै प्रतितिष्ठत इदं सर्वमनु प्रतितिष्ठति यदिदं किञ्च"-इति। षड़ित्यनेन मन्त्रभागेन वसन्तादि-षड़ृतुसङ्ख्याया बुद्धिस्थत्वात् 'ऋतून् कल्पयति' स्वस्वप्रयोजनसमर्थान् करोति। तावता ऋतवो व्याकुलता मन्तरेण प्रतितिष्ठन्ति। तत्प्रतिष्ठाम् 'अनु'

स्थावरजङ्गमरूपं जगत् सर्वं स्वस्वभागे प्रतिष्ठितं भवति ॥ वेदनं प्रशंसति — "प्रतितिष्ठति य एवं वेद"–इति ॥

प्रामाणिकपुरुषवचनोदाहरणेन दृढ़यति — "तदु ह स्माह हिरण्यदन् बैद एतानि वा एतेन षट् प्रतिष्ठापयति,—द्यौरन्तरिक्षे प्रतिष्ठिता, ऽन्तरिक्षं पृथिव्यां, पृथिव्यप्स्वापः सत्ये, सत्यं ब्रह्मणि, ब्रह्म तपस्येता एव तत् प्रतिष्ठाः प्रतितिष्ठन्तीरिदं सर्वं मनु प्रतितिष्ठति यदिदं किञ्च ; प्रतितिष्ठति य एवं वेद"–इति। हिरण्मया दन्ता यस्यासौ 'हिरण्यदन्', बिदस्य पुत्रो 'बैदः' ; तादृशो मुनिः 'तदु ह' तदेव वचन माह स्म। किं वचनम् ? इति, तदुच्यते—'एतानि' द्युलोकादीनि ब्रह्मान्तानि षट् स्थानानि * यानि सन्ति, तान्येव 'एतेन' वषट्कारेण होता प्रतिष्ठापयति। तत्र द्युलोकस्याधस्तादन्तरिक्षं, तस्मात् अन्तरिक्षे द्युलोक आश्रितः। तच्चान्तरिक्षं पृथिव्या माश्रितम्। पृथिवी चाधोवर्त्तिनीष्वप्सु आश्रिता। 'आपः सत्ये' ; जनेषु सत्यवादिषु सत्सु यथाकालं वृष्टिसम्भवात्। सत्यं 'ब्रह्मणि' वेदे प्रतिष्ठितम् ; ईदृश माचरणं सत्य मिति वेदेनैवावगमात्। वेदः 'तपसि' वषट्कारमन्त्रानुष्ठानरूपे प्रतिष्ठितः ; वेदस्यानुष्ठानप्रतिपादनार्थत्वात्। 'इति' अनेन प्रकारेण 'एताः' द्युलोकादय एव 'तत्' तेन वषट्कारेण यदा परस्परं प्रतिष्ठिता भवन्ति, तदानीं प्रतिष्ठारूपास्ताः पृथिव्याद्याः एकैकत्र प्रतिष्ठिताः सतीः 'अनु' पश्चाद् 'यदिदं किञ्च' जगदस्ति, तत् सर्वं प्रतितिष्ठति। य एवं वेदिता, स च प्रतितिष्ठति ॥

अथ वषट्कारमन्त्रस्य पूर्वोत्तरभागावुभौ प्रशंसति— "वौष-

---

* 'षड् वस्तूनि' घ।

ळिति* वषट्करोत्यसौ वाव वाहृतवः षळेत मेव तदृतुष्वादधात्यृतुषु प्रतिष्ठापयति ; यादृगिव वै देवेभ्यः करोति, तादृगिवास्मै देवाः कुर्वन्ति"-इति। मन्त्रे पूर्वभागो 'वौ'-शब्दो निपातत्वाद् "वी गतिप्रजन०"-इत्यादिधातुजत्वाद्वा † गमनस्वभाव मादित्य मभिधत्ते। तदेतदभिप्रेत्य 'असौ वाव वौ'-इत्युक्तम्। वसन्ताद्याः 'ऋतवः' सङ्ख्यावशात् 'षट्'-इत्यभिधीयते। तन्मन्त्रपाठेन 'एत मेव' 'वौ'-शब्दाभिधेय मादित्यं षट्-शब्दाभिधेयेषु ऋतुष्वादधाति। न केवल माधानमात्रं किन्तु तेषु ऋतुषु 'प्रतिष्ठापयति' स्थैर्येणावस्थापयति। एवं सत्यसौ होता देवेभ्यो यादृश मेव प्रयोजनं करोति, तादृश मेव प्रतिष्ठारूपं प्रयोजनम् 'अस्मै' होत्रे, तद्द्वारेण यजमानाय देवाः कुर्वन्ति ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
षष्ठः खण्डः ॥ ६ ॥

---

॥ अथ सप्तमः खण्डः ॥

त्रयो वै वषट्कारा वज्रो धामच्छद्रिक्तः स य मेवोच्चैर्बलि वषट् करोति स वज्रस्तं तं प्रहरति

---

* "वौश्षडिति वषट्कारः"-इति आश्व० श्रौ० १.५.१५। "ब्रूहिप्रेष्यश्रौषड्वौषडावहाना मादेः"-इति (पा० ८.२.९१.) सूत्रिः।

† 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु'-इति धा० पा० अदा० प० ३८।

द्विषते भ्रातृव्याय वधं यो ऽस्य स्तृत्यस्तस्मै स्तर्तवै तस्मात्स भ्रातृव्यवता वषट् कृत्यो ऽथ यः समः सन्ततो ऽनिर्हाणर्च्चः स धामच्छत् तं तं प्रजाश्च पशवश्चानूपतिष्ठते तस्मात्स प्रजाकामेन पशुकामेन वषट्कृत्यो ऽथ येनैव षळ्वराप्नोति स रिक्तो रिणक्त्यात्मानं रिणक्ति यजमानं पापीयान्वषट्कर्त्ता भवति पापीयान्यस्मै वषट् करोति तस्मात्तस्याशां नेयात्किं स यजमानस्य पापभद्र माद्रियेतेति ह स्माह यो ऽस्य होता स्यादित्यत्रैवैनं यथा कामयेत तथा कुर्याद् यं कामयेत यथैवानीजानो ऽभूत्तथैवेजानः स्यादिति यथैवास्य ऋचं ब्रूयात्तथैवास्य वषट् कुर्यात्समेवैनं तत्करोति यं कामयेत पापीयान्त्स्यादित्युच्चैस्तरा मस्य ऋच मुक्त्वा शनैस्तरां वषट् कुर्यात्पापीयांस मेवैनं तत्करोति यं कामयेत श्रेयान्त्स्यादिति शनैस्तरा मस्य ऋच मुक्त्वोच्चैस्तरां वषट् कुर्याच्छ्रिय एवैनं तच्छ्रिया मादधाति सन्तत मृचा वषट् कृत्यं सन्तत्यै सन्धीयते प्रजया पशुभिर्य एवं वेद ॥ ७ ॥

अथ फलविशेषार्थं वषट्कारस्यावान्तरभेदानाह— "त्रयो वै वषट्कारा वज्रो धामच्छद्रिक्तः"–इति । 'वज्रः'–इति प्रथमस्य वषट्कारभेदस्य नामधेयम्, 'धामच्छत्'–इति द्वितीयस्य, 'रिक्तः'–इति तृतीयस्य ॥

तेषां मध्ये वज्रस्य स्वरूपं दर्शयति— "स य मेवोच्चैर्बलि वषट् करोति, स वज्रः इति। 'सः' होता य मेव मन्त्र मुच्चैर्यथा भवति तथा, बलि च यथा भवति तथा, वषट्करोति, 'सः' मन्त्ररूपो वषट्कारो 'वज्रः' इत्युच्यते। अत्रोच्चैः-शब्देन ध्वनेराधिक्य मुच्यते, 'बलि'-शब्देनाक्षरसारूप्यम्; तदुभययुक्तो वज्रः॥ तस्य प्रयोगं विधत्ते— "तं-तं प्रहरति, द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्य-स्तस्मै स्तर्तवै; तस्मात्स भ्रातृव्यवता वषट् कृत्यः"-इति। 'यः' द्वेषी यजमानस्य 'स्तृत्यः' हन्तव्यो भवति, 'तस्मै स्तर्तवै' तं हन्तुं 'द्विषते' द्वेषं कुर्वते 'भ्रातृव्याय' शत्रवे 'तं-तं वधं प्रहरति' वध-शब्दो हननसाधनं वज्रं ब्रूते। यदा-यदा अपेक्षितस्तदा-तदेति विवक्षया तं-त मिति वीप्सा। यस्मात् प्रहरणहेतुर्वज्रः, तस्मात् 'सः' वज्रो 'भ्रातृव्यवता' यजमानेन वषट्काररूपेण प्रयोक्तव्यः। होतृप्रयोग एव यजमानप्रयोगः; दक्षिणया होतुः क्रीतत्वात्॥

धामच्छदः स्वरूपं दर्शयति—"अथ यः समः सन्ततो ऽनिर्हाणर्चः, स धामच्छत्"-इति। 'यः' वषट्कारः 'समः' पूर्वोक्तबलित्वादिदोषरहितो यथाधीतस्तथैवोच्चारितः, 'सन्ततः' याज्यया सह विच्छेदरहितः, निःशेषेण हानं परित्यागो यस्य ऋचः, सा निर्हाणा; तथाविधा काचिदृग् याज्यारूपा यस्य वषट्कारस्य सोऽयं 'निर्हाणर्चः', याज्यापाठहीन इत्यर्थः; तद्वैलक्षण्यात् 'अनिर्हाणर्चः', सम्पूर्णयाज्यापाठोपेत इत्यर्थः। कीदृशो वषट्कारो धामच्छत्? इति, उच्यते—धाम यज्ञस्थानं, तत्र यथा रक्षांसि न प्रविशन्ति, तथा छादयति, स 'धामच्छत्'। तस्य प्रयोगं विधत्ते— "तं-तं प्रजाश्च पशवश्चानूपतिष्ठन्ते, तस्मात्स प्रजाकामेन पशुकामेन वषट् कृत्यः"-इति। प्रजाभिः पशुभिश्च अन्वयार्थं तं-त मिति

वीप्सा। 'तं' वषट्कारं प्रजाश्च पशवश्च सेवन्ते ; तस्मात्तादृक्कामेन धामच्छद्वषट्कारः प्रयोक्तव्यः ॥

रिक्तस्य स्वरूपं दर्शयति— "अथ येनैव षळवराप्नोति, स रिक्तः"-इति। षट्शब्दो वषट्कार मभिधत्ते ; भीमसेनो भीम इतिवदेकदेशेन व्यवहारात्। 'येनैव' उच्चारणेन 'षळवराप्नोति' वषट्कारावरोधं समृद्ध्यभावं प्राप्नोति ; नीचोच्चारणेन हि वषट्कारस्य समृद्ध्यभावः। 'सः' तथोच्चारितो वषट्कारो 'रिक्तः' -इत्युच्यते ; उच्चध्वनियोग्यस्य तदभावे शून्यप्रायत्वात्॥ त मेतं रिक्तं निन्दति— "रिणक्त्यात्मानं रिणक्ति यजमानं पापीयान् वषट्कर्त्ता भवति, पापीयान् यस्मै वषट् करोति ; तस्मात् तस्याशान्नेयात्"-इति। रिक्ताख्यो वषट्कारः प्रयुज्यमानः सन् होतुरात्मानं 'रिणक्ति' रिक्तीकरोति, समृद्धिहीनं दरिद्रं करोतीत्यर्थः। तथा यजमान मपि 'रिणक्ति' अतस्तेन वषट्कर्त्ता होता 'पापीयान् भवति' अत्यन्तनरकसाधनपापेन युक्तो भवति। 'यस्मै' यजमानाय वषट् करोति, सोऽपि पापीयान् भवति। तस्मात् कारणात् 'तस्य' रिक्तस्य वषट्कारस्य आशां 'नेयात्' न प्राप्नुयात्, इच्छा मपि न कुर्यात्, किमु तत्प्रयोग मित्यर्थः॥

प्रश्नोत्तराभ्यां वषट्कारस्येष्टानिष्टफलप्राप्तिसामर्थ्यं दर्शयति— "किं स यजमानस्य पापभद्र माद्रियेतेति ह स्माह योऽस्य होता स्यादित्यत्रैवैनं यथा कामयेत तथा कुर्यात्"-इति। तदेतद् वाक्यं "प्राणानां वा एतदुक्थम्"—इत्यस्मिन् खण्डे ( १२पृ० ) प्रउगविषयं यथा व्याख्यातम्, तथैवात्र वषट्कारविषयं व्याख्यातव्य मिति॥

अनिष्टफलसाधनत्वं दर्शयति— "यं कामयेत यथैवानीजानो

ऽभूत्, तथैवेजानः स्यादिति,—तथैवास्य ऋचं ब्रूयात् तथैवास्य वषट् कुर्यात्, सदृश मेवैनं तत् करोति"-इति। 'अनीजानः' अकृत-यज्ञः पुरुषः यथैव फलरहितो ऽभूत्, तथैवायम् 'ईजानः' कृत-यज्ञोऽपि फलरहितः स्यादिति 'यं' यजमानं होता कामयेत, 'अस्य' यजमानस्य येन स्वरेण याज्यां ब्रूयात्, तेनैव स्वरेण वषट्-कार मपि ब्रूयात्; तथा सति 'एनं' कृतयज्ञं यज्ञरहितेन 'सदृशं' फलरहितं करोति॥ अनिष्टफलान्तरसाधनत्वं दर्शयति—"यं कामयेत पापीयान्त्स्यादित्युच्चैस्तरा मस्य ऋच मुक्त्वा शनैस्तरां वषट् कुर्यात्पापीयांस मेवैनं तत्करोति"-इति। 'पापीयान्' दरिद्रो नरकयोग्यो वा यजमानः स्यादिति कामयमानो होता ऋच मतिशयेनोच्चैरुच्चार्य्य वषट्कार मतिशयेन नीचैः ब्रूयात्; तथा सति एनं यजमानं पापीयांस मेव करोति॥

अथेष्टफलसाधनत्वं दर्शयति— "यं कामयेत श्रेयान्त्स्यादिति, शनैस्तरा मस्य ऋच मुक्त्वोच्चैस्तरां वषट् कुर्याच्छ्रिय एवैनं तच्छ्रिया मादधाति"-इति। 'श्रेयान्' दारिद्र्यरहितः पापरहि-तश्च यजमानः स्यादिति कामयमानो होता 'ऋचं' याज्यां शनै-रुच्चार्य्य वषट्कार मतिशयेनोच्चैरुच्चारयेत्*; तच्च 'श्रियै' सम्पदर्थ मेव भवति। 'तत्' तेन प्रयोगेण 'एनं' यजमानं 'श्रियाम्' ऐहि-कामुष्मिकसम्पदि स्थापयति॥

याज्यावषट्कारयोर्नैरन्तर्यं विधत्ते— "सन्तत मृचा वषट् कृत्यं सन्तत्यै"-इति। 'ऋचा' याज्यया सह 'सन्तत' निरन्तरं यथा भवति तथा 'वषट् कृत्य' वषट्कार उच्चारणीयः। तच्च यजमानस्य श्रेयः सन्तत्यै सम्पद्यते॥

* "उच्चैस्तरां वा वषट्कारः" -इति पा० १. २. ३५।

वेदनं प्रशंसति— "सन्धीयते प्रजया पशुभिर्य एवं वेद"- इति । 'सन्धीयते' संयुज्यते ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
सप्तमः खण्डः ॥ ७ ॥

---

॥ अथ अष्टमः खण्डः ॥

यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट् करिष्यन्त्साक्षादेव तद्देवतां प्रीणाति प्रत्यक्षाद् देवतां यजति वज्रो वै वषट्कारः स एष प्रहृतोऽशान्तो दीदाय तस्य हैतस्य न सर्व इव शान्तिं वेद न प्रतिष्ठां तस्माद्धाप्येतर्हि भूयानिव मृत्युस्तस्य हैषैव शान्तिरेषा प्रतिष्ठा वागित्येव तस्माद्वषट्कृत्य वषट्कृत्य वागित्यनुमन्त्रयेत स एनं शान्तो न हिनस्ति वषट्कार मा मां प्रमृक्षो माहं त्वां प्रमृक्षं बृहता मन उपह्वये व्यानेन शरीरं प्रतिष्ठासि प्रतिष्ठां गच्छ प्रतिष्ठां मा गमयेति वषट्कार मनुमन्त्रयेत तदु ह स्माह दीर्घमेतत् सदप्रभ्वोजः सह ओज इत्येव वषट्कार मनुमन्त्रयेतौजश्च ह वै सहश्च वषट्कारस्य प्रिय-

तमे तन्वौ प्रियेणैवैनं तद्धाम्ना समर्द्धयति प्रियेण धाम्ना समृध्यते य एवं वेद वाक् च वै प्राणापानौ च वषट्कारस्त एते वषट्कृते वषट्कृते व्युत्क्रामन्ति तानुमन्त्रयेत वागोजः सह ओजो मयि प्राणापानावित्यात्मन्येव तद्धोता वाचं च प्राणापानौ च प्रतिष्ठापयति सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥ ८ ॥

अथ होतुर्वषट्कारकाले देवताध्यानं विधत्ते— "यस्यै देवतायै हविर्गृहीतं स्यात्, तां ध्यायेद्वषट् करिष्यन् * ; साक्षादेव तद्देवतां प्रीणाति, प्रत्यक्षाद् देवतां यजति"-इति। अध्वर्युः यां देवता मुद्दिश्य हविर्गृह्णाति, 'तां' देवता मयं होता 'वषट्-करिष्यन्' वषट्कारायोद्युक्तः सन् 'ध्यायेत्' मनसा देवतायाः शास्त्रीयां देवतामूर्त्तिं मादौ कृत्वा सम्यगनुसन्धाय पश्चाद्वषट् कुर्यादित्यर्थः। एवं सति 'साक्षादेव' प्रत्यक्षेणैव देवतां तर्पयति। न केवलं तृप्यर्थं मेव देवतायाः साक्षात्कारः, किन्तु 'प्रत्यक्षात्' 'प्रत्यक्षेणैव 'तद्देवतां यजति' यागकाले प्रत्यक्षेण पश्यतीत्यर्थः॥

ननु देवता चक्षुषा न दृश्यते, कथ मस्याः प्रत्यक्षत्व मिति चेत्, नायं दोषः ; मानसप्रत्यक्षस्य विवक्षितत्वात्। यथा पुरोवर्त्तिनी देवता चक्षुषा दृश्यते, तथैव चिन्त्यमानापि मनसा दृश्यत एव † ॥

* इद मेव श्रुतिवचनं यथावदुद्धृतं निरुक्ते ; ८. ३. ७. द्रष्टव्यम्।

† दुर्गाचार्यकृता निरुक्तवृत्तिरत्रावेक्षणीया। ए० सो० मु० २ भा० ४९९ पृ०।

होतुर्वषट्कारादूर्द्ध मनुमन्त्रणं विधत्ते— "वज्रो वै वषट्कारः, स एष प्रहृतो ऽशान्तो दीदाय, तस्य हैतस्य न सर्व इव शान्तिं वेद, न प्रतिष्ठां ; तस्माद्धाप्येतर्हि भूयानिव मृत्युस्तस्य हैषैव शान्तिरेषा प्रतिष्ठा वागित्येव ; तस्माद्वषट्कृत्य-वषट्कृत्य वागित्यनुमन्त्रयेत ; स एनं शान्तो न हिनस्ति"-इति । वषट्कारस्य वज्रत्व मसकृदुक्तम् 'स एषः' वषट्कारात्मको वज्रः परस्योपरि प्रहृतः सन् 'अशान्तः' उग्रः 'दीदाय' दीप्यते । 'तस्य' वज्रस्य 'शान्तिम्' उपशमप्रकारं 'सर्व इव' सर्वोऽपि पुरुषो न वेद । उपद्रवशान्तेरूर्द्ध वषट्कारस्योग्रत्वपरिहारेण क्वचिदवस्थानं 'प्रतिष्ठा', ता मपि सर्वो न वेद । 'तस्मात्' शान्तिप्रतिष्ठाविषयज्ञानाभावात् 'एतर्हि अपि' इदानी मपि लोके मृत्युः 'भूयानिव' बहुभूत एव प्रवर्त्तते । 'तस्य' तादृशवषट्कारवज्रस्यैवैवं वक्ष्यमाणा 'शान्तिः' शमनोपायः ; तथैषा वक्ष्यमाणैव 'प्रतिष्ठा' परोपद्रवरहितावस्थितिः । वागित्येवेत्यनेन साभिधीयते । उपरिष्टाद्वक्ष्यमाणस्य मन्त्रस्य * स्मरण मिदम् । वागोज इत्यादिको यो मन्त्रः, स एव शमनोपाय ; न त्वन्यः कश्चिदस्ति । तस्माद् 'वषट्कृत्य-वषट्कृत्य' यदा यदा वषट् करोति, तदा तदा वागिति मन्त्रेणानुमन्त्रयेत । 'सः' वज्रस्तावता शान्त एव, न हिनस्ति । अथ मेकः पक्षः ॥

पक्षान्तर मभिप्रेत्यान्येन मन्त्रेणानुमन्त्रणं विधत्ते— "वषट्कार मा मां प्रमृक्षो, माहं त्वां प्रमृक्षं, बृहता मन उपह्वये, व्यानेन शरीरं, प्रतिष्ठासि प्रतिष्ठां गच्छ, प्रतिष्ठां मा गमयेति वषट्कार मनुमन्त्रयेत"-इति । हे 'वषट्कार' वज्ररूप ! 'मां'

* अस्मिन्नेव खण्डे उपरिष्टाद् ( ३५ पृ० ७ पं० ) व्याख्यास्यमानस्येति भावः ।

यजमानं 'मा प्रमृत्तः' प्रमृष्टं विनष्टं मा कार्षीः ; अह मपि त्वां 'मा प्रमृत्तं' विनष्टं माकार्षम्। 'ह्वहता' प्रौढेन यत्नेन 'मनः' त्वदीयं 'उपह्वये' अनुजानामि। तथा 'व्यानेन' व्यानादिवायुना सह त्वदीयं शरीर मनुजानामि। यतस्त्वं सर्वस्य प्राणिसङ्घस्य 'प्रतिष्ठा' आश्रयोऽसि, तदर्थं त्व मपि 'प्रतिष्ठां' स्थैर्येणावस्थितिं गच्छ। ततो मा मपि 'प्रतिष्ठां' स्थैर्येणावस्थितिं प्रापय। 'इति' अनेन मन्त्रेणानुमन्त्रयेत ॥

त मिमं द्वितीयं पक्षं निन्दित्वा मन्त्रान्तरं दर्शयति— "तदु ह स्माह दीर्घ मेतत्सदप्रभ्वोजः सह ओजः"–इति। 'तदु ह' तत्रैव अनुमन्त्रणे ब्रह्मवादी कश्चिदाह स्म। कि माह ? इति, तदुच्यते— 'एतत्' पूर्वोक्तं, मन्त्रवाक्यं 'दीर्घं सत्' अपि वज्रं शमयितुम् 'अप्रभु' न क्षमम्। कोऽसौ क्षमः ? इति, स उच्यते— 'ओजः सहः ओजः'–इति पदत्रयात्मको मन्त्रः *। मन्त्रार्थं तु श्रुतिरेव व्याख्यास्यति ॥

तेन मन्त्रेणानुमन्त्रणं विधत्ते— "इत्येव वषट्कार मनुमन्त्रयेत"–इति। एवकारः पूर्वमन्त्रव्यावृत्त्यर्थः ॥ मन्त्रपदयोरर्थं दर्शयति—"ओजश्च ह वै सहश्च वषट्कारस्य प्रियतमे तन्वौ"–इति। स्पष्टोऽर्थः ॥ अनेन मन्त्रेणोग्रत्वशान्तिं दर्शयति— "प्रियेणैवैनं तद्धाम्ना समर्द्धयति"–इति। प्रियतमयोः शरीरयोर्नामग्रहणे सति वषट्कारस्योग्रत्वरूपः कोपो गच्छति, ततः 'एनं' वषट्कारम् 'प्रियेण धाम्ना समर्द्धयति' सर्वभूताना मनुपद्रवकारिणा प्रियेण

---

* एष एव प्रियशरीरद्वयाभ्या मुपेतो व्यवह्रियते ; तद्वत्वात्यनुपद मेव ( ३५ पृ० ४ पं० ) तथा च कल्पः— "वागोजः सह ओजो मयि प्राणापानाविति वषट्कार मुक्तोक्ताऽनुमन्त्रयते"–इति आश्व० श्रौ० १. ५. १८।

स्वरूपेण समृद्धं करोति। अत्र मन्त्रगतो द्वितीय ओजः-शब्दः आदरार्थ इत्यभिप्रायः ॥

वेदनं प्रशंसति— "प्रियेण धाम्ना समृध्यते य एवं वेद"—इति ॥

अथ प्रियशरीरद्वयवाचकाभ्यां पदाभ्यां सहित मादौ विहितं मन्त्र मेव सिद्धान्तयति— "वाक् च वै प्राणापानौ च वषट्-कारस्त एते वषट्कृते-वषट्कृते व्युत्क्रामन्ति;ताननुमन्त्रयेत— वागोजः सह ओजो मयि प्राणापानावित्यात्मन्येव तद्धोता वाचं च प्राणापानौ च प्रतिष्ठापयति, सर्वायुः; सर्वायुत्वाय"—इति। येयं वागस्ति, यौ च प्राणापानौ स्तः, तेऽत्र त्रयो * वषट्कारस्वरू-पम्। यदा यदा होता वषट् करोति, तदा तदा वषट्कार-रूपा होतुर्वाक्प्राणापानाः शरीरादुत्क्रामन्ति। अतस्तन्मा भूदिति तांस्त्रीन्वागोजइत्यादिना प्राणापानावित्यन्तेन मन्त्रेणानुमन्त्रयेत। मन्त्रस्याय मर्थः— 'ओजः'-'सहः'-इत्याभ्यां प्रियशरीराभ्या मुपेत ! हे वषट्कार ! त्वत्प्रसादान्मयि 'ओजः' बल मस्तु, तथा वाक्प्राणापानाः सुखेन तिष्ठन्तु। अनेन मन्त्रेण होता स्वात्मन्येव वाचं च प्राणापानौ च प्रतिष्ठापयति। तावता स्वयं 'सर्वायुः' शतसंवत्सरपरिमितेनायुषा युक्तो भवति। एतच्च यजमानस्य सर्वायुत्वाय सम्पद्यते। पूर्वत्र ( २२ पृ० ४ पं० ) 'वषट्कृत्य-वषट्कृत्य वागित्यनुमन्त्रयेत'-इति वषट्कारानुमन्त्रणयोरेक-कर्त्तृकत्व मुक्तम्, अत्र 'आत्मन्येव तद्धोता'-इतिब्राह्मणे होतृ-कर्त्तृकत्वं प्रतीयते; ततोऽनुमन्त्रणस्य यजमानकर्त्तृकत्व मन्यै-रुक्तं वाधित्वा होतृकर्त्तृत्व मेव द्रष्टव्यम् † ॥

---

* "ते त्रयी" घ।

† "इति होतुः"—इति आश्व० श्रौ० १.११.१६।

वेदनं प्रशंसति— "सर्व मायुरेति य एवं वेद"-इति ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
अष्टमः खण्डः ॥ ८ ॥

---

॥ अथ नवमः खण्डः ॥

यज्ञो वै देवेभ्य उदक्रामत्तं प्रैषैः प्रैष मैच्छन् यत्प्रैषैः प्रैष मैच्छंस्तत् प्रैषाणां प्रैषत्वं तं पुरोरुग्भिः प्रारोचयन्यत्पुरोरुग्भिः प्रारोचयंस्तत्पुरोरुचां पुरोरुक्त्वं तं वेद्यामन्वविन्दन् यद्वेद्या मन्वविन्दंस्तद्वेदेर्वेदित्वं तं वित्तं ग्रहैर्व्यगृह्णात यद्वित्तं ग्रहैर्व्यगृह्णात तद् ग्रहाणां ग्रहत्वं तं वित्त्वा निविद्भिर्न्यवेदयन् यद् वित्त्वा निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वं महद्वाव नष्टैष्यभ्यल्पं वेच्छति यतरो वाव तयोर्ज्याय इवाभीच्छति स एव तयोः साधीय इच्छति य उ एव प्रैषान्वर्षीयसो वर्षीयसो वेद स उ एव तान्त्साधीयो वेद नष्टैष्यं ह्येतद्यत्प्रैषास्तस्मात्प्रह्वस्तिष्ठन् प्रेष्यति ॥९॥

अथ प्रैषादीनां प्रशंसां विवक्षुरादौ प्रैषान् प्रशंसति— "यज्ञो वै देवेभ्य उदक्रामत्; तं प्रैषैः प्रैष मैच्छन्; यत् प्रैषैः प्रैष मैच्छं-

स्तत् प्रैषाणां प्रैषत्वम्''-इति। ज्योतिष्टोमाख्यो 'यज्ञः' यदा केनचिन्निमित्तेन देवेभ्य उदक्रामत्, तदा 'तम्' उत्क्रान्तं यज्ञं 'प्रैषैः' ''होता यक्षदग्निं समिधा''-इत्येवमाद्यैः (तै० ब्रा० ३.६.२.१-१२.) प्रैषमन्त्रैस्तस्य यज्ञस्य 'प्रैषम्' आह्वानम् 'ऐच्छन्'; यस्मादेवं तस्मात् 'प्रैषम्' आह्वानं कुर्वन्त्येभिरिति व्युत्पत्त्या मन्त्राणां प्रैषनाम सम्पन्नम् * ॥

अथ पुरोरुचः प्रशंसति— ''तं पुरोरुग्भिः प्रारोचयन्; यत् पुरोरुग्भिः प्रारोचयंस्तत् पुरोरुचां पुरोरुक्त्वम्''-इति। ''वायुरग्रेगाः''-इत्याद्याः सप्त पुरोरुचः (वा०सं०१७.३१-३७.); प्रउगतृचानां सप्तानां प्ररोचनहेतुत्वात्। तथाविधाभिः पुरोरुग्भिः तं पूर्व माहुतं यज्ञं देवाः 'प्रारोचयन्' तस्य यज्ञस्य रुचि मुत्पादितवन्तः। अतः पुरोरोचनहेतुत्वात् पुरोरुगिति नाम सम्पन्नम् † ॥

वेदेः प्रशंसा माह— ''तं वेद्या मन्वविन्दन्; यद्वेद्या मन्वविन्दंस्तद्वेदेर्वेदित्वम्''-इति। 'तं' प्ररोचितं यज्ञं सौमिक्यां 'वेद्याम्' 'अन्वविन्दन्' अनुकूलत्वेनोपलब्धवन्तः। अतो वेदनस्य लाभस्य स्थानत्वाद् वेदिरिति नाम सम्पन्नम् ‡ ॥

---

* ''एकादश प्रयाजाः। तेषां प्रैषाः। ०——०। अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति; प्रैषैर्होतारम्। होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः''-इति आश्व० श्रौ० ३.२.१-५।

† ''वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत्। वायवा याहि दर्शतेति सप्त तृचाः''-इति आश्व०श्रौ०५.१०.४,५। तृचास्ते पु० ४-६पृ०द्र०।

‡ 'विद्लृ लाभे'-इत्यस्य तुदादेः (१५२) 'इपिषिरुहिवतिविदिच्छिदिकीर्तिभ्यश्च'-इति (उणा० ४.११८.) रूप मिति भावः। ''अपरेणाहवनीयं वेदिं खनति''-इत्यारभ्य ''वेदिकरणं यथोक्तम्''-इति यावत् कात्या० श्रौ० २.६. १-३० द्र०।

ग्रहप्रशंसा माह— "तं वित्तं ग्रहैर्व्यगृह्णत ; यद्वित्तं ग्रहैर्व्यगृह्णत, तद्ग्रहाणां ग्रहत्वम्"–इति। 'वित्तं' लब्धं 'तं' यज्ञं 'ग्रहैः' उपांश्वन्तर्यामादिभिः 'व्यगृह्णत' विशेषेण स्वीकृतवन्तः। तस्मात् ग्रहणस्य स्वीकारस्य हेतुत्वात् ग्रहनाम सम्पन्नम् * ॥

निविदां प्रशंसा माह— "तं वित्त्वा निविद्भिर्न्यवेदयन् ; यद्वित्त्वा निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वम्"–इति। 'तं' यज्ञं 'वित्त्वा' लब्ध्वा ते देवाः परेभ्यो देवेभ्यो 'निविद्भिः' पूर्वोक्तद्वादशपदादिरूपाभिः † 'न्यवेदयन्' कथितवन्तः। तस्मात् निवेदनस्य परबोधनार्थकथनस्य हेतुत्वात् निविन्नाम सम्पन्नम् ‡ ॥

अथ प्रैषकर्त्तुः प्रह्वत्वगुणविधानार्थं प्रस्तौति— "महद्वाव नष्टैष्यभ्यल्पं वेच्छति, यतरो वाव तयोर्ज्याय इवाभीच्छति, स एव तयोः साधीय इच्छति"–इति। नष्टं वस्तु प्रयत्नेन तत्र तत्रान्विच्छतीति 'नष्टैषी', तादृशः। पुरुषो द्विविधः ;—तत्र कश्चिद् 'महद्वाव' नष्टाद्वस्तुनोऽधिक मेव अभीच्छति, नष्टादल्पं वा अन्यः कश्चिदिच्छति ; तयोर्मध्ये 'यतरो वाव' य एव पुरुषो 'ज्याय इव' महदेवेच्छति, 'स एव' पुरुषः 'तयोः' मध्ये 'साधीयः' अत्यन्तं साधु वस्तु इच्छति ; अल्पं कामयमानस्तु न तथेत्यर्थः। अस्त्वेवं लौकिक न्यायः, किं प्रकृते ? इत्याशङ्क्याह— "य उ एव प्रैषान् वर्षीयसो-वर्षीयसो वेद, स उ एव तान् साधीयो वेद ; नष्टैष्यं ह्येतद्यत् प्रैषाः"–इति। 'य उ एव' वस्तु प्रैषमन्त्रात् 'वर्षीयसः-वर्षीयसः अतिप्रवृद्धान् वेद ; सर्वेषु प्रैषमन्त्रेषु प्रवृद्धत्वार्थं वीप्सा प्रयुक्ता।

---

* पु० २ पृ० द्र० ।  † १भा० ४३८ पृ० द्र० ।

‡ १भा० ४३५पृ० '†' द्रष्टव्यम्। 'पच्छो निविदः शंसन्ति'–इति चैहैवैकादशखण्डे वक्ष्यति। 'पदैरप्यायति निविदः'–इति हि बा० सं० १९, २५।

प्रैषमन्त्राः कस्मात् प्रह्वाः ? इति चेत्, पुरोनुवाक्यानां सन्निहितत्वात् ताभ्योऽधिका 'दीर्घाः' इत्यवगन्तव्यम् । 'स उ एव' दीर्घत्वाभिज्ञ एव 'तान्' प्रैषमन्त्रान् 'साधीयो वेद' अतिशयेन सम्यक् वेद। ननु लौकिकन्यायोदाहरणे नष्टवस्तुनोऽन्वेषण मुदाहृतम्, इह तु प्रैषमन्त्राणा मभिव्रडिकत्वोत्यतो लौकिकेनासङ्गत मिति चेत्, सङ्गत मेवैतत् ;—'हि' यस्माद्ये प्रैषाः सन्ति, ते 'नष्टैष्यन्' नष्टस्य यज्ञस्यान्वेषणहेतवः ॥

पुरोनुवाक्याभ्यो दीर्घत्वेन प्रैषान् प्रशस्य तदुच्चारणकाले प्रह्वत्वं विधत्ते— "तस्मात् प्रह्वस्तिष्ठन् प्रेष्यति"–इति । यस्मादतिशयेन ह्वाः प्रैषाः 'तस्मात्' तत्पाठकाले मैत्रावरुणः 'प्रह्वः' विनयेनैव किञ्चिदवनतशिरास्तिष्ठन्नुपविष्टो मन्त्रान् पठेत् । यथा लोके पितृगुर्वादीन् दृष्ट्वा प्रह्वस्तिष्ठति, तद्वत्,— यथा वा नष्टवस्त्वन्विच्छन् प्रह्वत्वादिना गुप्तश्चरति ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
नवमः खण्डः ॥ ९ ॥

---

॥ अथ दशमः खण्डः ॥

**गर्भा वा एत उक्थानां यन्निविदस्तद्यत्पुरस्तादुक्थानां प्रातःसवने धीयन्ते तस्मात्पराञ्चो गर्भा**

धीयन्ते पराञ्चः सम्भवन्ति यन्मध्यतो मध्यन्दिने धीयन्ते तस्मान्मध्ये गर्भा धृता यदन्ततस्तृतीयसवने धीयन्ते तस्मादमुतोऽर्वाञ्चो गर्भाः प्रजायन्ते प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद पेशा वा एत उक्थानां यन्निविदस्तद्यत्पुरस्तादुक्थानां प्रातःसवने धीयन्ते यथैव प्रवयणतः पेशः कुर्यात्तादृक्तद्यन्मध्यतो मध्यन्दिने धीयन्ते यथैव मध्यतः पेशः कुर्यात्तादृक्तद्यदन्ततस्तृतीयसवने धीयन्ते यथैवाव प्रच्छनतः पेशः कुर्यात्तादृक्तत्सर्वतो यज्ञस्य पेशसा शोभते य एवं वेद ॥ १० ॥

अथ निविदां सवनभेदेन स्थानभेदं विवक्षुः प्रातःसवने स्थानविशेषं विधत्ते— "गर्भा वा एत उक्थानां यन्निविदस्तद् यत् पुरस्तादुक्थानां प्रातःसवने धीयन्ते, तस्मात् पराञ्चो गर्भा धीयन्ते, पराञ्चः सम्भवन्ति"–इति। "अग्निर्देवेद्धः"–इत्यादयो निविदः सन्ति *। एते निविद्विशेषा उक्थानां शस्त्राणां 'गर्भा वै' गर्भस्थानीया एव। तथा सति प्रातःसवनप्रयोगे शस्त्राणां पुरस्तान्निविदो 'धीयन्ते' स्थाप्यन्ते, स्थापयेयुरित्यर्थः। यस्मात् गर्भस्थानीयानां पुरःस्थापनम्, तस्माल्लोकेऽपि गर्भाः 'पराञ्चः' स्त्रीशरीरे परमुत्कृष्टं पुरोभागमञ्चन्तो गच्छन्तो 'धीयन्ते', धार्यन्ते प्रसवकालेऽपि 'पराञ्चः' पुरोभागं गच्छन्त उत्पद्यन्ते ॥

* १ भा० ४३५ पृ० '†', ४३८ पृ० १७ पं० द्र०।

माध्यन्दिनसवने स्थानविशेषं विधत्ते— "यन्मध्यतो मध्यन्दिने धीयन्ते, तस्मान्मध्ये गर्भा धृताः"-इति । यस्माच्छस्त्राणां मध्ये निविदः प्रयुक्ताः, तस्मात् गर्भा उदरमध्ये धीयन्ते ॥

तृतीयसवने स्थानविशेषं विधत्ते— "यदन्ततस्तृतीयसवने धीयन्ते, तस्मादमुतोऽर्वाञ्चो गर्भाः प्रजायन्ते प्रजात्यै"-इति । 'अन्ततः' शस्त्रस्य अन्तिमे देशे एकां ऋचं शिष्ट्वा निविदः पठितव्याः । यस्मादेता अन्तिमदेशभागिन्यः, तस्माल्लोकेऽपि गर्भा 'अमुतः' निवासस्थानान्मातुरुदरमध्यात् 'अर्वाञ्चः' अधोभागगताः प्रजायन्ते ; तच्च यजमानस्य प्रजननार्थं भवति ॥

वेदनं प्रशंसति— "प्रजायते प्रजया पशुभिर्य एवं वेद"-इति ॥

सवनत्रये विहितं निविदां स्थानत्रयं प्रशंसति— "पेशा वा एत उक्थानां यन्निविदस् ; तद्यत् पुरस्तादुक्थानां प्रातःसवने धीयन्ते, यथैव प्रवयणतः पेशः कुर्यात् तादृक्तद् ; यन्मध्यतो मध्यन्दिने धीयन्ते, यथैव मध्यतः पेशः कुर्यात् तादृक्तद् ; यदन्ततस्तृतीयसवने धीयन्ते, यथैवाव प्रज्जनतः पेशः कुर्यात् तादृक्तत्"-इति । 'पेशाः' अलङ्काराः । 'वेञ् तन्तुसन्ताने"-इति ( भ्वा० १००६ ) धातोः वयशब्दोत्पत्तिः* । कुविन्दानां† यत्प्रारम्भे वस्त्रवयनम्, तत् 'प्रवयणम्' । लोके यथैव वाससां‡ 'प्रवयणतः' वयनप्रारम्भे 'पेशः' अलङ्कारं कुर्यात् ; वर्णान्तरोपितैस्तन्तुभिरलङ्कारः ; तथैव प्रातःसवने शस्त्राणां पुरतो निवित्पठनं भवति । तच्च § वस्त्रस्थानीयाना मुक्थानां प्रथमभागे अलङ्काराय सम्पद्यते ‖ ;— शस्त्रमध्ये तत्पठनं, वस्त्रमध्ये वर्णान्तरेणालङ्कारसमम् । एवं 'प्रज्जनः'

---

* 'वयशब्दनिष्पत्तिः' घ। † 'कुविन्दस्य' ग। ‡ 'वाससः' ग।
§ 'तेन' घ। ‖ 'अलङ्काराः सम्पद्यन्ते' घ।

वस्त्रस्यान्तभागः ; तत्र यथा वर्णान्तरेणालङ्कारः, तादृगुक्थाना मन्ते निवित्पठनम् ॥

वेदनं प्रशंसति— "सर्वतो यज्ञस्य पेशसा शोभते य एवं वेद"-इति ॥ १० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये दशमः खण्डः ॥ १० ॥

---

॥ अथ एकादशः खण्डः ॥

सौर्या वा एता देवता यन्निविदस्तद्यत्पुरस्तादुक्थानां प्रातःसवने धीयन्ते मध्यतो मध्यन्दिने ऽन्ततस्तृतीयसवन आदित्यस्यैव तद् व्रत मनु पर्यावर्त्तन्ते पच्छो वै देवा यज्ञं समभरंस्तस्मात्पच्छो निविदः शस्यन्ते यद्वै तद् देवा यज्ञं समभरंस्तस्मादश्वः समभवत्तस्मादाहुरश्वं निविदां शंस्त्रे दद्यादिति तद् खलु वर मेव ददति न निविदः पद मतीयाद्यन्निविदः पद मतीयाद्यज्ञस्य तच्छिद्रं कुर्याद्यज्ञस्य वै छिद्रं स्रवद्यजमानो ऽनु पापीयान् भवति तस्मान्न निविदः पद मतीयान्न निविदः पदे विपरिहरेद्यन्निविदः पदे

विपरिहरेन्मोहयेद्यज्ञं मुग्धो यजमानः स्यात्तस्मान्न निविदः पदे विपरिहरेन्न निविदः पदे समस्येद्य-न्निविदः पदे समस्येद्यज्ञस्य तदायुः संहरेत्प्रमायुको यजमानः स्यात्तस्मान्न निविदः पदे समस्येत् प्रेदं ब्रह्म प्रेदं क्षत्र मित्येते एव समस्येद् ब्रह्मक्षत्रयोः संश्रित्यै तस्माद् ब्रह्म च क्षत्रं च संश्रिते न तृचं न चतुर्ऋच मति मन्येत निविद्धान मेकैकं वै निविदः पद मृचं सूक्तं प्रति तस्मान्न तृचं न चतुर्ऋच मति मन्येत निविद्धानं निविदा ह्येव स्तोत्र मतिशस्तं भवत्येकां परिशिष्य तृतीयसवने निविदं दध्याद्यद् द्वे परि-शिष्य दध्यात्प्रजननं तदुपहन्यादूर्भैस्तत्प्रजा व्यर्दयेे-त्तस्मादेका मेव परिशिष्य तृतीयसवने निविदं दध्यान्न सूक्तेन निविद मति पद्येत येन सूक्तेन निविद मति पद्येत न तत्पुनरुपनिवर्तेत वास्तुह मेव तदन्य-त्तद्दैवतं तच्छन्दसं सूक्त माहृत्य तस्मिन्निविदं दध्या-न्मा प्र गाम पथो वय मिति पुरस्तात्सूक्तस्य शंसति पथो वा एष प्रैति यो यज्ञे मुह्यति मा यज्ञादिन्द्र सोमिन इति यज्ञादेव तन्न प्रच्यवते मा तस्थुर्नो अरातय इत्यरातीयत एव तदपहन्ति यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः त माहुतं नशीमहीति प्रजा

वै तन्तुः प्रजा मेवास्मा एतत्सन्तनोति मनोऽन्वाहुवामहे नाराशंसेन सोमेनेति मनसा वै यज्ञस्तायते मनसा क्रियते सैव तत्र प्रायश्चित्तिः प्रायश्चित्तिः ॥११॥

इत्यैतरेयब्राह्मणे तृतीयपञ्चिकायां प्रथमोध्यायः ॥१॥

अथ निविद्विषये बहु वक्तव्यं विवक्षुरादौ सूर्यसादृश्येन निविदः प्रशंसति— "सौर्या वा एता देवता यन्निविदस्तद्यत् पुरस्तादुक्थानां प्रातःसवने धीयन्ते, मध्यतो मध्यन्दिनेऽन्ततस्तृतीयसवन आदित्यस्यैव तद् व्रत मनु पर्यावर्त्तन्ते"–इति। या निविदः सन्ति, ता 'एताः' सूर्यसम्बन्धिन्य एव। यथा सूर्यः पुरस्तादुदेत्यथ मध्ये स्थित्वा पश्चादन्तेऽस्त मेति, एवं निविदोऽपि पुरस्तान्मध्येऽन्ते च स्थाप्यन्ते; तस्मादादित्यस्यैव 'व्रतम्' आचरण मनु निविदः पर्यावर्त्तन्ते ॥

तासां निविदां द्वादशपदरूपाणा मेकैकस्मिन् पादेऽवसानं विधत्ते— "पच्छो वै देवा यज्ञं समभरंस्तस्मात् पच्छो निविदः शस्यन्ते"–इति। देवाः पुरा यज्ञं 'पच्छः' पादशः 'समभरत्' एकैकभागक्रमेण सम्पादितवन्त इत्यर्थः। तस्मादेता निविदोऽपि पादशः शंसनीयाः * ॥

निविदां शंसकाय होत्रे ऽश्वदानं विधत्ते— "यद्वै तद्देवा यज्ञं समभरंस्तस्मादश्वः समभवत्; तस्मादश्वं निविदां शंस्ते दद्यादिति,— तदु खलु वर मेव ददति"–इति। 'यद्वै' यस्मिन्नेव देशे 'तत्' तदा देवा यज्ञं सम्पादितवन्तः, तस्माद् देशात्

* 'निविदोऽपि 'पच्छः' एकैकस्मिन् पादे ऽवसाय शंसनीयाः' ध।

अश्व उत्पन्नः । अत एवाभिज्ञा आहुः । किमाहुरिति, तदुच्यते—निविदां शंसकायाश्वं दद्यादिति, 'तद् खलु' तेनैवाश्वदानेन 'वर मेव' श्रेष्ठ मेव वस्तु 'ददति' प्रयच्छन्ति ॥

द्वादशसु निवित्पदेषु कस्यापि पदस्यातिक्रमं निषेधति—"न निविदः पद मतीयात्"-इति । एक मपि पदं न त्यजेदित्यर्थः ॥

विपक्षबाधपूर्वकं पूर्वपक्षं निगमयति—"यन्निविदः पद मतीयाद्, यज्ञस्य तच्छिद्रं कुर्याद् ; यज्ञस्य वै च्छिद्रं स्रवद्यजमानो नु पापीयान् भवति ; तस्मान्न निविदः पद मतीयात्"-इति । पदस्य परित्यागे यज्ञस्य छिद्रं भवति । तच्च स्रवति । ततो यजमानो निन्द्यो * भवति । तस्मान्निवित्पदं न परित्यजेत् ॥

पदानां विपर्यासं † निषेधति— "न निविदः पदे विपरिहरेद् ; यन्निविदः पदे विपरिहरेन्मोहयेद्यज्ञं, मुग्धो यजमानः स्यात् ; तस्मान्न निविदः पदे विपरिहरेद्"-इति ॥ [विपरिहारो विपर्यासः‡] निविदः सम्बधि यत् पदद्वयम्, तत् 'न विपरिहरेत्' विपरीततया न पठेत् । तथा सत्ययं होता 'यज्ञं मोहयेत्' यज्ञे भ्रान्तिं जनयेत् । ततो यजमानोऽपि 'मुग्धः' भ्रान्तः स्यात् । तस्माद्विपर्यासो न कर्त्तव्यः ॥

निवित्पदसंश्लेषणं § निषेधति—"न निविदः पदे समस्येद्, यन्निविदः पदे समस्येद्यज्ञस्य तदायुः संहरेत्, – प्रमायुको यजमानः स्यात् ; तस्मान्न निविदः पदे समस्येत्"-इति । पदयोः संश्लेषणे यज्ञस्यायुः संहृतं भवेत्, यज्ञो विनश्येदित्यर्थः । ततो यजमानोऽपि म्रियेत । तस्मात्पदद्वयं न संश्लेषयेत् ॥

---

* 'दरिद्रो' घ ।

† 'व्युत्क्रमन्यासं' घ ।

‡ घ-पुस्तके लेते पदे न विद्येते ।

§ 'पदयोः परस्परं श्लेषं' घ ।

अनेन निषेधेन सर्वेषां पदानां परस्परविश्लेषणप्राप्तौ मध्यमयोर्द्वयोः पदयोः संश्लेषणं विधत्ते— "प्रेदं ब्रह्म, प्रेदं क्षत्रमित्येते एव समस्येद्, ब्रह्मक्षत्रयोः संश्रित्यै ; तस्माद् ब्रह्म च क्षत्रं च संश्रिते"—इति। निवित्पदानां मध्ये 'प्रेदं ब्रह्म'-इत्येकं पदम्, 'प्रेदं क्षत्रम्'-इत्यपरं पदम् ; ते उभे एव संश्लेषयेत्। एवकार इतरसंश्लेषव्यावृत्त्यर्थः। तदेतन्मेलनं ब्राह्मणक्षत्रियजात्योः परस्पराश्रयणाय भवति। तस्मादेव लोके जातिद्वयं परस्पराश्रितं तिष्ठति ;—ब्राह्मणो धर्मं प्रवर्त्तयति, क्षत्रियस्तस्य रक्षां करोति ॥

निवित्पदानां प्रक्षेपस्याश्रयभूते सूक्ते कञ्चिन्नियमं विधत्ते—"न त्र्यचं न चतुर्ऋचमति मन्येत निविद्धानमेकैकं वै निविदः पदमृचं सूक्तं प्रति ; तस्मान्न त्र्यचं न चतुर्ऋचमति मन्येत, निविद्धानं निविदा ह्येव स्तोत्रमतिशस्तं भवति"—इति। तिस्र ऋचो यस्मिन् सूक्ते तत् 'त्र्यचम्' * ; चतस्र ऋचो यस्मिन् सूक्ते तच्चतुर्ऋचम्। तादृशमुभयविधं सूक्तमतिक्रम्य 'निविद्धानं' निविदां पदानां [धानं†] प्रक्षेपं 'न मन्येत' न चिन्तयेत्। एतदुक्तं भवति—त्रिचतुर्मात्रर्चात् सूक्तादर्वाचीने सूक्ते निविदो न दध्यात्, किन्तु भूयस्येव दध्यादिति। 'निविदः' सम्बन्धि यत् 'एकैकम्' एव पदं तदेव प्रत्यृचं ‡ प्रतिसूक्तं च समर्थं भवति। यस्मादीदृशं सामर्थ्यं तस्मादित्युक्तार्थोपसंहारः। अधिके सूक्ते निवित्पदेषु प्रक्षिप्तेषु निविदैव स्तोत्रातिशंसनं कृतं भवति, न तु सूक्तम् ऋचं वापीत्येतदित्यर्थः § ॥

---

* ३ पृ० '†' द्रष्टव्यम्।

† एतदधिकं घ-पुस्तके।

‡ 'प्रतित्र्यचं' घ।

§ 'त्र्यचं वापिचेत इत्यर्थः' घ।

तृतीयसवने विशेषं विधत्ते— "एकां परिशिष्य तृतीयसवने निविदं दध्यात्"–इति ॥ सूक्ते येय ऋगन्त्या, ता मवस्थाप्य ततः पूर्व मेव तृतीयसवने निविदः प्रक्षिपेत् ॥

विपक्षबाधपुरःसरं स्वपक्ष मुपसंहरति— "यद् द्वे परिशिष्य दध्यात्प्रजननं तदुपहन्यान्नर्भैस्तत् प्रजा व्यर्द्धयेत् ; तस्मादेका मेव परिशिष्य तृतीयसवने निविदं दध्यात्"–इति । यदि 'द्वे' ऋचौ परिशिष्य ततः पुरा निविदं दध्यात्, तदानीं प्रजोत्पादनं * विनाशयेत् ;—पुत्रादयः 'प्रजाः गर्भैः व्यर्द्धयेत्' वियुक्तान् कुर्यात्। प्रजनन मुपहन्यादित्यनेन यजमानस्य प्रजोत्पादनराहित्य मुक्तम्, प्रजा व्यर्द्धयेदित्यनेन पूर्व मुत्पन्नानां पुत्रादीना मपत्यराहित्यम् । तस्मादित्युपसंहारः ॥

अथ निविद्धानीयेन सूक्तेन निविदतिक्रमं निषेधति— "न सूक्तेन निविद मति पद्येत"–इति । यत् सूक्तं निविद्धानार्हं निविद मतिक्रामति, तेन सूक्तेन 'न पद्येत' निवित्प्रक्षेपं परित्यज्य केवलं तत् सूक्तं न पठेत् इत्यर्थः ॥

प्रमादान्निवित्प्रक्षेपविस्मृतौ सत्यां पुनस्तत्सूक्ते निविदं प्रक्षिप्य पाठो भ्रान्त्या प्रसक्तः, तं निषेधति— "येन सूक्तेन निविद मति पद्येत, न तत् पुनरुपनिवर्त्तेत, वास्तुह मेव तत्"–इति । निविद मतिक्रम्य परित्यज्य निवित्प्रक्षेपयोग्येन 'येन सूक्तेन' 'पद्येत' अनुष्ठानं प्राप्नुयात्, 'तत्' विस्मृतनिवित्कं सूक्तं 'पुनर्नोपनिवर्त्तेत' भूयो निविदं प्रक्षिप्य न पठेत् । तत्र हेतुरुच्यते—'तत्' विस्मृतनिवित्कं सूक्तं 'वास्तुह मेव' वास्तुशब्देन निवित्स्थान मुच्यते ; तस्य स्थानस्य घातकं तत् सूक्तम्, ततः पुनःपाठस्य न योग्यत्वम् ॥

* 'प्रजोत्पादनसाधनं' ग।

  

का तर्हि तदानीं निविदो गतिरित्याशङ्क्याह –"अन्यत्तद्दैवतं तच्छन्दसं सूक्त माहृत्य तस्मिन्निविदं दध्यात्"-इति। पूर्वस्य निविद्धानीयस्य * सूक्तस्य देवता यादृशी, छन्दश्च यादृशं, तथाविधाभ्यां देवताच्छन्दोभ्यां युक्त मन्यत् [किञ्चित्†] सूक्त माहृत्य तस्मिन् सूक्ते निविदं प्रक्षिपेत् ॥

तत्र किञ्चिद्विशेषं विधत्ते— "मा प्र गाम पथो वय मिति पुरस्तात् सूक्तस्य शंसति"-इति। यस्मिन्नाहृते नूतने सूक्ते निवित् प्रक्षिप्यते, तस्य सूक्तस्य 'पुरस्तात्' तत्पाठात् पूर्वं "मा प्र गाम"-इति (सं० १०.५७.१.) सूक्तं शंसेत्। 'वयं' होतारः 'पथः' शंसनमार्गात् भ्रष्टाः सन्तो 'मा प्र गाम' प्रभ्रंशं मा प्राप्नवाम इति तस्य पादस्यार्थः। मार्गभ्रंशदोषोऽस्माकं मा भूदित्यभिप्रायः ॥

द्वितीयपादस्य तात्पर्यं दर्शयति— "पथो वा एष प्रैति, यो यज्ञे मुह्यति, मा यज्ञादिन्द्र सोमिन इति; यज्ञादेव तन्न प्रच्यवते"-इति। "मा यज्ञादिन्द्र सोमिनः"-इति द्वितीयः पादः। तस्याय मर्थः— हे इन्द्र! 'सोमिनः' सोमयुक्ताद्यज्ञात् मा प्र गामेत्यनुवर्त्तते,—प्रभ्रंशं मा प्राप्नवामेति। 'यः' पुमान् यज्ञे 'मुह्यति' भ्रान्तिं प्राप्नोति, एष पुमान् अवश्यं 'पथः प्रैत्येव' मार्गात् प्रभ्रश्यत्येव। अतो "मा प्र गाम पथः"-इत्येतावता न पर्य्याप्तं किन्तु मार्गभ्रंशपरिहारदार्ढ्यार्थं मा यज्ञादित्यपि पठनीयम्। तत्पादपाठेनायं यज्ञान्न प्रच्यवते। अथवा 'पथो वा एषः'-इत्यर्थवादः पूर्वपादशेषत्वेन व्याख्येयः ॥

तृतीयपाद मनूद्य व्याचष्टे— "मां तस्थुर्नो अरातय इत्यरातीयत एव तदपहन्ति"-इति। 'नः' अस्माकम् 'अन्तर्' मध्ये

* 'निविद्धानयोग्यस्य' घ।

† नैतत्पदं घ-पुस्तके।

'अरातयः' शत्रवो 'मा स्थुः' मा तिष्ठन्तु । तत्पाठपाठेन 'अरातीयतः' शत्रुत्व मिच्छतः एव पुरुषान् अपहन्ति ॥

तस्मिन्* सूक्ते द्वितीया मृच मनुवदति— "यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः, त माहुतं नशीमहीति"–इति । 'यः' पुत्रो 'यज्ञस्य प्रसाधनः' कुलपारम्पर्येण यज्ञस्य प्रकर्षेण साधकः, अत एव 'तन्तुर्देवेष्वाततः' दीर्घतन्तुरिव देवेषु विस्तारितः ; 'तं' तथाविधं पुत्रम् 'आहुतम्' आह्वानेन सम्पादितदेवतं 'नशीमहि' अत्र निषेधार्थः कश्चिन्नकारोऽध्याहर्त्तव्यः, नैव नाशयाम इत्यर्थः । अस्माभिः प्रमादे कृतेऽप्यस्मत्पुत्रस्य देवेषु प्रचारात्स प्रमादः समाधीयत इत्यर्थः ॥ अत्र तन्तुशब्दस्य तात्पर्यं दर्शयति— "प्रजा वै तन्तुः प्रजा मेवास्मा एतत् सन्तनोति"–इति । कुलाचाराद्यविच्छेदहेतुत्वात् पुत्रादिरूपा † प्रजा तन्तुशब्देनोच्यते ‡ । तथा सत्येतत्पाठेन 'प्रजा मेव' पुत्रादिरूपा मेव 'अस्मै' यजमानाय 'सन्तनोति' अविच्छिन्नां करोति ॥

तृतीयस्या ऋचः पूर्वार्द्ध मनुवदति— "मनो न्वाहुवामहे नाराशंसेन सोमेनेति"–इति । आप्यायिताश्चमसा नाराशंसाः । तत्सम्बन्धिना सोमेन 'नु' क्षिप्र मेव 'मनः' अस्मदीयम् 'आहुवामहे' आह्वयामि । अस्यार्द्धस्य तात्पर्यं दर्शयति— "मनसा वै यज्ञस्तायते मनसा क्रियते"–इति । सर्वो यज्ञो मनसैव 'तायते' विस्तार्यते ; मनःपूर्वकत्वादिन्द्रियान्तरप्रवृत्तेः । तस्मिंश्च प्रसारिते यज्ञे यो यः कर्त्तव्यविशेषोऽस्ति §, स सर्वोऽपि 'मनसा क्रियते' तस्मान्मनस आह्वानं युक्तम् ॥

---

* 'एतस्मिन्' घ। † 'पुत्ररूपा' ग।

‡ 'तन्तुशब्देन विवक्षिता' घ। § 'तस्मिंश्च प्रसारिते यो यज्ञः कर्त्तव्यविशेषोऽस्ति' घ।

अस्य सूक्तस्य प्रथमतः पाठे प्रयोजनं दर्शयति— "सैव तत्र प्रायश्चित्तिः प्रायश्चित्तिः"–इति । "मा प्र गाम"–इत्यादिसूक्तस्योक्तिरेव निविदतिक्रमरूपस्य* प्रत्यवायस्य प्रायश्चित्तिः। अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ११ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां प्रथमाध्याये
एकादशः खण्डः ॥ ११ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायाः प्रथमोऽध्यायः ॥

---

* 'निविद्विस्मृतिरूपस्य' घ ।

# ॥ अथ द्वितीयाध्यायः ॥

( तत्र )

## ॥ द्वितीयः खण्डः ॥



॥ ओ३म् ॥ देवविशः कल्पयितव्या इत्याहुश्छन्दश्छन्दसि प्रतिष्ठाप्य मिति शोंसावो मित्याह्वयते प्रातस्सवने चाक्षरेण शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण तदष्टाक्षरं सम्पद्यते ऽष्टाक्षरा वै गायत्री गायत्री मेव तत्पुरस्तात्प्रातस्सवने ऽचीक्लृपता मुक्थं वाचीत्याह शस्त्वा चतुरक्षरं मो मुक्थशा इत्यध्वर्यु-श्चतुरक्षरं तदष्टाक्षरं सम्पद्यते ऽष्टाक्षरा वै गायत्री गायत्री मेव तदुभयतः प्रातस्सवने ऽचीक्लृपता मध्वर्यो शोंसावो मित्याह्वयते मध्यन्दिने षळक्षरेण शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण तदेकादशाक्षरं सम्पद्यत एकादशाक्षरा वै त्रिष्टुप् त्रिष्टुभ मेव तत्पुरस्तान्मध्यन्दिने ऽचीक्लृपता मुक्थं वाचीन्द्रायेत्याह शस्त्वा सप्ताक्षर मो मुक्थशा इत्यध्वर्युश्चतुरक्षरं तदेकादशाक्षरं सम्पद्यत एका-दशाक्षरा वै त्रिष्टुप् त्रिष्टुभ मेव तदुभयतो मध्यन्दिने

ऽचीक्लृपता मध्वर्यो शोशोंसावो मित्याह्वयते तृतीयसवने सप्ताक्षरेण शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण तद् द्वादशाक्षरं सम्पद्यते द्वादशाक्षरा वै जगती जगती मेव तत्पुरस्तात्तृतीयसवने ऽचीक्लृपता मुक्थं वाचीन्द्राय देवेभ्य इत्याह शस्त्वैकादशाक्षरं मो मित्यध्वर्युरेकाक्षरं तद् द्वादशाक्षरं सम्पद्यते द्वादशाक्षरा वै जगती जगती मेव तदुभयतस्तृतीयसवने ऽचीक्लृपतां तदेतदृषिः पश्यन्नभ्यनूवाच यद् गायत्रे अधि गायत्र माहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत यद्वा जगज्जगत्याहितं पदं य एतद्विदुस्ते अमृतत्व मानशुरित्येतद्वै तच्छन्दश्छन्दसि प्रतिष्ठापयति कल्पयति देवविशो य एवं वेद॥१(१२)॥

एकादशे ऽथ प्रउगप्रशंसां ततो वषट्कार मनुस्तुतिं च ।
तत्कर्त्तुरात्मन्यनुमन्त्रणं च ततो निविद्विशेषविशेष माहुः ॥

अथाहावप्रतिगरादयो वक्तव्याः ; तत्र प्रातःसवने होतुराहाव मध्वर्योः प्रतिगरं च विधत्ते— "देवविशः कल्पयितव्या इत्याहुश्छन्दश्छन्दसि प्रतिष्ठाप्य मिति, शोंसावो मित्याह्वयते प्रातस्सवने त्र्यक्षरेण, शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तदष्टाक्षरं सम्पद्यते,—ऽष्टाक्षरा वै गायत्री, गायत्री मेव तत् पुरस्तात् प्रातस्सवने ऽचीक्लृपताम्"–इति । 'देवविशः' देवानां सम्बन्धिन्यः प्रजाः सैन्यरूपाः 'कल्पयितव्याः' सम्पादनीयाः इति

ब्रह्मवादिन आहुः*। तत्कथं सम्पादनीयम् ? इति, तदुच्यते—एकं छन्दो ऽन्यस्मिन् छन्दसि प्रतिष्ठापनीयम् ; तथा सति देवविशः सम्पद्यत इति ब्रह्मवादिना मभिप्रायः। तस्मात् तत्सम्पादनार्थं होता प्रातस्सवने "शोंसावोम्"-इति मन्त्रेण अध्वर्युं माह्वयते। तस्याय मर्थः—हे अध्वर्यो ! 'शोंसावः' शंसनं कुर्वतः, 'ॐ'-इत्यनुज्ञार्थः, त्वया अनुज्ञा देयेत्युक्तं भवति। सोऽयं त्र्यक्षरो मन्त्रः। ततोऽध्वर्युः "शंसा मोदैवोम्"-इति पञ्चाक्षरेण 'प्रतिगृणाति' प्रत्युत्तरं ब्रूयात्। तस्याय मर्थः—हे होतः ! त्वं शंस, तत्र 'मोदैव' हर्ष एवास्माक मतोऽनुज्ञा दत्तेति। तदेतन्मन्त्रद्वयं मिलित्वा अष्टाक्षरं सम्पद्यते, गायत्री चाष्टाक्षरा, तेन प्रातस्सवने 'पुरस्तात्' आदौ द्वावपि मिलित्वा गायत्री मेव 'अचीक्लृपतां' कल्पितवन्तौ॥ शस्त्रादुत्तरकालीनौ द्वाभ्यां पठनीयौ मन्त्रौ विधत्ते— "उक्थं वाचीत्याह शस्त्वा चतुरक्षरम्, ओ मुक्थशा इत्यध्वर्युश्चतुरक्षरं तदष्टाक्षरं सम्पद्यते,—ऽष्टाक्षरा वै गायत्री, गायत्री मेव तदुभयतः प्रातस्सवने ऽचीक्लृपताम्"-इति। होता शस्त्रं पठित्वा "उक्थं वाचि"-इति चतुरक्षरं मन्त्रं ब्रूयात्। मदीयायां वाचि उक्थं सम्पन्न मिति तस्यार्थः। ततो ऽध्वर्युः "ओ मुक्थशाः"-इति चतुरक्षरं मन्त्रं ब्रूयात्। 'ॐ'-इत्यङ्गीकारे। 'उक्थशाः' त्वं शस्त्रशंसी भवसीत्यर्थः। तदेतन्मन्त्रद्वयं मिलित्वा अष्टाक्षरं सम्पद्यते। 'उभयतः' शंसनात् पुरस्तात् पश्चाच्च ; शेषं पूर्ववत्† ॥

माध्यन्दिनसवनेऽपि तद्वन्मन्त्रचतुष्टयं विधत्ते— "अध्वर्यो शोंसावो मित्याह्वयते मध्यन्दिने षळक्षरेण, शंसा मोदैवो मित्य-

---

* 'सम्पादनीया इत्यर्थः। तत्र ब्रह्मवादिन आहुः' घ।

† आश्व० श्रौ० ५. ९. १ ; ५ ; १०. २२ ; ९. ८.।

ध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तदेकादशाक्षरं सम्पद्यत,—एकादशाक्षरा वै त्रिष्टुप् त्रिष्टुभ मेव तत् पुरस्तान्मध्यन्दिने ऽचीक्लृपताम्; उक्थं वाचीन्द्रायेत्याह शस्त्वा सप्ताक्षरम्, ओ मुक्थशा इत्यध्वर्युश्चतुरक्षरं, तदेकादशाक्षरं सम्पद्यत,—एकादशाक्षरा वै त्रिष्टुप्, त्रिष्टुभ मेव तदुभयतो मध्यन्दिने ऽचीक्लृपताम्"-इति। पूर्ववद् व्याख्येयम् * ॥

तृतीयसवने मन्त्रचतुष्टयं विधत्ते— "अध्वर्यो शोशोंसावो मित्याह्वयते तृतीयसवने सप्ताक्षरेण, शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तद् द्वादशाक्षरं सम्पद्यते,—द्वादशाक्षरा वै जगती, जगती मेव तत्पुरस्तात्तृतीयसवने ऽचीक्लृपताम्; उक्थं वाचीन्द्राय देवेभ्य इत्याह शस्त्वैकादशाक्षरम्, ओ मित्यध्वर्युरेकाक्षरं, तद् द्वादशाक्षरं सम्पद्यते,—द्वादशाक्षरा वै जगती, जगती मेव तदुभयतस्तृतीयसवने ऽचीक्लृपताम्"-इति। "शोशोंसावोम्" -इति द्विर्भावश्छान्दसः। माध्यन्दिनसवने केवल मिन्द्रार्थ मेव वाचुक्थं सम्पन्न मित्युक्तम्, अत्र त्विन्द्रार्थं मितरदेवार्थं चेति विशेषः। अन्यत् सर्वं पूर्ववद् व्याख्येयम् † ॥

उक्तमर्थं मन्त्रसंवादेन दृढ़यति—"तदेतदृषिः पश्यन्नभ्यनूवाच"-इति। 'तदेतद्' ब्राह्मणोक्तं सर्वम् 'ऋषिः' मन्त्रद्रष्टा दिव्यज्ञानेन पश्यन् मन्त्रवाक्येनाभितो ऽनुवचनं कृतवान्॥ त मेतं मन्त्रं दर्शयति— "यद् गायत्रे अधि गायत्र माहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत। यद्वा जगज्जगत्याहितं पदं य इत् तद् विदुस्ते अमृतत्व मानशुः"-इति ( सं० १. १६४. २३.)। शंसनात्पूर्वकालीने मन्त्र-

* आश्व० श्रौ० ५. १४. ३; ६. ५; १०. २४; ६. ८।
† आश्व० श्रौ० ५. १८. ४; ६. ५; १८, १३; ६. ८।

द्वयात्मके 'गायत्रे' छन्दसि, तदुत्तरकालीनमन्त्रद्वयात्मकं 'गायत्रं' छन्दः 'अध्याहितं' सम्पादित मिति 'यत्' अस्ति, अथवा पूर्वकालीनान्मन्त्रद्वयात्मकात् 'त्रैष्टुभात्' उत्तरकालीनमन्त्रद्वयात्मकं 'त्रैष्टुभं' 'निरतक्षत' निष्पन्न मिति यदस्ति, अथवा 'जगत्' जागतं छन्दः पूर्वकालीनं 'जगति' उत्तरकालीने जागते छन्दसि 'आहितं' सम्पादितम् ; इत्येतत् त्रिविधं 'पदं' यदस्ति, 'तत्' पदं 'य इत्' य एव अनुष्ठातारो 'विदुः' जानन्ति, 'ते' अनुष्ठातारो 'अमृतत्व मानशुः' देवत्वं प्राप्तवन्तः * ॥ अस्य मन्त्रस्य तात्पर्यं दर्शयति—"एतद्वै तच्छन्दश्छन्दसि प्रतिष्ठापयति"–इति । 'एतद्' ऋषिप्रोक्तं मन्त्रवाक्य मुत्तरकालीने 'छन्दसि' 'तत्' पूर्वकालीनं 'छन्दः' 'प्रतिष्ठापयति' तत्राश्रित मित्येवं प्रतिपादयति ॥

उक्तार्थवेदनं प्रशंसति— "कल्पयति देवविशो य एवं वेद"–इति । वेदिता 'देवविशः' देवसम्बन्धिनीः प्रजाः सैन्यरूपाः सम्पादयति ॥१॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
प्रथमः खण्डः ॥ १ ( १२ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

**प्रजापतिर्वै यज्ञं छन्दांसि देवेभ्यो भागधेयानि व्यभजत्, स गायत्री मेवाग्नये वसुभ्यः प्रातस्सवने**

---

* ऋक्संहिताभाष्ये चैतन्मन्त्रस्य व्याख्यानानि द्रष्टव्यानि ( १. १६४. १२. ) ।

ऽभजत् त्रिष्टुभ मिन्द्राय रुद्रेभ्यो मध्यन्दिने जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवने ऽथास्य यत् स्वं छन्द आसीदनुष्टुप् ता मुदन्त मभ्युदौहदच्छावाकीया मभि सैन मब्रवीदनुष्टुप् त्वं न्वेव देवानां पापिष्ठोऽसि यस्य तेऽहं स्वं छन्दोऽस्मि यां मोदन्त मभ्युदौहीरच्छावाकीया मभीति तदजानात्स स्वं सोम माहरत्स स्वे सोमेऽग्रं मुख मभि पर्याहरदनुष्टुभं तस्मादनुष्टुबग्रिया मुख्या युज्यते सर्वेषां सवनाना मग्रियो मुख्यो भवति श्रेष्ठता मश्नुते य एवं वेद स्वे वै स तत्सोमे ऽकल्पयत्तस्माद्यत्र क्व च यजमानवशो भवति कल्पत एव यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं विद्वान् यजमानो वशी यजते ॥ २ (१३) ॥

अथ अनुष्टुभो मुख्यत्वेन प्रशंसां कर्त्तु माख्यायिका माह— "प्रजापतिर्वै यज्ञं छन्दांसि देवेभ्यो भागधेयानि व्यभजत्,—सः गायत्री मेवाग्नये वसुभ्यः प्रातस्सवने, भजत् त्रिष्टुभमिन्द्राय रुद्रेभ्यो मध्यन्दिने, जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवने"-इति। पुरा 'प्रजापतिः' सर्वं जगत् सृष्ट्वा सवनत्रयात्मकं 'यज्ञं' गायत्र्यादीनि 'छन्दांसि' च देवतार्थं 'भागधेयानि' भागविशेषरूपाणि कृत्वा 'व्यभजत्' विभक्तवान्। केन प्रकारेणेति, स— उच्यते—यज्ञे यत् प्रातस्सवन मस्ति, तस्मिन् 'गायत्री मेव' अग्न्यर्थं मष्टवसुदेवतार्थं च विभक्तवान्, माध्यन्दिनसवने त्रिष्टुभ

मिन्द्रार्थ मेकादशरुद्रार्थं च विभक्तवान्, तृतीयसवने जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यश्च विभक्तवान्। एवं सत्यनुष्टुबेका परिशिष्टा; तस्या वृत्तान्त माह— "अथास्य यत् स्वं छन्द आसीदनुष्टुप्, ता मुदन्त मभ्युदौहदच्छावाकीया मभि सैन मब्रवीदनुष्टुप्,—त्वं न्वेव देवानां पापिष्ठोऽसि यस्य ते ऽहं स्वं छन्दोऽस्मि, यां मोदन्त मभ्युदौहीदच्छावाकीया मभीति; तदजानात्; स स्वं सोम माहरत्, स स्वे सोमेऽग्रं मुख मभि पर्याहरदनुष्टुभं; तस्मादनुष्टुबग्रिया * मुख्या युज्यते सर्वेषां सवनानाम्"—इति। अथाग्न्यादीनां वस्वादीनां च छन्दोविभागानन्तरम् 'अस्य' प्रजापतेः स्वभूत मनुष्टुबाख्यं यच्छन्द आसीत्, 'ताम्' अनुष्टुभम् 'उदन्त मभि' यज्ञस्य कञ्चित्प्रान्तदेश मभिलक्ष्य 'उदौहत्' अपसारितवान्। कुत्र देशे ? इति, तदुच्यते— 'अच्छावाकीया मभि'—इति। अच्छावाक ! वदस्व इत्येव मध्वर्युणोक्तो ऽच्छावाको यां ब्रूते, सेय मृगच्छावाकीया; ता मभिलक्ष्य उदूढवान्, अनुष्टुभ मच्छावाकीयां कृतवानित्यर्थः। तेन कुपिता 'सा' अनुष्टुबेव 'एनं' प्रजापति मब्रवीत्,— हे प्रजापते ! 'त्वं नु एव' त्व मेव खलु एको देवानां मध्ये पापिष्ठोऽसि, 'यस्य' प्रजापतेस्तवाहं छन्दोऽस्मि। अग्निवस्वादयः पूर्वं छन्दोरहिताः, तादृशेभ्योऽपि छन्दांसि दत्तवानसि; अहं तु पूर्व मेव त्वदीयाम्, तादृशीं मां त्वत्तोऽपसार्याच्छावाकीया मभिलक्ष्य उदूढवानसि। अतो मदुपेक्षया तव पापिष्ठत्व मित्यनुष्टुभो ऽभिप्रायः। 'तत्' सर्व मनुष्टुभा प्रोक्त मुपालम्भरूपं प्रजापतिर्ज्ञातवान्। ज्ञात्वा च तदुपालम्भपरिहारार्थं स्वकीयं सोमयाग माहरत्। स तु तस्मिन् सोमयागे

---

* '०मग्रा' घ, टी० घ।

'अग्रं' श्रेष्ठं प्रारम्भरूपं यत् मुख मस्ति, तदभिलक्ष्य अनुष्टुभं 'पर्यहरत्', तत्र नीतवानित्यर्थः। 'तस्माद्' तस्मादेव कारणात् इय मनुष्टुप् 'अग्रिया' श्रेष्ठा सती सर्वेषां सवनानां 'मुख्या' मुखभवा प्रारम्भकालीना प्रयुज्यते ॥

एतद्वेदनं प्रशंसति— "अग्रियो* मुख्यो भवति, श्रेष्ठता मश्नुते य एवं वेद"—इति। वेदिता स्वकीयज्ञातीनां मध्ये 'अग्रियः' अग्रे भवो ऽग्रः ज्येष्ठः, 'मुख्यः' व्यवहारनिर्वाहकः, 'श्रेष्ठतां' विद्यावृत्तादिगुणैः श्रेष्ठत्वं प्राप्नोति ॥

प्रजापतिन्यायेन यजमानस्यापि [सवनीययागादृ†] आदावनुष्टुप्प्रयोगं दर्शयति— "स्वे वै स तत् सोमे ऽकल्पयत्; तस्माद्यत्र क्व च यजमानवशो भवति, कल्पत एव यज्ञोऽपि"—इति। यस्मात् 'सः' प्रजापतिः स्वकर्तृके एव सोमयागे 'तत्' सवनेषु अनुष्टुभो मुख्यता मकल्पयत्, तस्मादिदानी मपि 'यत्र क्वापि' यागे यज्ञो यजमानवशो भवति, स यज्ञोऽपि 'कल्पत एव' अवैकल्येनानुष्ठास्यामीत्यभिप्रेत्यानुष्टुभः सवनाना मादौ प्रयोगे सति यज्ञस्य यजमानवशत्वम्, तत्र यज्ञो वैकल्यरहितो भवतीत्यर्थः ॥

उक्तं वाक्यार्थ मेव वाक्यान्तरेण स्पष्टीकरोति— "तस्यै जनतायै कल्पते यत्रैवं विद्वान् यजमानो वशी यजते"—इति। 'यत्र' यस्यां जनतायाम्‡, 'एवम्' अनुष्टुभो महिमानं विद्वान् यजमानः 'वशी' स्ववशो भूत्वा, तस्मिन्ननुष्टुभः प्रयोगे सावधानो

* 'अग्री' घ, टा॰ घ।

† नास्त्येतत्पदं घ-पुस्तके; अस्ति त्विह 'अवश्यम्'—इति।

‡ 'जनसभायाम्' ग।

भूत्वा यजते, 'तस्यै जनतायै' तस्या जनतायाः * 'कल्पते' यज्ञः प्रयोजनसमर्थो भवति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये द्वितीयः खण्डः ॥ २ (१३) ॥

---

॥ अथ तृतीयः खण्डः ॥

अग्निर्वै देवानां होतासीत्तं मृत्युर्बहिष्पवमाने ऽसीदत्सोऽनुष्टुभाज्यं प्रत्यपद्यत मृत्यु मेव तत्पर्यक्रामत् त माज्ये ऽसीदत् स प्रउगेण प्रत्यपद्यत मृत्यु मेव तत्पर्यक्रामत् तं माध्यन्दिने पवमाने ऽसीदत्सोऽनुष्टुभा मरुत्वतीयं प्रत्यपद्यत मृत्यु मेव तत्पर्यक्रामत्तं माध्यन्दिने बृहतीषु नाशक्नोत्सत्तुं प्राणा वै बृहत्यः प्राणानेव तन्नाशक्नोद् व्यवैतुं तस्मान्मध्यन्दिने होता बृहतीषु स्तोत्रियेणैव प्रतिपद्यते प्राणा वै बृहत्यः प्राणानेव तदभि प्रतिपद्यते तं तृतीयपवमाने ऽसीदत्सोऽनुष्टुभा वैश्वदेवं प्रत्यपद्यत मृत्यु मेव तत्पर्यक्रामत् तं यज्ञायज्ञीये ऽसीदत्स वैश्वानरीयेणाग्निमारुतं प्रत्यपद्यत मृत्यु मेव तत्पर्यक्रामद्वज्रो

* 'तस्यां जनसभायां' ग।

वै वैश्वानरीयं प्रतिष्ठा यज्ञायज्ञीयं वज्रेणैव तत्प्रतिष्ठाया मृत्युं नुदते स सर्वान् पाशान्त्सर्वान् स्थाणून्मृत्योरतिमुच्य स्वस्त्येवोदमुच्यत स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥ ३ ( १४ ) ॥

पुनरपि प्रकारान्तरेणानुष्टुभो महिमानं दर्शयितु माख्यायिका माह—"अग्निर्वै देवानां होतासीत्, तं मृत्युर्बहिष्पवमाने ऽसीदत्, सोऽनुष्टुभाज्यं प्रत्यपद्यत, मृत्यु मेव तत्पर्यक्रामत्, त माज्ये ऽसीदत्, स प्रउगेण प्रत्यपद्यत, मृत्यु मेव तत्पर्यक्रामत्"-इति। पुरा कदाचित्, देवानां यागे अग्निरेव होता अभूत्, 'तम्' अग्निं होतारं मृत्युः 'असीदत्' हन्तुं प्राप्तवान्। कस्मिन् काले? इति, तदुच्यते— बहिष्पवमानाख्ये स्तोत्रे प्रातस्सवनसम्बन्धिनि "उपास्मै गायता नरः"-इत्यादृग्गाश्रयणेन सामगैः स्तूयमाने सति *। सोऽय मग्नेर्मृत्युप्राप्तिकालः। तदानी मग्निः मृत्युं परिहर्त्तुम् अनुष्टुप्छन्दस्कया "प्र वो देवायाग्नये"-इत्येतयर्चा आज्यशस्त्रं † प्रारब्धवान्। 'तत्' तेनानुष्टुप्-प्रयोगेण सोऽग्निस्तदानीमेव मृत्युं 'पर्यक्रामत्' अतिक्रान्तवान्। ततः "अग्न आ याहि"-इत्यादृग्गाश्रयणेनाज्यस्तोत्रे ‡ ( उ० आ० १. १. ४–७. ) सामगैः स्तूयमाने सति § 'तम्' अग्निं मृत्युः 'असीदत्' प्राप्तवान्। तदा

* १ भा० ४५३ पृ० '†' द्रष्टव्यम्। ता० ब्रा० ७. १. उ० आ० १.१.१–३।

† १ भा० ४५४, ४६९ पृ० द्रष्टव्यम्।

‡ १भा० ४४८ पृ० द्रष्टव्यम्।

§ 'ततोऽग्निना होत्रा आज्यशस्त्रे शस्यमाने सति' ग

'सः' अग्निः मृतुरं परिहर्त्तुं "वायवा याहि"-इत्यादिकेन सप्त-तृचात्मकेन प्रउगशस्त्रेण * अनुष्ठातुं 'प्रत्यपद्यत' प्रारब्धवान्। 'तत्' तेन प्रउगप्रयोगेण तदानी मेव मृत्यु मतिक्रान्तवान् ॥

इत्थं प्रातस्सवने ऽनुष्टुभं मृत्युपरिहारहेतुत्वेन प्रशस्य माध्य-न्दिनसवनेऽपि तथा प्रशंसति— "तं माध्यन्दिने पवमाने ऽसीदत्, सोऽनुष्टुभा मरुत्वतीयं प्रत्यपद्यत, मृत्यु मेव तत्पर्यक्रामत्, तं माध्यन्दिने बृहतीषु नाशक्नोत् सत्तुं,—प्राणा वै बृहत्यः, प्राणानेव तन्नाशक्नोद् व्यवैतुं; तस्मान्मध्यन्दिने होता बृहतीषु स्तोत्रियेणैव प्रतिपद्यते,—प्राणा वै बृहत्यः, प्राणानेव तदभिप्रतिपद्यते"-इति। प्रातस्सवनान्निराकृतो मृत्युः सामगैः "उच्चा ते जात मन्धसः"-इत्यादिके ( उ० आ० १.१.८-१०. ) माध्यन्दिनपवमानस्तोत्रे † गीयमाने सति, तस्मिन् काले 'तम्' अग्निं होतारम् 'असीदत्' प्राप्तवान्। तदानीं 'सः' अग्निर्होता मृत्युपरिहाराय अनुष्टुप्-छन्दस्कया "आ त्वा रथम्"-इत्येतयर्चा (सं० ८.६८.१.) मरुत्वतीयं शस्त्रं ‡ 'प्रत्यपद्यत' प्रारब्धवान्। 'तत्' तेनानुष्टुप्-प्रयोगेण तदानी मेव मृत्यु मतिक्रान्तवान्। माध्यन्दिनपवमानान्निराकृतो मृतुरर्माध्यन्दिनसवनसम्बन्धिनि मरुत्वतीयशस्त्रे शस्यमाने सति, शंसितार मग्निं होतारं प्राप्स्यामीति विचार्य तत्र बृहतीच्छन्द-स्कासु ऋक्षु गीयमानासु § 'तम्' अग्निं 'सत्तुं' प्राप्तुं नाशक्नोत्।

* १—१५ पृ० द्रष्टव्यम्।

† 'एतावता वाव माध्यन्दिनं सवनं पुपुवे, त्रिभिश्च छन्दोभिः पञ्चभिश्च सामभिः; यन्माध्यन्दिनेन पवमानेन स्तुवन्ति, माध्यन्दिन मेव तं सवनं पावयन्ति"-इत्यादि ता० ब्रा० ७. ३—८. ३।

‡ तच्च शस्त्र मुपरिष्टात् चतुर्थादिषु षट्सु खण्डेषु आम्नास्यते।

§ 'विद्यमानासु' घ।

तत्र हेतुरुच्यते,— बृहतीच्छन्दस्का ऋचः प्राणस्वरूपा एव ; 'तत्' तेन कारणेन प्राणानेव 'व्यवैतु'' वियोजयितुं मृत्युर्नाशक्नोत्। प्राणाभिमानिभिर्बृहतीभिः प्राणानां रक्षितत्वात्। बृहत्यश्च मरुत्वतीयशस्त्रानन्तरभाविनिष्केवल्यशस्त्रे* बहवो विद्यन्ते। ताश्च सर्वस्मिन्नेव माध्यन्दिने सवने मृत्युप्रवेशं निवारयन्ति। यस्मादेवं बृहत्यो मृत्युप्रवेशं निवारयितुं समर्थाः, तस्मात् माध्यन्दिनप्रयोगे होता बृहतीच्छन्दस्कासु ऋक्षु स्तोत्रियेणैव तृचेन शस्त्रं प्रारभेत। यस्मिंस्तृचे सामगैः स्तोत्रं गीतम्, सोऽयं तृचस्तोत्रियः; तेन तृचेन प्रारम्भे सति तत्रत्यानां बृहतीनां प्राणरूपत्वात् प्राणानेवाभिलक्ष्य शस्त्रप्रारम्भं कृतवान् भवति† ॥

अथ तृतीयसवने मृत्युपरिहारेणानुष्टुभं प्रशंसति— "तं तृतीयपवमानेऽसीदत्, सोऽनुष्टुभा वैश्वदेवं प्रत्यपद्यत, मृत्युमेव तत्पर्यक्रामत्"–इति। त्रिषु पवमानेषु बहिष्पवमानः प्रथमः, माध्यन्दिनपवमानो द्वितीयः, आर्भवपवमानस्तृतीयः। माध्यन्दिनसवने प्रवेष्टु मशक्तो मृत्युः "स्वादिष्ठया मदिष्ठया"–इत्येतस्मिन् ( उ० आ० १.१.१५. ) आर्भवाख्ये तृतीयपवमानस्तोत्रे‡ तृतीयसवनगते सामगैर्गीयमाने सति 'तम्' अग्निं होतारं मृत्युरसीदत्। 'सः' अप्यग्निस्तं वारयितु मनुष्टुप्छन्दस्कया "तत्सवितुर्वृणीमहे"–इत्येतयर्चा ( सं० ५. ८२. १. ) वैश्वदेवाख्यं शस्त्रं§

---

* परस्तादिहैव दशमादिषु चतुःखण्डेषु निष्केवल्यं नाम शस्त्रम्।

† इहैवानुपदं ( ६ ख० ) हैतद् व्यक्तीभविष्यति।

‡ "साध्या वै नाम देवा आसन् ०—— ० स्वादिष्ठया मदिष्ठयेति मस्तोति तृतीयसवनस्येन्द्रत्वाय"–इत्यादि ता० ब्रा० ८. ४, ५।

§ एतदुत्तराध्यायीयसप्तमाष्टमखण्डयोराम्नास्यते।

प्रारभत ; तेनानुष्टुप्-प्रयोगेण तदानी मेव मृत्यु मतिक्रान्तवान् । इत्थ मनुष्टुप् सवनत्रये शस्ता ॥

अथ यज्ञायज्ञीयाख्यं साम, वैश्वानरीयं सूक्तं च प्रशंसति—"तं यज्ञायज्ञीये ऽसीदत्स वैश्वानरीयेणाग्निमारुतं प्रत्यपद्यत, मृत्यु मेव तत्पर्यक्रामद्,—वज्रो वै वैश्वानरीयं, प्रतिष्ठा यज्ञायज्ञीयं,—वज्रेणैव तत्प्रतिष्ठाया मृत्युं नुदते ; स सर्वान् पाशान्त्सर्वान् स्थाणून् मृत्योरतिमुच्य स्वस्त्येवोदमुच्यत,—स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय"–इति । "यज्ञा यज्ञा वो अग्नये"–इत्यस्या मृचि (उ० आ० १.१.२०.) उत्पन्नं साम यज्ञायज्ञीयम्* । तत्साम-साध्ये तन्नामके स्तोत्रे† सामगैर्गीयमाने सति तृतीयपवमानान्नि-राक्रतो मृत्युः 'तम्' अग्निं होतारं प्राप्तवान् । 'सः' अपि अग्निः होता मृत्युपरिहाराय "वैश्वानराय पृथुपाजसे"–इत्यादिना वैश्वा-नरीयेण सूक्तेन आग्निमारुताख्यं‡ शस्त्रं प्रारब्धवान् । तेन सूक्त-प्रयोगेण तदानी मेव मृत्यु मतिक्रान्तवान् । तच्च वैश्वानरीयं सूक्तं वज्रस्वरूपम्, यज्ञायज्ञीयस्तोत्रं तु प्रतिष्ठायाः समाप्तेर्हेतुः । तस्मात् सूक्तरूपेण वज्रेणैव प्रतिष्ठाया यज्ञसमाप्तेर्मृत्यु मग्निर्निराकुरुते । 'सः' तादृशोऽग्निः 'सर्वान् पाशान्' मृत्युसम्बन्धिबन्धनरज्जुरूपान्, तथा मृत्योः सम्बन्धिनः 'सर्वान् स्थाणून्' काष्ठोपलचितगदाद्यायु-धानि, 'मृत्योः' सकाशात् 'अतिमुच्य' निवार्य 'स्वस्त्येव' क्षेमेणैव स्वयं मृत्युसकाशादुन्मुक्तोऽभूत् । अग्निवन्मानुषोऽपि होता तेनैव प्रकारेण अनुतिष्ठन् सर्वेणायुषा युक्तः क्षेमेणैव मृत्योरुन्मुच्यते ॥

---

* ऊ० गा० १. १. १४ ।

† "देवा वै०—० ते देवा यज्ञायज्ञीय मपश्यंस्तेषां यज्ञायज्ञा वो अग्नय इति"—इत्यादि ता० ब्रा० ८. ६, ७ ।

‡ एतदुत्तराध्यायीयेषु नवमादिषु त्रिषु खण्डेषु द्रष्टव्यम् ।

अत्र सर्वत्र यो यः पूर्वोऽर्थस्तस्य सर्वस्यार्थवादादेव विधिरुन्नेयः। सोऽयं होतृप्रयोगो * यजमानस्य सर्वायुत्वाय सम्पद्यते ॥

वेदनं प्रशंसति— "सर्व मायुरेति य एवं वेद"—इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
तृतीयः खण्डः ॥ ३ ( १४ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतो ऽगच्छत्स परमा मेव परावत मगच्छदनुष्टुब् वै परमा परावद्वाग्वा अनुष्टुप् स वाचं प्रविश्याशयत्तं सर्वाणि भूतानि विभज्यान्वैच्छंस्तं पूर्वेद्युः पितरो ऽविन्दन्नुत्तर महर्देवास्तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तर महर्देवान् यजन्ते ते ऽब्रुवन्नभिषुणवामैव तथा वा वन आगमिष्ठ मागमिष्यतीति तथेति तेऽभ्यषुणवंस्त आ त्वा रथं यथोतय इत्येवैन मावर्तयन्निदं वसो सुत मन्ध इत्येवैभ्यः सुतकीर्त्या माविरभवदिन्द्र नेदीय एदिहीत्येवैनं मध्यं प्रापादयन्त्तागतेन्द्रेण यज्ञेन यजते सेन्द्रेण यज्ञेन राध्नोति य एवं वेद॥ ४ (१५)॥

* 'होत्रप्रयोगो' ग।

अथ मरुत्वतीयशस्त्र मारभ्यते, तत्रायं सङ्ग्रहश्लोकः—

"प्रतिपदनुचरावनु प्रगाथो हरिनिहवोऽथ बृहस्पतेर्ध्रुवश्च।

ध्रुवविधिविहितयोस्तथाथ धाय्या वितत मत्र मरुत्वतीये सूक्ते ॥"

-इति। तत्र "आ त्वा रथम्"-इति (सं॰ ८.६८.१-३.) मरुत्वतीयस्य प्रतिपदनुष्टुप्, तां प्रशंसितु माह— "इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतो ऽगच्छत्; स परमा मेव परावत मगच्छदनुष्टुब् वै परमा परावद्; वाग्वा अनुष्टुप्; स वाचं प्रविश्याशयत्, तं सर्वाणि भूतानि विभज्यान्वैच्छंस्तं पूर्वेद्युः पितरो ऽविन्दन्नुत्तर महर्देवास्तस्मात् पूर्वेद्युः पितृभ्यः क्रियत, उत्तर महर्देवान् यजन्ते"-इति। इन्द्रः पुरा वृत्रनामान मसुरं * हत्वा 'नास्तृषि' नाहं हिंसितवान् अस्मि इति मन्यमानः तदीयजीवन माशङ्क्य तस्माद्भीतः 'पराः परावतः' अभ्यधिका दूरभूमी रगच्छत्। 'सः' अयं तावताप्यसन्तुष्टः 'परमा मेव' अभ्यधिका मेव 'परावतं' दूरभूमिं पुनरप्यगच्छत्। अधिकाभ्यो दूरभूमिभ्यो ऽत्यन्त मधिका दूरभूमिः केति चेत्, सेय मुच्यते—'अनुष्टुप् वै परमा परावत्' अत्यधिका दूरभूमिः; तस्या मनुष्टुभि प्रविष्टस्य चक्षुषा द्रष्टु मशक्यत्वात्। अनुष्टुप् च वाक्स्वरूपा। ततः स इन्द्रो वाचं प्रविश्य तत्र शयनं कृतवान्। 'तम्' इन्द्रं सर्वाणि भूतानि सर्वेषु देशेषु 'विभज्यान्वैच्छन्' त मन्वेष्टु मेक एकस्मिन् देशे गतः, अन्यो देशान्तर मित्येतादृशो विभाग इत्यर्थः। 'तम्' अन्विष्यमाण मिन्द्रं पितरो यागहीनाः † पूर्वेद्युः 'अविन्दन्' अलभन्त, देवास्तु 'उत्तर महः' उत्तरस्मिन् अहन्यविन्दन्। यस्मादेवं तस्माल्लोकेऽपि पूर्वेद्युः अमावास्यायां पितृभ्यः श्राद्धं क्रियते,

* 'वृत्रनामकं दैत्यं' ग।   † 'यागादिना' घ।

'उत्तर महः' उत्तरस्मिन्नहनि प्रतिपद्दिने दर्शपूर्णमासयागादिना देवान् यजन्ते। इन्द्रस्य रक्षकत्वात् प्रशस्तानुष्टुबिति तात्पर्यार्थः ॥

अथ मरुत्वतीयशस्त्रस्य प्रतिपत्तृचं* दर्शयति— "ते ऽब्रुवन्नभिषुणवामैव तथा वाव न आशिष्ठ मागमिष्यतीति, तथेति ; ते ऽभ्यषुण्वंस्त आ त्वा रथं यथोतय इत्येवैन मावर्त्तयन्निदं वसो सुतमन्ध इत्येवैभ्यः सुतकीर्त्त्या माविरभवदिन्द्र नेदीय एदिहीत्येवैनं मध्यं प्रापादयन्त"-इति। इन्द्रलब्धावस्थिताः 'ते' देवाः परस्परमिद मब्रुवन्,—'अभिषुणवामैव' वयं सर्वथा सोमस्याभिषवं करवामः, 'तथा वाव' तेनैव प्रकारेण 'आशिष्ठम्' आशुतम मतिशीघ्रं यथा भवति तथा 'नः' अस्मान् इन्द्र आगमिष्यतीति। तद्वचन मङ्गीकृत्य 'ते' सर्वे 'अभ्यषुण्वन्' अभिषवं कृतवन्तः। तादृशा 'ते' देवाः "आ त्वा रथं यथोतये"-इत्यनेनैव मन्त्रेण ( सं० ८.६८.१. ) त मिन्द्र मनुष्टुभः सकाशादभिषवदेशं 'प्रत्यावर्त्तयन्' अत्र किञ्चिदावृत्तिवाचकम् "आ वर्त्तयामसि"-इति पदद्वयं श्रूयते, तत्सामर्थ्यादिन्द्रस्यावृत्तिरभूत्। "इदं वसो सुत मन्धः"-'इति' अस्मिन् मन्त्रपादे ( सं० ८.२.१. ) 'सुतकीर्त्त्याम्' अभिषववाचिना सुतशब्देनैभ्यो देवेभ्य इन्द्रः 'आविरभवत्' प्रकटोऽभूत्। "इन्द्र नेदीय एदिहि"-इतिमन्त्रगतेन ( सं० ८.५३.५ ) समीपागमनवाचिना 'नेदीयः इहि'-इतिपदद्वयेन 'एतम्' इन्द्रं यागदेशमध्यं प्रापितवन्तः। अनेनार्थवादेन तत्तन्मन्त्रविधिरुन्नेयः। एतदेवाभिप्रेत्याश्वलायन आह— "मरुत्वतीयं शस्त्रं शंसेदध्वर्यो शोंसावोमिति माध्यन्दिने शस्त्रादिष्वाहाव आ त्वा रथं यथोतय इदं

* 'मन्त्रान्' घ।

वसो सुत मन्ध इति मरुत्वतीयस्य प्रतिपदनुचराविन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः"-इति ( ५.१४.२-५.)। येन तृचेन शस्त्रं प्रारभते, सोऽयं तृचः प्रतिपदुच्यते ; तदनन्तरभावी तृचोऽनुचरः। अत्र "आ त्वा रथम्"-"इदं वसो"-इत्येतावृचौ प्रतिपदनुचरौ द्रष्टव्यौ। तत ऊर्द्ध्व मिन्द्रनिहवाख्यः "इन्द्र नेदीयः"-इति प्रगाथः, ऋग्द्वयात्मको द्रष्टव्य इत्यर्थः ॥

वेदनं प्रशंसति— "आगतेन्द्रेण यज्ञेन यजते, सेन्द्रेण यज्ञेन राध्नोति य एवं वेद"-इति। आगत इन्द्रो यस्मिन् यज्ञे, सोऽय मागतेन्द्रः ; वेदिता तादृशेन यज्ञेन यजते, तथेन्द्रसहितेन यज्ञेन समृद्धो भवति ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ (१५) ॥

---

॥ अथ पञ्चमः खण्डः ॥

इन्द्रं वै वृत्रं जघ्निवांसन्नास्तृतेति मन्यमानाः सर्वा देवता अजहुस्तं मरुत एव स्वापयो नाजहुः प्राणा वै मरुतः स्वापयः प्राणा हैवैनं तं नाजहुस्तस्मादेषो ऽच्युतः स्वापिमान् प्रगाथः शस्यत आ स्वापे स्वापिभिरित्यपि ह यद्यैन्द्र मेवात ऊर्द्ध्वं छन्दः शस्यते

**तद्ध सर्वं मरुत्वतीयं भवत्येष चेदच्युतः स्वापिमान् प्रगाथः शस्यत आ स्वापे स्वापिभिरिति ॥ ५ (१६)॥**

पूर्वोक्त मिन्द्र नेदीय इत्यादिकं प्रगाथं शंसितु माख्यायिका माह— "इन्द्रं वै वृत्रं जघ्निवांसं नास्तृतेति मन्यमानाः सर्वा देवता अजहुस्तं मरुत एव स्वापयो नाजहुः ;—प्राणा वै मरुतः स्वापयः, प्राणा हैवैनं तं नाजहुस् ; तस्मादेषो ऽच्युतः स्वापिमान् प्रगाथः शस्यत आ स्वापे स्वापिभिरिति"–इति। इन्द्रो यदा वृत्रं हतवान्*, तदा त मिन्द्रं सर्वा देवताः 'अजहुः' परित्यक्तवन्त्यः। कीदृश्यो देवताः ? 'नास्तृतेति' न हिंसितवानिन्द्र इति मन्यमानाः। वृत्रस्यातिप्रौढ़शरीरत्वात् प्रहारमात्रेणासौ न मृत इति देवतानां भ्रान्तिः। इतरदेवताभिः परित्यक्तं 'तम्' इन्द्रं 'मरुत एव नाजहुः' न परित्यक्तवन्तः। तद्विशेषणं 'स्वापयः'-इति, सुषुप्तिकालेऽपि वर्त्तमाना इत्यर्थः। स्वापिशब्दार्थः श्रुत्यैव प्रदर्श्यते—'प्राणा वै' देहमध्ये वर्त्तमानाः प्राणा एव 'स्वापयो मरुतः' स्वापकालानुवर्त्तिनो वायवः। प्राणानां तत्कालानुवृत्ति माथर्वणिकाः प्रश्नोत्तराभ्या मामनन्ति—"भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति ? कान्यस्मिन् जाग्रति ?"-इति ( प्र० उप० ४.१. ) प्रश्नः। "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति"–इति ( प्र० उप० ४.३. ) उत्तरम्। एवंविधा यस्मात् प्राणरूपा मरुत एवैन मिन्द्रं तदानीं न परित्यक्तवन्तः 'तस्मात्' कारणात् 'एषः' "इन्द्र नेदीयः"–इत्यादिकः ( स० ८.५३.५.) 'स्वापिमान् प्रगाथः' 'अच्युतः' मरुत्वतीयशस्त्रे सर्वथाप्यपरित्यक्तः शस्यते। स्वापि-शब्दो

* "तत्रोपमार्थेन युद्धवर्णा भवन्ति"–इति च निरु० २.५.२।

यस्मिन् प्रगाथेऽस्ति, सोऽयं स्वापिमान्;—"आ स्वापे स्वापिभिः"-इत्ययं पादो ऽस्मिन् प्रगाथे आम्नायते, तस्मादयं स्वापिमान् ॥

इत्थ मिन्द्रनिहवाख्यं प्रगाथं प्रशस्य पुनरपि प्रकारान्तरेण त मेव प्रशंसति— "अपि ह यदैन्द्र मेवात ऊर्ध्वं छन्दः शस्यते, तद्ध सर्वं मरुत्वतीयं भवत्येष चेदच्युतः स्वापिमान् प्रगाथः शस्यत आ स्वापे स्वापिभिरिति"-इति। 'अपि ह' अपि च 'अतः' एतत्-प्रगाथशंसनादूर्ध्वं मस्मिन्मरुत्वतीयशस्त्रे 'यदैन्द्र मेव छन्दः' इन्द्र-सम्बन्धेव छन्दः-शब्दोपलक्षितो मन्त्रः शस्यते, 'तद्ध सर्व' तदपि मन्त्रजातं मरुत्वतीयं शस्त्रं भवति। एष चेदित्यादिना तत्र युक्ति-रुच्यते— "आ स्वापे स्वापिभिः"-इतिपादोपेतत्वेन 'स्वापिमान्' एष प्रगाथः 'अच्युतश्चेत्' अपरित्यक्तश्चेत्, तदा मरुत्वतीयं भवति; स्वापिशब्दवाच्यानां मरुतां प्रतिपादकत्वादित्यर्थः। सोऽयं प्रगाथः शाखान्तरे द्रष्टव्यः * ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
पञ्चमः खण्डः ॥ ५ ( १६ ) ॥

---

* यद्यप्यय मपि प्रगाथः क्वचित् क्वचित् शाकलशाखीयसंहितापुस्तकेऽपि वालखिल्यान्तर्गतत्वेन दृश्यते, तथा मुद्रितश्च म्याक्समूलरभट्टेन; परं नैष शाकलशाखीयोऽपि त्वयं वाष्कलशाखीयः। अतएव शाकलसंहिताव्याख्याने वेदार्थप्रकाशे न व्याख्यातं तद्वालखिल्यं काण्ड मेतेन सायणाचार्येण; तथैवेहाप्युक्तं 'शाखान्तरे द्रष्टव्यः'-इति।

॥ अथ षष्ठः खण्डः ॥

ब्राह्मणस्पत्यं प्रगाथं शंसति बृहस्पतिपुरोहिता वै देवा अजयन्त्स्वर्गं लोकं व्यस्मिंल्लोकेऽजयन्त तथैवैतद्यजमानो बृहस्पतिपुरोहित एव जयति स्वर्गं लोकं व्यस्मिंल्लोके जयते तौ वा एतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते तदाहुर्यन्न किञ्चनास्तुतं सत्पुनरादायं शस्यतेऽथ कस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते इति पवमानोक्थं वा एतद्यन्मरुत्वतीयं षट्सु वा अत्र गायत्रीषु स्तुवते षट्सु बृहतीषु तिसृषु त्रिष्टुप्सु स वा एष त्रिच्छन्दाः पञ्चदशो माध्यन्दिनः पवमानस्तदाहुः कथं त एष त्रिच्छन्दाः पञ्चदशो माध्यन्दिनः पवमानोऽनुशस्तो भवतीति ये एव गायत्र्या उत्तरे प्रतिपदो यो गायत्रोऽनुचरस्ताभिरेवास्य गायत्र्योऽनुशस्ता भवन्त्येताभ्या मेवास्य प्रगाथाभ्यां बृहत्योऽनुशस्ता भवन्ति तासु वा एतासु बृहतीषु सामगा रौरवयौधाजयाभ्यां पुनरादायं स्तुवते तस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते तच्छस्त्रेण स्तोत्र मन्वैति ये एव त्रिष्टुभौ धाय्ये यत् त्रैष्टुभं निविद्धानं ताभिरेवास्य त्रिष्टुभोऽनुशस्ता भवन्त्येव

मु हास्यैष त्रिच्छन्दाः पञ्चदशो माध्यन्दिनः पवमानो ऽनुशस्तो भवति य एवं वेद ॥ ६ ( १७ ) ॥

अथास्मिन्मरुत्वतीये शस्त्रे "प्र नूनं ब्रह्मणस्पतिः"-इत्यादिकं प्रगाथं ( सं० १.४०.५. ) विधत्ते— "ब्राह्मणस्पत्यं प्रगाथं शंसति" —इति । द्वयोर्ऋचोः समूहः प्रगाथः । तथा चाश्वलायन आह— "तृचः प्रतिपदनुचरा दृचाः प्रगाथाः"—इति (५.१४.७.) । ऋग्द्वय मेवानुष्ठानकाले तृचरूपेण प्रग्रथ्यते, तस्मादयं प्रगाथ इत्युच्यते* ॥

विहितं ब्राह्मणस्पत्यं प्रशंसति— "बृहस्पतिपुरोहिता वै देवा अजयन्त्स्वर्गं लोकं व्यस्मिंल्लोके ऽजयन्त, तथैवैतद्यजमानो बृहस्पतिपुरोहित एव जयति स्वर्गं लोकं व्यस्मिंल्लोके जयते"-इति । योऽयं प्रगाथे ब्रह्मणस्पतिराम्नातः, सोऽयं बृहस्पतिः ; तस्य ब्राह्मणजातिस्वामित्वात् । स च बृहस्पतिः पुरोहितो येषां देवानां ते 'बृहस्पतिपुरोहिताः' । तथा च श्रुत्यन्तरे समाम्नातम्— "बृहस्पतिर्देवानां पुरोहित आसीत्"—इति । पौरोहित्यसिद्ध्यर्थ मेव चतुर्विंशतिरात्रनामकं सत्र मन्वतिष्ठत् । तदपि श्रुत्यन्तरे एवाम्नातम्— "बृहस्पतिरकामयत श्रन्मे देवा दधीरन् गच्छेयं पुरोधा मिति, स एतं चतुर्विंशतिरात्र मपश्यत्"—इति ( तै० सं० ७. ४. १. १. )। तादृशा बृहस्पतिपुरोहिता देवा अनेन प्रगाथेन स्वर्गं लोकं जित्वा भूलोकेऽपि विजयं प्राप्ताः । तथैव तत्पाठेनेदानीन्तनोऽपि यजमानो 'बृहस्पतिपुरोहित एव' बृहस्पत्यनुग्रहयुक्त एव सन् लोकद्वयं जयति ॥

---

* सा० सं० भा० भू० २५-२८ पृ० द्र० ।

† "त्रयस्त्रिंशद्वै देवा बृहस्पतिपुरोहिताः"—इति शत० ब्रा० १२. ८. ३. २९।

अत्र किञ्चिच्चोद्य मुद्भावयति— "तौ वा एतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते ; तदाहुर्यत्र किञ्चनास्तुतं सत् पुनरादायं शस्यते ; ऽथ कस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते ? इति"–इति। समाम्नाते द्वे एव ऋचौ प्रग्रथनेन तृचरूपतया सम्पद्येते। प्रग्रथनप्रकार उच्यते—"प्र नूनं ब्रह्मणस्पतिः"–इत्येषा बृहतीच्छन्दस्का ; द्वादशाक्षरेण तृतीयपादेनाष्टाक्षरैश्चान्यैर्युक्ततया षट्त्रिंशदक्षरसम्पत्तेः। सेय मृक् सकृत् पठनीया, पुनरपि तत्रत्य मष्टाक्षरं चतुर्थपादं द्विराम्नाय षोड़शाक्षरोऽर्द्धर्चः सम्पादनीयः। उत्तरस्या मृचि प्रथमपादो द्वादशाक्षरः, द्वितीयपादोऽष्टाक्षरः ; एतत् सर्वं मिलित्वा द्वितीया बृहती सम्पद्यते। तत्रत्य मन्तिम मष्टाक्षरं पादं द्विरभ्यस्य समाम्नाते उत्तरार्द्धे द्वादशाक्षरं प्रथमपाद मष्टाक्षर मुत्तरपादं च पठित्वा तृतीया बृहती सम्पादनीया। अय मेव प्रग्रथनप्रकारः "इन्द्र नेदीय एदिहि"–इत्यत्रापि प्रगाथे ( ६८ पृ० ) योजनीयः। तावेतौ प्रगाथौ 'पुनरादायं' पुनः-पुनः पठित मेव पाद मादाय शस्येते। सामगैस्तु माध्यन्दिनपवमाने प्रगाथावेतावस्तुतौ *। तैरस्तुतयोः होत्रा शंसन मयुक्तम् ; न ह्यन्यत्र क्वचिदपि सामगैरस्तुतं मन्त्रजातं पुनः-पुनरादायं शस्यमानं दृष्टम्। एवं सति कस्मात्कारणादस्तुतयोरत्र शंसन मिति चोद्यवादिन आहुः॥

एतच्चोद्य मवस्थाय परिहार मनुक्त्वैव चोद्यान्तर मुद्भावयति— "पवमानोक्थं वा एतद्यन्मरुत्वतीयं षट्सु वा अत्र गायत्रीषु स्तुवते, षट्सु बृहतीषु, तिसृषु त्रिष्टुप्सु, स वा एष त्रिच्छन्दाः, पञ्चदशो माध्यन्दिनः पवमानस्तदाहुः कथं त एष त्रिच्छन्दाः पञ्चदशो

* 'प्रगाथावेतौ न स्तुतौ' घ।

माध्यन्दिनः पवमानो ऽनुशस्तो भवतीति"–इति। मरुत्वतीयशस्त्रं यदस्ति, तत् 'एतत्' 'पवमानोक्थं' माध्यन्दिनपवमानसम्बन्धि शस्त्रम्। 'अत्र' माध्यन्दिनपवमानशस्त्रे "उच्चा ते जातम्"–इत्यादिषु 'षट्सु गायत्रीषु' प्रथमं स्तुवते*। ततः "पुनानः सोम"–इत्यादिषु 'षट्सु बृहतीषु' स्तुवते†। यद्यप्ययं द्व्यृचात्मकः प्रगाथः, तथापि पूर्वोक्तन्यायेन प्रग्रथ्य (७२पृ० ५पं०) तिस्रो बृहत्यः सम्पादनीयाः। तासु च रौरवसाम प्रागुद्गातव्यम्, तत उपरि यौधाजयं साम गातव्यम्; एवं सति तिस्रो बृहत्यः सामद्वयार्थं द्विरावर्त्त्यमानाः षट् सम्पद्यन्ते। तथा "प्र तु द्रव"–इत्यादिषु (उ० आ० १.१.१०.१–३.) 'तिसृषु त्रिष्टुप्सु' स्तुवते‡। एवं सति स एष

---

* छन्दोगाम्नाये 'उच्चा ते जातम्'–इति, 'स न इन्द्राय'–इति, 'एना विश्वानि'–इति, ऋक्त्रयाणां समूह मेकं तृचं सूक्त माम्नात मस्ति (उ० आ० १.१.८.१—३.)। तत्र 'गायत्रेण स्तुत्वा'–इत्यादि ब्राह्मणशासनात् (ता० ब्रा० ७.३.११.) अग्निष्टोमीयमाध्यन्दिनपवमाननिष्पत्तये 'गायत्रं' नाम साम गातव्यं भवति। तत्स्वरूपन्तु गुरुमुखादुह्यप्रयोगादिदर्शनाच्चावगन्तव्यम्, प्रकाशितञ्च तन्मया सामसंग्रहे। ततस्तमेव तृचात्मकं सूक्त माश्रित्य 'निधनवता स्तुवन्ति'–इत्यादिब्राह्मणशासनात् (ता० ब्रा० ७.३.१३.) तदर्थ मेव 'आमहीयवं' नाम साम च गातव्यं भवति। तदेव ऊहगानग्रन्थस्यादिमं साम। तदित्थं गायत्रामहीयवसामद्वयार्थं द्विरावर्त्त्यमानास्तास्तिस्र एव ऋचः षट् सम्पद्यन्ते।

† अस्ति छन्दोगाम्नाये 'पुनानः सोम'–इति, 'दुहान ऊधर्दिव्यम्'–इति, ऋग्द्वयात्मक मेकं सूक्तम् (उ० आ० १.१.९.१,२.)। तत्र 'ऐडेन बृहती मारभन्ते'–इत्यादिब्राह्मणशासनात् (ता० ब्रा० ७.३.१४.) अग्निष्टोमीयमाध्यन्दिनपवमाननिष्पत्तये 'रौरवं' नाम साम गातव्यं भवति। श्रूयते च तदूहगाने (१.१.२.)। ततस्त मेव द्व्यृचं सूक्त माश्रित्य 'तत्रापि त्रिणिधनम्'–इत्यादिब्राह्मणशासनात् (ता० ब्रा० ७.३.१७.) तदर्थ मेव 'यौधाजयं' नाम साम च गातव्यं भवति। तदपि श्रूयते तत्रैव तत उत्तरम् (ऊ० गा० १.१.३.)।

‡ 'औशनं'-नामेति शेषः। तच्च श्रूयते यौधाजयानन्तर मेव (ऊ० गा० १.१.४.)। 'अनिधनवन्तो भवति'–इत्यादि च तद्विधायकं ब्राह्मणम् (७.३.२३.)।

माध्यन्दिनपवमानः 'त्रिच्छन्दाः' भवति *; गायत्री-बृहती-त्रिष्टुब्रूपाणां त्रयाणां छन्दसां सद्भावात्। तथा स पवमानः पञ्चदशस्तोमोपेतः। तस्य च स्तोमस्य प्रकारः छन्दोगब्राह्मणे एव माम्नायते— "पञ्चभ्यो हिङ्करोति, स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभिः"-इति (ता०ब्रा०२.४.१.)। अस्याय मर्थः—तृचात्मक मेकं सूक्तं त्रिरावर्त्तनीयम्। तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासो विधेयः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ चरमायाः। एवं प्रतिसाम सावृत्ताभिः पञ्चदशभिः ऋग्भिरुपेतत्वात्पञ्चदशस्तोम इति। एवं सत्यत्र चोद्यवादिन आहुः,— हे होतः! ते 'एषः' यथोक्तलक्षणः 'पवमानः' कथं मरुत्वतीयशस्त्रेणानुशस्तो भवति? अनुशंसनं चान्याय्यम्; "यथा वाव स्तोत्र मेवं शस्त्रम्"-इतिन्यायात्। अतोऽत्र स्तोत्रशस्त्रयोर्वैलक्षण्य मयुक्त मिति चोद्यान्तरम्॥

तत्र द्वितीयस्य चोद्यस्य तावदुत्तरं दर्शयति—"ये एव गायत्र्या उत्तरे प्रतिपदो यो गायत्रो ऽनुचरस्ताभिरेवास्य गायत्र्योऽनुशस्ता भवन्त्येताभ्या मेवास्य प्रगाथाभ्यां बृहत्योऽनुशस्ता भवन्ति"-इति। "आ त्वा रथम्"-इत्यस्मिन्मरुत्वतीयशस्त्रस्य ( ६५ पृ० ) प्रतिपद्रूपे तृचे प्रथमा ऋगनुष्टबेव, 'उत्तरे' प्रतिपद्रूपे द्वे ऋचौ गायत्र्यौ विद्येते; यश्चान्यः "इदं वसो सुत मन्धः"-इति ( ६६ पृ० ) अनुचराख्यस्तृचो गायत्रः; 'ताभिरेव' पञ्चभिर्गायत्रीभिः 'अस्य' होतुः

* "माध्यन्दिनं सवनं पुपुवे त्रिभिश्च छन्दोभिः पञ्चभिश्च सामभिः"-इति ता० ब्रा० ७.३.२। गायत्रीत्रिष्टुब्बृहतीभिश्छन्दोभिः, गायत्रामहीयवरौरवयौधाजयौशनैश्च सामभिरित्यर्थः।

पवमानस्तोत्रगता गायत्र्यो ऽनुशस्ता भवन्ति। "इन्द्र नेदीयः"-इति (६६ पृ०) योऽय मिन्द्रनिहवः प्रगाथः, यश्च "प्र नूनं ब्रह्मणस्पतिः"-इति (७१ पृ०) ब्राह्मणस्पत्यः प्रगाथः, 'एताभ्याम्' उत्तराभ्यां * पवमानस्तोत्रगताः 'बृहत्यः' अनुशस्ता भवन्ति ; प्रग्रथनेन बृहतीसम्पादनस्योभयत्र समानत्वात् ॥ यत् त्रिष्टुभा मनुशंसनं तदुपरिष्टादभिधास्यते (१७ पं० ) ॥

अथ प्रसङ्गात् प्रथमचोद्यस्यापि (७२पृ०१पं०) परिहारं दर्शयन् पुनःपुनरादानस्यानुशंसनं दर्शयति— "तासु वा एतासु बृहतीषु सामगा रौरवयौधाजयाभ्यां पुनरादायं स्तुवते ; तस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते, तच्छस्त्रेण स्तोत्र मन्वेति"-इति। "पुनानः सोम"-इत्यस्मिन् प्रगाथे या बृहत्यः प्रग्रथनेन सम्पादिताः, 'तासु' एतासु बृहतीषु रौरवाख्येन यौधाजयाख्येन च साम्ना पुनः-पुनः पठित मेव पाद मादायादाय स्तुवते ; तस्मात् 'एतौ' इन्द्रनिहव-ब्राह्मणस्पत्यप्रगाथौ सामगैरस्तुतावपि सन्तौ होत्रा पुनः-पुनः पठित मेव पाद मादायादाय शस्येते। तथा च सत्यं होता स्वकीयेन शस्त्रेण स्तोत्र मनुगच्छति ॥

इदानीं त्रिष्टुभा मनुशंसनं दर्शयति— "ये एव त्रिष्टुभौ धाय्ये, यत् त्रैष्टुभं निविद्धानं, ताभिरेवास्य त्रिष्टुभोऽनुशस्ता भवन्ति" -इति। यथा सामिधेनीषु प्रक्षिप्यमाणाना † मृचां धाय्येति सञ्ज्ञा ‡, एव मत्रापि। तथा सति "अग्निर्नेता भग इव क्षितीनाम्"-इत्येका (सं० ३.२०.४.) धाय्या, "त्वं सोम क्रतुभिः"-इत्यपरा ( सं० १.९१.२. ), 'ये एव' त्रिष्टुप्छन्दस्के धाय्ये विद्येते, यच्च त्रिष्टुप्छन्दस्कं "जनिष्ठा उग्रः"-इत्यादिकं ( सं० १०.७३.१. )

* उभाभ्यां' घ। † 'प्रक्षेपणीयाना' घ। ‡ १ भा० २३पृ० द्र०।

'निविद्धानं' सूक्तम्,—निवित्पदानि धीयन्ते निक्षिप्यन्ते यस्मिन् सूक्ते तत् निविद्धानम् ; 'ताभिरेव' सूक्तगताभिर्धाय्यासहिताभिस्त्रिष्टुब्भिः 'अस्य' होतुः स्तोत्रगताः 'त्रिष्टुभः' अनुशस्ता भवन्ति॥

उक्तार्थवेदनं प्रशंसति— "एव मु हास्यैष त्रिच्छन्दाः पञ्चदशो माध्यन्दिनः पवमानो ऽनुशस्तो भवति य एवं वेद"-इति ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
षष्ठः खण्डः ॥ ६ ( १७ ) ॥

---

॥ अथ सप्तमः खण्डः ॥

धाय्याः शंसति धाय्याभिर्वै प्रजापतिरिमांल्लोकानधयद्यं यं काम मकामयत तथैवैतद्यजमानो धाय्याभिरेवेमांल्लोकान् धयति यं यं कामं कामयते य एवं वेद यदेव धाय्या३ः यत्र यत्र वै देवा यज्ञस्य च्छिद्रं निरजानंस्तद् धाय्याभिरपिदधुस्तद् धाय्यानां धाय्यात्वं मच्छिद्रेण हास्य यज्ञेनेष्टं भवति य एवं वेद यद्वेव धाय्या३ः स्यूमहै तद्यज्ञस्य यद्धाय्यास्तद्यथा सूच्या वासः सन्दधदियादेव मेवैताभिर्यज्ञस्य च्छिद्रं सन्दधदेति य एवं वेद यद्वेव धाय्या३ः तान्यु वा

एतान्युपसदा मेवोक्थानि यद् धाय्या अग्निर्नेतेत्याग्नेयी प्रथमोपसत्तस्या एतदुक्थं त्वं सोमक्रतुभिरिति सौम्या द्वितीयोपसत्तस्या एतदुक्थं पिन्वन्त्यप इति वैष्णवी तृतीयोपसत्तस्या एतदुक्थं यावन्तं ह वै सौम्येनाध्वरेणेष्ट्वा लोकं जयति त मत एकैकयोपसदा जयति य एवं वेद यश्चैवं विद्वान् धाय्याः शंसति तद्धैक आहुस्तान्वो मह इति शंसेदेतां वाव वयं भरतेषु शस्यमाना मभिव्यजानीम इति वदन्त स्तत्तन्नादृत्यं यदेतां शंसेदीश्वरः पर्जन्यो ऽवर्ष्टोः* पिन्वन्त्यप इत्येव शंसेद्वृष्टिवनि पदं मरुत इति मारुत मत्यं न मिहे वि नयन्तीति विनीतवद्यद्विनीतवत्तद्विक्रान्तवद्यद्विक्रान्तवत्तद्वैष्णवं वाजिन मितीन्द्रो वै वाजी तस्यां वा एतस्यां चत्वारि पदानि वृष्टिवनि मारुतं वैष्णव मैन्द्रं सा वा एषा तृतीयसवनभाजना सती मध्यन्दिने शस्यते तस्मादिदं भरतानां पशवः सायङ्गोष्ठाः सन्तो मध्यन्दिने सङ्गविनी मायन्ति सो जगती जागता हि पशव आत्मा यजमानस्य मध्यन्दिनस्तद्यजमाने पशून् दधाति ॥ ७ (१८) ॥

मरुत्वतीयशस्त्रे प्रक्षेपणीया ऋचो विधत्ते— "धाय्याः शंसति"

---

* 'ऽवष्टोः' क, ख ।

–इति। "अग्निर्नेता"–इत्येका (सं०३.२०.४.), "त्वं सोम क्रतुभिः" –इति द्वितीया (सं०१.९१.२.), पिन्वन्त्यपः"–इति तृतीया (सं० १.६४.६.) ; ताः शंसेत् ॥

तासां प्रशंसा माह— "धाय्याभिर्वै प्रजापतिरिमांल्लोकानधयद् यं यं काम मकामयत"–इति। पुरा प्रजापतिर्यं यं लोकं कामितवान्, तानिमान् लोकानुक्ताभिर्धाय्याभिः 'अधयत्' अपिबत्। लोकशब्देन जलम्। *** ॥

वेदनं प्रशंसति— "तथैवैतद्यजमानो धाय्याभिरेवेमांल्लोकान् धयति यं यं कामं कामयते य एवं वेद यदेव धाय्याः"–इति। या एवोक्ता धाय्याः सन्ति, ताभिर्वेदिता यजमानः कामितं लोकं धयति ॥ अत्र धयत्याभिरिति 'धाय्या'-शब्दनिर्वचन मर्थाद्दर्शितम् ॥

प्रकारान्तरेण प्रशंसा माह— "यत्र यत्र वै देवा यज्ञस्य च्छिद्रं निरजानंस्तद्धाय्याभिरपिदधुस्तद्धाय्यानां धाय्यात्वम्"–इति। यज्ञसम्बन्धिनि यस्मिन्-यस्मिन्नङ्गे 'छिद्रं' वैकल्यं देवा निर्ज्ञातवन्तः, 'तत्' छिद्रं धाय्याभिः 'अपिदधुः' आच्छादितवन्तः ॥ तस्माद्धयत्याभिरिति व्युत्पत्त्या धाय्यात्वं सम्पन्नम् ॥

वेदनं प्रशंसति— "अच्छिद्रेण हास्य यज्ञेनेष्टं भवति य एवं वेद यद्वेव धाय्या३ः"–इति। 'यद्वेव'-इत्यत्र योऽय मुकारः, सोऽयं पूर्वेण फलेन समुच्चयार्थः ;— न केवलं पूर्वं फलं किं त्विद मपीत्यर्थः। अत्र पूर्ववत् प्लुतिः प्रशंसाद्योतनार्था ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "स्यूमहैतद्यज्ञस्य यद्धाय्यास्तद्यथा सूच्या वासः सन्दधदियादेव मेवैताभिर्यज्ञस्य च्छिद्रं सन्दधदेति य एवं वेद यद्वेव धाय्या३ः"–इति ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "तान्यु वा एतान्युपसदा

मेवोक्थानि यद्धाय्याः ; अग्निर्नेतेत्याग्नेयी प्रथमोपसत्, तस्या एतदुक्थं ; त्वं सोमक्रतुभिरिति, सौम्या द्वितीयोपसत्, तस्या एतदुक्थं ; पिन्वन्त्यप इति, वैष्णवी तृतीयोपसत्, तस्या एतदुक्थम्"–इति । उपसदा मर्थवादे अग्निरनीकं, सोमः शल्यं, विष्णुस्तेजन मिति प्रस्तुत्य अग्न्यादिदेवताकास्तिस्र उपसदः समाम्नाताः* ; अत्रापि 'अग्निर्नेता'-इत्यादयस्तद्देवताका एव धाय्याः श्रुताः । एकैका धाय्या एकैकस्य उपसदः शस्त्रम् ॥

उक्तार्थवेदनं, तत्पूर्वकं शंसनं च प्रशंसति— "यावन्तं ह वै सौम्येनाध्वरेणेष्ट्वा लोकं जयति, त मत एकैकयोपसदा जयति,—य एवं वेद, यश्चैवं विद्वान् धाय्याः शंसति"–इति । वेदिता शंसिता च एकैकधाय्यारूपयोपसदा कृत्स्नं सोमयागफलं प्राप्नोति । उपसत्सम्बन्धिशस्त्रत्वेनाभिहितत्वादुपसत्त्वोपचारः ॥

अत्र कश्चित् पूर्वपक्ष मुपन्यस्यति— "तद्वैक आहुस्तान्वो मह इति शंसेदेतां वाव वयं भरतेषु शस्यमाना मभिव्यजानीम इति वदन्तः"–इति । 'तद्' तत्रैव तृतीयधाय्याविषये केचिदेव माहुः,— "तान्वो मह्रो मरुतः"—इत्येतां ( सं० २. ३४. ११.) वैष्णवीं तृतीयां धाय्यां शंसेत्, न तु "पिन्वन्त्यपः"-इत्येताम् ( ७८ पृ० )। तत्रोपपत्तिं चैव माहुः,—बिभर्त्ति फल मिति भरो यज्ञः, तं भरं तन्वन्तीति 'भरताः' ऋत्विजः ; तेषु पूर्वकालीनेषु "तान्वो महः"- इत्येता मेवर्चं शस्यमानां वय मभिव्यजानीम इति स्वानुभव मितरेषा मग्रे वदन्तस्तं पूर्वपक्ष माहुः ॥

तं निराचष्टे— "तत्तन्नादृत्यम्"-इति । तद्विषयं तन्मतं नादरणीयम् । विपक्षे बाधकं दर्शयति— "यदेतां शंसेदीश्वरः

* १ भा० १८० पृ० ४ पं० द्रष्टव्यम् ।

पर्जन्यो ऽवर्ष्टोः”–इति। ‘यत्’ यदि होता “तान्वो मह:”–इति ‘एताम्’ ऋचं शंसेत्, तदानीं ‘पर्जन्य:’ मेघ: स्वस्वकालेषु ‘अवर्ष्टो* ईश्वर:’ वृष्टिराहित्यं कर्तुं समर्थो भवति,— वृष्टिर्न भवेत्; वृष्ट्यनुरूपाणां पदानां तस्या मृच्यभावादित्यर्थ: ॥

सिद्धान्तं दर्शयति— “पिन्वन्त्यप इत्येव शंसेद्”–इति। इयमेव धाय्या, न तु “तान्वो मह:”–इत्यादिकापि। अत्र विहिताया मृचि वृष्ट्यनुकूलपदसद्भावं दर्शयति— “वृष्टिवनि पदं, मरुत इति मारुतम्, अत्यं न मिहे वि नयन्तीति विनीतवद्,— यद्विनीतवत्, तद्विक्रान्तवद्,—यद्विक्रान्तवत्, तद्वैष्णवं, वाजिन मितीन्द्रो वै वाजी; तस्यां वा एतस्यां चत्वारि पदानि,—वृष्टिवनि, मारुतं, वैष्णवम्, ऐन्द्रम्”–इति। अत्र† ‘पिन्वन्त्यप:’–इति पदं श्रूयते, तत् सेचनार्थम्; ‘पिवि सेचने’--इत्यस्मात् (भ्वा० ५८८) धातोरुत्पन्नत्वात्। ‘मरुत:’—इति मारुतं पदम्, तदपि वृष्ट्यनुकूलम्; पुरोवातस्य वृष्ट्यङ्गत्वात्। “अत्यं न मिहे वि नयन्ति वाजिनम्”–इतितृतीयपादे विनीतवत्पद मस्ति; ‘वि नयन्ति’–इत्यस्य नयतिधातुजन्यत्वात्। तेन च विनयेन वृष्टिपातनं लक्ष्यते। किञ्च यद्विनीतवत्पदम्, तद्विक्रान्तवदित्यमु मर्थमाचष्टे; धातूना मनेकार्थत्वात्। तथा सति यद्विक्रान्तवत्पदम्, तद् ‘वैष्णवं’ विष्णुसम्बन्धि; “इदं विष्णुर्विचक्रमे”–इति ( सं० १. २२. १७. ) श्रुत्यन्तरात्। तथा सति वैष्णव्यास्तृतीयस्या उपसद: सम्बन्धन मपि भवतीत्यर्थ:। तस्मिन्नेव तृतीयपादे ‘वाजिनम्’-इति

* वृषेस्तोसुनि रूपम् ( पा० ३.४.९ )।

† “पिन्वन्त्यपो मरुत: सुदानव: पयो घृतवद् विदथेष्वाभुव:। अत्यं न मिहे वि नयन्ति वाजिन मुत्सं दुहन्ति स्तनयन्त मक्षितम् ॥”–इति (सं० १.६४.६.) एतस्या मृचि।

पदं विद्यते, तत्रेन्द्रो वाजिशब्दार्थः ; वृष्टिद्वारान्नप्रदत्वेन वाजोऽन्न मस्यास्तीति निर्वक्तुं शक्यत्वात्। उक्तेन प्रकारेण 'तस्याम्' एवैतस्याम् "पिन्वन्त्यपः" —इत्यृचि चत्वारि पदानि वृष्टेरनुकूलानि, —वृष्टिवनि, मारुतं, वैष्णवम्, ऐन्द्रं चेति*। तस्मादत्र पूर्वोक्तदोषो नास्तीत्यर्थः ॥

पुनरप्येता मृचं प्रकारान्तरेण प्रशंसति— "सा वा एषा तृतीयसवनभाजना सती मध्यन्दिने शस्यते ; तस्मादिदं भरतानां पशवः सायङ्गोष्ठाः सन्तो मध्यन्दिने सङ्गविनी मायन्ति ; सो जगती ; जागता हि पशव, आत्मा यजमानस्य मध्यन्दिनस्तद्यजमाने पशून् दधाति"--इति। येयं "पिन्वन्त्यपः"–इत्यृगस्ति, सैषैव 'तृतीयसवनभाजना' जगतीच्छन्दस्कत्वाज्जागतस्य तृतीयसवनस्य योग्या। तादृशी सती होत्रा मध्यन्दिने शस्यते। तस्मादेव कारणादिदं लोके दृश्यते,— सायं काले गोष्ठे व्रजे ये पशवस्तिष्ठन्ति, ते 'सायङ्गोष्ठाः', 'भरतानाम्' ऋत्विजां पशवस्तादृशाः सन्तो मध्यन्दिने 'सङ्गविनीं' सङ्गवकालयोग्यां शालाम् 'आयन्ति' प्राप्नुवन्ति। अय मर्थः— ये पशवः क्षीरं दुहन्ति, ते सायं गृह मागच्छन्ति ; ये तु न दुहन्ति, ते सायं व्रजे एव निवसन्ति ; उभयविधा अपि ते मध्याह्नकाले घर्मकालीनसन्तापनिवारणाय निर्मितां सङ्गवकालयोग्यां शाला मागच्छन्ति ;—तदेतन्मध्याह्नपाठनिमित्त मिति। किञ्च 'सो' सा पूर्वोक्ताप्यृग् जगतीच्छन्दस्का, पशवश्च जगतीच्छन्दसा सह प्रजायन्ते,—मध्यदेशादुत्पन्न-

---

* (१) 'वृष्टिवनि' वृष्टिसम्भजनकारि पिन्वन्तीति। (२) 'मारुतं' मरुत इति। (३) 'वैष्णवम्' विनयन्तीति। (४) 'ऐन्द्रम्' वाजिन मिति।

त्वात्* 'जागताः', मध्यन्दिनकालश्च यजमानस्यात्मा। तथा सति तस्मिन् काले जगतीपाठेन यजमाने पशून् सम्पादयति† ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये सप्तमः खण्डः ॥ ७ ( १८ ) ॥

---

॥ अथ अष्टमः खण्डः ॥

मरुत्वतीयं प्रगाथं शंसति पशवो वै मरुतः पशवः प्रगाथः पशूना मवरुद्ध्यै जनिष्ठा उग्रः सहसे तुरायेति सूक्तं शंसति तद्वा एतद् यजमानजनन मेव सूक्तं यजमानं ह वा एतेन यज्ञाद्देवयोन्यै प्रजनयति तत्सञ्जयं भवति सं च जयति वि च जयत एतद्गौरिवीतं गौरिवीतिर्ह वै शाक्त्यो नेदिष्ठं स्वर्गस्य लोकस्यागच्छत् स एतत्सूक्त मपश्यत् तेन स्वर्गं लोक मजयत्तथैवैतद्यजमान एतेन सूक्तेन स्वर्गं लोकं जयति तस्यार्द्धाः शस्त्वार्द्धाः परिशिष्य मध्ये निविदं दधाति स्वर्गस्य हैष लोकस्य रोहो यन्निवित् स्वर्गस्य

---

* १ भा० २०४ पृ० १२ पं०। ता० ब्रा० ६.१.१०।

† "अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वन्त्यप इति धाय्याः"—इति आश्व० श्रौ०५.१४.१७।

हैतल्लोकस्याक्रमणं यन्निवित् ता माक्रममाण इव शंसेदुपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यादिति नु स्वर्गकामस्याथाभिचरतो यः कामयेत क्षत्रेण विशं हन्या मिति निस्तर्हि निविदा सूक्तं विशंसेत् क्षत्रं वै निविद् विट् सूक्तं क्षत्रेणैव तद्विशं हन्ति यः कामयेत विशा क्षत्रं हन्या मिति निस्तर्हि सूक्तेन निविदं विशंसेत् क्षत्रं वै निविद् विट् सूक्तं विशैव तत् क्षत्रं हन्ति य उ कामयेतोभयत एनं विशः पर्यवच्छिनदानीत्युभयतस्तर्हि निविदं व्याह्वयीतोभयत एवैनं तद्विशः पर्यवच्छिनत्तीति न्वभिचरत इतरथा त्वेव स्वर्गकामस्य वयः सुपर्णा उप सेदुरिन्द्र मित्युत्तमया परिदधाति प्रियमेधा ऋषयो नाधमानाः अप ध्वान्त मूर्णुहीति येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदप हैवास्मात्तल्लुप्यते पूर्द्धि चक्षुरिति चक्षुषी मरीमृज्येताजरसं ह चक्षुष्मान् भवति य एवं वेद मुमुग्ध्यस्मान्निधयेव बद्धानिति पाशा वै निधा मुमुग्ध्यस्मान् पाशानिव बद्धानित्येव तदाह ॥८(१६)॥

अथ प्रगाथान्तरं विधत्ते— "मरुत्वतीयं प्रगाथं शंसति ; पशवो वै मरुतः, पशवः प्रगाथः, पशूना मवरुद्ध्यै"–इति । यस्मिन् प्रगाथे मरुतः श्रूयन्ते, सोऽयं मरुत्वतीयः प्रगाथः । "प्र व इन्द्राय

बृहते मरुतो ब्रह्मार्चत"-इत्येतस्मिन् प्रगाथे ( सं० ८.८९.३.) मरुतः श्रूयन्ते, त मिमं शंसेत् *। पशूनां प्रावरणराहित्येऽपि अरण्यसञ्चारकाले वायवो न तान् बाधन्ते, तत्सम्बन्धान्मरुतां पशुत्वम्, प्रगाथस्य च पशुप्राप्तिहेतुत्वात्पशुत्वम् ; अतः स प्रगाथः पशुप्राप्त्यै भवति ॥

अथ निविद्धानीयं सूक्तं विधत्ते—"जनिष्ठा उग्रः सहसे तुरायेति सूक्तं शंसति ; तद्वा एतद्यजमानजनन मेव सूक्तं, यजमानं ह वा एतेन यज्ञाद् देवयोन्यै प्रजनयति"-इति । होता "जनिष्ठा उग्रः"-इत्यादि ( सं० १०.७३.१.) सूक्तं शंसेत् । 'तदेतत्' सूक्तं 'यजमानजनन मेव'। कथ मिति, तदुच्यते— 'एतेन' सूक्तेन होता 'यज्ञात्' अनुष्ठीयमानात् 'देवयोन्यै' देवलोकस्थानार्थं यजमानं प्रजनयति । तस्माद् यजमानजननत्वम् ॥

तेन रूपेण प्रशस्य पुनः प्रकारान्तरेण प्रशंसति— "तत्सञ्जयं भवति ; सं च जयति, वि च जयते"-इति । यस्मादेतेन सूक्तेन संयुज्यापि † शत्रून् यजमानो जयति, वियुज्यापि जयते ; तस्मात् सूक्तं 'सञ्जयम्'। समीचीनो जयो येन सूक्तेनेति समासः ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "एतद्गौरिवीतं ; गौरिवीतिर्ह वै शाक्त्यो नेदिष्ठं स्वर्गस्य लोकस्यागच्छत्, स एतत् सूक्त मपश्यत् ; तेन स्वर्गं लोक मजयत् ; तथैवैतद्यजमान एतेन सूक्तेन स्वर्गं लोकं जयति"-इति। शक्तिनामकस्य महर्षेः कुले जातः 'शाक्त्यः', 'गौरिवीतिः' नाम, महर्षिः । स तु स्वर्गसमीपं गत्वा प्रवेष्टु मशक्तः सन्, तत्साधनत्वेनैतत् सूक्तं दृष्ट्वा, तेन स्वर्गं प्राविशत्।

* "प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः"-आश्व० श्रौ० ५.४.१८ ।

† 'संहृत्यापि' घ।

तस्मादेतत् सूक्तं महर्षिनाम्ना गौरिवीत मित्युच्यते (सं०१०.७३. १-११.)। यथा महर्षिस्तथा यजमानोऽप्येतेन सूक्तेन स्वर्गं प्राप्नोति ॥

तस्मिन् सूक्ते निवित्प्रक्षेपस्य स्थानं विधत्ते — "तस्यार्द्धाः शस्त्वार्द्धाः परिशिष्य मध्ये निविदं दधाति"-इति । 'तस्य' सूक्तस्य सम्बन्धिनोष्वृत्तु भागद्वयं कृत्वा, द्वयोर्भागयोर्मध्ये "इन्द्रो मरुत्वान्"-इति ( निवि० २.१. ) एतां निविदं शंसेत् । नन्वस्मिन्नेकादशर्चे सूक्ते समभागो न सम्भवतोति चेत्, तर्हि प्रथमभागे काञ्चिदधिकां शस्त्वा तत ऊर्द्धं प्रक्षिपेत्; "एकभूयसोः शस्त्वा"-इत्युक्तत्वात्* ॥

निविदं प्रशंसति—"स्वर्गस्य हैष लोकस्य रोहो यन्निवित्"-इति । रोहः आरोहणं, हेतुरित्यर्थः ॥ तत्र स्वरविशेषं विधत्ते — "स्वर्गस्य हैतल्लोकस्याक्रमणं यन्निवित्, ता माक्रममाण इव शंसेदुपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यादिति नु स्वर्गकामस्य"-इति। येयं निविदस्ति, तदेतत् 'स्वर्गस्याक्रमणं' सोपानस्थानीयम् । तस्माद्यथा लोके सोपानारोहणक्रमेण पुनः-पुनः श्वासं करोति, तदनुकारिणं स्वरं कृत्वा तथैव पठेत् । एवं पाठे सति 'अस्य' यजमानस्य 'यः' पुमान् प्रियः स्यात्, स पुमानेनं यजमानम् 'उपैव' समीप एव 'निगृह्णीत' स्वीकुर्यात् । 'इति नु' एष एव प्रयोगः, स्वर्गकामस्यावगन्तव्यः । वक्ष्यमाणप्रयोगेण शाङ्कर्यपरिहाराय स्वर्गकामस्येत्युक्तिः ॥

अभिचारप्रयोगं† विधत्ते — "अथाभिचरतः,— यः कामयेत

---

* जनिष्ठा उग्र इति । एकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यात् सर्वत्र"-इति आश्व० श्रौ० ५.१४.१९, २० । 'एकां भूयसीषु शस्त्वा' ग।

† 'प्रयोगान्तरं' घ।

क्षत्रेण विशं हन्या मिति, त्रिस्तर्हि निविदा सूक्तं विशंसेत्; क्षत्रं वै निविद्विट् सूक्तं, क्षत्रेणैव तद्विशं हन्ति"-इति। क्षत्रियजात्या वैश्यजातेर्बधं कामयमानो यजमानो निविदा सूक्तं 'त्रिर्विशंसेत्'। एतदुक्तं भवति— सूक्तस्यादौ मध्ये चान्ते च निविदं दध्यात्, तदिदं सूक्तविच्छेदपूर्वकं* शंसन मिति। निविदः क्षत्रियजातित्वं, सूक्तस्य वैश्यजातित्वं पूर्व मेवाम्नातम् †। अत उक्तशंसनेन क्षत्रियजात्या वैश्यजातिं हन्ति। सोऽय मेकोऽभिचारप्रकारः॥

अथैतद्विपर्ययेणाभिचारं विधत्ते— "यः कामयेत विशा क्षत्रं हन्या मिति, त्रिस्तर्हि सूक्तेन निविदं विशंसेत्; क्षत्रं वै निविद्विट् सूक्तं, विशैव तत् क्षत्रं हन्ति"-इति। निवित्पदानाम् (निवि०२.१-२०.) आदौ मध्ये अन्ते च सूक्तं पठेत्, तदेतत् निविद्विच्छेदरूपं शंसनम्॥

प्रकारान्तरेणाभिचारं विधत्ते—"य उ कामयेतोभयत एनं विशः पर्यवच्छिनदानीत्युभयतस्तर्हि निविदं व्याह्वयीतोभयत एवैनं तद्विशः पर्यवच्छिनत्ति"-इति। 'य उ' यस्तु होता 'एनं' यजमानम् 'उभयतः' पूर्वोत्तरभागयोः सम्बन्धिनीः 'विशः' प्रजाः 'पर्यवच्छिनदानि' परितो विच्छिन्ना करवाणीति कामयेत,— स्वस्मात् पूर्वभाविन्यः पितृपितृव्यमातुलादयो याः प्रजाः, स्वस्योत्तरभाविन्यः पुत्रजामात्रादयो याः प्रजाः, तासां सर्वासा मवच्छेदं करवाणीत्यर्थः। यद्वा 'उभयतः' मातृपक्षे पितृपक्षे च विद्यमानानां प्रजानाम् 'अवच्छेदं' विरोधं करवाणीत्येवं 'यः' होता यजमानं द्वेष्टि, स होता 'निविद मुभयतः' निविद आदावन्ते च 'व्याह्वयीत' विविध माहावं कुर्यात्;—आदावपि "शोंसा-

* सूक्तविच्छेदकं ग। † १ भा० ४३४ पृ० १० प०।

वीम्"–इत्येत माहावमन्त्रं पठेत्, अन्तेऽपि तथा पठेदित्यर्थः। तथा सति 'एनं' यजमानं पूर्वापरभागयोर्मातृपक्षपितृपक्षयोश्च प्रजाभिः सहावच्छिनत्ति ॥

उक्तविधीना मसाङ्कर्याय निगमयति— "इति न्वभिचरत इतरथा त्वेव स्वर्गकामस्य"–इति। 'इति नु' "यः कामयेत, क्षत्रेण" –इत्यादुरक्त एव प्रकारः 'अभिचरतः' द्रष्टव्यः। 'इतरथा तु' अनेवप्रकारं तु, पूर्वोक्तं सूक्तमध्ये निविद्यक्षेपरूपं, सोपानारोहणसदृशस्वरोपितं 'स्वर्गकामस्य' द्रष्टव्यम् ॥

अन्तिमया सूक्तगतयर्चा (सं०१०.७३.११.) समाप्तिं विधत्ते— "वयः सुपर्णा उपसेदुरिन्द्र मित्युत्तमया परिदधाति"–इति। वेतिर्धातोर्गत्यर्थस्य 'वयः' इति रूपम्; गमनकुशला इत्यर्थः। अत एव 'सुपर्णाः' पक्षिसदृशाः केचिद् 'इन्द्रं' स्वर्गवासिनम् 'उपसेदुः' प्राप्तवन्तः। इति तस्य पादस्यार्थः। द्वितीयपादं स्तुत्वोधत्वाभिप्रायेण पठति— "प्रियमेधा ऋषयो नाधमानाः"–इति। ग्रन्थतदर्थावधारणशक्तिर्मेधा, सा प्रिया येषा मृषीणां ते 'प्रियमेधाः', 'ऋषयः' अतीन्द्रियार्थद्रष्टारः 'नाधमानाः' किञ्चित् स्वकार्यं याचमानाः, "इन्द्र मुपसेदुः"–इति पूर्वेणान्वयः। तृतीयपादस्य पूर्वभाग मनूद्य व्याचष्टे— "अप ध्वान्त मूर्णुहीति; येन तमसा प्रावृतो मन्येत, तन्मनसा गच्छेदप हैवास्मात् तल्लुप्यते"–इति। हे इन्द्र! 'ध्वान्तं' तमः 'अपोर्णुहि' अपसारय। एतस्मिन् भागे पठिते सति तमो लुप्यते। होता येन तमसा 'प्रावृतः' आच्छादितोऽह मिति मन्येत, 'तत्' तमो 'मनसा गच्छेत्' ध्यायेत्। तमो हि बहुविधम्,—दृष्टिनिरोधक मेकं, मोहरूपं द्वितीयम्, पापरूपं तृतीयम्। तेषां मध्ये येन स्वस्य बाधः,

तत् तमः एतद्भागपाठकाले विनष्ट मिति ध्यायेत्। तथा 'तत्' तमः 'अस्मात्' पुरुषाद् विनश्यत्येव। तस्य पादस्योत्तरभागे किञ्चिदनुष्ठानं विधत्ते— "पूर्द्धि चक्षुरिति चक्षुषी मरीमृज्येत"-इति। हे इन्द्र! 'चक्षुः पूर्द्धि' दृष्टिं पूरय। एतं भागं पठन् स्वेन हस्तेन चक्षुषी 'मरीमृज्येत' पुनः-पुनः शोधयेत्॥

वेदनं प्रशंसति— "आ जरसं ह चक्षुष्मान् भवति य एवं वेद"-इति। 'आ जरसं' जरासमाप्तिपर्यन्तम्॥

चतुर्थपाद मनूद्य व्याचष्टे— "मुमुग्ध्यस्मान्निधयेव बद्धानिति; पाशा वै निधा; मुमुग्ध्यस्मान् पाशादिव बद्धानित्येव तदाह"-इति। हे इन्द्र! 'निधयेव' पाशेनेव तमसा 'बद्धान्' अस्मान् 'मुमुग्धि' मोचय। अस्मिन् पादे 'निधा'-शब्देन पाशबन्धनहेतवो रज्जवो विवक्षिताः। अतो निधयेव बद्धानित्युक्ते 'पाशादिव बद्धान्'-इत्युक्तं भवति*॥ ८॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
अष्टमः खण्डः॥ ८ (१९)॥

---

॥ अथ नवमः खण्डः॥

**इन्द्रो वै वृत्रं हनिष्यंत्सर्वा देवता अब्रवीदनु मोपतिष्ठध्व मुप माह्वयध्व मिति तथेति तं हनिष्यन्त**

* "निधा पाश्या भवति"-इत्यादि निरु० ४.१.२।

आद्रवन्त्सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति तानभिप्राश्वसीत् तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्मरुतो हैनं नाजहुः प्रहर भगवो जहि वीरयस्वेत्येवैनं एतां वाचं वदन्त उपातिष्ठन्त तदेतदृषिः पश्यन्नभ्यनूवाच वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासीति सोऽवेदिमे वै किल मे सचिवा इमे मा ऽकामयन्त हन्तेमानस्मिन्नुक्थ आ भजा इति तानेतस्मिन्नुक्थ आ भजदथ हैते तर्ह्युभे एव निष्केवल्ये उक्थे आसतुर्मरुत्वतीयं ग्रहं गृह्णाति मरुत्वतीयं प्रगाथं शंसति मरुत्वतीयं सूक्तं शंसति मरुत्वतीयां निविदं दधाति मरुतां सा भक्तिर्मरुत्वतीय मुक्थं शस्त्वा मरुत्वतीयया यजति यथाभागं तद्देवताः प्रीणाति ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्टौ ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिरिति यत्र-यत्रैवैभिर्व्यजयत यत्र-यत्र वीर्यमकरोत् तदेवैतत्समनुवेद्येन्द्रेणैनान्त्स सोमपीथान् करोति ॥ ९ ( २० ) ॥

अथ मरुत्वतीयं शस्त्रं तदन्ते पठनीयां याज्यां च प्रशंसितु

मुपाख्यान माह—"इन्द्रो वै वृत्रं हनिष्यंत्सर्वा देवता अब्रवीदनु मोप तिष्ठध्व मुप मा ह्वयध्व मिति ; तथेति ; तं हनिष्यन्त आद्रवन्त्सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति, हन्तेमान् भीषया इति ; तानभि प्राश्वसीत् ; तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्मरुतो हैनं नाजहुः ; प्रहर भगवो जहि वीरयस्वेत्येवैन मेतां वाचं वदन्त उपातिष्ठन्त"–इति। पुरा कदाचिदिन्द्रो वृत्रं हन्तु मुद्यतः सर्वा अपि देवताः प्रत्येव मब्रवीत्,—'अनु मोपतिष्ठध्वम्' आनुकूल्येन मां सेवध्वम्, 'उप मा ह्वयध्वं' वृत्रवधाय प्रवृत्तं माम् 'उपह्वयध्वम्' अनुजानीध्व मिति। ततोऽङ्गीकृत्य सर्वे देवाः 'तं' वृत्रं हन्तु मुद्यता आगच्छन्। तदा 'सः' वृत्रो मां हन्तु मुद्यता आद्रवन्तीति 'अवेत्' स्वमनसा ज्ञातवान्। तत इदं विचारयामास,—हन्त ! सम्यग् जातम् ; देवनिवारणोपायस्य प्रतिभातत्वात् ; —'इमान्' देवान् 'भीषयै' अहं भीतान् करवाणि। इति विचार्य 'तान्' देवान् 'अभि' लक्ष्य 'प्राश्वसीत्' प्रश्वास मकरोत्। 'तस्य' वृत्रस्य 'श्वसथात्' प्रश्वासात् 'ईषमाणाः' बिभ्यतः सर्वे देवाः पलायन मकुर्वन्। वृत्रो हि स्वजन्मानन्तरं प्रतिदिनं सर्वासु दिक्षु शरपातमात्रदेशं प्राप्य वृद्धिं गतवान्। तथा चान्यत्र श्रूयते—"स इषुमात्र मिषुमात्रं विष्वङवर्द्धत, स इमांल्लोकानवृणोद्यदिमांल्लोकानवृणोत्तद् वृत्रस्य वृत्रत्वम्"– इति ( तै० सं० २.४.१२.२. )। तादृशस्य प्रौढ़शरीरस्य प्रश्वासः प्रलयकालीनवायुसमानः ; अतस्तदीयप्रश्वासेन देवाः परमाणव इव दूरे अपसारिताः। तदानीं 'मरुतः' एव 'एनम्' इन्द्रं 'नाजहुः' न परित्यक्तवन्तः। हे इन्द्र ! भगवन् ! वृत्रं वज्रेण 'प्रहर' तेन प्रहारेण 'जहि' मारय, ततो 'वीरयस्व' स्वकीयं वीरत्वं प्रकटय ; 'इति' अनेनैव

प्रकारेण 'एनम्' इन्द्रं प्रति 'एतां' वाचं वदन्तो मरुतस्त मिन्द्र मसेवन्त ॥

उक्त मर्थं मन्त्रसंवादेन दृढयति— "तदेतदृषिः पश्यन्नभ्यनूवाच,—वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः, मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासीति"-इति। कश्चिदृषिर्दिव्यज्ञानेन 'तदेतद्' देवपलायनं पश्यन्, "वृत्रस्य त्वा"-इत्यादिमन्त्रेण प्रकटीचकार। हे इन्द्र! तव सखायो विश्वे देवा ये सन्ति, ते सर्वे वृत्रस्य श्वसथात् पलायमानास्त्वां परित्यक्तवन्तः। तस्मादिदानीं 'ते' तव मरुद्भिः सह सख्य मस्तु; 'अथ' अनन्तरमिमाः सर्वा वृत्रसम्बन्धिनीः सेना जेयसीति (सं०८.९६.७.)॥

अथ मरुता मिन्द्रकृत मुपकारं दर्शयति— "सो ऽवेदिमे वै किल मे सचिवा इमे मा ऽकामयन्त, हन्तेमानस्मिन्नुक्थ आ भजा इति; तानेतस्मिन्नुक्थ आ भजदथ हैते तर्ह्युभे एव निष्केवल्ये उक्थे आसतुः"-इति। 'सः' इन्द्रः स्वमनसा 'अवेत्' विचारितवान्। कथ मिति, तदुच्यते— 'इमे वै किल' पुरतोऽवस्थिताः मरुत एव 'मे' मम 'सचिवाः' सखायः। यस्मात् 'इमे' मरुतो 'मा अकामयन्त' मा मपेक्षितवन्तः, न तु मां परित्यज्य गताः; तस्मादस्मत्सखित्वं हन्त! सम्यगेभिः कृत मित्यहं दृष्टवानस्मि; ततः 'इमान्' मरुतः 'अस्मिन्नुक्थे' माध्यन्दिनसवनगतशस्त्रे 'आभजै' भागिनः करवाणि; 'इति' एवं मनसि विचार्य तथैवाकरोत्। 'अथ' अनन्तरं 'तर्हि' तदा प्रभृति 'एते ह' मरुतो ऽवश्यं शस्त्रभागिनो ऽभूवन्निति शेषः। ततः पूर्वं तु माध्यन्दिनसवने निष्केवल्यनामके शस्त्रे केवलेन्द्रदेवताके उभे आसतुः, न तु तत्र मरुतां प्रवेश आसीत्। तस्मादिदानीं प्रवेश इन्द्रकृत उपकारः॥

इन्द्रेण दत्तान् मरुतां भागान् प्रदर्शयति— "मरुत्वतीयं ग्रहं गृह्णाति, मरुत्वतीयं प्रगाथं शंसति, मरुत्वतीयं सूक्तं शंसति, मरुत्वतीयां निविदं दधाति, मरुतां सा भक्तिः"–इति। मरुतोऽस्य सन्तीति तैः सहितो मरुत्वान् तदीयं ग्रह मध्वर्युर्गृह्णाति। होता "प्र व इन्द्राय बृहते"–इत्येतं ( सं० ८.८९.३. ) मरुत्वतीयं प्रगाथं शंसति, "जनिष्ठा उग्रः"–इत्यादिकं ( सं० १०.७३.१. ) मरुत्वतीयं सूक्तं शंसति, "इन्द्रो मरुत्वान्"–इत्यादिकं ( निवि० २.१. ) मरुत्वतीयां निविदं सूक्ते प्रक्षिपति। ग्रहग्रहणादिसूक्तशंसनान्ता 'सा' सर्वा 'मरुतां' मरुत्सम्बन्धा 'भक्तिः' भागः॥

अथ शस्त्रयाज्यां विधत्ते—"मरुत्वतीय मुक्थं शस्त्वा मरुत्वतीयया यजति, यथाभागं तद् देवताः प्रीणाति"–इति॥ तां याज्यां दर्शयति—"ये त्वाहिहत्ये मघवन्नवर्द्धन्, ये शाम्बरे हरिवो ये गविष्टौ, ये त्वा नून मनुमदन्ति विप्राः, पिबेन्द्र सोमं सगणो मरुद्भिरिति"–इति। हे मघवन् इन्द्र! 'अहिहत्ये' वृत्रवधे 'ये' मरुतः त्वाम् 'अवर्द्धन्' वर्द्धितवन्तः। 'अहि'-शब्दो वृत्रवाची; "अहि माचष्टे वृत्रम्"–इतिवररुचिवचनात्*। शम्बरः कश्चिदसुरः, तत् सम्बन्धी वधः 'शाम्बरः', तस्मिन् ये मरुतस्त्वां 'अवर्द्धन्' वर्द्धितवन्तः,— इत्यन्वयः। गवा मिष्टिरन्वेषणं 'गविष्टिः'। 'बलः' नाम कश्चिदसुरो गुहाया मासीत् †; "इन्द्रो बलस्य बिल मपोर्णोत्"–इतिश्रुत्यन्तरात् ( तै० सं० २. १. ५. १. )। तेन बलेन गावोऽपहृताः, तासां गवा मन्वेषणे ये मरुतस्त्वा मवर्द्धन्, तथा 'ये' मरुतो 'नूनम्' अद्यापि 'विप्राः' ऋत्विजः भूत्वा त्वाम्,

* निघ० १.१०.२१। निरु० २.५.२,३; १०.४.७।

† 'गुहावासी' घ।

'अनुमदन्ति' स्तोत्रैरनुदिनं हर्षयन्ति, हे इन्द्र ! तैर्मरुद्भिः सहितस्त्वं सगणो भूत्वा सोमं पिबेति याज्यामन्त्रार्थः (सं० ३.४७.४.) ॥

एतां याज्यां प्रशंसति— "यत्र-यत्रैवैभिर्व्यजयत, यत्र-यत्र वीर्य मकरोत्, तदेवैतत्समनुवेद्येन्द्रेणैनान्त्सोमपीथान् करोति" —इति । 'यत्र-यत्रैव' यस्मिन्-यस्मिन् वृत्रवधादिके स इन्द्रः 'एभिः' मरुद्भिर्विजयं प्राप्तः, प्राप्य च 'यत्र-यत्र' यस्मिन्-यस्मिन्नपि युद्धादौ 'वीर्यं' शौर्य मकरोत्, 'तदेवैतत्' अखिल मिन्द्राय 'समनुवेद्य' सम्यगनुक्रमेण विज्ञाप्येन्द्रेण सह 'एतान्' मरुतः सोमपानसहितान् करोति ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
नवमः खण्डः ॥ ९ (२०) ॥

---

॥ अथ दशमः खण्डः ॥

इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत् प्रजापति मह मेतदसानि यत् त्व महं महानसानीति स प्रजापतिरब्रवीदथ कोऽह मिति यदेवैतदवोच इत्यब्रवीत्ततो वै को नाम प्रजापतिरभवत्को वै नाम प्रजापतिर्यन्महानिन्द्रोऽभवत् तन्महेन्द्रस्य महेन्द्रत्वं स महान् भूत्वा देवता अब्रवीदुद्धारं म

उद्धरतेति यथाप्येतर्ह्यैच्छति यो वै भवति यः श्रेष्ठता मश्नुते स महान् भवति तं देवा अब्रुवंस्त्वय मेव ब्रूष्व यत्ते भविष्यतीति स एतं माहेन्द्रं ग्रह मब्रूत माध्यन्दिनं सवनानां निष्केवल्य मुक्थानां त्रिष्टुभं छन्दसां पृष्ठं साम्नां त मस्मा उद्धार मुदहरन्नुदस्मा उद्धारं हरन्ति य एवं वेद तं देवा अब्रुवंस्त्वं वा अवोचथा अपि नोऽत्रास्त्विति स नेत्यब्रवीत्कथं वोऽपि स्यादिति त मब्रुवन्नप्येव नोऽस्तु मघवन्निति तानीक्षतैव ॥ १० (२१) ॥

अथ निष्केवल्याख्यं शस्त्रं विधातव्यम्; तस्य चायं सङ्ग्रहश्लोकः—

"स्तोत्रियश्चानुरूपश्च धाय्या प्रागाथिकं तथा ।
निविद्धानीयसूक्तं च निष्केवल्ये प्रकीर्त्तितम्"—इति ।

तदर्थ मादावुपाख्यान माह—"इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्,— प्रजापति मह मेतदसानि, यत्त्व महं महानसानीति ; स प्रजापतिरब्रवीदथ कोऽह मिति ; यदेवैतदवोच इत्यब्रवीत् ; ततो वै को नाम प्रजापतिरभवत्को वै नाम प्रजापतिर्यन्महानिन्द्रो ऽभवत्, तन्महेन्द्रस्य महेन्द्रत्वम्"—इति । इन्द्रः पुरा वृत्रं हत्वा सर्वाः 'विजितीः' जेतव्या भूमीर्विजित्य प्रजापति मिद मब्रवीत्,— हे प्रजापते ! त्व मिदानीं यदसि, एतदह मतः परम् 'असानि' भवानि । किं तदिति वीप्सायां विशेषाकारेणोच्यते । अहं 'महानसानि' सर्वेभ्यो भूतेभ्योऽधिकः पूज्यो

भवानीति। ततः 'सः' प्रजापतिरिद मब्रवीत्,— मदीये महत्त्वे त्वया स्वीकृते सति अनन्तर मह को नाम भविष्यामीति। तत इन्द्र इद मब्रवीत्— हे प्रजापते! स्वात्मान मुद्दिश्य निवेदनेन क इति यदेवैतदवोचः, तदेव त्वं भवेति। तत आरभ्य 'कः'-इत्येतन्नामवान् प्रजापतिरभूत्। एतत्कशब्दवाच्यत्वं सर्वत्र प्रसिद्धम्; अत एव श्रुत्यन्तरे प्रतिग्रहमन्त्रब्राह्मणे एव माम्नायते— "क इदं कस्मा अदादित्याह, प्रजापतिर्वै कः, प्रजापतये ददाति"-इति (तै० ब्रा० २.२.५.५.)। 'क'-शब्दस्य सुखवाचित्वात् तेन प्रजापतेर्व्यवहारे सति सुखी प्रजापतिरित्युक्तं भवति। प्रजापतिगतं महत्त्वं स्वीकृत्येन्द्रो यस्मात् महानभवत्, तस्मान्महेन्द्र नाम सम्पन्नम्। श्रुत्यन्तरेऽप्येतदाम्नातम्— "इन्द्रो वृत्र महन्, तं देवा अब्रुवन्,— महान्वा अय मभूद्यो वृत्र मवधीदिति; तन्महेन्द्रस्य महेन्द्रत्वम्"-इति (तै० सं० ६.५.५.२.)॥

अथेन्द्रस्य महत्त्वप्रयुक्तं सत्कारविशेषं दर्शयति— "स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरतेति; यथाप्येतर्हीच्छति, यो वै भवति, यः श्रेष्ठता मश्नुते, स महान् भवति, तं देवा अब्रुवन्,—स्वय मेव ब्रूष्व यत्ते भविष्यतीति; स एतं माहेन्द्रं ग्रह मब्रूत माध्यन्दिन सवनानां, निष्केवल्य मुक्थानां, त्रिष्टुभं छन्दसां, पृष्ठ साम्नां; त मस्मा उद्धार मुदहरन्"-इति। 'सः' इन्द्रः, उक्तप्रकारेण महत्त्व प्राप्य देवताः प्रत्येतदब्रवीत्,— हे देवताः! 'उद्धारं' उत्कर्षं निमित्तीकृत्य यः पूजाविशेष उद्ध्रियते, सोऽयं सत्कार उद्धारः, तं सत्कारभागं 'मे' मदर्थम् 'उद्धरत' पृथक्कुरुतेति। यथेत्यादिना लौकिकदृष्टान्त उच्यते। 'यो वै भवति, यः पुमान् भवति, ऐश्वर्यं प्राप्नोति, यश्च 'श्रेष्ठतां' विद्याचारादि-

प्रयुक्तं वैशिष्ट्य मश्नुते, 'सः' प्राशीश्वर्यो विशिष्टश्च सर्वेषां मध्ये महान् भवति। स तादृशः पुरुषः 'एतर्ह्यपि' इदानी मपि यथा विशिष्टपूजारूपं भाग मिच्छति, तथा अय मिन्द्रोऽपीत्यध्याहारः। 'तम्' उद्धारेच्छावन्त मिन्द्रं देवा इद मब्रुवन्,—हे इन्द्र! यत् ते प्रियं भविष्यति, तत् स्वय मेव ब्रूष्वेति। ततः 'सः' इन्द्रो ग्रहाणां मध्ये 'एतं' माहेन्द्रग्रह मब्रूत, तथा सवनानां मध्ये माध्यन्दिनं सवनम्, शस्त्राणां मध्ये निष्केवल्यं शस्त्रम्, छन्दसां मध्ये त्रिष्टुभम्, साम्नां मध्ये 'पृष्ठं' पृष्ठस्तोत्रनिष्पादकं बृहद्रथन्तर-वैरूपादिकम्*। ततो देवाः 'अस्मै' इन्द्राय 'त मुद्धारं' माहेन्द्रग्रहा-दिकं यज्ञादुदहरन्। तदेतच्छाखान्तरेऽप्याम्नातम्—"स एतं माहेन्द्र मुद्धार मुदहरत वृत्रं हत्वान्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धार मेव तं यजमान उद्धरते ऽन्यासु प्रजास्वधि"—इति (तै०सं०६.५.५.२,४.)॥

वेदनं प्रशंसति—"उदस्मा उद्धारं हरन्ति य एवं वेद"—इति॥

उद्धारभागं दत्तवतां देवानां तस्मिन्नुद्धारे स्वापेक्षितभागप्रार्थनां दर्शयति— "तं देवा अब्रुवन्,—सर्वं वा अवोचथा अपि नोऽत्रा-स्त्विति; स नेत्यब्रवीत,—कथं वोऽपि स्यादिति; त मब्रुवन्नप्येव नोऽस्तु मघवन्निति; तानीक्षतैव"—इति। उद्धारयुक्तं 'तम्' इन्द्रम्, इतरे देवा इद मब्रुवन्,—हे 'मघवन्' इन्द्र! सर्व मेव यज्ञं स्वसम्बन्धित्वेनोक्तवानसि, अस्माक मप्यत्र सारो भागो-ऽस्त्विति। ततः 'सः' इन्द्र एव मब्रवीत,—अयं सारः सर्वोऽपि

---

* बृहत्, रथन्तरम्, वैरूपम्, वैराजम्, शाक्वरम्, रैवतञ्चेति षट्। ता० ब्रा० ७.६.७। तै० ब्रा० १.२.२.३। "यत् पृष्ठेषु न्यदधुस्तेनेन्द्रं सर्वाणि हि पृष्ठानीन्द्रस्य निष्केवल्यानि"—इति च ता० ब्रा० ७.८.५।

ममैवापेक्षितः, युष्माकं मध्यत भागः कथं स्यात्? नास्त्येव युष्माकं भागः। इति निराकृतवन्तं त मिन्द्रं देवाः प्रार्थयमाना इद मब्रुवन्,— हे मघवन्! 'नः' अस्माक मप्यस्त्येव, सर्वथा भागो ऽपेक्षित एवेति। ततः स इन्द्रः 'तान्' देवान् 'ईक्षतैव' अनुग्रह-दृष्ट्यावलोकितवानेव ॥ १० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
दशमः खण्डः ॥ १० (२१) ॥

---

॥ अथ एकादशः खण्डः ॥

ते देवा अब्रुवन्नियं वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नामास्या मेवेच्छामहा इति तथेति तस्या मैच्छन्त सैनानब्रवीत् प्रातर्वः प्रति वक्तास्मीति तस्मात् स्त्रियः पत्याविच्छन्ते तस्मादु स्त्र्यनुरात्रं पत्याविच्छते तां प्रातरुपायन्त्सैतदेव प्रत्यपद्यत यद्वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः अचेति प्रासहस्पतिस्तुविष्मानितीन्द्रो वै प्रासहस्पतिस्तुविष्मान् यदी मुश्मसि कर्त्तवे करत्तदिति यदेवैतदवोचामाकरत्तदित्येवैनांस्तदब्रवीत् ते देवा अब्रुवन्नप्यस्या इहास्तु या नोऽस्मिन् न वै क मविद

दिति तथेति तस्मा अप्यनाकुर्वंस्तस्मादेषानापि शस्यते यद्वावान पुरुतमं पुराषाळिति सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम को नाम प्रजापतिः श्वशुरस्तद्यास्य कामे सेना जयेत् तस्या अर्द्धात्तिष्ठंस्तृण मुभयतः परिच्छिद्येतरां सेना मभ्यस्येत्प्रासहे कस्त्वा पश्यतीति तद्यथैवादः स्नुषा श्वशुराल्लज्जमाना निलीयमानैत्येव मेव सा सेना भज्यमाना निलीयमानैति यत्रैवं विद्वांस्तृण मुभयतः परिच्छिद्येतरां सेना मभ्यस्यति प्रासहे कस्त्वा पश्यतीति तानिन्द्र उवाचापि वोऽत्रास्त्विति ते देवा अब्रुवन् विराड् याज्यास्तु निष्केवल्यस्य या त्रयस्त्रिंशदक्षरा त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च देवता अक्षरभाजः करोत्यक्षर मक्षर मेव तद्देवता अनु प्र पिबन्ति देवपात्रेणैव तद्देवतास्तृप्यन्ति यं कामयेतानायतनवान्स्यादित्यविराजास्य यजेद् गायत्र्या वा त्रिष्टुभा वान्येन वा छन्दसा वषट् कुर्यादनायतनवन्त मेवैनं तत्करोति यं कामयेतायतनवान्स्यादिति विराजास्य यजेत् पिबा सोम मिन्द्र मन्दतु त्वेत्येतयायतनवन्त मेवैनं तत्करोति ॥ ११ (२२) ॥

अथ निष्केवल्यशस्त्रे याज्यां विधातुं पूर्वोपाख्यानशेषं प्रस्तौति —"ते देवा अब्रुवन्नियं वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नामास्या मेवेच्छामहा इति ; तथेति ; तस्या मैच्छन्त ; सैनान-ब्रवीत्, —प्रातर्वः प्रति वक्तास्मोति ; तस्मात् स्त्रियः पत्याविच्छन्ते ; तस्मादु स्वानुरात्रं पत्याविच्छते ; तां प्रातरुपायन्स्तैतदेव प्रत्य-पद्यत"—इति । ते देवा इन्द्रस्याभिप्रायं प्रजानन्तः परस्पर मिद मब्रुवन्,— 'इयं वै' पुरतो दृश्यमानैव इन्द्रस्य प्रिया जाया ; सा 'वावाता' मध्यमजातीया । राज्ञां हि त्रिविधाः स्त्रियस्तत्रोत्तम-जातेर्महिषीति नाम, मध्यमजातेर्वावातेति, अधमजातेः परिवृक्ति-रिति *। अतएवाश्वमेधे ऽश्वं प्रति राजस्त्रीणां कर्त्तव्यविशेष एतैर्नामभिराम्नातः—"भूरिति महिषी, भुव इति वावाता, सुव-रिति परिवृक्तिः"—इति ( तै० ब्रा० ३.९.४.५. ) । तस्याश्च वावा-तायाः प्रासहेति नाम ; राजप्रियत्वात् । प्रसह्य बलात्कारेण सर्वं कार्यं कर्त्तुं शक्नोत्यर्थः । तस्मादेतस्या मेव निमित्तभूतायां सत्यां राजाभिप्रायं ज्ञातु मिच्छामहै इति विचार्य, त मभिप्रायं सर्वे-ऽङ्गीकृत्य, 'तस्यां' वावातायां स्वाभीष्ट मैच्छन्त । 'सा' अपि वावाता 'एनान्' देवानिद मब्रवीत्,— राज्ञी राजाभिप्रायं विचारयितुं शक्यत्वात् परेद्युः प्रातःकाले 'वः' युष्माकं प्रत्युत्तरं 'वक्तास्मि' वक्ष्यामीति । यस्मादेवं तस्माल्लोकेऽपि प्रियाः स्त्रियः सर्व मव-गन्तव्यं वृत्तान्तं पत्याववगन्तु मिच्छन्ते । यस्माद्विविक्तावसरे सर्व मवगन्तुं सुशकं 'तस्मादु' तस्मादेव कारणात् प्रिया

* "चतस्रो जाया उपकॢप्ता भवन्ति,—महिषी, वावाता, परिवृक्ता, पालागली ; सर्वा निष्किन्योऽलंकृता मिथुनत्वेव सर्वत्वाय। ताभिः सहाश्वागारं प्रपद्यते, पूर्वया द्वारा यजमानो दक्षिणया पत्नाः"—इति शत० ब्रा० १३. ४. १. ८ ।

स्त्री 'अनुराव' रात्रिसमये विविक्तवेलायां पत्नी सर्व मवगन्तु मिच्छति। देवास्तु प्रातःकाले वावाता मुपागच्छन्। 'सा' वावाता 'एतदेव' वक्ष्यमाणमन्त्ररूपं वाक्यं प्रत्युत्तरत्वेन प्राप्तवती॥

तस्मिन् मन्त्रे (सं० १०.७४.६.) पादत्रयं पठति—"यद्वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः, अचेति प्रासहस्पतिस्तुविष्मानिति"—इति। पुरातनानां पुरुषाणां मध्ये स विष्णुः 'पुराषाट्' इन्द्रः। स च 'पुरुतमम्' अतिशयेन प्रभूतं 'यत्' उद्धारितरूपं वस्तु 'वावान' आदौ दीर्घश्छान्दसः, 'ववान' सम्यग् भेजे, लब्धवानित्यर्थः। स च वृत्रहेन्द्रः तस्मिन्नुद्धारे 'नामानि आ अप्राः' माहेन्द्रग्रहो माध्यंदिन मित्यादीनि स्वाभीष्टनामानि 'आ' समन्तात् पूरितवान्। प्रकृष्टं सहो बलं येषां ते प्रासहाः, तेषां पतिः 'प्रासहस्पतिः' इन्द्रः 'अचेति' अजानात्, देवाना मभीष्टं ज्ञातवान्, कटाक्षेणानुगृहीतवानित्यर्थः। स चेन्द्रः 'तुविष्मान्' बहुधनवान्॥ अस्मिन् तृतीयपादे पदयोरप्रसिद्धत्वात् तदर्थं व्याचष्टे —"इन्द्रो वै प्रासहस्पतिस्तुविष्मान्"—इति॥

चतुर्थपाद मनूद्य व्याचष्टे—"यदी मुश्मसि कर्त्तवे करत्तदिति; यदेवैतदवोचामाकरत्तदित्येवैनांस्तदब्रवीत्"—इति। पादत्रयोक्तं वावातायाः वचनं श्रुत्वा देवाः परस्परं ब्रुवते— 'यदीम्' यदिद मस्माक मप्यत्र भागोऽस्त्वित्येतादृशं कार्यं 'कर्त्तवे' कर्त्तुम् 'उश्मसि' वयं सर्वे कामयामहे, 'तत्' सर्वं 'करत्' इन्द्रः सम्पूर्ण मकरोत्। अथवा चतुर्थपादोऽपि वावाताया एव वचनम्। हे देवाः! वयं सर्वे यदिदं कार्यं कर्त्तुं कामयामहे, 'तत्' युष्मद्भागप्रदानरूपं कार्यम् इन्द्रोऽकरोदिति*। इद मेव द्वितीयं व्याख्यानं

* एतन्मन्त्रस्य व्याख्यानान्तरं संहिताभाष्ये द्रष्टव्यम्।

यद्देवैतदित्यादिब्राह्मणेन स्पष्टीकृतम् । हे देवाः ! मया सह युष्मा-भिरालोचितं कार्यं मिन्द्रः कृतवानित्येतेनैव प्रकारेण तस्मिन् मन्त्रे सा वावाता अब्रवीत् ॥

उपाख्यानशेषं दर्शयति— "ते देवा अब्रुवन्नप्यस्या इहास्तु या नोऽस्मिन्न वै क मविददिति ; तथेति ; तस्या अप्यत्राकुर्वन्"—इति । ते देवा वावातायां उत्तरं श्रुत्वा परस्पर मिद मब्रुवन्,— 'या' वावाता 'नः' अस्माक मुपकारिणी, 'अस्मिन्' निष्केवल्ये शस्त्रे 'कम्' अपि सम्बन्धं 'न वै अविदत्' नैव लब्धवती । अस्या अपि वावातायाः इह निष्केवल्ये शस्त्रे सम्बन्धोऽस्तु, 'इति' एतदङ्गीकृत्य तस्या अप्यत्र सम्बन्ध मकुर्वन् ॥

इदानीं धाय्यां विधत्ते— "तस्मादेषात्रापि शस्यते,— यद्दा-वान पुरुतमं पुरुषाळिति"—इति । यस्माद् वावातायाः सम्बन्धः कृतः, 'तस्मात्' कारणात् "यद्दावान" एषापि ऋक् 'अत्र' निष्के-वल्यशस्त्रे धाय्यात्वेन शंसनीया *; अस्या ऋचो वक्षीयेन्द्रस्य जायोक्तात् (?) ॥

प्रशंसाबुद्धिस्थं कञ्चित् ( लौकिकं† ) प्रयोगं विधत्ते— "सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम ; को नाम प्रजा-पतिः श्वशुरस्तद्यास्य कामे सेना जयेत्, तस्या अर्द्धात् तिष्ठंस्तृण मुभयतः परिच्छिद्येतरां सेना मभ्यस्येत्, प्रासहे कस्त्वा पश्य-तीति ; तद्यथैवादः स्नुषा श्वशुराल्लज्जमाना निलीयमानैत्येव मेव सा सेना भज्यमाना निलीयमानेति यत्रैवं विद्वांस्तृण मुभयतः परिच्छिद्येतरां सेना मभ्यस्यति प्रासहे कस्त्वा पश्यतीति"—इति ।

* "यद्दावानेति धाय्या"—इति आश्व० श्रौ० ५. १५. २१ ।

† नास्तीतत् पदं ग-पुस्तके ।

पूर्वन्नास्येन्द्रस्य प्रिया जाया वावाता प्रासहा नामेति यैव मुक्ता, सेयं लोकव्यवहारे 'सेना वै' युद्धार्थोद्यतसेनारूपेण वर्त्तते *; इन्द्रजायायाः सेनाभिमानित्वात्। तच्च शाखान्तरे समाम्नातम्—"इन्द्राणी वै सेनाया देवता"–इति (तै० सं० २.२.८.१.) †। 'को नाम' क-इत्यनेन नाम्ना युक्तः प्रजापतिः, तस्या इन्द्रजायायाः श्वशुरः; प्रजापतेरिन्द्रोत्पादकत्वात्। तथा चान्यत्र श्रूयते—"प्रजापति मिन्द्र मसृजतानुजावरं देवानाम्"–इति ‡। 'तत्' तथा सति 'अस्य' लौकिकस्य पुरुषस्य युद्धार्थिनो 'या' स्वकीया 'सेना' जयत्विति कामो भवति, एतस्मिन् कामे सति स पुमान् तस्याः स्वकीयायाः सेनायाः 'अर्द्धात्तिष्ठन्' अर्द्धभागे मध्ये (पद्भ्यां§) भूमाववस्थितः किञ्चित् तृण मादाय, मूलतोऽग्रतः 'उभयतः' परिच्छिद्य 'इतरां' परकीयां सेनाम् 'अभि' लक्ष्य 'अस्येत्' बाणवत् क्षिपेत्। तत्रायं मन्त्रः— "प्रासहे कस्त्वा पश्यति"- इति। हे प्रासहाख्ये! इन्द्रजाये! 'कः' प्रजापतिः, त्वदीयः श्वशुरः, 'त्वा' त्वां चक्षुषा पश्यति। अनेन मन्त्रेण तृणे क्षिप्ते सति परसेनाया भङ्गे दृष्टान्त उच्यते— 'तत्' तस्मिन् विवक्षितार्थे 'यथैवादः' निदर्शनं भवति, तथा कथयामः,— अनूचानानां मीशानां वा गृहेषु युवतिः स्नुषा स्वकीयं श्वशुरं दृष्ट्वा तस्मात्

---

* "सेना सेश्वरा समानगतिर्वा"–इति निरु० २.३.२।

† "इन्द्राणी देवी सुभगा सुपत्नी। उदꣳशेन पतिविद्ये जिगाय। त्रिꣳशदस्या जघनं योजनानि। उपस्थ इन्द्रꣳ स्थविरं बिभर्ति॥ सेना ह नाम पृथिवी धनञ्जया। विश्वव्यचा अदितिः सूर्यत्वक्। इन्द्राणी देवी प्रासहा ददाना। सा नो देवी सुहवा शर्म यच्छतु॥"–इति द्वे ऋचौ तै० ब्रा० २.४.२.७।

‡ तै० सं० ६.६.११.२; ७.२.१०.२; २.३.४.२।

§ नास्त्येतत् पदं ग-पुस्तके।

'लज्जमाना' लज्जां प्राप्नुवती 'निलीयमाना' वस्त्रावगुण्ठनहस्ता-द्यङ्गसङ्कोचेन तिरोहितवसना गृहाभ्यन्तर मागच्छति ; एव मेव 'सा' परकीया सेना अभिमन्त्रितलक्षणरूपास्त्रप्रक्षेपेण 'भज्यमाना' सती तत्र-तत्रारण्यपर्वतादिषु 'निलीयमाना' तिरोहिता सती स्वकीयं देश मेति। कुत्राय मितरसेनाभङ्गः ? इत्याशङ्क्य 'यत्रैवम्'-इत्यादिना पूर्वोक्त एवार्थः स्पष्टीकृतः ॥

प्रासङ्गिकं परिसमाप्य प्रकृत मनुसरति— "तानिन्द्र उवाचापि वोऽत्रास्त्विति ; ते देवा अब्रुवन्,— विराड् याज्यास्तु निष्केवल्यस्य या त्रयस्त्रिंशदक्षरा"-इति। वावातापा वचनेनेन्द्रसमीपं प्रति देवेष्वागतेषु 'तान्' देवानिन्द्र एव मुवाच,— युष्माक मप्यत्र निष्केवल्ये ऽपेक्षितो भागोऽस्त्विति। ततो देवाः 'त्रयस्त्रिंशदक्षरा' विराट्छन्दस्कां "पिबा सोमम्"-इत्येतां ( सं० ७.२२.१. ) याज्यां प्रार्थितवन्तः ॥

तां याज्यां प्रशंसति— "त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च ; देवता अक्षरभाजः करोत्यक्षर मक्षर मेव तद्देवता अनु प्र पिबन्ति, देवपात्रेणैव तद्देवतास्तृप्यन्ति"-इति। एतद्वाक्यं पूर्वत्रैव व्याख्यातम्*। यद्यप्यस्या याज्यायास्त्रयस्त्रिंशदक्षराणि साक्षात् न दृश्यन्ते, तथापि संयोगाक्षरादिविभागेन सङ्ख्या पूरणीया। ततो देवसाम्यात् प्रत्यक्षर मेकैकदेवतातृप्तिः सिध्यति ॥

अथाभिचारप्रयोगं विधत्ते— "यं कामयेतानायतनवान्त्स्यादित्यविराजास्य यजेद्गायत्र्या वा त्रिष्टुभा वान्येन वा छन्दसा वषट् कुर्यादनायतनवन्त मेवैनं तत्करोति"-इति। आयतन माश्रयो

* १भा० ४५६पृ० ३पं० द्रष्टव्यम्।

गृहादिरस्यास्तीति 'आयतनवान्', तद्विपरीतो यजमानोऽस्त्विति कामयमानो होता विराडतिरिक्तगायत्र्यादिच्छन्दोयुक्तां याज्यां पठित्वा तदन्ते वषट् कुर्यात्। तथा सत्यायतनहीनो यजमानो भवति ॥

उक्तार्थव्यतिरेकं विधत्ते— "यं कामयेतायतनवान्स्यादिति विराजास्य यजेत्,— पिबा सोम मिन्द्र मन्दतु त्वेत्येतयाऽऽयतन-वन्त मेवैनं तत्करोति"—इति * ॥ ११ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
एकादशः खण्डः ॥ ११ ( २२ ) ॥

---

॥ अथ द्वादशः खण्डः ॥

ऋक् च वा इद मग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम सा वा ऋक् सामोपावदन्मिथुनं सम्भवाव प्रजात्या इति नेत्यब्रवीत्साम ज्यायान्वा अतो मम महिमेति ते द्वे भूत्वोपावदतां तेन प्रति चन समवदत तास्तिस्रो भूत्वोपावदंस्तत्तिसृभिः समभवद्यत्तिसृभिः समभवत्तस्मात्तिसृभिः स्तुवन्ति तिसृभिरुद्गायन्ति तिसृभिर्हि साम सम्मितं

* "पिबा सोम मिन्द्र मन्दतु त्वेति याज्या"—इति आश्व० श्रौ० ५.१५.२२।

तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयो यद्वै तत्सा चामश्च समभवतां तत्सामा-भवत्तत्साम्नः सामत्वं सामन् भवति य एवं वेद यो वै भवति यः श्रेष्ठता मश्नुते स सामन् भवत्यसामन्य इति हि निन्दन्ति ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेता माहावश्च हिङ्कारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्च ते यत्पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतां तस्मादाहुः पाङ्क्तो यज्ञः पाङ्क्ताः पशव इति यद् विराजं दशिनी मभि समपद्येतां तस्मादाहुर्विराजि यज्ञो दशिन्यां प्रतिष्ठित इत्यात्मा वै स्तोत्रियः प्रजानुरूपः पत्नी धाय्या पशवः प्रगाथो गृहाः सूक्तं स वा अस्मिंश्च लोकेऽमुष्मिंश्च प्रजया च पशुभिश्च गृहेषु वसति य एवं वेद ॥ १२ (२३) ॥

"स्तुत मनु शंसति"–इति-( ता॰ ब्रा॰ ९.८.१०. )-विधिबलेन निष्केवल्यशस्त्रस्य स्तोत्रपूर्वकत्वात् बुद्धिस्थस्य (स्तोत्रियस्यैकस्य*) साम्न आश्रयत्वेन तृचं विधातु माख्यायिका माह— "ऋक् च वा इद मग्रे साम चास्तां; सैव नाम ऋगासीदमो नाम साम, सा वा ऋक् सामोपावदन्मिथुनं सम्भवाव प्रजात्या इति; नेत्यब्रवी-त्साम, ज्यायान्वा अतो मम महिमेति; ते द्वे भूत्वोपावदतां;

* नास्तेऽतत्पदद्वयं ग-पुस्तके ।

ते न प्रति चन समवदत ; तास्तिस्रो भूत्वोपावदंस्तत्तिसृभिः समभवद्, यत्तिसृभिः समभवत्तस्मात्तिसृभिः स्तुवन्ति ; तिसृभिरुद्गायन्ति ; तिसृभिर्हि साम सम्मितं ; तस्मादेकस्य बह्वो जाया भवन्ति, नैकस्यै बहवः सह पतयो यद्वैतत्सा चामश्च समभवतां, तत्सामाभवत्तत्साम्नः सामत्वम्"–इति। यत् 'इदम्' इदानी मृगाश्रितं साम उभयमेलनरूप मधीयते, तदिदम् 'अग्रे' मेलनात् पुरा ऋगक्षरपदरूपा पृथग्भूता, साम च गीतिरूपं पृथग्भूतम् ;–इत्येव द्वे अपि पृथगेवास्ताम्। तयोः परस्परमेलनयोग्यतां प्रदर्शयितु मेकस्मिन्नेव साम्नि अन्तर्भावः प्रदर्श्यते सामेति। साम्नो यदेतत्सेति पूर्व मक्षरं, तदेवैकं नाम, तन्नामवाच्या ऋगासीत्; अम इत्येकं नाम, तद्वाच्यं सामासीत्। अतो मेलनयोग्यतायां सत्यां सैव ऋक्, साम प्रति 'उपावदत्' समीप मागत्योक्तवती। आवा मुभे मिथुनं यथा भवति तथा सम्भवाव। तच्च सम्भवनं प्रजोत्पत्त्यर्थ मिति। तदुक्तं साम निराकरोत् स्वाभिप्रायं चावदत्,— 'अतः' अस्मात्त्वन्महिम्नो 'ज्यायान्' अभ्यधिको 'मम' साम्नो महिमा ; तस्माद्विवादश्च विवाहश्च तुल्ययोरितिन्यायविरोध इति। ततः साम्ना सह स्वस्य तुल्यत्वसिद्धये तु 'ते' द्वे ऋचौ सम्भूयेपेत्य पूर्ववदुक्तवत्यौ। चनेत्यक्षरद्वयात्मको निपातोऽपिशब्दार्थः *। 'ते' द्वे ऋचौ 'प्रति' अपि साम 'न समवदत' संवाद मङ्गीकारं नाकरोत्। पुनः 'ताः' ऋचस्तिस्रो भूत्वोपेत्य पूर्ववदुक्तवत्यः। तदानीं ताभिस्तिसृभिः 'समभवत्' सम्भवनं संयोग मकरोत्। यस्मात्संयोगः सम्भूतः, तस्मात्सामयुक्ताभिस्तिसृभिः ऋग्भिः सामगाः 'स्तुवन्ति' यज्ञे स्तोत्रं कुर्वन्ति। तस्यैव व्याख्यानं 'तिसृभिरुद्गायन्ति'–इति।

* पा० सू० ८.१.५७। अम० को० ३.५.३। मेदि० अव्य० ४४।

औद्गात्रं कर्म कुर्वन्तीत्यर्थः। अत एव शाखान्तरे श्रूयते— "एकं साम तृचे क्रियते स्तोत्रियम्"-इति। यद्यपि छन्दस्सामनामके ग्रन्थे एकैकस्या ऋचि सामोत्पन्नम्, तथाप्युत्तराख्ये ग्रन्थे आम्नातेषु तृचेषु प्रयोगकाले साम गातव्यं भवति। तत्र प्रथमाया ऋचि योनिरूपायां यत्सामोत्पन्नं छन्दस्सामग्रन्थे समाम्नातम् *, तदवलोक्य तत्सादृश्येन द्वितीयतृतीययोः ऋचोर्गानं समूहनीयम् †। एतदपि शाखान्तरे विहितम्— "यद्योन्यां तदुत्तरयोर्गायति"-इति ‡। तस्मादौद्गात्रं कर्म तिसृभिः ऋग्भिर्निष्पद्यते। यस्मादाख्यानोक्तप्रकारेण तिसृभिः ऋग्भिः 'साम सम्मितं' एकस्य साम्न महिमा तुल्यः संवृत्तः, तस्माल्लोकेऽपि 'एकस्य' पुरुषस्य सामस्थानीयस्य बह्वो जाया ऋक्स्थानीया भवन्ति; न तु विपर्ययेण एकस्याः स्त्रियो 'बहवः' पतयः परस्परैकमत्येन 'सह' वर्तमाना दृश्यन्ते। यस्मादृगक्षरपदादिरूपा सेत्यनेन शब्देनाभिधेया, अमशब्देन सामाभिधेयं सत्पश्चादुभयं संयुक्तं तत्सामाभवत्, तस्मादेकोभयात्मकवस्तुनः 'साम' नाम सम्पन्नम् § ॥

उक्तार्थवेदनं प्रशंसति— "सामन् भवति य एवं वेद"-इति। ऋक्सामयोरेकत्ववेदिता यः, स सर्वैरभ्यर्हितैः सदृशो भवति ॥

लौकिकवृत्तान्तोदाहरणेनापि सामस्वरूपं प्रशंसति— "यो वै भवति, यः श्रेष्ठता मश्नुते, स सामन् भवत्यसामन्य इति हि

---

* गेयारण्यगानग्रन्थयोरेकं नाम छन्दस्सामेति वेदसामेति च राणायनशाखाध्येतॄणाम्।

† तथाविधगानानि ऊहोह्ययोर्द्रष्टव्यानि; तादृशगानसमूहात्मकाविव हि तौ गानग्रन्थौ। तयोः पौरुषेयत्वं चातएव सिद्धान्तितं मीमांसायाम् ( जै० सू० ९.२.१.२. अधि० १.२४० )।

‡ ए. सी. सु. १भा० १९ पृ० दर्शनतः एतदुदाहरणं बोद्धव्यम्।

§ "साम सम्मित मृचास्यतेर्वर्चा समं मेन इति नैदानाः"-इति निरु० ७.३.६।

निन्दन्ति"-इति। 'यः' पुमान् 'भवति' ऐश्वर्यं प्राप्नोति, यश्च विद्यावृत्ताभ्यां श्रेष्ठत्वं प्राप्नोति, स सर्वोऽपि 'सामन् भवति' सर्वेषु स्वकीयत्वबुद्ध्या समदृष्टिर्भवति। अन्यथा सर्वे जनास्तम् 'असामन्यः' पक्षपातीति निन्दन्ति। अतः सामन्यरूपस्य लोके प्रशस्तत्वादत्राप्यक्षरपाठस्य गानस्य चैकत्वेन सामत्वं प्रशस्त मित्यर्थः ॥

नन्वस्त्वेवं सामत्वं प्रकृते निष्केवल्यशस्त्रे किं मायात मित्याशङ्क्य सामसादृश्येन शस्त्रप्रशंसां दर्शयति— "ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेता माहावश्च हिङ्कारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्च"-इति। 'ते वै' ते एव वक्ष्यमाणा आहावादयः शस्त्रावयवाः पञ्चसङ्ख्याकाः 'अन्यत्' पृथगेव शस्त्ररूपं भूत्वा वर्त्तन्ते; तथा हिङ्कारादयः सामांशाः पञ्चसङ्ख्याकाः 'अन्यत्' पृथगेव सामस्वरूपं भूत्वा वर्त्तन्ते। ते च शस्त्रसामनी स्वावयवोपेते उभे 'कल्पेतां' स्वव्यापारसमर्थे भवतः। 'आहावः' शोंसावो मिति मन्त्रः। स्तोत्रिये तृचे 'प्रथममध्यमोत्तमाः' तिस्र ऋचः। याज्यान्ते पठितव्यो 'वषट्कारः'। तदेतत् पञ्चकं शस्त्रस्वरूपम्। उद्गात्रा पठितव्यः साम्न आदौ "हिम्"-इत्येवं* शब्दो 'हिङ्कारः'। प्रस्तोत्रा गातव्यः सामावयवः 'प्रस्तावः'। उद्गात्रा गातव्यः 'उद्गीथः'। प्रतिहर्त्रा गातव्यः 'प्रतिहारः'। अन्ते सर्वैर्गातव्यो भागो 'निधनम्'†। तदेतत् पञ्चकं स्तोत्रस्वरूपम्। अतः सामसादृश्येन निष्केवल्यशस्त्रं प्रशस्तम् ॥

---

* ४पृ० "*" टीप्पनी द्रष्टव्या।

† "प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः। तत्पाञ्चविध्यम्"-इति, "ओङ्कारहिङ्काराभ्यां साप्तविध्यम्"-इति, "अवसानं पूर्वं प्रस्तावः"-इत्यारभ्य "निधनं पर्वं सामा-

प्रकारान्तरेण प्रशंसति— "ते यत् पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतां, तस्मादाहुः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः इति"–इति। यस्मात् सामशस्त्रयोरुक्तप्रकारेण प्रत्येकं पञ्चावयवत्वं सम्पन्नम्, 'तस्मात्' पञ्चानां पङ्क्त्या योगादयं यज्ञः पाङ्क्त इत्येवं ब्रह्मवादिन आहुः। तथा गवादिपशवोऽपि चतुर्भिः पादैर्मुखेन च योगात् पाङ्क्ताः। अतो यज्ञे पाङ्क्तत्वप्रसिद्धिसम्पादनात् पशुसाम्याच्च शस्त्रं प्रशस्तम् ॥

पुनः प्रकारान्तरेण प्रशंसति— "यद्‌ विराजं दशिनी मभि समपद्येतां तस्मादाहुर्विराजि यज्ञो दशिन्यां प्रतिष्ठित इति"–इति। "दशाक्षरा विराट्"–इतिश्रुत्यन्तरात् * दशाना मक्षराणां समूहो 'दशिनी' या विराडस्ति, ता मभि लक्ष्य पञ्चकद्वयात्मके शस्त्रसामनी 'समपद्येताम्' सम्भवतः, विराट्सदृशे जाते इत्यर्थः। यदुभयस्मादेव कारणात् सङ्ख्यया विराट्सादृश्यम्, तस्मादभिज्ञा एव माहुः,— दशसङ्ख्योपेतायां शस्त्रसामरूपायां विराजि यज्ञः 'प्रतिष्ठितः' व्यवस्थित इति ॥

पुनरपि गृहस्थपुरुषसादृश्येन शस्त्रं प्रशंसति— "आत्मा वै स्तोत्रियः, प्रजानुरूपः, पत्नी धाय्या, पशवः प्रगाथो, गृहाः सूक्तम्"–इति। येन तृचेन सामगाः स्तुवन्ति, सः 'स्तोत्रियः' तृचो निष्केवल्यशस्त्रस्य प्रारम्भे शंसनीयः। स च 'आत्मा वै' गृहस्थशरीरस्थानीय एव। स्तोत्रियं तृच मनु द्वितीयो यस्तृचः शस्यते, सोऽयम् 'अनुरूपः'; स च 'प्रजा' पुत्रपौत्रादिस्थानीयः। येयं शस्त्रे

---

न्ताम्"–इत्यन्तश्च पञ्चविधसूत्रग्रन्थो द्रष्टव्यः। छान्दोग्योपनिषद्ब्राह्मणे च २प्र० १—२१ खण्डाः समालोच्याः।

* ता० ब्रा० ६.८.४ ; ८.५.१३ ; शत० ब्रा० १.१.१.२२ ; इहापि पूर्वंच। एवं बहुत्रैव।

प्रक्षेपणीया 'धाय्या', सा पत्नीस्थानीया। यः 'प्रगाथः', स पशुस्थानीयः। यं निविद्धानीयं 'सूक्तं' तद् गृहस्थानीयम् * ॥

एतद्वेदनं प्रशंसति— "स वा अस्मिंश्च लोकेऽमुष्मिंश्च प्रजया च पशुभिश्च गृहेषु वसति य एवं वेद"–इति। पशुभिश्च सहित इति शेषः ॥ १२ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
द्वादशः खण्डः ॥ १२ (२३) ॥

———

॥ अथ त्रयोदशः खण्डः ॥

स्तोत्रियं शंसत्यात्मा वै स्तोत्रियस्तं मध्यमया वाचा शंसत्यात्मान मेव तत्संस्कुरुतेऽनुरूपं शंसति प्रजा वा अनुरूपः स उच्चैस्तरा मिवानुरूपः शंस्तव्यः प्रजा मेव तच्छ्रेयसी मात्मनः कुरुते धाय्यां शंसति पत्नी वै धाय्या सा नीचैस्तरा मिव धाय्या शंस्तव्या प्रतिवादिनी हास्य गृहेषु पत्नी भवति यत्रैवं विद्वान् नीचैस्तरां धाय्यां शंसति प्रगाथं शंसति स स्वर-

* १भा० ४३५ पृ० सा८ द्रष्टव्यम्।

वत्या वाचा शंस्तव्यः पशवो वै स्वरः पशवः प्रगाथः पशूना मवरुध्या इन्द्रस्य नु वीर्याणि प्र वोच मिति सूक्तं शंसति तद्वा एतत् प्रिय मिन्द्रस्य सूक्तं निष्केवल्यं हैरण्यस्तूप मेतेन वै सूक्तेन हिरण्यस्तूप आङ्गिरस इन्द्रस्य प्रियं धामोपागच्छत्स परमं लोक मजयदुपेन्द्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद गृहा वै प्रतिष्ठासूक्तं तत्प्रतिष्ठिततमया वाचा शंस्तव्यं तस्माद्यद्यपि दूर इव पशूँल्लभते* गृहानेवैनानाजिगमिषति गृहा हि पशूनां प्रतिष्ठा प्रतिष्ठा ॥ १३ ( २४ ) ॥

॥इत्यैतरेयब्राह्मणे तृतीयपञ्चिकायां द्वितीयोध्यायः ॥२॥

अथ निष्केवल्यशस्त्रभागाः स्वरविशेषाश्च वक्तव्याः ; तत्र प्रथमभागं विधत्ते— "स्तोत्रियं शंसत्यात्मा वै स्तोत्रियः"–इति। "अभि त्वा शूर नोनुमः"–इत्यस्मिन् ( उ० आ० १.१.११.१,२. ) प्रगाथे तृचं सम्पाद्य सामगाः स्तुवन्ति †। सोऽयं स्तोत्रियस्तृचः, त मादौ शंसेत्। तस्य गृहस्थदेहस्वरूपत्वं पूर्व मेवोक्तम् ॥ तस्मिन् स्तोत्रिये स्वरविशेषं विधत्ते— "तं मध्यमया वाचा शंसत्यात्मान मेव तत् संस्कुरुते"–इति। अत्युच्चत्व मतिनीचत्वञ्च यस्यां वाचि नास्ति, सा 'मध्यमा' तया। यावता 'वाचा' ध्वनिना देवयजन-

* 'पशूंन् लभते' क, ,पशूंलभते' ग, घ, 'पशूल्लभते' ङ।

† ए. सी. मु. सा० सं० भा० पृ० २७पृ० ४पं० 'तथाहि'–इत्यादि द्रष्टव्यम्।

देशस्थाः शृखन्ति, न तु बहिर्देशस्थाः, तावन्तं ध्वनिं कुर्यात्। तेन 'आत्मान मेव' देह मेव संस्कुरुते ॥

तृचान्तरं विधत्ते — "अनुरूपं शंसति ; प्रजा वा अनुरूपः"-इति। स्तोत्रियेण तृचेन सदृशस्तृचः 'अनुरूपः' *। स चात्र "अभि त्वा पूर्वपीतये इन्द्र स्तोमेभिरायवः"-इत्येष प्रगाथः ( उ० आ० ७.३.१.१, २. )। उभयोः प्रगाथयोः † समानच्छन्दस्त्वात् समानदेवताकत्वाच्चानुरूपत्वम्। त मिमं तृचं शंसेत्। तस्य च पुत्रादिप्रजास्थानीयस्य अनुरूपत्व मपेक्षितम् ; पितृपुत्रयोः कुलशीलादिना समानरूपत्वात् ॥ तस्य ध्वनिविशेषं विधत्ते— "स उच्चैस्तरा मिवानुरूपः शंस्तव्यः ; प्रजा मेव तच्छ्रेयसी मात्मनः कुरुते"-इति। स्तोत्रियध्वनेरप्यधिकं ध्वनिं कुर्यात्। तथा सति स्वस्मादाधिक्यं पुत्रादौ सम्पादितं भवति ॥

ततो यद्वावानेत्येतस्याः ( सं० १०.७४.६. ) धाय्यायाः शंसनं विधत्ते— "धाय्यां शंसति पत्नी वै धाय्या"-इति। पत्नीत्वं पूर्व मेवोक्तम् ॥ स्वरविशेषं विधत्ते— "सा नीचैस्तरा मिव धाय्या शंस्तव्या"-इति। अत्यन्तनीचो ध्वनिः कर्त्तव्यः ॥ होतुरेतद्वेदनं प्रशंसति— "अप्रतिवादिनी हास्य गृहेषु पत्नी भवति, यत्रैवं विद्वान् नीचैस्तरां धाय्यां शंसति"-इति। पत्युः प्रतिकूलं वदतीति 'प्रतिवादिनी' तद्विपर्ययेण, अनुकूलवादिनी भवति ॥

---

* "पूर्वं सु चैव तद्रूप मपरेण रूपेणानुवदति ; यत् पूर्व॑ रूप मपरेण रूपेणानुवदति, तदनुरूपस्यानुरूपत्वम्। अनुरूप एनं पुत्रो जायते य एवं वेद स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानाना मवरुध्यै"-इति ता० ब्रा० ११.६.४-६। प्रथमस्य स्तोत्रीयस्यैव सञ्ज्ञान्तरं प्रतिपदिति ता० ब्रा० ६.९.१ ; १२.१.१. सा० भा० द्रष्टव्यम्।

† 'अभि त्वा शूर'-इति स्तोत्रीयस्य, 'अभि त्वा पूर्वपीतये'-इत्यनुरूपस्य चेत्यर्थः।

"पिबा सुतस्य रसिनः"-इत्येतं प्रगाथं (उ० आ० ६. २. १६.१,२.) विधत्ते— "प्रगाथं शंसति"-इति॥ तत्र स्वरविशेषं विधत्ते—"स स्वरवत्या वाचा शंस्तव्यः ; पशवो वै स्वरः, पशवः प्रगाथः, पशूना मवरुध्यै"-इति। 'स्वरवत्या' स्वरयुक्तया वाचेत्यर्थः। प्रगाथस्य पशुत्वं पूर्व मुक्तम् ; स्वरस्य पशुत्वं सङ्ख्यासाम्यात्,— चत्वारः स्वराः, पशवोऽपि चतुष्पदाः॥

निविद्धानीयं पञ्चदशर्चं सूक्तं विधत्ते— "इन्द्रस्य नु वीर्याणि प्र वोच मिति सूक्तं शंसति"-इति॥ तदेतत्प्रशंसति— "तद्वा एतत् प्रिय मिन्द्रस्य सूक्तं निष्केवल्यं हैरण्यस्तूप मेतेन वै सूक्तेन हिरण्यस्तूप आङ्गिरस इन्द्रस्य प्रियं धामोपागच्छत्स परमं लोक मजयत्"-इति। यदेतत् 'इन्द्रस्य नु वीर्याणि प्र वोचम्"-इति (सं० १.३२.१-१५.) निष्केवल्यशस्त्रं सूक्तम्, तदेतदिन्द्रस्य प्रियम्; हिरण्यस्तूपनाम्ना महर्षिणा दृष्टत्वाद् 'हैरण्यस्तूपम्'। तदेव 'एतेन'-इत्यादिना स्पष्टीक्रियते। अङ्गिरसः पुत्रो हिरण्यस्तूपाख्यो मुनिरेतेनैव सूक्तेनेन्द्रं स्तुत्वा तदीयं स्थानं प्राप्य ततोऽप्युत्तमं लोक मजयत्॥

वेदनं प्रशंसति—"उपेन्द्रस्य प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद"-इति॥

"सूक्ते ध्वनिविशेषं विधत्ते— "गृहा वै प्रतिष्ठासूक्तं, तत्प्रतिष्ठिततमया वाचा शंस्तव्यं ; तस्माद्यद्यपि दूर इव पशूंल्लभते, गृहानेवैनानाजिगमिषति ; गृहा हि पशूनां प्रतिष्ठा प्रतिष्ठा" -इति। "इन्द्रस्य नु वीर्याणि"-इत्यस्मिन् सूक्ते शस्त्रस्य समापनेनावस्थानात् तस्य प्रतिष्ठारूपत्वम्। गृहा अपि स्थितिहेतुत्वात् प्रतिष्ठारूपाः ; तथा सतीत्रतत्सूक्तं 'प्रतिष्ठिततमया' द्रुतविल-

ब्वितत्वादिदोषरहितया श्राव्येण ध्वनिनोपेतया वाचा शंसेत्। यस्माद् गृहस्थानीयस्य सूक्तस्य ध्वनिः प्रतिष्ठिततमः, तस्माल्लोके यद्यपि तृणभक्षणार्थं मरण्ये गतान् दूरदेशे एवावस्थितान् पशून् दिवसे पुरुषो 'लभते' पश्यति, तथापि 'एनान्' पशून् सायं काले गृहानेव 'आजिगमिषति' आनेतु मिच्छति ; यस्मात्पशूनां गृहाः 'प्रतिष्ठा' सुखेनावस्थातुं स्थानम् । द्विरभ्यासोऽध्यायसमाप्त्यर्थः ॥१३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां द्वितीयाध्याये
त्रयोदशः खण्डः ॥ १३ ( २४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायाः द्वितीयोऽध्यायः ॥

---

## ॥ अथ तृतीयाध्यायः ॥

( तत्र )

### ॥ प्रथमः खण्डः ॥

॥ओ३म्॥ सोमो वै राजामुष्मिंल्लोक आसीत् तं देवाश्च ऋषयश्चाभ्यध्यायन् कथ मय मस्मान्त्सोमो राजा-गच्छेदिति ते ऽब्रुवंश्छन्दांसि यूयं न इमं सोमं राजान माहरतेति तथेति ते सुपर्णा भूत्वोदपतंस्ते यत्सुपर्णा भूत्वोदपतंस्तदेतत्सौपर्ण मित्याख्यानविद आचक्षते छन्दांसि वै तत्सोमं राजान मच्छाचरंस्तानि ह तर्हि चतुरक्षराणि चतुरक्षराण्येव छन्दांस्या-सन्त्सा जगती चतुरक्षरा प्रथमोदपतत्सा पतित्वार्द्ध मध्वनो गत्वाश्राम्यत्सा परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षां च तपश्च हरन्ती पुनरभ्यवापतत्तस्मा-त्तस्य वित्ता दीक्षा वित्तं तपो यस्य पशवः सन्ति जागता हि पशवो जगती हि तानाहरदथ त्रिष्टुबुद-पतत्सा पतित्वा भूयोऽर्द्धादध्वनो गत्वाश्राम्यत्सा परास्यैक मक्षरं त्र्यक्षरा भूत्वा दक्षिणा हरन्ती पुन-रभ्यवापतत्तस्मान्मध्यन्दिने दक्षिणा नीयन्ते त्रिष्टुभो लोके त्रिष्टुब्भि ता आहरत् ॥ १ (२५) ॥

वक्तव्याह्वावप्रभेदं प्रतिगरण मथानुष्टुभः शस्यमानाः,
मृत्योः सन्नह्याप्तिक्रमण मथ मरुत्वद्विधानप्रशंसा।
तच्छेषा ये विशेषाः प्रतिपदनुचरप्रक्रमाः सप्तभागाः,
निष्केवल्यं च शस्त्रं तदवयवक्तताः स्तोत्रियाद्याश्च पञ्च॥

अथ तृतीयसवनं वक्तु मादावाख्यायिका माह— "सोमो वै राजामुष्मिंल्लोक आसीत्, तं देवाश्च ऋषयश्चाभ्यध्यायन्; कथ मय मस्मान्त्सोमो राजा ऽऽगच्छेदिति; ते ऽब्रुवंश्छन्दांसि यूयं न इमं सोमं राजान माहरतेति; तथेति; ते सुपर्णा भूत्वोदपतंस्ते यत्सु-पर्णा भूत्वोदपतंस्तदेतत्सौपर्ण मित्याख्यानविद आचक्षते"–इति। पुरा सोमवल्ली द्युलोक एवासीत्, न त्वेतस्मिन् लोके। तदानीं सोम मभि लक्ष्य केन प्रकारेण सोमो न आगच्छेदिति देवा ऋषयश्च विचारितवन्तः। विचार्य गायत्र्यादीनि छन्दांसि प्रत्येव मब्रुवन्,— हे छन्दांसि! अस्मदर्थं सोम माहरतेति। तानि च तदङ्गीकृत्य 'ते' लोकप्रसिद्धाः पक्षिणो भूत्वा द्युलोकं प्रत्युदपतन्। यस्मादेवं तस्मात् 'एतत्' सोमाहरणप्रतिपादकं ग्रन्थजातं 'सौपर्णम्' आख्यान मिति 'आख्यानविदः' पौराणिकाः कथयन्ति॥

अथोत्पतत्सु छन्दःसु मध्ये जगतीवृत्तान्त माह— "छन्दांसि वै तत्सोमं राजान मच्छाचरंस्तानि ह तर्हि चतुरक्षराणि चतु-रक्षराण्येव छन्दांस्यासन्त्सा जगती चतुरक्षरा प्रथमोदपतत्सा पति-त्वार्द्ध मध्वनो गत्वाश्राम्यत्सा परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षाञ्च तपश्च हरन्ती पुनरभ्यवापतत्तस्मात्तस्य वित्ता दीक्षा वित्तं तपो यस्य पशवः सन्ति; जागता हि पशवो जगती हि ताना-हरत्"–इति। गायत्र्यादिच्छन्दांसि उत्पतने प्रवृत्तानि, तदानीं सोमम् 'अच्छ' प्राप्तुं द्युलोके तत्र-तत्रावतरत्। 'तानि' च छन्दांसि,

तस्मिन् काले चतुरक्षरोपेतानि, अतः पुरा सर्वदा चतुरक्षराण्येवासन्,— न तु कस्यापि छन्दसो ऽधिकाक्षरतासीत्। ततः सा जगती चतुरक्षरा सती छन्दोऽन्तरेभ्यः सर्वेभ्यः प्रथमं प्रवृत्ता सोमं प्रत्युदपतत्। तत्र मार्गस्यार्धं गत्वा अथ श्रान्ता सती श्रमवशात् त्रीण्यक्षराणि परित्यज्य स्वय मेकाक्षरा भूत्वा सोम माहर्तुं मशक्नुवती सोमयागसम्बन्धिनीं 'दीक्षां' दीक्षणीयेष्ट्यादिरूपाम्, क्षीरपानादिरूपं 'तपः' च 'हरन्ती' तस्माल्लोकादानयन्ती पुनरेतं लोक मभि लक्ष्य 'अवापतत्' अधोमुखी समागता। यस्मादेवं तस्माल्लोके यस्य पुरुषस्य पशवः सन्ति, तेन दीक्षा 'वित्ता' लब्धा भवति, तपश्च लब्धं भवति। न च दीक्षातपसोः जगत्या समानीतयोः सतोः पशूनां तदुभयकारणत्वं कथ मिति शङ्कनीयम्; पशूनां जागतत्वेन जगतीद्वारा दीक्षासम्बन्धसम्भवात्। जागतत्वं कथ मिति चेत्, जगत्या पशूना मानीतत्वादिति द्रष्टव्यम्। अत एव शाखान्तरे जगतीं प्रकृत्यैव माम्नातम्— "सा पशुभिश्च दीक्षया चागच्छत्तस्माज्जगती छन्दसां पशव्यतमा, तस्मात्पशुमन्तं दीक्षोपनमति"-इति ( तै० सं० ६.१.६.२, ) ॥

त्रिष्टुभो वृत्तान्त माह—"अथ त्रिष्टुबुदपतत्सा पतित्वा भूयो ऽर्धादध्वनो गत्वाश्राम्यत्सा परास्यैक मक्षरं त्र्यक्षरा भूत्वा दक्षिणा हरन्ती पुनरभ्यवापतत्तस्मान्मध्यन्दिने दक्षिणा नीयन्ते त्रिष्टुभो लोके त्रिष्टुब्भि* ता३† आहरत्"-इति। सा त्रिष्टुप् द्युलोके भूयो भूयः पतित्वापि मार्गस्यार्धादेव अश्राम्यदित्यन्वयः‡। यस्मादेव

* त्रिष्टुप् + हि इति सन्धिच्छेदः।

† 'ता३'-इति ङ।

‡ "अपतदित्यन्वयः"-इति घ।

दक्षिणाः सर्वा आनीतवती, तस्मात्त्रिष्टुभः स्थाने माध्यन्दिनसवने यजमानैर्दत्ताः सर्वा दक्षिणा ऋत्विग्भिर्नीयन्ते ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये प्रथमः खण्डः ॥ १ (२५) ॥

———

॥ अथ द्वितीयः खण्डः ॥

ते देवा अब्रुवन् गायत्रीं त्वं न इमं सोमं राजान माहरेति सा तथेत्यब्रवीत्तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्व मिति तथेति सोदपतत्तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त प्रेति चेति चेत्येतद्वै सर्वं स्वस्त्ययनं यत् प्रेति चेति चेति तद्यो-ऽस्य प्रियः स्यात् त मेतेनानुमन्त्रयेत प्रेति चेति चेति स्वस्त्येव गच्छति स्वस्ति पुनरागच्छति सा पतित्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं समगृभ्णाद्यानि चेतरे छन्दसी अक्षराण्य-जहितां तानि चोप समगृभ्णात्तस्या अनु विसृज्य कृशानुः सोमपालः सव्यस्य पदो नख मच्छिदत्तच्छ-ल्यकोऽभवत्तस्मात्स नख मिव यद्वश मस्रवत्सा वशा-भवत् तस्मात्सा हविरिवाथ यः शल्यो यदनीक

**मासीत् स सर्पो निर्दंश्यभवत् सहस स्वजो यानि पर्णानि ते मन्थावला यानि स्नावानि ते गण्डूपदा यत्तेजनं सोऽन्धाहिः सो सा तथेषुरभवत् ॥ २ (२६) ॥**

अथ गायत्रीवृत्तान्त माह— "ते देवा अब्रुवन् गायत्रीं,— त्वं न इमं सोमं राजान माहरेति ; सा तथेत्यब्रवीत् ; तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्व मिति ; तथेति ; सोदपतत्तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त,—प्रेति चेति चेति ; एतद्वै सर्वं स्वस्त्ययनं यत् प्रेति चेति चेति ; तद्योऽस्य प्रियः स्यात्, त मेते-नानुमन्त्रयेत प्रेति चेति चेति, स्वस्त्येव गच्छति स्वस्ति पुनरा-गच्छति"—इति । जगतीत्रिष्टुभोः सोमानयनसामर्थ्याभावं दृष्ट्वा ते देवाः गायत्रीं प्रार्थितवन्तः । हे गायत्रि ! त्वं 'नः' अस्मदर्थ मिमं सोम माहरेति । 'सा' च गायत्री तथेत्यङ्गीकृत्य देवान् प्रत्येव मब्रवीत्,—हे देवाः ! यदा अहं सोम मानेतुं गच्छामि, तदानीं ता मेवं गच्छन्तीं मां यूयं सर्वेऽपि यथाशक्ति सर्वेण 'स्वस्त्ययनेन अनुमन्त्रयध्वं' क्षेमप्रापणं स्वस्त्ययनम्, तदर्थं माशी-र्वादरूपेण मन्त्रेण ममानुमन्त्रणं कुरुतेति । एव मुक्त्वा तथेति देवैरङ्गीकृते सति 'सा' गायत्री द्युलोकं प्रत्युत्पतन मकरोत् । तदानीं देवाः स्वागतप्रकारेण सर्वेणापि क्षेमप्रापणमन्त्रेण गायत्री मनुमन्त्रितवन्तः । कोऽसौ मन्त्रः ? इति—'प्र'-शब्द एको मन्त्रः, 'आ'-शब्दो द्वितीयो मन्त्रः ; तदुभयप्रदर्शनार्थ मितिशब्दद्वयम् । उभयसमुच्चयार्थं चकारद्वयम् । क्षेमेण सोमं प्राप्नुहि, पुनरपि क्षेमेणागच्छेति । अय माशीर्वादो मन्त्रद्वयस्यार्थः । एतदेव मन्त्र-द्वयं सर्वं स्वस्त्ययनं 'प्र'-इत्येकम्, 'आ'-इति द्वितीयं पद मस्ति ;

इतोऽधिकं नान्यत् स्वस्त्ययन मस्ति। यस्मादिद मेव सर्वक्षेमप्रापकम्, तस्मादिदानी मपि यः पुमान् ग्रामान्तरं जिगमिषुः 'अस्य' गृहस्वामिनः प्रियः स्यात्; तं जिगमिषुं प्रेत्येतीतिमन्त्रद्वयेनानुमन्त्रयेत; तेनाशीर्वादप्रसादेनायं क्षेमेणैव गच्छति पुनरागच्छति च॥

इत्थं प्रासङ्गिकं लौकिकविधि मुक्त्वा प्रकृत मेव गायत्रीवृत्तान्त मनुसरति—"सा पतित्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं समगृभ्णाद्, यानि चेतरे छन्दसी अक्षराण्यजहितां तानि चोप समगृभ्णात्"-इति। 'सा' गायत्री 'पतित्वा' उत्पतनेन सोमं प्राप्य गन्धर्वान् स्वानभ्राजादीन् सोमरक्षकान् आस्फोटनायुधप्रदर्शनादिना भीषयित्वा,—भीत्या तेष्वपसृतेषु स्वयं पक्षिरूपा सती स्वकीयाभ्यां पद्भ्यां मुखेन च सोमं सम्यग् गृहीतवती। स्वानभ्राजादीनां सोमपालकत्व माध्वर्यवे सोमप्रकरणे मन्त्र-तद्ब्राह्मणाभ्या मवगम्यते। "स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवे ते वः सोमक्रयणास्तान्रक्षध्वम्"-इति (तै० सं० १.२.७.) मन्त्रः, "स्वानभ्राजेत्याहैते वा अमुष्मिंल्लोके सोम मरक्षन्"-इति (तै० सं० ६.१.१०.५.) ब्राह्मणम्। न केवलं गायत्री सोम मेव गृहीतवती, किन्तु 'इतरे' जगतीत्रिष्टुभाख्ये छन्दसी 'यानि' चत्वार्यक्षराणि 'अजहितां' परित्यक्तवत्यौ, तानि चोपेत्य सम्यग् गृहीतवती॥

अथ तस्या गायत्र्या गन्धर्वेण सह युद्धे यो वृत्तान्तस्तं दर्शयति—"तस्या अनु विसृज्य कृशानुः सोमपालः सव्यस्य पदो नख मच्छिदत् तच्छल्यकोऽभवत्, तस्मात्स नख मिव; यद्वश मस्रवत् सा वशाऽभवत्, तस्मात्स हविरिव; अथ यः शल्यो यदनीकं

आसीत्स सर्पो निर्दंश्यभवत्; सहसः स्वजो; यानि पर्णानि ते मन्यावला; यानि स्नावानि ते गण्डूपदा; यत् तेजनं सोऽन्धाहिः; सो सा तयेषुरभवत्''–इति। स्वानभ्राजादिषु सोमरक्षकेषु यः सप्तमो गन्धर्वः कृशानुनामकः, सोऽयं तस्या गायत्र्या अनु पृष्ठतो वाणं विसृज्य तदीयस्य वामपादस्यैकं नखं छिन्नवान्। तच्च नखं 'शल्यकः' मर्कटशरीरपरिमितः शल्यकाख्यो मृग आसीत्। यस्य मृगस्य पुच्छसमीपे बहवो रोमाः प्रादेशप्रमिताः तीक्ष्णाग्रा लोहमया उत्पद्यन्ते, स शल्यकः। यस्मादयं नखादुत्पन्नस्तस्मात्स नख मिव तीक्ष्णाग्ररोमोपेतः। तत्र छिन्ननखपादप्रदेशे यद् 'वशं' मेदोऽस्रवत्, सा 'वशा' मेध्या, काचिदजा अव्यादिपशुषु आसीत्। 'तस्मात्' गायत्र्या उत्पन्नत्वात् 'सा' वशा 'हविरिव' देवतायोग्यं हविरेवासीत्। तच्च हविष्ट्वं शाखान्तरे श्रूयते— "एता मेव वशा मादित्येभ्यः कामायालभेत"–इति ( तै० सं० २.१.२.३,४.)। अथ नखच्छेदनाय गन्धर्वेण विसृष्टो वाणः, सोऽपि नखसङ्घट्टनेन कुण्ठिताऽग्रो बहुधा भग्नो भूमिपतितः। तस्य वाणस्य यः 'शल्यः' कृष्णायसनिर्मितो वाणाग्रे स्थापितः, तस्य च शल्यस्य यत् 'अनीकं' मुखं घट्टनेन कुण्ठित मासीत्, 'सः' अयं शल्यः, तदनीकात्मको वाणभागो 'निर्दंशो' दंशनासमर्थः सर्पो ऽभवत्;— जलमध्ये सञ्चरतो डुण्डुभाख्यस्य सर्पस्य विषरहितत्वाद् दंशनसामर्थ्यं नास्ति। तस्मात्कुण्ठिताग्रस्य लोहस्य योऽयं 'सहः' वेगः, तस्मात् 'सहसः' वाणवेगात् 'स्वजः' उभयतः-शिराः सर्पो ऽभवत्। तस्य वाणस्य मूले यानि 'पर्णानि' कङ्कपत्राणि, ते 'मन्यावलाः' अभवन्। ये जीवविशेषाः वृक्षशाखास्वधोमुखा अवलम्बन्ते, ते मन्यावलाः। तस्मिन् वाणे यानि 'स्नावानि' पत्रबन्धनार्थाः

स्नायुविशेषाः, ते 'गण्डूपदाः' अभुवन्। अवस्करादिस्थानेषु ये सर्पा जायन्ते, ते गण्डूपदाः। तस्मिन् बाणे यत् 'तेजनं' लोहपत्रव्यतिरिक्तं काष्ठं, सः 'अन्धाहिरभवत्' दृष्टिरहितः सर्पोऽभूत्। 'तथा' तेनोक्तप्रकारेण 'इषुः' गन्धर्वेण मुक्तो बाणः 'सो सा' अभवत्। 'उ'-शब्दः समुच्चयार्थः; सा च सा चेत्युक्तं भवति। तथोक्ते सति तत्तज्जातिः निर्दंशिसर्पादिरूपेत्युक्तार्थोपसंहारः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां त्रयोदशाध्याये द्वितीयः खण्डः ॥ २ ( २६ ) ॥

---

॥ अथ तृतीयः खण्डः ॥

सा यद्दक्षिणेन पदा समगृभ्णात्तत्प्रातःसवन मभवत्तद्गायत्री स्व मायतन मकुरुत तस्मात्तत्समृद्धतमं मन्यन्ते सर्वेषां सवनाना मग्रियो मुख्यो भवति श्रेष्ठता मश्नुते य एवं वेदाथ यत्सव्येन पदा समगृभ्णात्तन्माध्यन्दिनं सवन मभवत्तद्विस्रंसत तद्विस्रस्तं नान्वाप्नोत्पूर्वं सवनं ते देवाः प्राजिज्ञासन्त तस्मिंस्त्रिष्टुभं छन्दसा मदधुरिन्द्रं देवतानां तेन तत्समावद्वीर्य मभवत्पूर्वेण सवनेनोभाभ्यां सवनाभ्यां समा-

वद्वीर्याभ्यां समावज्जामीभ्यां राध्नोति य एवं वेदाथ यन्मुखेन समगृभ्णात् तत्तृतीयसवन मभवत्तस्य पतन्ती रस मधयत्तद्धीतरसं नान्वाप्नोत्पूर्वे सवने ते देवाः प्राजिज्ञासन्त तत्पशुष्वपश्यंस्तद्यदाशिर मवनयन्त्याज्येन पशुना चरन्ति तेन तत्समावद्वीर्य मभवत्पूर्वाभ्यां सवनाभ्यां सर्वैः सवनैः समावद्वीर्यैः समावज्जामीभी* राध्नोति य एवं वेद ॥ ३ (२७) ॥

अथ तृतीयसवनार्थं सवनत्रयस्योत्पत्तिं दर्शयति—"सा यद्दक्षिणेन पदा समगृभ्णात्तत्प्रातस्सवन मभवत्तद्गायत्री स्व मायतन मकुरुत; तस्मात्तत्समृद्धतमं मन्यन्ते सर्वेषां सवनानाम्; अग्रियो मुख्यो भवति, श्रेष्ठता मश्नुते य एवं वेदाथ यत्सव्येन पदा समगृभ्णात्तन्माध्यन्दिनं सवन मभवत्तद्विस्रंसत, तद्विस्रस्तं नान्वाप्नोत्पूर्वं सवनं; ते देवाः प्राजिज्ञासन्त तस्मिंस्त्रिष्टुभं छन्दसा मदधुरिन्द्रं देवतानां; तेन तत्समावद्वीर्य मभवत्पूर्वेण सवनेनोभाभ्यां सवनाभ्यां समावद्वीर्याभ्यां समावज्जामीभ्यां राध्नोति य एवं वेदाथ यन्मुखेन समगृभ्णात् तत्तृतीयसवन मभवत्"—इति। 'सा' गायत्री सोम मानयन्ती दक्षिणेन 'पदा' पादेन 'यत्' यावत् सोमस्य स्वरूपं गृहीतवती, 'तत्' तावत् प्रातस्सवन मभवत्। तत्र प्रातस्सवनं 'सा' गायत्री स्वकीयं स्थान मकरोत्। तस्मात् तत्सर्वेषां सवनानां मध्ये अतिशयेन समृद्ध मिति याज्ञिका मन्यन्ते; तत्र प्रयोगबाहुल्यसद्भावात्। यः 'एवम्' उक्तार्थं वेद, स स्वकीयानां मध्ये 'मुख्यः'

* 'जामिभी' घ, टी॰ ग, घ।

श्रेष्ठः सन् विद्यावृत्तादिरूपां 'श्रेष्ठतां' प्राप्नोति । अथ सा गायत्री वामपादेन 'यत्' सोमस्य स्वरूपं गृहीतवती, तन्माध्यन्दिनं सवनं विस्रस्तमभूत्; वामपादात् 'तत्' तत्र 'विस्रस्तं' गलितं तत् माध्यन्दिनं सवनं पूर्वोक्तप्रातस्सवनानुगमनाय शक्तं नाभूत् । ते देवा विचार्य 'तस्मिन्' माध्यन्दिने सवने स्वामित्वेन छन्दसां मध्ये त्रिष्टुभं देवतानां मध्ये इन्द्रं च स्थापितवन्तः । तेन 'तत्' माध्यन्दिनं सवनं प्रातस्सवनेन सह 'समावद्वीर्यं' तुल्यसामर्थ्य मभूत् । उक्तार्थस्य वेदिता तुल्यसामर्थ्याभ्या मत एव तुल्यजातिभ्यां समृद्धो भवति । 'जामी'-शब्दो जातिवाची*; तुल्यजातिभ्या मित्यर्थः ॥

अथ गायत्री मुखेन यत्सोमस्वरूपं गृहीतवती, तत् तृतीयसवन मभूत् । तस्मिन् सवने तु ऋजीषस्वरूपे निस्सारे सोमे आशिरादिकं विधत्ते— "तस्य पतन्ती रस मधयत्तद्धीतरसं नान्वाप्नोत्पूर्वे सवने; ते देवाः प्राजिज्ञासन्त तत्पशुष्वपश्यंस्तद्यदाशिर मवनयन्त्याज्येन पशुना चरन्ति, तेन तत्समावद्वीर्य मभवत्पूर्वाभ्यां सवनाभ्याम्"–इति । सा गायत्री मुखेन तृतीयसवनरूपं सोमं गृहीत्वा द्युलोकादधः पतन्ती 'तस्य' सोमस्य 'रस मधयत्' सारं पीतवती । तत् तृतीयसवनं 'धीतरसं' पीतसारं भूत्वा पूर्वोक्ते प्रातस्सवनमाध्यन्दिनसवने द्वे अनुगन्तुं नाशक्नोत् । ते देवाः तत्प्रतीकारं विचार्य तत्साधनं 'पशुषु अपश्यन्' पशुषु क्षीरं यदस्ति, यच्चाज्य मस्ति, यदपि हृदयाद्यङ्ग मस्ति, तत्सर्वं सारम् । तस्माद्यत् पीतरसे सोमसम्बन्धिनि ऋजीषे 'आशिरं' क्षीरम् 'अवनयन्ति' सिञ्चन्ति याज्ञिकाः, तथा आज्यपशुभ्यां 'चरन्ति' अनुतिष्ठन्ति । तदानीं

---

* अतिरेकवालिशसमानजातीयानां वाचको 'जामि-शब्दः'–इत्यादि देवराजयज्वकृता निघण्टुवृत्तिः (४.१.४६.) । निरु० ३.१.५,६ ।

'तेन' अनुष्ठानेन 'तत्' तृतीयसवनं पूर्वसवनाभ्यां तुल्यसामर्थ्यमभूत्। अय मर्थः सर्वोऽपि शाखान्तरे सङ्गृह्याम्नातः — "ब्रह्मवादिनो वदन्ति,— कस्मात् सत्यात् गायत्री कनिष्ठा छन्दसाᳬं सती यज्ञमुखं परीयायेति ; यदेवाद: सोम माहरत्, तस्माद्यज्ञमुखं पर्यैत्, तस्मात्तेजस्विनीतमा पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं ; यन्मुखेन समगृह्णात्, तदधयत् ; तस्माद् द्वे सवने शुक्रवती प्रातस्सवनं च माध्यन्दिनं च ; तस्मात् तृतीयसवन ऋजीष मभिषुण्वन्ति,—धीत मिव हि मन्यन्त आशिर मवनयति सशुक्रत्वाय" —इति ( तै० सं० ६.१.६.३,४. )॥

वेदनं प्रशंसति — "सर्वैः सवनैः समावद्वीर्यैः समावज्जामीभीराप्नोति य एवं वेद"—इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
तृतीयः खण्डः ॥ ३ ( २७ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

ते वा इमे इतरे छन्दसी गायत्री मभ्यवदेतां वित्तं नावक्षराण्यनु पर्यागुरिति नेत्यब्रवीद् गायत्री यथावित्त मेव न इति ते देवेषु प्रश्न मैतां ते देवा अब्रुवन् यथावित्त मेव व इति तस्माद्वाप्येतर्हि वित्त्यां व्याहुर्यथावित्त मेव न इति ततो वा अष्टाक्षरा

गायत्र्यभवत्त्र्यक्षरा त्रिष्टुबेकाक्षरा जगती साष्टाक्षरा गायत्री प्रातस्सवन मुदयच्छन्नाशक्नोत् त्रिष्टुप् त्र्यक्षरा माध्यन्दिनं सवन मुद्यन्तुं तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति सा तथेत्यब्रवीत् त्रिष्टुप् तां वै मैतैरष्टाभिरक्षरैरुपसन्धेहीति तथेति ता मुप समदधादेतद्वै तद् गायत्र्यै मध्यन्दिने यन्मरुत्वतीयस्योत्तरे प्रतिपदो यश्चानुचरः सैकादशाक्षरा भूत्वा माध्यन्दिनं सवन मुदयच्छन् नाशक्नोज्जगत्येकाक्षरा तृतीयसवन मुद्यन्तुं ताङ्गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति सा तथेत्यब्रवीज्जगती तां वै मैतैरेकादशभिरक्षरैरुपसन्धेहीति तथेति ता मुप समदधादेतद्वै तद्गायत्र्यै तृतीयसवने यद्वैश्वदेवस्योत्तरे प्रतिपदो यश्चानुचरः सा द्वादशाक्षरा भूत्वा तृतीयसवन मुदयच्छत्ततो वा अष्टाक्षरा गायत्र्यभवदेकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगती सर्वैश्छन्दोभिः सवावद्वीर्यैः समावज्जामिभी राध्नोति य एवं वेदैकं वै सत् तत्त्रेधाभवत्तस्मादाहुर्दातव्य मेवं विदुष इत्येकं हि सत् तत्त्रेधाभवत् ॥ ४ (२८) ॥

ननु पूर्वत्र सर्वाणि छन्दांसि चतुरक्षराणीत्युक्तम्; तेष्वपि त्रिष्टुभ एक मक्षरं गतम्, जगत्याश्च त्रीण्यक्षराणि गतानि, तथा

सति सर्वश्रुत्यन्तरविरोधः; तेषु च श्रुत्यन्तरेष्वष्टाक्षरा गायत्री, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगतीति सर्वत्र श्रूयते*; अनुष्ठानं च तथैव क्रियते ; तत्कथं विरोधपरिहारः? इत्याख्यायिकया परिहारं दर्शयितु मारभते— "ते वा इमे इतरे छन्दसी गायत्री मभ्यवदेतां,— वित्तन्नावक्षराण्यनुपर्यागुरिति ; नेत्यब्रवीद्गायत्री यथावित्त मेव न इति ; ते देवेषु प्रश्न मैतां ; ते देवा अब्रुवन्,— यथावित्त मेव इति ; तस्माद्वाप्येतर्हि वित्त्यां व्याहुर्यथावित्त मेव न इति ; ततो वा अष्टाक्षरा गायत्र्यभवत्, त्र्यक्षरा त्रिष्टुबेकाक्षरा जगती"—इति । ये त्रिष्टुब्जगत्यौ पुरा स्वकीयान्यक्षराणि परित्यक्तवत्यौ, ते एव इमे 'इतरे' गायत्रीव्यतिरिक्ते छन्दसी गायत्री मभि लक्ष्य समागत्यैव सुक्तवत्यौ,— हे गायत्रि! यत् त्वया 'वित्तं' लब्धम्, अधिक मक्षरचतुष्टयम्, तदेतत् 'नौ' त्रिष्टुब्जगत्यो-रावयोः ; तस्मात् तानि चत्वार्यक्षराणि 'अनुपर्यागुः' आवां त्रिष्टुब्जगत्यावनु लक्ष्य पर्यावृत्य आगच्छन्त्विति । गायत्री तयो-र्वचनं नेति निराकृत्य तत्रैता मुपपत्ति मब्रवीत्,—'नः' अस्माकं 'यथावित्त मेव' लब्ध मनतिक्रम्यैव स्वामित्वं युक्तम् । यद्वस्तु येन लब्धं तत् तस्यैवेति लौकिकन्यायः । तं न्यायं निर्णेतु 'ते' त्रिष्टुब्-जगत्यौ देवेषु प्रश्नम् 'ऐतां' प्राप्नुताम् । हे देवाः! कथं न्यायः? इति तयोः प्रश्नः । ते च देवा उत्तर मेव मब्रुवन्— 'वः' युष्माकं तिसृणां यथावित्त मेवाक्षरस्वीकारो युक्त इति । यस्माद् देवैरेव मुक्तं 'तस्माद्' तत एव कारणादिदानी मपि 'वित्त्यां' कस्य चित् पुरुषस्य द्रव्यलब्धौ सत्यां 'व्याहुः' विप्रतिपन्नं प्रति न्यायाभिज्ञा एव माहुः,—'नः' अस्माकं सर्वेषा मपि लब्ध मनतिक्रम्यैव वस्तुस्वीकारो

* पु० ५१,५२ पृ० । शत० ब्रा० १.७.३.२३—२५। ता० ब्रा० ८.४।

युक्ता इति। युद्धादौ जये सति परसेनायां प्रविश्य येन यल्लभ्यते, तेनैव तद् गृह्यत इति वक्तृणा मभिप्रायः। देवैर्न्याये निर्णीते सति तदूर्द्ध्वं गायत्री स्वकीयैः स्वभावसिद्धैश्चतुरक्षरैर्युद्धलब्धैश्चतुरक्षरैरपि स्वय मष्टाक्षरा अभूत्। त्रिष्टुभः पूर्वं वर्त्तमानेषु चतुर्ष्वेकाक्षरस्य गतत्वात् त्र्यक्षरैव सा, तथा जगत्याश्चतुरक्षरेष्वक्षरत्रयस्य गतत्वादेकाक्षरैव सा अभवत्॥

इदानीं त्रिष्टुभोऽक्षरत्रयादधिकाना मक्षराणां प्राप्तिप्रकारं दर्शयति—"साष्टाक्षरा गायत्री प्रातस्सवन मुदयच्छन्नाशक्नोत् त्रिष्टुप् त्र्यक्षरा माध्यन्दिनं सवन मुद्यन्तुं; तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति; सा तथेत्यब्रवीत् त्रिष्टुप् तां वै,—मैतैरष्टाभिरक्षरैरुपसन्धेहीति; तथेति ता मुपसमदधाद्; एतद्वै तद्गायत्र्यै मध्यन्दिने यन्मरुत्वतीयस्योत्तरे प्रतिपदो यश्चानुचरः सैकादशाक्षरा भूत्वा माध्यन्दिनं सवन मुदयच्छत्"–इति। या इय मष्टाक्षरा गायत्री प्रातस्सवनम् 'उदयच्छत्' उद्यमनं निर्वाहं तस्य प्रातस्सवनस्याकरोत्। या तु त्रिष्टुप्, सेयं 'त्र्यक्षरा' अक्षरत्रयमात्रेण युक्ता सती माध्यन्दिनं सवनम् 'उद्यन्तु' निर्वोढुं नाशक्नोत्। 'ताम्' अशक्तां त्रिष्टुभं दृष्ट्वा गायत्री एव मब्रवीत्,—'आयानि' त्वत्सहायार्थं मह मागच्छानि 'मे' ममापि 'अत्र' अस्मिन् माध्यन्दिने सवने भागोऽस्त्विति। तद्वचन मङ्गीकृत्य सा त्रिष्टुबेव मब्रवीत् 'तां वै' तादृशीं गायत्रीम्,—त्र्यक्षरा मेव 'मा' मां स्वकीयैरेतैरष्टाभिरक्षरैः 'उपसन्धेहि' सामीप्येन सन्धानं कुरु, प्रविशेत्यर्थः। तद्वचन मङ्गीकृत्य सा गायत्री 'तां' त्रिष्टुभम् 'उपसमदधात्' स्वकीयैरष्टाभिरक्षरैः प्राविशत्। कोऽसौ गायत्र्या लब्धो भाग इति, स उच्यते—'मरुत्वतीयस्य'

शस्त्रस्य * 'उत्तरे प्रतिपदः' "आ त्वा रथम्"-इत्यस्मिन् प्रारम्भरूपे तृचे प्रथमाया उत्तरे ये द्वे ऋचौ प्रतिपदौ प्रारम्भरूपे विहिते †, यश्च "इदं वसो सुतम्"— इत्यनुचररूपस्तृचः ‡ ; तदेवैतदृक्पञ्चकं माध्यन्दिनसवने गायत्र्या त्रिष्टुभा दत्तम् ;— ताश्च पञ्चर्चो गायत्रीच्छन्दस्काः §। ततो गायत्रीप्रवेशात् 'सा' त्रिष्टुप् एकादशाक्षरा भूत्वा माध्यन्दिनं सवनप्रयोगम् 'उदयच्छत्' निरवहत् ॥

अथ जगत्याः स्वकीयादेकस्मादक्षरादधिकानां मक्षराणां प्राप्तिप्रकारं दर्शयति— "नाशक्नोज्जगत्येकाक्षरा तृतीयसवन मुद्यन्तुं; तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति ; सा तथेत्य-ब्रवीज्जगती ; तां वै मैतैरेकादशभिरक्षरैरुपसन्धेहीति ; तथेति ; ता मुपसमदधादेतद्वै तद्गायत्र्यै तृतीयसवने यद्वैश्वदेवस्योत्तरे प्रतिपदो यश्चानुचरः ; सा द्वादशाक्षरा भूत्वा तृतीयसवन मुदयच्छत्"-इति। वैश्वदेवशस्त्रस्य प्रतिपदनुचरावुपरिष्टादुदाहरिष्येते ‖ ॥

उक्त मर्थं निगमयति— "ततो वा अष्टाक्षरा गायत्र्यभव-देकादशाक्षरा त्रिष्टुब्, द्वादशाक्षरा जगती"-इति ॥

वेदनं प्रशंसति— "सर्वैश्छन्दोभिः समावद्वीर्यैः समावज्जा-मिभी राध्नोति य एवं वेद"-इति ॥

---

* ६४—९३ पृ० ४—९ ख० मरुत्वतीयशस्त्रविधिराम्नातः।

† ९७ पृ० २ पं० 'येन'-इत्यादि, ११२ पृ० '*' २पं० 'प्रथमस्य'-इत्यादि द्रष्टव्यम्।

‡ ९७ पृ० ३ पं० 'तदनन्तरभावी'-इत्यादि द्रष्टव्यम्।

§ ऋ० सं० ८.६८.२,३ इति द्वे, ८.२.१,२,३ इति तिस्रः, इति पञ्च।

‖ पञ्चमादिचतुःखण्डेषु वैश्वदेवशस्त्रविधिराम्नास्यते।

गायत्रीं विशेषेण प्रशंसति— "एकं वै स तत् त्रेधाभवत्तस्मादाहुर्दातव्य मेवं विदुष इत्येकं हि स तत् त्रेधाभवत्"–इति। 'तत्' गायत्र्याः स्वरूपं पूर्वं चतुरक्षररूपेणैक मेव, तत्पश्चादधिकाक्षरचतुष्टयत्वसम्पादनेन स्वकीयाना मष्टाक्षराणां त्रिष्टुब्जगत्योः प्रवेशेन च त्रेधा अभवत्। यस्मादीदृशो गायत्र्या महिमा, तस्मात् 'एवं विदुषे' गायत्रीमहिमानं ज्ञातवते पुरुषाय लोके गोसुवर्णादिकं दातव्यम्,–'इति' एवं धर्मरहस्यविदः प्राहुः। यस्माद्गायत्रीस्वरूप मेक मेव सत् त्रेधाभवत्, तस्मात्तद्विदे दान मुचित मेवेत्युपसंहारार्थं पुनर्वचनम् ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
चतुर्थः खण्डः ॥ ४ (२८) ॥

---

॥ अथ पञ्चमः खण्डः ॥

ते देवा अब्रुवन्नादित्यान् युष्माभिरिदं सवन मुद्यच्छामेति तथेति तस्मादादित्यारम्भणं तृतीयसवन मादित्यग्रहः पुरस्तात्तस्य यजत्यादित्यासो अदितिर्मादयन्ता मिति मद्वत्या रूपसमृद्धया मद्वद्वै तृतीयसवनस्य रूपं नानुवषट् करोति न भक्षयति संस्था वा एषा यदनुवषट्कारः संस्था भक्षः प्राणा

आदित्यां नेत्प्राणान्त्संस्थापयानीति त आदित्या अब्रुवन्त्सवितारं त्वयेदं सह सवन मुद्यच्छामेति तथेति तस्मात् सावित्री प्रतिपद् भवति वैश्वदेवस्य सावित्रग्रहः पुरस्तात्तस्य यजति दमूना देवः सविता वरेण्य इति मद्वत्या रूपसमृद्धया मद्वद्वै तृतीय-सवनस्य रूपं नानुवषट् करोति न भक्षयति संस्था वा एषा यदनुवषट्कारः संस्था भक्षः प्राणः सविता नेत् प्राणं संस्थापयानीत्युभे वा एष एते सवने विपिबति यत् सविता प्रातस्सवनं च तृतीयसवनं च तद्यत्पिबवत्सावित्र्यो निविदः पदं पुरस्ताद् भवति मद्वदुपरिष्टादुभयोरेवैनं तत्सव-नयोराभजति प्रातस्सवने च तृतीयसवने च बह्व्यः प्रातर्वायव्याः शस्यन्त एका तृतीयसवने तस्मादूर्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चो द्यावापृथिवीयं शंसति द्यावापृथिवी वै प्रतिष्ठे इय मेवेह प्रतिष्ठा ऽसावमुत्र तद्यद् द्यावापृथिवीयं शंसति प्रतिष्ठयो-रेवैनं तत् प्रतिष्ठापयति ॥ ५ (२९) ॥

एवं तावत् तृतीयसवन मवतारयितुं सोमाहरणकथा वर्णिता; अथ तृतीयसवन मुच्यते,— तत्र वैश्वदेवाग्निमारुतयोः क्लृप्तिः सङ्गृह्यते —

स्याद्वैश्वदेवे सवितुः पुनस्तुतिर्द्याव्यापृथिव्यार्भववैश्वदेविका ।
वैश्वानरीयं मरुतां च शंसनं स्युर्जातवेदस्य मिहाग्निमारुते ॥

तृतीयसवनस्यादावादित्यग्रहं विधत्ते— "ते देवा अब्रुवन्नादित्यान्,— युष्माभिरिदं सवन मुद्यच्छामेति ; तथेति ; तस्मादादित्यारम्भणं, तृतीयसवन मादित्यग्रहः पुरस्तात्तस्य"–इति। तृतीयसवनं निर्वहन्त्या जगत्या अक्षररूपां मूर्त्ति मवगतवन्तः* 'ते देवाः' 'आदित्यान्' द्वादशसङ्ख्याकान् प्रत्येव मब्रुवन्,— हे आदित्याः ! युष्माभिः सहिता वयम् 'इदं' तृतीयं सवनम् 'उद्यच्छाम' निर्वाहं करवामहै इति। आदित्याश्च तथेत्यङ्गीकृतवन्तः। यस्मादारम्भे देवैरादित्यसाहित्यं प्रार्थितम्, तस्मात् 'आदित्यारम्भणं तृतीयसवनम्' आदित्यग्रहः 'आरम्भणे' सर्वेषां ग्रहाणा मादौ यस्य सवनस्य, तदिद मादित्यारम्भणम्। स एवार्थ आदित्यग्रह इत्यादिना स्पष्टीक्रियते— 'तस्य' तृतीयसवनस्य 'पुरस्तात्' आदौ आदित्यदेवताको ग्रहः कर्त्तव्यः॥

तस्य ग्रहस्य याज्यां विधत्ते— "यजत्यादित्यासो अदितिर्मादयन्ता मिति मद्वत्या रूपसमृद्धया,— मद्वद्वै तृतीयसवनस्य रूपम्"–इति। 'आदित्यासः' अदितेः पुत्रा आदित्याः ; ते च तन्माता 'अदितिः' च 'मादयन्ताम्' ग्रहेणानेन तुष्यन्तु। 'इति' एषा ( सं० ७. ५१. २. ) याज्या मद्वती ; "मदी हर्षे"–इत्यस्माद्धातोरुत्पन्नेन मच्छब्देन युक्ता†। तस्या मादित्याना मदितेश्च हर्षवर्णनात् विवक्षितदेवताविषयत्वेन रूपसमृद्धा। तृतीयसवनस्य स्वरूपम् 'मद्वद्वै' हर्षोपेत मेव ; तत्समाप्तौ देवतानां यजमानाना मृत्विजां च हर्षोत्पत्तेः॥

* 'अक्षरसम्पूर्त्ति मवगतवन्तः' ग। † आश्व० श्रौ० ५. १०. ३।

इतरग्रहवत्प्रसक्तावनुवषट्कारभक्षौ प्रतिषेधति— "नानुवषट् करोति, न भक्षयति, संस्था वा एषा यदनुवषट्कारः संस्था भक्षः, प्राणा आदित्या, नेत्प्राणान्त्संस्थापयानीति"-इति। अनुवषट्कारभक्षयोः ग्रहसमाप्तिरूपत्वादादित्यानां च प्राणरूपत्वादादित्यग्रहं समापयन्नहं प्राणानेव समापितवान् भविष्यामीति भीत्या तत्समाप्तिरूपावनुवषट्कारभक्षौ न कुर्यात्। 'नेत्'-इति परिभवद्योतनार्थो निपातः॥

अथ सावित्रं ग्रहं वैश्वदेवशस्त्रस्य प्रतिपदं च विधत्ते—"त आदित्या अन्नुवन्त्सवितारं त्वयेदं सह सवन मुद्यच्छामेति; तथेति; तस्मात्सावित्री प्रतिपद् भवति वैश्वदेवस्य, सावित्रग्रहः पुरस्तात्तस्य यजति, दमूना देवः सविता वरेण्य इति मद्वत्या रूपसमृद्धया,—मद्वद्वै तृतीयसवनस्य रूपं; नानुवषट् करोति, न भक्षयति; संस्था वा एषा यदनुवषट्कारः, संस्था भक्षः, प्राणः सविता नेत्प्राणं संस्थापयानीति"-इति। वैश्वदेवशस्त्रस्य "तत्सवितुर्वृणीमहे"-इत्येषा (सं० ५.८२.१.) सवितृदेवताका 'प्रतिपत्' प्रारम्भरूपा कर्त्तव्या *। "दमूना देवः"-इत्यादिका ग्रहस्य याज्या। सा च संहितायामनाम्नातत्वात्सूत्रकारेण पठिता†। तस्यां च "अमदन्नेनमिष्टयः"-इति 'मदि'-धातुः प्रयुक्तः; तस्मादियं मद्वती। अन्यत्सर्व मादित्यग्रहवद् व्याख्येयम्॥

अथ निवित्पदद्वारा सावित्रग्रहं प्रशंसति— "उभे वा एष एते सवने विपिबति यत्सविता,—प्रातस्सवनं च तृतीयसवनं च; तद्यत् पिबवत्सावित्र्यै निविदः पदं पुरस्ताद् भवति, मद्वदुपरिष्टादुभयोरेवैनं तत्सवनयोराभजति, प्रातस्सवने च तृतीयसवने च"-इति।

* आश्व० श्रौ० ५. १८. ५। † आश्व० श्रौ० ५. १८. २।

ग्रहस्य देवता यः सवितास्ति, एष देवः प्रातस्सवनं तृतीयसवनं चेत्येते उभे अपि सवने 'विपिबति' विलक्षणत्वेन पिबति। तत्कथम्? इति, तदेवोच्यते— वैश्वदेवशस्त्रे 'सवितृत्र' सवितृदेवताकाया निविदः पदं 'पिबवत्' पिबतिधातुयुक्तं 'पुरस्तात्' आदौ भवति, 'मद्वत्पदं' मदिधातुयुक्तम् 'उपरिष्टात्' अन्ते भवति। तेन 'प्रातस्सवने तृतीयसवने च' उभयोरपि सवनयोः 'एनं' सवितारम् 'आभजति' भागिनं करोति। "सविता देवः सोमस्य पिबतु"-इत्येतं (निवि० ४.१.) निविद आदौ प्रयुज्यमानं पदं 'पिबवत्पदं'; तथान्ते प्रयुज्यमानं "सविता देव इह श्रवदिह सोमस्य मत्सत्"-इति (निवि० ४.१५.) 'मद्वत्पदम्' अप्युदाहरणीयम्: तयोरुभयोः पदयोः सवनद्वयरूपयोः विलक्षणत्वात्सवितुः पान मिति विलक्षण मिति च द्रष्टव्यम्। एवंविधसवितृदेवताकत्वात् प्रशस्तोऽयं ग्रह इत्यभिप्रायः। अथवा निवित्पदविधानार्थ मिदं वाक्यं द्रष्टव्यम् ॥

अथ तस्मिन्वैश्वदेवशस्त्रे "एकया च दशभिश्च स्वभूते"-इत्येतां* वायुदेवताका मृचं विधत्ते— "बह्वः प्रातर्वायव्याः शस्यन्त, एका तृतीयसवने; तस्मादूर्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चः"-इति। "वायुरग्रेगाः"-इत्याद्याः (आश्व० श्रौ० ५.५.२.) वायव्या ऋचो 'बह्वः' प्रातस्सवने शस्यन्ते, तृतीयसवने तु एकैव पूर्वोदाहृता; 'तस्मात् प्रातस्सवने वायुदेवताकानां भूयस्त्वात् पुरुषस्यापि प्रातःसवनस्थानीये मुखे वर्त्तमानत्वात् 'ऊर्ध्वाः' चक्षुर्घ्राणादयः 'प्राणाः' भूयांसः, 'यच्च' ये केचित् 'अवाञ्चः' नाभेरर्वा-

* सा च संहितायां समाम्नातेति सूत्रकारेण पठिता। आश्व० श्रौ० ५. १८. ५. द्र०।

चीनि तृतीयसवनस्थानीये देशे वर्त्तमानाः पायुगुह्यादयो ऽवाञ्चः प्राणाः, अल्पीयांस इति शेषः ॥

तस्मिन्नेव वैश्वदेवशस्त्रे द्यावापृथिवीदेवताकं सूक्तं विधत्ते— "द्यावापृथिवीयं शंसति, द्यावापृथिवी वै प्रतिष्ठे,—इय मेवेह प्रतिष्ठा ऽसावमुत्र ; तद्यद् द्यावापृथिवीयं शंसति, प्रतिष्ठयोरेवैनं तत् प्रतिष्ठापयति"-इति । 'इह' मनुष्यजन्मनि 'इय मेव' भूमिः 'प्रतिष्ठा' आश्रयः ; 'अमुत्र' जन्मान्तरे 'असावेव' द्युलोकः 'प्रतिष्ठा' आश्रयः । एवं द्यावापृथिव्यावेव प्रतिष्ठे यस्मात्, तस्मात् तदीयसूक्तशंसनेन 'एनं' यजमानं प्रतिष्ठारूपयोर्द्यावापृथिव्योरेवावस्थापयति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
पञ्चमः खण्डः ॥ ५ ( २८ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

आर्भवं शंसत्यृभवो वै देवेषु तपसा सोमपीथ मभ्यजयंस्तेभ्यः प्रातस्सवने वाचि कल्पयिषंस्तानग्निर्वसुभिः प्रातस्सवनादनुदत तेभ्यो माध्यन्दिने सवने वाचि कल्पयिषंस्तानिन्द्रो रुद्रैर्माध्यन्दिनात्सवनादनुदत तेभ्यस्तृतीयसवने वाचि कल्पयिषंस्तान् विश्वे देवा अनोनुद्यन्त नेह पास्यन्ति नेहेति स

प्रजापतिरब्रवीत्सवितारं तव वा इमे ऽन्तेवासास्त्व मेवैभिः सम्पिबस्वेति स तथेत्यब्रवीत्सविता तान्वै त्व मुभयतः परि पिबेति तान् प्रजापतिरुभयतः पर्यपिबत् ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवं सुरूपकृत्नु मूतये ऽयं वेनश्चोदयत्पृश्निगर्भा इति प्रजापतिरेवैनांस्तदुभयतः परि पिबति तस्मादु श्रेष्ठी पात्रे रोचयत्येव यं कामयते तं तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात् त एते धाय्ये अन्तरदधत येभ्यो मातैवा पित्र इति ॥ ६ (३०) ॥

"प्र द्यावा यज्ञैः पृथिवीꣳ ऋतावृधा"–इत्येतत् द्यावापृथिवीयं सूक्तं ( सं० १.१५९. १. ) विधाय, "तक्षन्रथं सुव्रतम्"–इत्येतत् ( सं० १.१११.१. ) आर्भवं सूक्तं विधत्ते—"आर्भवं शंसति"–इति। ऋभुनामका देवा यस्मिन् सूक्ते सन्ति, तदिदम् 'आर्भवम्'; तस्य सूक्तस्य प्रथमाया ऋचि तृतीयपादे "तक्षन् पितृभ्या मृभवः"–इति तद्देवताकत्वं प्रतीयते ॥

अथ धाय्ये विधातु माख्यायिका माह— "ऋभवो वै देवेषु तपसा सोमपीथ मभ्यजयंस्तेभ्यः प्रातस्सवने वाचि कल्पयिषंस्तानग्निर्वसुभिः प्रातस्सवनादनुदत, तेभ्यो माध्यन्दिने सवने वाचि कल्पयिषंस्तानिन्द्रो रुद्रैर्माध्यन्दिनात्सवनादनुदत, तेभ्यस्तृतीयसवने वाचि कल्पयिषंस्तान्विश्वे देवा अनोनुद्यन्त नेह पास्यन्ति नेहेति ; स प्रजापतिरब्रवीत्सवितारं,— तव वा इमेऽन्तेवासास्त्व

मेवैभिः सम्पिबस्वेति ; स तथेत्यब्रवीत्सविता,— तान्वै त्व मुभयतः परि पिबेति ; तान् प्रजापतिरुभयतः पर्यपिबत्"–इति। देवेषु सर्वेषु मध्ये ऋभुनामकाः केचन देवत्वं प्राप्ताः मनुष्यविशेषाः* प्रजापति मुद्दिश्य तपः कृत्वा तेन तपसा 'सोमपीथ मभ्यजयन्' सोमपान मभिलक्ष्य जितवन्तः, प्रजापतेः सकाशात् लब्धवन्त इत्यर्थः। स प्रजापतिरन्ये देवाश्च 'तेभ्यः' ऋभुभ्यः प्रातस्सवने वाचि 'कल्पयिषन्' सोमपानं कल्पयितु मैच्छन्। तदानीं प्रातस्सवनाभिमानी 'अग्निः' देवः स्वभृत्यैः 'वसुभिः' सह तस्मात् प्रातस्सवनात् तान् ऋभून् 'अनुदत' निराकरोत्। तथेन्द्रो रुद्रैः सह माध्यन्दिनात्सवनान्निराकरोत्। विश्वे देवास्तृतीयसवनात् 'अनोनुद्यन्त' भृशं निराकुर्वन्। निराकरणप्रकारः स च 'नेहेति'-वाक्येन पुनःपुनरनूद्यते। 'इह' तृतीयसवने ऋभवो न पास्यन्ति। विश्वेषां देवानां प्रत्येकं निराकरणवाक्येन सम्बन्धात् नेहेति पुनरुक्तम्। ततः स प्रजापतिर्निराकृतानृभून् दृष्ट्वा सवितार मब्रवीत्,— हे सवितः! तव 'इमे' ऋभवः 'अन्तेवासाः' समीपवासिनः शिष्याः, अतस्त्व मेवैभिः सह सम्यक् पिबस्व। तथेत्यङ्गीकृत्य सविता प्रजापति मिद मब्रवीत्,— हे प्रजापते! त्वं 'तान्वै' तानेव ऋभून् 'उभयतः पिब' तेषा मृभूणा मुभयोः पार्श्वयोः स्थित्वा त्व मपि सोमपानं कुरु। एव मुक्तः प्रजापतिस्तथैवाकरोत्॥

अथ धाय्ये विधत्ते— "ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवं ;—सुरूपकृत्नु मूतये ऽयं वेनश्चोदयत् पृश्नि॰

---

* "ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः। तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति, न मध्यमेन। तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति। आदित्यरश्मयोऽप्यृभव उच्यन्ते"–इति निरु॰ ११.२.४।

गर्भा इति ; प्रजापतिरेवैनांस्तदुभयतः परि पिबति ; तस्मादु श्रेष्ठी पात्रे रोचयत्येव यं कामयते तम्''–इति। ''सुरूपकृत्नुम्''–इत्येका धाय्या ( सं० १.४.१.), ''अयं वेनः''–इति ( सं० १०.१२३.१.) द्वितीया ; ते एते धाय्ये आर्भवसूक्तम् 'अभितः शस्येते'–''सुरूपकृत्नुम्''–इत्येषा सूक्तात् पूर्वं शंसनीया, ''अयं वेनः''–इत्येषा सूक्तात् पश्चात् शंसनीया। कीदृश्यौ धाय्ये ? 'अनिरुक्ते' निःशेषेणोक्तो देवो निरुक्तः, तादृशो ययोर्धाय्ययोः नास्ति, ते अनिरुक्ते; न खल्वनयोः ऋचोरीदृशो देव इति सहसा निर्णेतुं शक्यते। प्रजापतेरपि जगत्सृष्टेः पूर्वं मूर्त्तस्य निर्वक्तु मशक्यत्वात्सोऽप्यनिरुक्तः। अतो योग्यत्वात् ते उभे प्रजापतिदेवताके। एतयोर्धाय्ययोः शंसने प्रजापतिरेव 'एनान्' ऋभून् उभयतः परि पिबति। यस्मात् प्रजापतिरग्निर्वस्वादिदेवतानां मृभुषु रुच्यभावे सति पितृद्वारा बलात् रुचि मुत्पादितवान्, 'तस्मादु' तस्मादेव कारणात् लोकेऽपि 'श्रेष्ठी' कश्चित् धनपतिः 'यं' स्वकीयं भृत्य मितरैरनङ्गीकृत मिति सर्वेभ्यो रोचयितुं कामयते, 'तं' भृत्य माचारहीनं 'पात्रे' प्रतिग्रहयोग्यस्थाने बलात् सर्वेभ्यो रोचयत्येव ॥

अथापर मृग्द्वयं विधत्ते— ''तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात् ; त एते धाय्ये अन्तरदधत, येभ्यो मातैवा पित्र इति''–इति। अग्निवस्वादयो 'देवाः', 'तेभ्यः' ऋभुभ्यः 'अपैव' स्वय मपगता एव सन्तः 'अबीभत्सन्त' एवं मनसि बीभत्सां कृतवन्तः। कस्मात्कारणादिति तदुच्यते— 'मनुष्यगन्धात्'-इति। एते मनुष्या अस्मत्पङ्क्तियोग्या न भवन्तीति शङ्कयेत्यर्थः। 'ते एते' वक्ष्यमाणे द्वे धाय्ये 'अन्तरदधत' ऋभूणा मग्न्यादीनां च मध्ये 'अन्तर्धानं' व्यवधान मकुर्वत। के ते धाय्ये इत्युच्येते— ''येभ्यो

माता मधुमती"-इत्येका ( सं० १०.६३.३. ), "एवा पित्रे विश्वे देवाय"-इत्यपरा ( सं० ४.५०.६. ), "अयं वेन:"-इत्येतस्मात्पूर्वमेतदुभयं शंसेदित्यर्थः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
षष्ठः खण्डः ॥ ६ ( ३० ) ॥

---

॥ अथ सप्तमः खण्डः ॥

वैश्वदेवं शंसति यथा वै प्रजा एवं वैश्वदेवं तद्यथान्तरं जनता एवं सूक्तानि यथारण्यान्येवं धाय्यास्तदुभयतो धाय्यां पर्याह्वयते तस्मात्तान्यरण्यानि सन्त्यनरण्यानि मृगैश्च वयोभिश्चेति ह स्माह यथा वै पुरुष एवं वैश्वदेवं तस्य यथावान्तर मङ्गान्येवं सूक्तानि यथा पर्वाण्येवं धाय्यास्तदुभयतो धाय्यां पर्याह्वयते तस्मात्पुरुषस्य पर्वाणि शिथिराणि सन्ति दृळ्हानि ब्रह्मणा हि तानि धृतानि मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च तद्यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूल मेव तद्यज्ञं कुर्युस्तस्मात्ताः समान्य एव स्युः पाञ्चजन्यं वा एत-

दुक्थं यद्वैश्वदेवं सर्वेषां वा एतत्पञ्चजनाना मुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनाना मुक्थं सर्व एनं पञ्चजना विदुरैनं पञ्चिन्यै जनतायै हविनो गच्छन्ति य एवं वेद सर्वदेवत्यो वा एष होता यो वैश्वदेवं शंसति सर्वा दिशो ध्यायेच्छंसिष्यन्त्सर्वास्वेव तद्दिक्षु रसं दधाति यस्या मस्य दिशि द्वेष्यः स्यान्न तां ध्यायेदनु-हायैवास्य तद्वीर्यं मादत्ते ऽदितिर्द्यौरदितिरन्तरिक्ष मित्युत्तमया परिदधातीयं वा अदितिरियं द्यौरिय मन्तरिक्ष मदितिर्माता स पिता स पुत्र इतीयं वै मातेयं पितेयं पुत्रो विश्वे देवा अदितिः पञ्चजना इत्यस्यां वै विश्वे देवा अस्यां पञ्चजना अदिति-र्जात मदितिर्जनित्व मितीयं वै जात मियं जनित्व द्विः पच्छः परिदधाति चतुष्पादा वै पशवः पशूना मवरुद्ध्यै सकृदर्धर्चशः प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद् द्वि प्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति सदैव पञ्च-जनीयया परिदध्यात् तदुपस्पृशन् भूमिं परिदध्यात् तद्यस्या मेव यज्ञं सम्भरति तस्या मेवैनं तदन्ततः प्रतिष्ठापयति विश्वे देवाः शृणुतेमं हवं म इति

**वैश्वदेव मुक्थं शस्त्वा वैश्वदेव्या यजति यथाभागं तद्देवताः प्रीणाति ॥ ७ (३१) ॥**

अथ विश्वेदेवादेवताकम् "आ नो भद्रा"-इत्येतत्सूक्तं ( सं० १. ८९. १. ) विधत्ते—"वैश्वदेवं शंसति"-इति ॥

लौकिकदृष्टान्तेन प्रशंसन् आहावं * विधत्ते—"यथा वै प्रजा एवं वैश्वदेवं; तद्यथान्तरं जनता एवं सूक्तानि, यथारण्यान्येवं धाय्यास्तदुभयतो धाय्यां पर्याह्वयते; तस्मात्तान्यरण्यानि सन्त्यनरण्यानि मृगैश्च वयोभिश्चेति ह स्माह"-इति। लोके यथा प्रजा, एव मत्र 'वैश्वदेवं' शस्त्रम्; प्रजाशब्देन तन्निवासस्थानं राज्य मुपलक्ष्यते, राज्यसदृशं शस्त्र मित्यर्थः। 'तत्' तत्र प्रजाशब्देन राज्ये विवक्षिते, 'अन्तरम्' अभ्यन्तरे 'जनताः' जनसमूहा यथा तिष्ठन्ति, एवं तस्मिन् शस्त्रे सूक्तानि तिष्ठन्ति; यथा अरण्यानि राज्ये क्वचित् क्वचिद् भवन्ति, एव मस्मिन् शस्त्रे धाय्याः क्वचित् प्रक्षिप्यन्ते। तथा सत्यरण्यस्थानीयां धाय्या मुभयतः पर्याह्वयते। "शोंसावोम्"-इत्येष मन्त्रः 'पर्याहावः'। तस्या धाय्यायाः पार्श्वयोः यस्मात् पाठः, तस्मात् लोकेऽपि बहुवृक्षसङ्कीर्णानि स्थानानि स्वभावतोऽरण्यानि मनुष्यशून्यानि सन्त्यपि मृगैश्च पक्षिभिश्च सङ्कीर्णत्वाद् 'अनरण्यानि' अशून्यानि एवेति कश्चिदभिज्ञ आह स्म ॥

एव मेकेन दृष्टान्तेन पर्याहावं प्रशस्य पुनरप्यन्येन प्रशंसति—"यथा वै पुरुष एवं वैश्वदेवं; तस्य यथावान्तरमङ्गान्येवं सूक्तानि, यथा पर्वाण्येवं धाय्यास्तदुभयतो धाय्यां पर्याह्वयते; तस्मात्पुरुषस्य

* "शोंसावो मितुरुच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणव मसन्तन्वन्नेष आहावः"-इति आश्व० श्रौ० ५. ९. २। 'आहाव आह्वानात्'-इति निरु० ५.४.८।

पर्वाणि शिथिराणि सन्ति, दृळ्हानि ब्रह्मणा हि तानि धृतानि" –इति। लोके यथा पुरुषो हस्तपादादिमान् मनुष्यदेहः, तद्वदिदं वैश्वदेवशस्त्रम्। 'तस्य' शरीरस्य 'अवान्तरम्' अभ्यन्तरप्रदेशम् 'अङ्गानि' अवयवा यथा वर्त्तन्ते, एवं शस्त्रस्याभ्यन्तरे सूक्तानि निविष्टानि। यथा तेषा मवयवानां सन्धयः, एव मेता धाय्याः शस्त्रे तिष्ठन्ति। तथा सति धाय्या उभयपार्श्वपर्वाणि 'शिथिराणि' पूर्वं शिथिलानि सन्त्यपि पश्चात्प्रयत्नेन धारितानि दृढ़ानि सम्पद्यते। "ब्रह्म वा आहावः"–इति*श्रुतत्वादाहावरूपेण ब्रह्मणैव धाय्यारूपाणि पर्वाणि धृतानि भवन्ति॥

अथ धाय्यानां शस्त्रयाज्यानां च प्रकृतौ विकृतौ चान्यत्वं निराकृत्यैकरूपत्वं विधत्ते— "मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च; तद्यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूल मेव तद्यज्ञं कुर्युस्तस्मात्ताः समान्य एव स्युः"–इति। धाय्यानां शस्त्रयाज्यानां वृक्षमूलवद्यज्ञमूलता। तत् प्रकृतिगताः परित्यज्य विकृतावन्यस्वीकारे यज्ञरूपो वृक्ष उन्मूलितः स्यात्; तस्मात् प्रकृतौ याः सन्ति, ता एव विकृतावितुरक्षयत्र 'समान्य एव' एकविधा एव कर्त्तव्याः॥

वैश्वदेवशस्त्र सवयवशः प्रशस्य समुदायाकारेण प्रशंसति— "पाञ्चजन्यं वा एतदुक्थं यद्वैश्वदेवं; सर्वेषां वा एतत्पञ्चजनाना मुक्थं,— देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनाना मुक्थं; सर्व एनं पञ्चजना विदुः"–इति। यद्वैश्वदेवनामकम् 'उक्थं' शस्त्रं अस्ति, तदेतत् 'पाञ्चजन्यं वै' पञ्चविधानां जनानां सम्बन्धि एव। स एवार्थः सर्वेषा मित्यादिना

* १ भा० ४३४ पृ० ५ पं० द्रष्टव्यम्।

स्पष्टीक्रियते,— ये पञ्चविधा जनाः सन्ति, तेषां सर्वेषा मेव सम्बन्धि एतच्छस्त्रम्। पञ्चविधात्व मेव मनुष्यादिनोच्यते,— अग्नीन्द्रादि-देवगण एको वर्गः, ब्रह्मक्षत्त्रियादिमनुष्यगणो द्वितीयो वर्गः, गन्धर्वाणा मप्सरसां वर्गस्तृतीयः, सर्पाणां वर्गश्चतुर्थः, पितॄणां वर्गः पञ्चमः *। एतेषां पञ्चविधानां जनानां तुष्टिहेतुत्वात् तदीय मेतच्छस्त्रम्। 'एनं' वैश्वदेवशस्त्रस्य शंसितारं होतारं सर्वे पञ्चजनाः 'विदुः' जानन्ति, तेष्वस्य कीर्त्तिः प्रसरतीत्यर्थः॥

वेदनं प्रशंसति— "ऐनं पाञ्चजन्यै जनतायै हविनो गच्छन्ति य एवं वेद"-इति। 'जनानां' देवमनुष्याणां समूहो 'जनता', सा च पञ्चसङ्ख्योपेतत्वात् 'पाञ्चजनी' तस्यै, तत्प्रीत्यर्थं 'हविनः' होतुं कुशलाः पुरुषाः 'एनं' वेदितार मागच्छन्ति॥

अथ शंसनपूर्वकाले दिग्ध्यानं विधत्ते— "सर्वदेवत्यो वा एष होता यो वैश्वदेवं शंसति, सर्वा दिशो ध्यायेच्छंसिष्यन्त्सर्वास्वेव तद्दिक्षु रसं दधाति"-इति। 'यः' होता 'वैश्वदेवं' शस्त्रं शंसति, एषः 'सर्वदेवत्यो वै' सर्वा देवता अस्येति, तत्परितोषहेतुरित्यर्थः। अतः सोऽयं शंसितु मुद्युक्तः सर्वा दिशो मनसा ध्यायेत्, तेन शंसनेन सर्वास्वेव तद्दिक्षु रसं दधाति॥

क्वचित् ध्यानं विधत्ते— "यस्या मस्य दिशि द्वेष्यः स्यान्न तां ध्यायेदनुहायैवास्य तद्वीर्य मादत्ते"-इति। 'अस्य' होतुः 'द्वेष्यः' शत्रुर्यस्यां दिशि वसति, ता मेकां दिशं न ध्यायेत्। तथा सति 'अनुहायैव' द्वेष्यस्य पृष्ठतो गत्वैव तदीयं वीर्यं सर्वं स्वीकरोति॥

शस्त्रस्य परिधानीया मृचं विधत्ते— "अदितिर्द्यौरदिति-

---

* "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णा निषादः पञ्चमः इत्यौपमन्यवः"-इति च निरु० ३.२.२।

रन्तरिक्ष मित्युत्तमया परिदधातीयं वा अदितिरियं द्यौरिय मन्तरिक्षम्"-इति। अखण्डितत्वाददीनत्वाद्वा * भूमिरेवादितिरित्युच्यते। सेयं भूमिरेव द्युलोकरूपान्तरिक्षरूपा च; अस्यां भूमौ कर्म कृत्वा तत्तल्लोकप्राप्तिं सम्पादयितुं शक्यत्वात्। द्वितीयपाद मनूद्य व्याचष्टे— "अदितिर्माता स पिता स पुत्र इतीयं वै मातेयं पितेयं पुत्रः"-इति। येय मदितिर्भूमिः, सैव माता, सोऽदितिरूप एव पिता, सोऽदितिरूप एव पुत्रः। 'इयं वा'-इत्यादिनोक्तार्थप्रसिद्धिरुच्यते; सत्यां भूमौ मातापितृपुत्रादिभिरवस्थातुं शक्यत्वात् तेषा मदितिरूपत्वं प्रसिद्ध मित्यर्थः। तृतीयपाद मनूद्य व्याचष्टे— "विश्वे देवा अदितिः पञ्चजना इत्यस्यां वै विश्वे देवा अस्यां पञ्चजनाः"-इति। विश्वेषां देवानां भूमौ मनुष्यैः पूज्यमानत्वात्, पञ्चजनानां च देवमनुष्यादीनां भूमाववस्थानाददितिस्तत्तद्रूपत्वम्। चतुर्थपाद मनूद्य व्याचष्टे— "अदितिर्जात मदितिर्जनित्व मितीयं वै जात मियं जनित्वम्"-इति ( सं० १. ८९. १०. )। 'जातम्' पूर्व मुत्पन्नम् प्राणिरूपम्, 'जनित्वम्' इतः पर मुत्पत्स्यमानं प्राणिरूपम्; तयोरुभयोर्भूमौ सम्भवाददितेस्तत्तद्रूपत्वम्॥

परिधानीयाया अस्या ऋचः शंसने प्रकारविशेषं विधत्ते— "द्विः पच्छः परिदधाति, चतुष्पादा वै पशवः पशूना मवरुद्ध्यै; सकृदर्द्धर्चशः प्रतिष्ठाया एव, द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमान मेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति"-इति। "त्रिः प्रथमां त्रिरुत्तमा मन्वाह"-इतिविधेः† सार्वत्रिकत्वादस्याः

* "अदितिरदीना"-इत्यादि निरु० ४.४.१. अपि ११.३.२. द्रष्टव्यौ।

† १भा० २३ पृ० ४ पं० ( तै० सं० २. ५, ७. १. )।

परिधानीयायास्त्रिरावृत्तिः प्राप्ता, तत्र द्वयोरावृत्त्योः 'पच्छः' शंसेत्, एकैकस्मिन् पादे ऽवसायावसाय शंसनं कुर्यात्। तत्र पादानां चतुष्टयेन पशुसाम्यात्पशुप्राप्तिर्भवति। किं च पुरुषोऽयं 'द्विप्रतिष्ठः' पादद्वयोपेतः, पशवश्चतुष्पादाः; तथा सत्युभयविध-शंसनेन द्विपादं यजमान मेव चतुष्पात्सु पशुषु प्रतिष्ठापयति॥

परिधानकाले भूमिस्पर्शं विधत्ते—"सदैव पञ्चजनीयया परि-दध्यात्तदुपस्पृशन् भूमिं परिदध्यात्तद्यस्या मेव यज्ञं सम्भरति तस्या मेवैनं तदन्ततः प्रतिष्ठापयति"-इति। 'सदैव' सर्वेष्वपि यज्ञप्रयो-गेषु 'पञ्चजनीयया' "विश्वे देवा अदितिः पञ्चजनाः"-इत्युक्तत्वादिय मृक् 'पञ्चजनीया' तया 'परिधानं' समापनं यदा कुर्यात्, तदानीं भूमि मुपस्पृशन् परिदध्यात्। तथा सति 'यस्या मेव' भूमौ 'यज्ञं सम्भरति' अनुष्ठातुं यज्ञसाधनानि सम्पादयति, 'तस्या मेव' भूमौ 'एनं' यज्ञम् अनेनोपस्पर्शनेनान्ततः प्रतिष्ठापयति॥

शस्त्रयाज्यां विधत्ते—"विश्वे देवाः शृणुतेमं हवं म इति वैश्वदेव मुक्थं शस्त्वा वैश्वदेव्या यजति, यथाभागं तद्देवताः प्रीणाति"-इति। वैश्वदेवशस्त्रशंसनादूर्ध्वं "विश्वे देवाः शृणुत"-इत्येतां वैश्वदेवीं ( सं० ६. ५२. १३. ) याज्यां पठेत्। तस्यां "ये अन्तरिक्षे य उप द्यविष्ठाः"-इत्यादिना भिन्नवर्गाणां देवगणाना मभिधानात् तासां देवतानां स्वस्वभाग मनतिक्रम्य प्रीतिं करोति॥ ७॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
सप्तमः खण्डः॥ ७ ( ३१ )॥

———

॥ अथ अष्टमः खण्डः ॥

आग्नेयी प्रथमा घृतयाज्या । सौमी सौम्ययाज्या । वैष्णवी घृतयाज्या । त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति । घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति तस्यैता मनुस्तरणीं कुर्वन्ति यत्सौम्यः पितृभ्यो वा अनुस्तरणो । तस्मात्सौम्यस्य पितृमत्या यजत्यवधिषुर्वा एतत्सोमं यदभ्यसुषवु* स्तदेनं पुनः सम्भावयन्ति । पुनराप्याययन्त्युपसदां रूपेणोपसदां किल वै तद्रूपं । यदेता देवता अग्निः सोमो विष्णुरिति । प्रतिगृह्य सौम्यं होता पूर्वं छन्दोगेभ्यो ऽवेक्षेत तं हैके पूर्वं छन्दोगेभ्यो हरन्ति । तत्तथा न कुर्याद्† वषट्कर्त्ता प्रथमः सर्वभक्षान् भक्षयतीति ह स्माह तेनैव रूपेण । तस्माद्वषट्कर्त्तैव पूर्वो ऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति ॥ ८ ( ३२ ) ॥

अथ घृतयागसौम्ययागयोर्याज्यां विधत्ते— "आग्नेयी प्रथमा घृतयाज्या, सौमी सौम्ययाज्या, वैष्णवी घृतयाज्या, त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति"–इति। सौम्यचरोः उभयतो घृतसाध्यौ द्वौ यागौ अनुष्ठेयौ ; तत्राग्निदेवताका विष्णुदेवताका चेति द्वे याज्ये। "घृतवद्वनी घृतपृष्ठो

* "यदभ्यसुषवुः" क, टी० ग। † 'तत्तथानुकुर्याद्' क, ङ।

अग्निः"–इत्याग्नेयी प्रथमा याज्या ( आश्व० श्रौ० ५.१९.३ ), "उरु विष्णो विक्रमस्व"–इति ( आश्व० श्रौ० ५. १९. ३. ) वैष्णवी द्वितीया घृतयाज्या ; अस्ति सोमदेवताकश्चरुः, तस्य "त्वं सोम:"–इति (सं० ८.४८.१३.) सौमी याज्या ; तत्र "पितृभिः संविदानः"–इतिश्रुतत्वादियं पितृमती ; तां याज्यां सौम्यचरौ पठेत् । तस्य चरोः पुरस्तादाग्नेय्या याज्यया घृतयागः, उपरिष्टाद्वैष्णव्या याज्यया घृतयागः* । तद्याज्याद्वय माश्वलायनेन पठितम् (श्रौ०५.१९.३.) ॥

सौमीं याज्यां प्रशंसति—"घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति, तस्यैता मनुस्तरणीं कुर्वन्ति,—यत्सौम्यः पितृभ्यो वा अनुस्तरणीं ; तस्मात्सौम्यस्य पितृमत्या यजति"–इति । ऋत्विजः सोम मभिषुण्वन्तीति यदस्ति, सोऽयं सोमस्य वध एव । तत्र यः सौम्यश्चरुरस्ति, एतां सौम्यचरुरूपां तस्य मृतस्य सोमस्य 'अनुस्तरणीं' कुर्वन्ति । मृतस्य दीक्षितस्य दहनकाले काञ्चिद् वृद्धां गां हत्वा दीक्षितावयवेषु गोरवयवानवस्थाप्य दहेत् । सेयं गौः मृतं दीक्षित मनु मृतत्वाद्धिंसितत्वादनुस्तरणीत्युच्यते † । यस्मात्सा पितृभ्यो योग्या, तस्मात् 'पितृमत्या' याज्यया 'सौम्यस्य' यागस्य हविर्यजेत् ॥

---

* "तं घृतयाज्याभ्या मुपांशूभयतः परियजन्ति"–इति आश्व० श्रौ० ५. १९. २ ।

† "अनुस्तरणीञ्चा मजां वैककर्णां कृत्वा मेके सव्ये बाहौ बध्वानुसङ्कालयन्ति । अनुस्तरण्या वपा मुत्खिद्य शिरो मुखं प्रच्छादये दग्नेर्वर्म परि गोभिर्व्ययस्व (ऋ० सं०१०.१६.७.) इति"–इति आश्व० गृ० ४. २, ३ । "अनुस्तरणी चेत् पश्चात् कर्णं माहत्य हस्तयोर्वृक्कौ । अक्षेष्वङ्गानीति जातूकर्ण्यः । न वास्थिसन्देहात् । वपया मुख मवच्छाद्याग्निभिरादीपयन्ति" –इति च कात्या० श्रौ० २५. ७. ३४–३७ । 'कर्णप्रदेशस्य पश्चाद्भागे 'आहननं' प्रहारं कृत्वा मारयित्वा तस्याः कुक्षिगोलकौ मृतस्य हस्तयोर्निधेयौ'–इत्यादि च तद्व्याख्यानं कर्काचार्यकृतम् । पार० गृ० ३.१० । "तस्मात् पुरुषाय-पुरुषायानुस्तरणी क्रियते"–इति षड्० ब्रा०१.७ ।

घृतयागसहितं सौम्यं चरुं सङ्गृह्य प्रशंसति— "अवधिषुर्वा एतत्सोमं यदभ्यसुषवुस्तदेनं पुनः सम्भावयन्ति"-इति। 'अभ्यसुषवुः' अभितः सोमं सुतवन्त इति यदस्ति, एतेन सोमम् 'अवधिषुर्वै' ऋत्विजो हतवन्त एव। तस्मात् 'एनं' व्यथितं सोमं घृतचरुभ्यां व्यथापरिहाराय सम्भावयन्ति॥

सङ्गृह्य प्रशस्तदेवताद्वारा पुनर्विस्तरेण प्रशंसां दर्शयति— "पुनराप्याययन्त्युपसदां रूपेणोपसदां किल वै तद्रूपं यदेता देवताः,— अग्निः सोमो विष्णुरिति"—इति। योऽयं हतः सोमः, तं सोम मुपसदां रूपेण सम्पादितेन पुनराप्याययन्ति। अग्निः सोमो विष्णुरिति या एतास्तिस्रो देवताः, तदेतदुपसदा मेव स्वरूपम्; तत्राप्येतस्य देवतात्रयस्य विद्यमानत्वात्॥

अथ होतुराज्यावेक्षणं विधत्ते— "प्रतिगृह्य सौम्यं होता पूर्वं छन्दोगेभ्यो ऽवेक्षेत"—इति। हुतशेषं 'सौम्यं' चरु मध्वर्युणा दत्तं होता प्रतिगृह्य चरुमध्ये सिक्ते बहुले घृते 'छन्दोगेभ्यः' उद्गातृभ्यः स्वयं पूर्वभावी सन् स्वकीयां देहच्छाया मवेक्षेत॥

अत्र पूर्वपक्ष मुत्थाप्य दूषयति— "तं हैके पूर्वं छन्दोगेभ्यो हरन्ति, तत्तथा न कुर्याद्; वषट्कर्त्ता प्रथमः सर्वभक्षान् भक्षयतीति ह स्माह; तेनैव रूपेण तस्माद्वषट्कर्तैव पूर्वोऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति"—इति। केवलयाज्ञिकात् होतुराज्यावेक्षणात् पूर्व मेव 'तं' घृतयुक्तं सौम्यं चरुं छन्दोगेभ्यः समर्पयन्ति, 'तत्' समर्पणं तथा न कुर्यात्; हविःशेषभक्षणेषु 'वषट्कर्त्ता' होता 'प्रथमः' पूर्वभावी सन् 'सर्वभक्षान्' हविःशेषान् भक्षयति; 'इति'

" 'तस्मात्' अतएव लोके 'पुरुपाय-पुरुपाय' सर्वस्मै मृताय 'अनुस्तरणी क्रियते' वैतरणीनद्युत्तारिका गौः दीयते"—इति तु तत्र सा॰ भा॰।

एव मभिज्ञो महर्षिराह स्म । 'तस्मात्' कारणात् 'तेनैव रूपेण' भक्षणेनैव अवेक्षणेऽपि,— होतैव प्रथमो भूत्वावेक्षेत, अनन्तर मेव 'एनं' सौम्यं चरुं छन्दोगेभ्यः समर्पयेयुः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये अष्टमः खण्डः ॥ ८ ( ३२ ) ॥

---

॥ अथ नवमः खण्डः ॥

प्रजापतिर्वै स्वां दुहितर मभ्यध्यायद्दिव मित्यन्य आहुरुषस मित्यन्ये तां ऋश्यो भूत्वा रोहितं भूता मभ्यैत् तं देवा अपश्यन्नकृतं वै प्रजापतिः करोतीति ते त मैच्छन् य एन मारिष्यत्येत मन्योऽन्यस्मिन्नाविन्दं-स्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा सम-भरंस्ताः सम्भृता एष देवो ऽभवत्तदस्यैतद् भूतवन्नाम भवति वै स योऽस्यै तदेवं नाम वेद तं देवा अब्रुवन्नयं वै प्रजापतिरकृत मकरिमं विध्येति स तथेत्यब्रवीत्स वै वो वरं वृणा इति वृणीष्वेति स एत मेव वर मवृ-णीत पशूना माधिपत्यं तदस्यैतत्पशुमन्नाम पशुमान् भवति योऽस्यैतदेवं नाम वेद त मभ्यायत्याविध्यत्स

विद्ध ऊर्द्ध्व उदप्रपत त मेतं मृग इत्याचक्षते य उ एव मृगव्याधः स उ एव स या रोहित्सा रोहिणी यो एवेषुस्त्रिकाण्डा सो एवेषुस्त्रिकाण्डा तद्वा इदं प्रजापते रेतः सिक्त मधावत्तत्सरोऽभवत्ते देवा अब्रुवन् मेदं प्रजापते रेतो दुषदिति यदब्रुवन् मेदं प्रजापते रेतो दुषदिति तन्मादुष मभवत्तन्मादुषस्य मादुषत्वं मादुषं ह वै नामैतद्यन्मानुषं तन्मादुषं सन्मानुष मित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ॥ ९ ( ३३ ) ॥

अथाग्निमारुतं शस्त्रं वक्तव्यम्, तदर्थ मादौ उपाख्यान माह— "प्रजापतिर्वै स्वां दुहितर मभ्यध्यायद्, दिव मित्यन्य आहुरुषस मित्यन्ये; ता मृश्यो भूत्वा रोहितं भूता मभ्यैत्; तं देवा अपश्यन्नकृतं वै प्रजापतिः करोतीति; ते त मैच्छन्, य एन मारिष्यत्येत मन्योऽन्यस्मिन्नाविन्दंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः सम्भृता एष देवोऽभवत्तदस्यै तद् भूतवन्नाम"–इति। पुरा कदाचित् प्रजापतिः स्वकीयां दुहितर मभि लक्ष्य भार्यात्वेन ध्यान मकरोत्। तस्यां दुहितरि महर्षीणां मतभेद आसीत्,— 'अन्ये' केचन महर्षयः 'दिवं' द्युलोकदेवतां ध्यातवानित्याहुः; अपरे तु महर्षयः 'उषसं' उषःकालदेवतां ध्यातवानित्याहुः। 'ऋश्यः' मृगविशेषः। तथा चाभिधानकार आह— "गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः"–इति (अम० २.५.१०.)। स प्रजापतिः तथाविध ऋश्यो ऽभूत्, सा च दुहिता

'रोहितं भूता' लोहितं प्राप्ता, ऋतुमती जातेत्यर्थः। तादृशीं तां दुहितरम् 'अभ्यैत्' अभिगतवान्, मिथुनधर्म्मं प्राप्तवानित्यर्थः। 'तं' दुहितृगामिनं प्रजापतिं देवाः परस्पर मिद मब्रुवन्,— अयं प्रजापतिः 'अकृतं वै' अकर्त्तव्य मेव निषिद्धाचरणं करोतीति विचार्य, यः पुरुषः 'एनं' प्रजापतिम् 'आरिष्यति' आर्त्तिं प्रापयितुं क्षमः, तादृशं पुरुषम् 'ऐच्छन्' अन्वेषणं कृतवन्तः; कृत्वा चान्योऽन्यस्मिन् तेषां मध्ये 'तं' प्रजापतिघातकं 'न अविन्दन्' नालभन्त,— त्वं हन्तुं शक्नोषि, त्वं हन्तु मिति परस्परं पृष्ट्वा एकैकस्य शक्तिराहित्यं निश्चितवन्तः। सर्वेषु देवेषु या एव काश्चित् 'घोरतमाः तन्वः' अत्युग्राणि शरीराणि आसन्, ताः सर्वाः 'एकधा समभरन्' मेलयित्वैक मेव शरीरं कृतवन्तः। 'ताः' घोरतमाः तन्वः 'सम्भृताः' एकत्वेन सम्पादिताः सत्यः 'एष देवो ऽभवत्' एष इति हस्तेन प्रदर्श्य रुद्रोऽभिधीयते। 'तत्' तस्मादेव कारणात् 'अस्य' रुद्रस्य 'एतत्' लोकप्रसिद्धम् 'भूतवत्' भूतशब्दोपेतं नाम सम्पन्नम्। भूतपतिरिति भूतवन्नाम। तच्च तस्य भवत्यर्थानुगमाद्युक्तम्। एतन्नामवेदनं प्रशंसति— "भवति वै योऽस्यैतदेवं नाम वेद"-इति। वेदिता 'भवति वै' भूतिमानेव सम्पद्यते॥

अथ तेन रुद्रेण सह देवानां संवादं दर्शयति— "तं देवा अब्रुवन्नयं वै प्रजापतिरकृत मकरिमं विध्येति; स तथेत्यब्रवीत्; स वै वो वरं वृणा इति; वृणीष्वेति; स एत मेव वर मवृणीत,— पशूना माधिपत्यं; तदस्यैतत्पशुमन्नाम"-इति। 'तं' रुद्रं देवा एव मब्रुवन्,— हे रुद्र! अयं प्रजापतिः 'अकृतम् अकः' निषिद्धाचरणं कृतवान्, तस्मादिमं 'विध्य' बाणेन प्रहरेति। 'सः' रुद्रः तदङ्गीकृत्य उत्कोचत्वेन पशूना माधिपत्यं कृतवान्। तस्मा-

त्कारणात् 'अस्य' रुद्रस्य 'एतत्' लोकप्रसिद्धं, पशुपतिरित्येतादृशं पशुशब्दोपेतं नाम सम्पन्नम्। तद्वेदनं प्रशंसति— "पशुमान् भवति योऽस्यैतदेवं नाम वेद"-इति ॥

अथ रुद्रप्रजापत्योर्वृत्तान्तं दर्शयति— "त मभ्यायत्याविध्यत्; स विद्ध ऊर्द्ध उदप्रपत; त मेतं मृग इत्याचक्षते; य उ एव मृगव्याधः, स उ एव स; या रोहित्सा रोहिणी; यो एवेषुस्त्रि-काण्डा, सो एवेषुस्त्रिकाण्डा"-इति। स रुद्रः 'अभ्यायत्य' बाण-युक्तं धनुरभित आकृष्य 'तं' प्रजापतिम् 'अविध्यत्'। ऋश्यमृगरूपः स प्रजापतिः विद्धः सन् ऊर्द्धमुखः 'उदप्रपत' प्रकर्षेण उत्पतन मकरोत्। 'त मेतम्' उत्पतितं ऋश्यमृगरूपं प्रजापति माकाशे दृष्ट्वा सर्वे एव एते जनाः 'मृग इत्याचक्षते' रोहिण्यार्द्रयोः-नक्षत्रयोर्मध्येऽवस्थितं मृगशीर्ष-नक्षत्रं कथयन्ति, नक्षत्ररूपेण निष्पन्न इत्यर्थः। 'य उ एव' यस्तु रुद्रः 'मृगव्याधः' मृगघाती, 'सः' रुद्रः आकाशे दृश्यमानः 'स उ एव' लोकप्रसिद्धो मृग-व्याध आसीत्। 'या' दुहिता 'रोहित्' रक्तवर्णा मृगी, 'सा' इय माकाशे 'रोहिणी' नक्षत्र मभूत्। 'या एव' या तु रुद्रेण प्रेरिता 'इषुः त्रिकाण्डा' अनीकं शल्यस्तेजन मित्यवयवत्रयो-पेता, 'सा उ एव' सैव लोकप्रसिद्धा काण्डत्रयोपेता 'इषुः' बाणो ऽभवत् ॥

अथ मनुष्योत्पत्तिं दर्शयति— "तद्वा इदं प्रजापते रेतः सिक्त मधावत्तत्सरोऽभवत्, ते देवा अब्रुवन्,— मेदं प्रजापते रेतो दुष-दिति; यदब्रुवन् मेदं प्रजापते रेतो दुषदिति, तन्मादुष मभ-वत्तन्मादुषस्य मादुषत्वं; मादुषं ह वै नामैतद्यन्मानुषं; तन्मादुषं सन्मानुष मित्याचक्षते परोक्षेण; परोक्षप्रिया इव हि देवाः"-

इति। मृगरूपेण प्रजापतिना यद् रेतो मृग्यां सिक्तं, तदेतदति-बहुत्वाद्भूमौ पतितं सत् प्रवाहरूपेणाधावत्। तच्च क्वचिन्निम्नदेशे अवस्थाय प्रौढं सरो ऽभूत्। ते देवा एव मब्रुवन्,— प्रजापतेरिदं रेतो 'मा दुषत्' दुष्ट मस्त्वयं मा भूदिति। यस्मादुषदित्यब्रुवन् तस्माद्दोषरहितस्य रेतसो 'मादुष मिति' नाम सम्पन्नम्। जनास्तु दकारस्थाने नकारं प्रक्षिप्य 'मानुष मिति' ब्राह्मणक्षत्रियादि-शरीरम् आचक्षते। तद्वस्तुतो देवाचारेण दोषरहितत्वान्मादुष मेव। तथा सति मादुषनामयोग्य मपि तच्छरीरं परोक्षेण नाम्ना व्यवहर्त्तव्य मित्यभिप्रेत्य वर्णव्यत्ययेन मानुष मित्याचक्षते। यस्माल्लोके देववत्पूज्या उत्तमाः पुरुषाः 'परोक्षप्रिया इव हि' प्रत्यक्षे मातृपितृनिर्मिते देवदत्तादिनाम्नि न प्रीतिं कुर्वन्ति, किन्तु 'उपाध्यायः', 'आचार्यः', 'स्वामी'— इत्यादिके मातापित्रादीना मकृतत्वेन परोक्षे नाम्नि प्रीतिं कुर्वन्ति, तस्मात्परोक्षत्वाय नकार-प्रक्षेपो युज्यते ॥ ९ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
नवमः खण्डः ॥ ९ ( ३२ ) ॥

---

॥ अथ दशमः खण्डः ॥

तदग्निना पर्यादधुस्तन्मरुतो धून्वंस्तदग्निर्न प्राच्यावयत्तदग्निना वैश्वानरेण पर्यादधुस्तन्मरुतो

धून्वंस्तदग्निर्वैश्वानरः प्राच्यावयत्तस्य यद्रेतसः प्रथम मुददीप्यत तदसावादित्यो ऽभवद्यद् द्वितीय मासीत्तद् भृगुरभवत्तं वरुणो न्यगृह्णीत तस्मात् स भृगुर्वारुणिरथ यत्तृतीय मदीदेदिव त आदित्या अभवन् ये ऽङ्गारा आसंस्ते ऽङ्गिरसो ऽभवन् यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद् बृहस्पतिरभवद्यानि परिक्षाणान्यासंस्ते कृष्णाः पशवो ऽभवन् या लोहिनी मृत्तिका ते रोहिता अथ यद्भस्मासीत्तत्परुष्यं व्यसर्पद् गौरो गवय ऋश्य उष्ट्रो गर्द्दभ इति ये चैते ऽरुणाः पशवस्ते च तान्वा एष देवो ऽभ्यवदत मम वा इदं मम वै वास्तुह मिति त मेतयर्चा निरवादयन्त यैषा रौद्री शस्यत आ ते पितर्मरुतां सुम्न मेतु मा नः सूर्यस्य सन्दृशो युयोथाः त्वं नो वीरो अर्वति क्षमेथा इति ब्रूयान्नाभ न इत्यनभिमारुको हैष देवः प्रजा भवति प्र जायेमहि रुद्रिय प्रजाभिरिति ब्रूयान्न रुद्रेत्येतस्यैव नाम्नः परिहृत्यैतद् खलु शं नः करतीत्येव शंसेच्छ मिति प्रतिपद्यते सर्वस्मा एव शान्त्यै नृभ्यो नारिभ्यो गव इति पुमांसो वै नरः स्त्रियो नार्यः सर्वस्मा एव शान्त्यै सो ऽनिरुक्ता रौद्री शान्ता सर्वायुः सर्वायुत्वाय सर्व मायुरेति य एवं वेद

सो गायत्री ब्रह्म वै गायत्री ब्रह्मणैवैनं तं नमस्यति॥ १० ( ३४ )॥

अथादित्यादिदेवतोत्पत्तिं दर्शयति— "तदग्निना पर्य्यादधुस्तन्मरुतो ऽधून्वंस्तदग्निर्न प्राच्यावयत्तदग्निना वैश्वानरेण पर्य्यादधुस्तन्मरुतो ऽधून्वंस्तदग्निर्वैश्वानरः प्राच्यावयत्; तस्य यद्रेतसः प्रथम मुददीप्यत, तदसावादित्यो ऽभवद्; यद् द्वितीय मासीत्, तद्भृगुरभवत्; तं वरुणो न्यगृह्णीत; तस्मात् स भृगुर्वारुणिरथ यत्तृतीय मदीदेदिव, त आदित्या अभवन्; ये ऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्; यदङ्गाराः पुनरवशान्ता उददीप्यन्त, तद् बृहस्पतिरभवत्"–इति। प्रजापतेः सम्बन्धि यत् रेतो देवैर्दीपरहितं हुतम्, 'तत्' रेतो देवा अग्निना 'पर्य्यादधुः' परितो वेष्टितवन्तः, सरोरूपिणावस्थितस्य रेतसो दाहेन द्रवीभावं निवारयितुं परितोऽग्निं प्रज्वालितवन्त इत्यर्थः। यदाग्निः प्रज्वलितः, तदा 'मरुतः' वायवः 'तद्' रेतः 'अधून्वन्' शोषणाय वायुसंयुक्त मकुर्वत । सोऽग्निः 'तत्' रेतो 'न प्राच्यावयत्' द्रवीभावात् प्रच्युतं नाकरोत्, द्रवबाहुल्यात् पिण्डाकारं कर्तुं नाशक्नोदित्यर्थः। 'वैश्वानरः' नाम कश्चिदग्निविशेषः प्राणिना मुदरे प्रविश्यान्नपानादिकं पाचयति। तथा च भगवतोक्तम्— "अहं वैश्वानरो भूत्वा प्राणिनां देह माश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्"–इति ( भग० गी० १५. १४. )। तेन वैश्वानरनामकेनाग्निविशेषेण 'तद्' रेतः पूर्ववत् 'पर्य्यादधुः' देवैरग्नौ परिच्छिन्ने सति मरुतस्तद्रेतः पूर्ववदधून्वन्। सोऽयं वैश्वानरो ऽग्निः 'तत्' रेतो द्रवीभावात्प्रच्युत मकरोत्। पिण्डीभूतस्य रेतसो यत्प्रथमं पिण्डरूपं 'उददीप्यत' उद्दीप्त मभूत्,

'तत्' रूपम् 'असौ' दिवि दृश्यमान आदित्योऽभवत्। द्वितीयं यत्पिण्डरूप मासीत्, तत् ऋषिर्भृगुरभवत्। 'तं' भृगुं वरुणो 'न्यगृह्णीत' निगृह्य स्वपुत्रत्वेन स्वीकृतवान्। तस्मात्स भृगुर्वारुणिरित्युच्यते। वरुणस्यापत्यं 'वारुणिः'। एतदेवाभिप्रेत्य तैत्तिरीया आमनन्ति— "भृगुर्वै वारुणिः, वरुणं पितर मुपससार"-इति (आ० ९.१.=उप० २.१.)। 'अथ' अनन्तरं तृतीयपिण्डरूपम् 'अदीदेदिव' अतिशयेन दीप्त मेवासीत्, ते 'आदित्याः' अदितेः पुत्रा देवविशेषाः अभवन्। पूर्व मादित्यशब्देन मण्डलवर्त्ती सूर्य उक्तः, अत्र अदितेः पुत्रा इतरे देवा उच्यन्ते। 'ये' रेतःपिण्डा दग्धाः सन्तो ऽङ्गारा अभवन्, 'ते' सर्वे अङ्गिरोनामका ऋषयो ऽभवन्। पुनरपि तत्र 'यदङ्गाराः' ये केचिदङ्गाराः 'अवशान्ताः' शान्तिरहिताः सन्तः 'उददीप्यन्त' उत्कर्षेण दीप्ताः, 'तत्' सर्वं बृहस्पतिरभूत्॥

अथ पशुसृष्टिं दर्शयति— "यानि परिक्षाणान्यासंस्ते कृष्णाः पशवो ऽभवन्; या लोहिनी मृत्तिका, ते रोहिताः; अथ यद्भस्मासीत्, तत्परुष्यं व्यसर्पद्,— गौरो गवय ऋश्य उष्ट्रो गर्दभ इति; ये चैतेऽरुणाः पशवस्ते च"-इति। अङ्गारेषु शान्तेषु 'यानि' कृष्णवर्णान्यासन् काष्ठानि, ते कृष्णवर्णाः पशवो ऽभवन्। अग्निदाहेन भूमौ या 'लोहिनी' रक्तवर्णा मृत्तिका तिष्ठति, 'ते' 'रोहिताः' रक्तवर्णाः पशवोऽभवन्। अथाग्निस्थाने यद्भस्मासीत्, तत् 'परुष्यं' पुरुषशरीरजातं भूत्वा 'व्यसर्पत्' विविध मरण्यादावगच्छत्। किम्पुरुष मिति तदेवोच्यते। 'गौरो गवय ऋश्यः'— इत्यते ऽरण्यमृगाः, उष्ट्रगर्दभौ प्रसिद्धौ। एवमादिकं पुरुषशरीरम्। ये चैते अरुणाः पशवः, ते च व्यसर्पन्त॥

एव मुपाख्यानेनाग्निमारुतशस्त्रस्योपोद्घात मभिधाय तस्मिन् शस्त्रे शंसनीया मेका मृचं विधत्ते— "तान्वा एष देवो ऽभ्यवदत, मम वा इदं, मम वै वास्तुह मिति ; त मेतयर्चा निरवादयन्त ; यैषा रौद्री शस्यते"–इति। 'तान्वै' तानेव पशून् सर्वानभि लक्ष्य 'एषः' रुद्रो देवः 'इदं' सर्वं ममैवेत्यब्रवीत्। तत्रोपपत्तिं चोक्तवान्— 'वास्तुहं' वास्तौ यज्ञभूमौ हीनं यद् द्रव्य मस्ति, तत्सर्वं ममेति। श्रुत्यन्तरेऽपि प्रसिद्धम्। तथाच तैत्तिरीया रुद्रवाक्यं समामनन्ति— "यद्यज्ञवास्तौ हीयते, मम वै तत्"-इति ( सं० ३.१.९.५. )। 'तं' रुद्रं सर्वान् पशूनभिगच्छन्तम् 'एतया' वक्ष्यमाणयर्चा 'निर-वादयन्त' निरपेक्ष मकुर्वन्त। तथा तुष्टो रुद्रः पश्वपेक्षां परि-त्यजति। का सा ऋगिति, सोच्यते— यैषा 'रौद्री' रुद्रदेवताका शस्यते, सावगन्तव्या ॥

तस्या ऋचः पादत्रयं पठति—"आ ते पितर्मरुतां सुम्न मेतु, मा नः सूर्यस्य सन्दृशो युयोथाः, त्वं नो वीरो अर्वति क्षमेथाः"–इति ( सं० २.३३.१. )। मरुतां देवानां पितः! हे रुद्र! 'ते' तव 'सुम्नं' सुखम् 'एतु' आगच्छतु। 'नः' अस्मान् 'सूर्यस्य सन्दृशः' सूर्यावलोकनात् 'मा युयोथाः' मा वियोजय, दृष्टियुक्तान् कुर्वित्यर्थः। तृतीयपादस्य "त्वं नो वीरः"–इति अल-त्यपाठः, "अभि नो वीरः"–इति शाखान्तरपाठः *। तयोर्मध्ये स्वपाठं विधाय शाखान्तरपाठं निषेधति— "इति ब्रूयान्नाभि न इत्यनभिमारुको हैष देवः प्रजा भवति"–इति। 'इति' अनेन

* "आ ते पितर्मरुतां सुम्न मेतु मा नः सूर्यस्य संदृशो युयोथाः। अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः॥"–इत्येव पाठो दृश्यते मुद्रितशाखासंहितायाम् ( २.३३. १. )। आश्व० श्रौ० ३.८.१। ऋग्वि० १. ३०।

पूर्वोक्तेन प्रकारेण "त्वं नो वीरः"-इति पाठमेव शंसनकाले ब्रूयात्, 'अभि नः'-इति पाठं न ब्रूयात्। "त्वं नो वीरः"-इति पाठे सति 'एष देवः प्रजा अनभिमारुको भवति'। 'अभिमारुकः' "अभि नः"-इति पाठान्तरेऽभिशब्दस्य विद्यमानत्वात् पुत्रादिकाः प्रजाः 'अभि' लक्ष्य नाशयिष्यामीति रुद्रो 'मारुकः'; "त्वं नः"-इति पाठे तु न तथेत्यर्थः*॥ चतुर्थपादेऽपि स्वाभिमतपाठविधिपूर्वकं पाठान्तरं विधत्ते— "प्र जायेमहि रुद्रिय प्रजाभिरिति ब्रूयान्न रुद्रेत्येतस्यैव नाम्नः परिहृत्यै"-इति। हे रुद्रिय! रुद्रसम्बन्धि-भृत्य! त्वदनुज्ञया वयं 'प्रजाभिः प्र जायेमहि' पुत्रपौत्रादिरूपेणोत्पद्येमहि। अस्मिन् पादे रुद्रियेत्येतमेव पाठं ब्रूयात्, न तु रुद्रेति पाठम्। 'एतस्यैव' रुद्रस्य नाम्न उग्रत्व परिहाराय रुद्रियेतिपाठादरः॥

"आ ते पितः"-इत्यस्या ऋचः स्थाने काञ्चिदन्या मृचं विधत्ते —"तदु खलु शं नः करतीत्येव शंसेच्छमिति प्रतिपद्यते, सर्वस्मा एव शान्त्यै; नृभ्यो नारिभ्यो गव इति, पुमांसो वै नरः स्त्रियो नार्यः, सर्वस्मा एव शान्त्यै"-इति। 'तदु खलु' तत्रैव पूर्वां मृचं परित्यज्य तस्या एव स्थाने "शं नः करत्यर्वतः"-इत्येता मृचं शंसेत् ( सं० १. ४३. ६.)। तथा सति को लाभ इति, तदुच्यते— तस्या ऋच आदौ यत् 'शम्', 'इति' अनेन पदेन 'प्रतिपद्यते' प्रारम्भः क्रियते; तस्य पदस्य शान्तिवाचकत्वात् 'सर्वस्मै' सर्वस्यापि स्वकीयस्य वस्तुनः शान्तिर्भवति। सर्वस्मा इत्यस्य व्याख्यानं नृभ्य इत्यादि। तस्यापि व्याख्यानं पुमांस इत्यादि। सर्वस्मा एव शान्त्या इत्युपसंहारः॥

---

* 'चमेत'-इत्यत्र मुद्रितशाखापाठः, ऐतरेयकविहितस्तु 'चमेषाः'-इत्यपि ज्ञेयम्।

प्रकारान्तरेण ता ऋचं प्रशंसति— "सो ऽनिरुक्ता रौद्री शान्ता, सर्वायुः सर्वायुत्वाय"-इति । 'सो' साप्यृक् 'अनिरुक्ता' रुद्रवाचकपदाभावादस्पष्टदेवताका । तत एव 'रौद्री' रुद्रदेवताका सत्यपि घोरार्थवाचकरुद्रपदाभावादियं 'शान्ता' । तां शंसन् होता सर्वायुर्भवति । तच्च यजमानस्य सर्वायुत्वाय सम्पद्यते ॥

वेदनं प्रशंसति— "सर्वं सायुरेति य एवं वेद"-इति । पुनरपि प्रकारान्तरेण प्रशंसति— "सो गायत्री ; ब्रह्म वै गायत्री,—ब्रह्मणैवैनं तं नमस्यति"-इति । 'सो' सा च ऋक् गायत्रीच्छन्दस्का ; गायत्री च 'ब्रह्म वै' ब्राह्मणजातिरेव ; उभयोः प्रजापतिमुखजत्वात् । अतो 'ब्रह्मणैव' ब्राह्मणेनैव 'एनं' रुद्रं नमस्करोति ॥ १० ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
दशमः खण्डः ॥ १० ( ३४ ) ॥

---

॥ अथैकादशः खण्डः ॥

**वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते वैश्वानरो वा एतद्रेतः सिक्तं प्राच्यावयत्तस्माद्वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते ऽनवानं प्रथम ऋक् शस्तव्याग्नीन्वा एषोऽर्चीं ष्यशान्तान् प्रसीदन्नेति य आग्निमारुतं**

शंसति प्राणेनैव तदग्नींस्तरत्यधीयन्नुपहन्यादन्यं विवक्तार मिच्छेत्त मेव तत्सेतुं कृत्वा तरति तस्मादाग्निमारुतेन व्युच्च मेष्टव्यो विवक्ता मारुतं शंसति मरुतो ह वा एतद्रेतः सिक्तं धून्वन्तः प्राच्यावयंस्तस्मान्मारुतं शंसति यज्ञायज्ञा वो अग्नये देवो वो द्रविणोदा इति मध्ये योनिं चानुरूपञ्च शंसति तद्यन्मध्ये योनिं चानुरूपञ्च शंसति तस्मान्मध्ये योनिधृता यदु द्वे सूक्ते शस्त्वा शंसति प्रतिष्ठयोरेव तदुपरिष्टात् प्रजननं दधाति प्रजात्यै प्र जायते प्रजया पशुभिर्य एवं वेद ॥ ११ ( ३५ ) ॥

अथ "वैश्वानराय पृथु पाजसे विपः"–इत्यनेन (३.३.१—११.) सूक्तेनाग्निमारुतस्य शस्त्रस्य प्रारम्भं विधत्ते— "वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते,— वैश्वानरो वा एतद् रेतः सिक्तं प्राच्यावयत्; तस्माद्वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते"–इति। रेतसः प्राच्यावनं काठिन्यापादनम् ॥

तस्मिन् वैश्वानरीयसूक्ते कञ्चिद्विशेषं विधत्ते— "अनवानं प्रथम ऋचं शंस्तव्याग्नीन्वा एषोर्चीष्मान्शान्तान् प्रसीदन्नेति; य आग्निमारुतं शंसति, प्राणेनैव तदग्नींस्तरति"–इति। 'अनवान'-शब्देनोच्छ्वासनिश्वासावुच्येते; तौ यथा न भवतस्तथा प्रथमा ऋक् शंस्तव्या। तथा सति सर्वान् 'अग्नीन्वै' ज्वालारूपानग्नीनेव 'एषः' होता 'शान्तान्' कृत्वा 'प्रसीदन्' प्रसादं कुर्वन् 'एति' गच्छति। यः पुमान् अग्निमारुतं शस्त्रं शंसति, तस्य प्रसाद-

हेतुत्वं कथ मिति, तदुच्यते— उच्छ्वासनिश्वासनिरोधादनवानं शंसन् प्राणवायुनैव तानग्नीन् 'तरति' उल्लङ्घयति, अग्निकृत मुपद्रवं शमयतीत्यर्थः ✻ ॥

शंसनकाले प्रामादिकस्य वर्णादिलोपरूपस्य अपराधस्य प्रतीकारं दर्शयति— "अधीयन्नुपहन्यादन्यं विवक्तार मिच्छेत्त मेव तत्सेतुं कृत्वा तरति"-इति । 'अधीयन्' अधीयानः, शंसनं कुर्वन् होता यदि 'उपहन्यात्' उपघातं वर्णलोपं कुर्यात्, तदानीम् 'अन्य' कञ्चित् पुरुषं 'विवक्तारं' विविच्य वक्तुं समर्थम् 'इच्छेत्' समीपे ऽवस्थापयेत् । तदानीं 'त मेव' पुरुष मपराधतरणोपायं सेतुं कृत्वा 'तम्' अपराध मुल्लङ्घयति ॥ अयं पक्षो ऽनुकल्पः; मुख्यं तु पक्षं दर्शयति— "तस्मादाग्निमारुते न व्युच्य मिष्टव्यो विवक्ता"-इति । यस्मात्प्रमादं कृत्वा विवक्तृपुरुषसम्पादनं न मुख्यम्, 'तस्मात्' 'आग्निमारुते' शस्त्रे 'न व्युच्यम् †' न पश्चाद्विवक्तव्यम्; किन्तु प्रथम मेव विविच्य वक्तुं समर्थो होता 'एष्टव्यः' प्रयत्नेन सम्पादनीयः ॥

अथ "प्रत्वक्षसः प्रतवसः"—इत्येतन्मरुद्देवताकं सूक्तं ( सं० १. ८७.१-६.) विधत्ते— "मारुतं शंसति; मरुतो ह वा एतद् रेतः सिक्तं धून्वन्तः प्राच्यावयंस्तस्मान्मारुतं शंसति"-इति । मरुतां धूननेन प्रजापतिरेतःशोषणं पूर्व मेवोक्तम् ( १५५ पृ० ) ॥

अथ प्रगाथद्वयं विधत्ते— "यज्ञायज्ञा वो अग्नये, देवो वो द्रविणोदा इति, मध्ये योनिं चानुरूपं च शंसति; तद्यन्मध्ये योनिं

---

✻ "अथ यथेतम् । स्वध्यग माग्निमारुतम् । तस्याद्यां पञ्च ऋगावानं पञ्चः शस्त्रा येत् । अर्द्धर्चश इतराम् । सन्तान मुत्तमेन वचनेन"-इति आश्व० श्रौ० ५.२०. १-५ ।

† 'व्युत्तम्' क, ग, घ ।

चानुरूपञ्च शंसति, तस्मान्मध्ये योनिर्धृता"–इति। "यज्ञायज्ञा वः"–इत्येकः प्रगाथः (उ० आ० १.१.१०.१,२.), "देवो वः"–इति द्वितीयः (उ० आ० १.१.२०.१,२.)। यत्र प्रथमे प्रगाथे तृचः सम्पद्यते, सोऽयं स्तोत्रियः; तस्मिन् तृचे सामगैः स्तूयमानत्वात्। अत एवासौ द्वयोर्मध्ये प्रथमभावित्वाद् 'योनिः'–इत्युच्यते। द्वितीय-प्रगाथे समुत्पन्नस्तृचोऽनुरूपः *। यादृशः स्तोत्रियः, तादृशत्वम् अनुरूपत्वम्। तदेतदुभयं शस्त्रस्य मध्ये शंसनीयम्; न तु शस्त्रा-न्तरेष्विव स्तोत्रियानुरूपयोरादौ शंसनीयम्। तथा सति यस्मा-दत्र सूक्तमध्ये योनेरनुरूपस्य च शंसनं, तस्माल्लोकेऽपि नारीणां शरीरमध्ये योनिर्धृता॥

शस्त्रमध्ये तयोः स्थानविशेषं दर्शयति— "यदु द्वे सूक्ते शस्त्वा शंसति, प्रतिष्ठयोरेव तदुपरिष्टात्प्रजननं दधाति प्रजात्यै"–इति। 'यदु' यस्मादेव कारणाद् वैश्वानरीयं मारुतं चेति 'द्वे सूक्ते' शस्त्वा पश्चादेतौ स्तोत्रियानुरूपौ शंसति, तस्मात् कारणाद् द्वित्वसङ्ख्यो-पेतयोः 'प्रतिष्ठयोः' स्थितिहेत्वोः पादयोरेव 'उपरिष्टात्' ऊर्ध्व-देशे 'प्रजननं' प्रजोत्पादकमिन्द्रियं दधाति। तच्च 'प्रजात्यै' प्रजोत्पादनाय सम्पद्यते॥

वेदनं प्रशंसति— "प्र जायते प्रजया पशुभिर्य एवं वेद"–इति॥११॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
एकादशः खण्डः॥ ११ (३५)॥

———

* "यज्ञायज्ञा०—०इति प्रगाथौ स्तोत्रियानुरूपौ"–इतिकल्पशास्त्रानुरोधादेवैष व्याख्यानमिति ध्येयम्। आश्व० श्रौ० ५.२०.६ द्रष्टव्यम्।

॥ अथ द्वादशः खण्डः ॥

जातवेदस्यं शंसति प्रजापतिः प्रजा असृजत ता: सृष्टाः पराच्य एवायन्न व्यावर्तन्त ता अग्निना पर्यगच्छत्ता अग्नि मुपावर्तन्त त मेवाद्याप्युपावृत्ताः सो ऽब्रवीज्जाता वै प्रजा अनेनाविद मिति यदब्रवीज्जाता वै प्रजा अनेनाविद मिति तज्जातवेदस्य मभवत्तज्जातवेदसो जातवेदस्त्वं ता अग्निना परिगता निरुद्धाः शोचन्त्यो दीध्यत्यो ऽतिष्ठंस्ता अद्भिरभ्यषिञ्चत्तस्मादुपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयं शंसति तस्मात्तच्छमयतेव शंस्तव्यं ता अद्भिरभिषिच्य निजास्येवामन्यत तासु वा अहिना बुध्न्येन परोक्षात्तेजो ऽदधादेष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्यो ऽग्निनैवासु तद्गार्हपत्येन परोक्षात्तेजो दधाति तस्मादाहुर्जुह्वदेवाजुह्वतो वसीयानिति ॥ १२ ( ३६ ) ॥

अथ "प्र तव्यसीम्"–इत्येतज्जातवेदोदेवताकं सूक्तं (सं० १. १४३. १–८.) विधत्ते— "जातवेदस्यं शंसति"–इति *। तदेतत् प्रशंसति— "प्रजापतिः प्रजा असृजत, ताः सृष्टाः पराच्य एवायन्, न व्यावर्त्तन्त ; ता अग्निना पर्यगच्छत्, ता अग्नि मुपावर्त्तन्त ; त मेवाद्याप्युपावृत्ताः ; सोऽब्रवीज्जाता वै प्रजा अनेनाविद मिति ; यदब्रवीज्जाता वै प्रजा अनेनाविद मिति, तज्जात-

* आश्व० श्रौ० ५. २०. ६।

वेदस्य मभवत् तज्जातवेदसो जातवेदस्त्वम्''-इति। पुरा प्रजापतिना सृष्टाः प्रजाः प्रजापतिं पृष्ठतः कृत्वा पराङ्मुखत्वेनैवागच्छन्, न पुनरावृत्ताः। तदानीं प्रजापतिः 'ताः' प्रजाः अग्निना 'पर्यगच्छत्' परितोऽग्निप्राकारं कृतवान्। अतः 'ताः' प्रजाः दूरङ्गन्तु मशक्ता अग्नि मुपेत्य पुनरावर्त्तन्त। यस्मादेवं तस्माद्यापि शीतार्त्ताः प्रजाः 'त मेव' अग्निम् 'उपावृत्ताः' परितो गच्छन्त्योऽपि अग्निं दृष्ट्वा समीपे कृत्वा सेवितु मावर्त्तन्ते। ततः 'सः' तुष्टः प्रजापतिरेव मब्रवीत्, – 'जाताः' उत्पन्ना याः प्रजास्ताः सर्वाः अहम् 'अनेन' अग्निना 'अविदं' लब्धवानस्मि, ज्ञातवानस्मीति वा। यस्माज्जाता अविद मनेनेतुक्तवान्, तस्मादग्निसम्बन्धि सूक्त जातवेदस्य मभवत्;— जातवेदसोऽग्नेरपि जातान् वेत्त्यय मिति व्युत्पत्त्या तन्नाम सम्पन्नम् *॥

"आपो हि ष्ठा मयोभुवः"-इत्यादिकं तृचं (सं० १०.९. १-३.) विधत्ते— "ता अग्निना परिगता निरुद्धाः शोचन्त्यो दीध्यत्यो ऽतिष्ठंस्ता अद्भिरभ्यषिञ्चत्,तस्मादुपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयं शंसति"–इति। अग्निना 'परिगताः' परितो वेष्टिताः, 'निरुद्धाः' गन्तु मशक्ताः, 'शोचन्त्यः' शोचं प्राप्नुवत्यः, 'दीध्यत्यः' दीप्यमानाः, 'ताः' प्रजाः तत्रैवातिष्ठन्। प्रजापतिः 'ताः' प्रजाः सन्तापपरिहाराय अद्भिरभ्यषिञ्चत्। यस्मादेवम् तस्माज्जातवेदस्याख्यसूक्तस्योपरिष्टादापोहिष्ठेत्यादिकं तृचं शंसेत्॥

तत्र कञ्चिद्विशेषं विधत्ते— "तस्मात्तच्छमयतेव शंस्तव्यं; ता अद्भिरभिषिच्य निजा स्वैवामन्यत"-इति। यस्मादापोहिष्ठीयं तापशमनकारणम्, 'तस्मात्' 'तच्छमयतेव' होत्रा शंसनीयम्,—

* निरु० ७. ५. १।

यथा वह्निं शमयति पुरुषः, शनैः शनैः क्रमेण जलं सिञ्चति, एव मनेनापि शनैः शंसनं कर्त्तव्यम्। ततः स प्रजापतिः 'ताः' प्रजा अद्भिरभिषिच्य 'निजा एव' स्वकीया एव 'स्वा' ताः प्रजा इत्यमन्यत। 'स्व'-शब्दस्तच्छब्दपर्यायः; एकवचनान्तोऽपि बहुवचनान्तत्वेन परिणमयितव्यः; तथा सति ताः प्रजाः इत्युक्तं भवति। तस्माच्छनैः शंसनेन शस्तस्य स्वकीयत्वं सम्पद्यत इत्यर्थः। यद्वा 'ता अद्भिः'-इत्याद्यर्थवाद उत्तरशेषत्वेन योजनीयः ※॥

"उत नोऽहिर्बुध्न्यः"-इत्यस्या ऋचः ( सं० ६.५०.१४. ) शंसनं तद्देवतास्तुतिद्वारेणोन्नयति— "तासु वा अहिना बुध्न्येन परोक्षात्तेजोऽदधादेष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्यो ऽग्निनैवासु तद्गार्हपत्येन परोक्षात्तेजो दधाति; तस्मादाहुर्जुह्वदेवाजुह्वतो वसीयानिति"-इति। 'तासु' अभिषेकादूर्ध्वं स्वकीयत्वेन स्वीकृतासु प्रजासु, प्रजापतिः 'अहिना बुध्न्येन' अहिबुध्न्यशब्दद्वयनामकाग्निविशेषेण † 'परोक्षात्' परोक्षरूपेण 'तेजोऽदधात्' प्रजानां सन्तापभीरुत्वात् ता यथा नाग्निविशेषं पश्यन्ति, तथा तास्वग्निविशेषसम्बन्धि तेजः स्थापितवान्। यो गार्हपत्योऽग्निरस्ति, एष एव अहिशब्देन बुध्न्यशब्देनाभिहितः; अतस्तदीयायाः शंसने सति गार्हपत्येनैवाग्निना प्रजासु परोक्षत्वेन तेजः स्थापयति। यस्मा-

※ 'आपो हि ष्ठेति तिस्रो विपत मप उपसृशन्नन्वारब्धेष्वपाव्रतशिरस्कः; इदमादि मति प्रतीक माम्नानम्'-इति आश्व० श्रौ० ५.२०.६।

† "अहिरयनात्, एत्यन्तरिक्षेऽयम् ( मेघः )"-इति, "बुध्न्यः—बुध्न मन्तरिक्षम्, तन्निवासात् ( विद्युदग्निः )"-इति च निरु० २.५.२,१०.४.७। 'अहिश्चासौ बुध्न्यश्चेत्यहिर्बुध्न्यः'-इति सा० भा० ( ऋ० सं० ७.३४.१७. ) तदेवं मेघसहचरत्वे द्युतोऽग्निरेवाहिर्बुध्न्योऽवगम्यते। परम् "उत नोऽहिर्बुध्न्यः"-इत्येषा तु निरुक्ते द्युस्थाननामनिर्वचनावसरे एव निगमत्वेनोद्धृता दृश्यते ( १२.३.१४. )।

दाग्नेयं तेजोऽपेच्चितं, तस्मात् 'अजुह्वतः' होमरहितात् पुरुषात् 'जुह्वदेव' होमं कुर्वन्नेव * पुरुषो 'वसीयान्' अत्यन्तं श्रेष्ठ इत्येवं जना आहुः ॥ १२ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये द्वादशः खण्डः ॥ १२ ( ३६ ) ॥

---

॥ अथ त्रयोदशः खण्डः ॥

देवानां पत्नीः शंसत्यनूचीरग्निं गृहपतिं तस्मादनूची पत्नी गार्हपत्य मास्ते तदाहू राकां पूर्वां शंसेज्जाम्यै वै पूर्वपेय मिति तत्तन्नादृत्यं देवाना मेव पत्नीः पूर्वाः शंसे देष ह वा एतत्पत्नीषु रेतो दधाति यदग्निर्गार्हपत्यो ऽग्निनैवासु तद् गार्हपत्येन पत्नीषु प्रत्यचाद् रेतो दधाति प्रजात्यै प्र जायते प्रजया पशुभिर्य एवं वेद तस्मात्समानोदर्याः स्वसान्योदर्यायै जायाया अनुजीविनी जीवति राकां शंसति राका ह वा एतां पुरुषस्य सेवनीं सीव्यति यैषा शिश्नेऽधि† पुमांसोऽस्य पुत्रा जायन्ते य एवं वेद पावी-

---

* 'कुर्वाण एव' ग।

† "शिश्नेऽधि"—इति भाष्यसम्मतः पाठः।

रवीं शंसति वाग्वै सरस्वती पावीरवी वाच्येव तद्वाचं दधाति तदाहुर्यामीं पूर्वां शंसे३त् पित्र्यां३ * इति यामी मेव पूर्वां शंसेदिमं यम प्रस्तर मा हि सीदेति राज्ञो वै पूर्वपेयं तस्माद्यामी मेव पूर्वां शंसेन्मातली कव्यैर्यमो अङ्गिरोभिरिति काव्याना मनूचीं शंसत्य-वरेणेव वै देवान् काव्याः परेणेव पितॄंस्तस्मात्का-व्याना मनूचीं शंसत्युदीरता मवर उत्परास इति पित्र्याः शंसत्युन्मध्यमाः पितरः सोम्यास इति ये चैवावमा ये च परमा ये च मध्यमास्तांन्त्सर्वाननन्त-रायं प्रीणात्याहं पितॄन्त्सुविदत्राꣳ अवित्सीति द्वितीयां शंसति बर्हिषदो ये स्वधया सुतस्येत्येतद्व वा एषां प्रियं धाम यद् बर्हिषद इति प्रियेणैवैनांस्त-द्धाम्ना समर्द्धयति प्रियेण धाम्ना समृद्ध्यते य एवं वेदे दं पितृभ्यो नमो अस्त्वद्येति नमस्कारवती मन्ततः शंसति तस्मादन्ततः पितृभ्यो नमस्क्रियते तदाहुर्व्याहावं पित्र्याः शंसे३त् अव्याहावाँ३ इति व्याहाव मेव शंसेदसंस्थितं वै पितृयज्ञस्य साध्व-संस्थितं वा एष पितृयज्ञं संस्थापयति यो ऽव्याहावं शंसति तस्माद् व्याहाव मेव शंस्तव्यम्॥ १३ (३७)

---

* 'पित्रियां' ३ ग।

  

अथ "देवानां पत्नी रुशतीरवन्तु नः"-इत्यृग्द्वयं देवपत्नी-देवताकं विधत्ते— "देवानां पत्नीः शंसत्यनूचीरग्निं गृहपतिं; तस्मादनूची पत्नी गार्हपत्य मास्ते"-इति। 'देवानां पत्नीः'-इत्यनेन देवतावाचकेन शब्देन तत्प्रतिपादक मृग्द्वयं * विवचितम् (५.४६.७,८.)। ततश्च 'गृहपति मग्निम् अनूचीः' शंसेत्। गृहपतिरग्निरित्येताभ्यां शब्दाभ्यां तत्प्रतिपादिका "उत नोऽहि-र्बुध्न्यः"-इति ऋग् विवचिता (१६५ पृ०)। तदपेक्षया देव-पत्नीनामकस्य मन्त्रजातस्य पश्चाद्भावित्व मन्चकत्त्वम्; अतः पूर्वो-क्ताया ऋचः पश्चात् शंसेदित्यर्थः। यस्मादत्रैवं 'तस्माद्' यज्ञ-शालायां पत्नी गार्हपत्यम् 'अनूची आस्ते' पश्चादवतिष्ठत इत्यर्थः॥

अत्र कश्चित् पूर्वपक्ष मुत्थापयति— "तदाहू राकां पूर्वां शंसेज्जाम्यै वै पूर्वपेय मिति"-इति। सम्पूर्णचन्द्रमण्डलयुक्ता पौर्णमासी राका; तदभिमानिदेवतायाः प्रतिपादिका ऋगपि 'राका'-इत्युच्यते। तां राकां 'पूर्वां' देवपत्नीभ्यः पूर्वभाविनीं शंसेत् †। सेयं राका, देवानां 'जामि' नाम भगिनी; तस्मात् तस्या एव 'पूर्वपेयं' प्रथमतः सोमपानं युक्त मिति पूर्वपक्षः॥ तं निराकृत्य देवपत्नीनाम् एव पूर्वत्वं दर्शयति— "तत्तन्नादृत्यं, देवाना मेव पत्नीः पूर्वाः शंसेदेष ह वा एतत्पत्नीषु रेतो दधाति, यदग्निर्गार्हपत्योऽग्निनैवासु तद्गार्हपत्येन पत्नीषु प्रत्यक्षाद्रेतो दधाति प्रजात्यै"-इति। राकायाः पूर्वत्व मनादरणीयम्, देव-पत्नीना मेव पूर्वत्वं युक्तम्; गार्हपत्योऽग्निः पत्नीष्वेव रेतः स्थापयति, न तु भगिन्याम्। तस्मात् पत्नीनां पूर्वशंसनेन प्रत्यक्ष

* 'देवानां पत्नीरुशतीरवन्तु न इति द्वे'-इति आश्व० श्रौ० ५.२०.९।

† राकायाः शंसनविध्यादिका मनुपदं वक्ष्यति (१६९ पृ०)।

मेव पत्नीषु गार्हपत्यमुखेन रेतः स्थापयति; तच्च 'प्रजात्यै' सम्पद्यते ॥

वेदनं प्रशंसति— "प्र जायते प्रजया पशुभिर्य एवं वेद"–इति ॥

लौकिकोदाहरणेन पत्नीनां पूर्वभावित्वम् भगिन्याः पश्चाद्भावित्वं चोपपादयति— "तस्मात् समानोदर्याः स्वसान्योदर्यायै जायाया अनुजीविनी जीवति"-इति। पुरुषाणा मेकोदरजापि भगिनी परस्मै दीयते, भिन्नोदरजापि जाया स्वार्थं स्वीक्रियते; तथा सति परस्मै दत्तापि भगिनी यदा कदाचिद् भ्रातृगृह मागत्य तज्जाया मनुसृत्य अन्नपानाभ्यां जीवन्ती सती 'जीवति' किञ्चित्काल मवतिष्ठते ॥

"राका महम्"–इति ऋग्द्वयं विधत्ते— "राकां शंसति; राका ह वा एतां पुरुषस्य सेवनीं सीव्यति,—यैषा शिश्नेऽधि"-इति। देवतावाचिराकाशब्देन तदभिधायिनी ऋगभिधीयते (सं॰ २.३२.४.), तां शंसेत्। पुरुषस्य 'शिश्नेऽधि' शिश्नस्योपरि स्थिता, गुदवलयपर्यन्तं * व्याप्ता येषा 'सेवनी' एतच्छब्दाभिधेया उपस्थशिरा अस्ति, 'एतां' शिरां राकाख्या देवता 'सीव्यति' दृढ़बद्धां करोति; तस्मात् तदीया मृचं शंसेत् † ॥

वेदनं प्रशंसति— "पुमांसोऽस्य पुत्रा जायन्ते य एवं वेद"-इति ॥

"पावीरवी कन्या"-इत्येता मृचं (सं॰ ६.४९.७.) विधत्ते— "पावीरवीं शंसति; वाग्वै सरस्वती पावीरवी, वाच्येव तद्वाचं दधाति"-इति। सेयं वागभिमानिनी 'सरस्वती' देवता, सैव

---

* "गुदबिलपर्यन्त" ग।

† आश्वलायनेन तु ऋग्द्वयं विहितम् 'राका मह मिति द्वे'–इति (५. २०.६.), इत्याप्युपक्रमे उक्तं भाष्ये 'राका मह मिति ऋग्द्वयं विधत्ते'–इति, तदेतद् विचार्यं सुधीभिः।

'पावस्य' शोधनस्य हेतुत्वात् 'पावीरवी'; तत्पाठेन 'वाचि एव' देवतायां मन्त्ररूपां 'वाचं' स्थापयति ॥

अत्र विचार मवतारयति— "तदाहुर्यामीं पूर्वां शंसेत् पित्र्यां३इति"–इति। "इमं यम प्रस्तरम्"–इत्येषा (सं० १०.१४.४.) यमदेवताकत्वाद् 'यामी'; "उदीरता मवरः"–इत्येषा पितृदेवताकत्वात् 'पित्र्या'। उभयोः पौर्वापर्यकारणस्यानिश्चयाद्विचारः; तदर्था प्लुतिः। तत्र निर्णयं दर्शयति— "यामी मेव पूर्वां शंसेद्,— इमं यम प्रस्तर मा हि सीदेति; राज्ञो वै पूर्वपेयं तस्माद्यामी मेव पूर्वां शंसेत्"–इति। यमो हि राजा; "यमः पितॄणां राजा"–इतिश्रुत्यन्तरात् *; राज्ञश्च प्रथमं पानं युक्तम् ॥

पूर्वोक्तयाम्याः अन्यां यामीं विधत्ते— "मातली कव्यैर्यमो अङ्गिरोभिरिति काव्याना मनूचीं शंसत्यवरेणैव वै देवान् काव्याः परेणैव पितॄंस्तस्मात्काव्याना मनूचीं शंसति"–इति। "कव्यैः"–इतिश्रुतत्वादियं 'काव्यानाम्' ऋक् (सं० १०.१४.३.); सा च पूर्वोक्ता मृच मनु पश्चाद् गच्छतीति 'अनूची'; तां तथैव शंसेत्। 'काव्याः' देवानां स्तोतारः केचिदधमजातिविशेषाः, पितृभ्योऽप्युत्तमजातीयाः; एतदेव 'देवान् अवरेण, पितॄन् परेण'–इत्युच्यते। अत एव पूर्व मुक्ताया याम्याः, वक्ष्यमाणायाः पित्र्यायाश्च मध्ये तच्छंसनं युक्तम् ॥

अथ तिस्रः पितृदेवताका ऋचो विधत्ते— "उदीरता मवर उत्परास इति (सं० १०.१५.१.) पित्र्याः शंसत्युन्मध्यमाः पितरः सोम्यास इति"–इति। पादद्वयं व्याचष्टे— "ये चैवावमा ये च परमा ये च मध्यमास्तान्सर्वाननन्तरायं प्रीणाति"–इति। 'अवरे'

* "यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय"–इति तै० सं० ५. १. ८. ३।

निकृष्टाः पितरः 'उदीरताम्' उत्कर्षेण गच्छन्तु ; 'परासः' उत्कृष्टाः पितरः उदीरताम् ; तथा 'मध्यमाः' निकृष्टोत्कृष्टमध्यवर्त्तिनः पितरः उदीरताम् । ते त्रिविधाः पितरः 'सोम्यासः' सोमयोग्याः 'इति' एतस्य पादद्वयस्य पाठेन त्रिविधानपि पितॄन् 'अनन्तरायं' कस्याप्यन्तरायो यथा न भवति तथा तर्पयति ॥

विहितासु तिसृष्वृक्षु प्रथमाया उदाहृतत्वादनन्तरभाविनीं द्वितीया मृचं दर्शयति— "आहं पितॄन्त्सुविदत्राँ अवित्सीति ( सं० १०,१५,३. ) द्वितीयां शंसति"-इति । तस्या ऋचस्तृतीयपाद मनूद्य व्याचष्टे— "बर्हिषदो ये स्वधया सुतस्येत्येतद्व वा एषां प्रियं धाम, यद् बर्हिषद इति प्रियेणैवैनांस्तद्धाम्ना समर्द्धयति"-इति । बर्हिषि दर्भे सीदन्ति उपविशन्तीति 'बर्हिषदः' पितरः । अत्र "बर्हिषदः"-इति यदुच्यते 'एतद्व वै' एतदेव बर्हिषदाम् 'एषां' पितॄणां प्रियं स्थानम् ; तस्मादेतत्पदपाठेन 'एनान्' पितॄन् प्रियेणैव 'धाम्ना' स्थानेन समृद्धान् करोति ॥

वेदनं प्रशंसति— "प्रियेण धाम्ना समृद्ध्यते य एवं वेद"-इति ॥

तृतीया मृचं दर्शयति— "इदं पितृभ्यो नमो अस्त्वद्येति नमस्कारवती मन्ततः शंसति ; तस्मादन्ततः पितृभ्यो नमस्क्रियते"-इति । अस्या मृचि "नमो अस्तु"-इतिश्रूयमाणत्वादियं 'नमस्कारवती' ( सं० १०. १५, २. ) ; ता मेतां तिसृणां पित्र्याणा मन्ते शंसेत् । यस्मादेवं तस्मात् आज्यस्यान्ते "नमो वः पितरः"-इत्यादिना ( वा० सं० २०. ३२. ) पितृभ्यो नमस्कारः क्रियते ॥

एतासु पित्र्यासु कञ्चिद्विशेषं विचार्य निर्णयं दर्शयति— "तदाहुर्व्याहावं पित्र्याः शंसे३त् अव्याहावाँ३ इति ? व्याहाव मेव शंसेदसंस्थितं वै पितृयज्ञस्य साध्वसंस्थितं वा एष पितृयज्ञं संस्था-

पयति यो व्याहावं शंसति ; तस्मात् व्याहाव मेव शंस्तव्यम्"-इति। "शोंसावोम्"-इति मन्त्र आहावः ; अनेन मन्त्रेण प्रत्यृचं 'व्याहावं' विशेषेणाहूयाहूय किं तिस्रः पित्र्याः शंसेत्, आहोस्विद् 'अव्याहावं' पृथक्-पृथगाहावमन्त्रं विना शंसेदिति विचारं ब्रह्मवादिन आहुः। अत्र 'पित्र्याः शंसति"-इत्येकेनैव विधिना विहितत्वात् पृथक्-पृथगाहावो नास्तीति पक्षः प्रतिभाति ; पुनरपि "द्वितीयां शंसति", "नमस्कारवतीं शंसति" इति पृथग्विधिदर्शनात् प्रत्येक माहावः कर्त्तव्य इत्यपि प्रतिभाति। विचारार्थे श्रुतिद्वयम्। तत्र पृथक् पृथक् आहाव एव सिद्धान्तः। तत्रेय मुपपत्तिः,— पितृयज्ञस्य सम्बन्धि यदङ्गम् 'असंस्थितम्' एव वर्त्तते, असमाप्तं तिष्ठति ; तदङ्गं 'साधु' समाप्तं कर्त्तव्यम्। 'यः' होता पृथक् पृथगाहावं कृत्वा शंसति, 'एषः' होता पूर्वम् 'असंस्थितम्' असमाप्तं पितृयज्ञं संस्थापयति। तस्मात् पृथगाहावमन्त्रं पठित्वैव शंस्तव्यम् ॥ १३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
त्रयोदशः खण्डः ॥ १३ ( ३७ ) ॥

---

॥ अथ चतुर्दशः खण्डः ॥

स्वादुष्किलायं मधुमाँ ऽउताय मितीन्द्रस्यैन्द्रीरनुपानीयाः शंसत्येताभिर्वा इन्द्रस्तृतीयसवन मन्वपि-

वत्तदनुपानीयाना मनुपानीयात्वं माद्यन्तीव वै तर्हि देवता यदेता होता शंसति तस्मादेतासु मद्वत्प्रति-गीर्यं ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणी मृचं शंसति विष्णुर्वै यज्ञस्य दुरिष्टं पाति वरुणः स्विष्टं तयोरुभयोरेव शान्त्यै विष्णोर्नु कं वीर्याणि प्र वोच मिति वैष्णवीं शंसति यथा वै मत्य मेवं यज्ञस्य विष्णुस्तद्यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सु-मतीकृतं कुर्वन्नियादेव मेवैतद्यज्ञस्य दुष्टुतं दुःशस्तं सुष्टुतं सुशस्तं कुर्वन्नेति यदेतां होता शंसति तन्तु तन्वन्रजसो भानुमन्विहीति प्राजापत्यां शंसति प्रजा वै तन्तुः प्रजा मेवास्मा एतत्सन्तनोति ज्योतिष्मतः पथो रक्ष धिया कृतानिति देवयाना वै ज्योतिष्मन्तः पन्थानस्तानेवास्मा एतद्वितनोत्यनुल्बणं वयत जोगुवा मपो मनुर्भव जनया दैव्यं जन मित्येवैनं तन्मनोः प्रजया सन्तनोति प्रजात्यै प्र जायते प्रजया पशुभिर्य एवं वेदै वा न इन्द्रो मघवा विरप्शीत्युत्तमया परि दधातीयं वा इन्द्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वेतीयं वै सत्या चर्षणीधृदनर्वा त्वं राजा जनुषां धेह्यस्मे इतीयं वै राजा जनुषा मधिश्रवो माहिनं यज्जरित्र इतीयं वै माहिनं यज्ञश्रवो यज-

मानो जरिता यजमानायैवैता माशिष माशास्ते तदुपस्पृशन् भूमिं परि दध्यात्तद्यस्या मेव यज्ञं सम्भरति तस्या मेवैनं तदन्ततः प्रतिष्ठापयत्यग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्याग्निमारुत मुक्थं शस्त्वाग्निमारुत्या यजति यथाभागं तद्देवताः प्रीणाति प्रीणाति ॥ १४ (३८) ॥

॥ इत्यैतरेयब्राह्मणे तृतीयपञ्चिकायां तृतीयोऽध्यायः॥

अथ चतस्र ऋचो विधत्ते— "स्वादुष्किलायं मधुमाँ उतायमितीन्द्रस्यैन्द्रीरनुपानीयाः शंसत्येताभिर्वा इन्द्रस्तृतीयसवन मन्वपिबत्तदनुपानीयाना मनुपानीयात्वम्"–इति। "स्वादुष्किलायम्" –इत्यादिका ऋचः ( सं० ६. ४७. १–४ ) 'ऐन्द्र्यः' इन्द्रदेवताकत्वात्; "पपिवांस मिन्द्रम्"–इतीन्द्रः तृतीयपादे श्रूयते। तास्र 'इन्द्रस्यानुपानीयाः' भोजनादूर्ध्वं यत्पानं, तत्पश्चाद्भावित्वादनुपानम्; तत्स्थानीया एता ऋचः; ताः शंसेत्। कथ मिवासा मनुपानीयात्वम्? इति तदुच्यते— अथ मिन्द्रः तृतीयसवनम् 'अनु' पश्चाद् 'एताभिः' ऋग्भिः शंस्यमानः सन् सोम मपिबत्, तस्मादनुपानीयेति नाम सम्पन्नम् ॥

एतच्छंसनकालेऽध्वर्योः प्रतिगरमन्त्रे विशेषं विधत्ते—"माद्यन्तीव वै तर्हि देवता यदेता होता शंसति; तस्मादेतासु मद्वत्प्रतिगीर्यम्"–इति। तस्मिन्ननुपानीयाना मृचां शंसनकाले होतुः शंसनं श्रुत्वा देवताः सर्वाः 'माद्यन्ति इव वै' सर्वथा हृष्यन्त्येव;

'तस्मात्' कारणात् 'एतासु' ऋक्षु शस्यमानासु अध्वर्युणा 'मदवत् प्रतिगीर्यम्' मदिधातुयुक्तं प्रतिगरणं पठनीयम्। "मदा मोदैव"—इत्ययं मदिधातुयुक्तः प्रतिगरणमन्त्रः * ॥

ऋगन्तरं विधत्ते— "ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणी मृचं शंसति ; विष्णुर्वै यज्ञस्य दुरिष्टं पाति, वरुणः स्विष्टं ; तयोरुभयोरेव शान्त्यै"—इति। विष्णुर्वरुणश्च मिलित्वा देवता यस्या ऋचः, सा 'वैष्णुवारुणी' ; तां शंसेदित्यर्थः। तस्याश्चतुर्थपादे "विष्णुरगन्वरुणा"—इतिश्रवणात् वैष्णुवारुणीत्वम्। सा चाश्वलायनेन पठिता ( ५. २०. ६. ) †। 'दुरिष्टम्' अङ्गविकलं यदनुष्ठितम्, तद्विष्णुः 'पाति' वैकल्यं निवारयतीत्यर्थः। 'स्विष्ट' साकल्येन यदङ्ग मनुष्ठितम्, तद्वरुणः 'पाति' तस्य फलप्रतिबन्धं निवारयतीत्यर्थः। तस्मादियं मृक् 'तयोः उभयोः' विष्णुवरुणयोरेव 'शान्त्यै' प्रीत्यै सम्पद्यते ॥

ऋगन्तरं विधत्ते— "विष्णोर्नु कं वीर्याणि प्र वोच मिति वैष्णवीं शंसति ; यथा वै मत्य मेवं यज्ञस्य विष्णुस्तद्यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सुमतीकृतं कुर्वन्नियादेव मेवैतद्यज्ञस्य दुष्टुतं दुःशस्तं सुष्टुतं सुशस्तं कुर्वन्नेति, यदेतां होता शंसति"—इति। "विष्णोः"—इतिश्रूयमाणत्वादियं 'वैष्णवी' (सं॰ १.१५४.१.)। बुद्धौ सम्यक्त्वेन प्रतिभातं कार्यम् 'मत्यम्' ; अयं दृष्टान्तः, विष्णुर्दार्ष्टान्तिकः। यथा मत्यं कार्यं लोके फलपर्यवसायि भवति,

---

* "स्वादुष्किलाय मिति चतस्रो मध्ये चाह्नां मदा मोदैव मोदा मोदैवो मित्यासां प्रतिगरौ"—इति आश्व॰ श्रौ॰ ५.२०.६।

† "ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा।
या पत्येते अप्रतीता सहोभिर्विष्णुरगन् वरुणा पूर्वहूतौ ॥"—इति।

तथा विष्णुरपि फलपर्यवसायी इत्यर्थः। उक्तयोः दृष्टान्त-दार्ष्टान्तिकयोः तात्पर्यं तद्यथेत्यादिना प्रपञ्चयते। यथा लोके 'दुष्कृष्टं' कर्षकैः सस्यस्थानं दोषयुक्तं यथा भवति तथा कर्षणं कृतम्, यत्किञ्चिद्राजकार्यं ममात्यैः 'दुर्मतीकृतं' दुष्टं मत मन्यथा चिन्तितम्, पूर्वं तत्कार्यं मदुर्मतं सत् पश्चाद् बुद्धिप्रसादात् दुर्मतं सम्पादितम्; तत्र कश्चिद् बुद्धिमान् कर्षकः कृष्टस्थाने दुष्टस्य तृणादेरपनयनेन 'सुकृष्टं कुर्वन्' 'इयात्' कर्षकस्य पृष्ठतो गच्छेत्, राजकार्यं मपि दुर्बुद्धिनामात्येन दुर्मतीकृतं कश्चित्सुबुद्धिरमात्यः सुमतीकुर्वन् गच्छेत्। यथैतदुभयं लोके, एव मेवास्मिन् कर्मणि यज्ञस्य सम्बन्धि यत् स्तोत्र मकुशलैरुद्गातृभिर्दोषसहितं कृतम्, यदपि होतृभिः शस्त्रं दोषसहितम् पठितम्; तदुभय मपि विष्णुः क्रमेण सुष्टुतं सुशस्तं कुर्वन् 'एति' गच्छति, तत्तत्यदोषं परिहरतीत्यर्थः। 'यद्' यदा वैष्णवी मेतां होता शंसति, तदा तदुभयसमाधान मिति द्रष्टव्यम्॥

ऋगन्तरं विधत्ते—"तन्तु तन्वन्नजसो भानु मन्विहीति प्राजापत्यां शंसति; प्रजा वै तन्तुः, प्रजा मेवास्मा एतत्सन्तनोति"-इति। अस्या मृचि काचिदपि देवता साक्षाद्वाचकशब्देन नोक्ता, तस्मादिय मनिरुक्ता ( सं० १०. ५३. ६. ); तादृश्याश्च प्रजापतिर्देवता; तद्देवतात्वं पूर्व मेव निरूपितम्*; ता मेतां 'प्राजापत्यां' शंसेत्। हे प्रजापते! 'तन्तु तन्वन्' पुत्रपौत्रादिसन्ततिं विस्तारयन् 'रजसः' रञ्जनात्मकस्य जगतः 'भानुं' भासक मादित्यम् 'अन्विहि' अनुगच्छ। आदित्यो हि पुनः पुनः सञ्चरन् अहोरात्रनिष्पत्तिं करोति, तत्कालानुसारेणैव त्व मपि सन्तानवृद्धिं कुर्वित्यर्थः। अस्मिन् पादे 'तन्तु'-शब्देन पुत्रपौत्रादिः प्रजा विव-

* १२३ पृ० ६ पं० अनिरुक्त इत्यादि द्रष्टव्यम्।

चिता ; तन्तुवत् विस्तार्यमाणत्वात् । तस्मादेतत्पादपाठेन 'अस्मै' यजमानाय प्रजा मेव 'सन्तनोति' अविच्छिन्नां करोति ॥ द्वितीयं पाद मनूद्य व्याचष्टे— "ज्योतिष्मतः पथो रक्ष धिया कृतानिति,— देवयाना वै ज्योतिष्मन्तः पन्थानस्तानेवास्मा एतद्वि तनोति"—इति । हे प्रजापते ! 'धिया कृतान्' यागाद्यनुष्ठानबुद्ध्या सम्पादितान् 'ज्योतिष्मतः' प्रकाशयुक्तान् 'पथः' स्वर्गमार्गान् 'रक्ष' विघ्नपरिहारेण पालय । अत्र 'ज्योतिष्मत्-पथि'—शब्दाभ्यां देवयानमार्गा विवक्षिताः । देवा येषु मार्गेषु यान्ति गच्छन्ति, ते 'देवयानाः' । 'सर्वेषां देवानां तेजस्वित्वात्तन्मार्गेषु न कदाप्यन्धकारोऽस्ति । तस्मादेतत्पादपाठेन 'अस्मै' यजमानाय 'तान्' एव मार्गान् होता विस्तारयति ॥ उत्तरार्द्ध मनूद्य व्याचष्टे— "अनुल्बणं वयत जोगुवा मपो मनुर्भव जनया दैव्यं जन मित्येवैनं तन्मनोः प्रजया सन्तनोति प्रजात्यै"—इति । पुनः-पुनः कर्मसु गच्छेति प्रवर्त्तन्त इति अनुष्ठानशीलाः 'जोगु'-शब्देनोच्यन्ते । तादृशानां 'जोगुवाम्' अस्मत्सन्ततावुत्पन्नानां पुत्रादीनाम् 'अपः' अनुष्ठीयमान मेतत् कर्म 'अनुल्बणम्' अनतिरिक्तं 'वयत' हे प्रजापते ! 'वय' निर्वह । बहुवचनं पूजार्थम् । 'मनुर्भव' त्वमेव मनुष्योत्पादनार्थं मनुरूपो भव । ततो 'दैव्यं' देवताराधनयोग्यं 'जनं' पुत्रादिरूपं मनुष्यं 'जनय' उत्पादय । 'तत्' तेनार्द्धपाठेन 'एनं' यजमानं 'मनोः' सम्बन्धिन्या 'प्रजया' मनुष्यरूपया 'सन्तनोति' संयोजयति । तच्च 'प्रजात्यै' यजमानस्य प्रजोत्पादनाय सम्पद्यते ॥

वेदनं प्रशंसति— "प्र जायते प्रजया पशुभिर्य एवं वेद"—इति ॥

ऋगन्तरेण शस्त्रसमाप्तिं विधत्ते— "एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परि दधातीयं वा इन्द्रो मघवा विरप्शी"—इति ।

योऽय मिन्द्रोऽस्ति, सोऽयं 'नः एव' अस्मदर्थ मेव, करोत्विति द्वितीयपादेन वक्ष्यमाणेन सम्बन्धः। कीदृश इन्द्रः ? 'मघवा' धनवान्, तथा 'विरप्शी' "रभ राभस्ये"-इत्यस्माद्धातोरुत्पन्नोऽयं शब्दः, विशेषेण राभस्यवान्, सर्वदोद्युक्त इत्यर्थः। अनयर्चा ( सं० ४.१७.२०.) 'उत्तमया' शस्त्रापेक्षया अन्तिमया परिधानं कुर्य्यात्। उदाहृते प्रथमपादे इन्द्रादिशब्दैः सर्वैरपि 'इयं वै' भूमिरेवोपलक्ष्यते; अनया भूमिस्पर्शनस्य विधास्यमानत्वात् ॥ प्रथमपादं व्याख्याय द्वितीयपाद मनूद्य वाचष्टे— "करत्सत्या चर्षणीधृदनर्वेतीयं वै सत्या चर्षणीधृदनर्वा"-इति। 'चर्षणी'-शब्दो मनुष्यवाची, तां धारयति पोषयतीति 'चर्षणीधृत्' इन्द्रः। सोऽयम् 'अनर्वा' रथं परित्यज्य यागभूमावुपविष्टत्वादश्वरहितः। तादृशः सन् 'सत्या' फलप्रदानस्यावश्यकत्वेन सत्यानि कर्माणि 'करत्' करोतु, विघ्नपरिहारेण सम्पादयतु। अस्मिन्नपि पादे सत्यादिपदैः पूर्ववदियं भूमिरेवोपलक्षणीया ॥ तृतीयपाद मनूद्य व्याचष्टे— "त्वं राजा जनुषां धेह्यस्मे इतीयं वै राजा जनुषाम्"-इति। 'जनुषां' जनानाम् 'अस्मे' अस्माक मृत्विजां हे इन्द्र! त्वं राजा भूत्वा 'धेहि' वक्ष्यमाण मभीष्टं सम्पादय। अस्मिन्नपि पादे 'राजा जनुषाम्'-इति पदद्वयेन पूर्ववदियं भूमिरेवोपलक्षणीया ॥ चतुर्थं पाद मनूद्य व्याचष्टे— "अधि श्रवो माहिनं यज्जरित्र इतीयं वै माहिनं यच्छ्रवो यजमानो जरिता यजमानायैवैता माशिष माशास्ते"-इति। 'जरित्रे' स्तोत्रे यजमानाय 'यत्' प्रसिद्धं 'माहिनं' महत्त्वं 'श्रवः' कीर्त्तिं च 'अधि' धेहीतिपूर्वेणान्वयः; हे इन्द्र! ममाधिक्येन सम्पादयेत्यर्थः। अस्मिन्नपि पादे 'माहिनम्'-इत्यनेनेयं भूमिरेवोपलक्षणीया। यच्छब्दो नपुंसकलिङ्गो य इति पुंलिङ्गत्वेन परि-

णमयिष्यः ; तेन यो 'यज्ञः' इति प्रसिद्धं यज्ञ माचष्टे, सोऽपि इयं वै भूमिरेव। कीर्त्तिवाचिना 'श्रवः'-शब्देनापि भूमिरेवोपलक्ष्यते। यजमानो 'जरित्र'-शब्देनाभिधेयः। एतत्पादचतुष्टयपाठेन होता यजमानार्थ मेव आशासनीयं सर्वं प्रार्थयते ॥

परिधानकाले होतुर्भूमिस्पर्शनं विधत्ते—"तदुपस्पृशन् भूमिं परि दध्यात्तस्या मेव यज्ञं सम्भरति, तस्या मेवैनं तदन्ततः प्रतिष्ठापयति"–इति। 'तत्' तदा शस्त्रसमाप्तिकाले भूमिं स्पृशन्नेव 'परि दध्यात्' समापयेत्। 'तत्' तेन स्पर्शनेनानेन यस्या मेव भूमौ यज्ञ मनुष्ठातुं साधनं 'सम्भरति' सम्पादयति। तस्या मेव भूमौ 'एनं' यज्ञं 'तदन्ततः' तत्समाप्तिपर्य्यन्तं प्रतिष्ठापयति ॥

अथ शस्त्रयाज्यां विधत्ते— "अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्याग्निमारुत मुक्थं शस्त्वाग्निमारुत्या यजति, यथाभागं तद्देवताः प्रीणाति प्रीणाति"–इति। अग्निमरुतश्च यस्य 'उक्थस्य' शस्त्रस्य देवता, तत् 'आग्निमारुत मुक्थम्', पूर्वोक्तप्रकारेण शस्त्वा अत ऊर्द्ध्वम् "अग्ने मरुद्भिः"–इत्येतया 'आग्निमारुत्या यजेत'। आग्निमारुतीं याज्यां ( सं० ५. ६०. ८. ) पठेदित्यर्थः *। तथा सति

---

* "अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरिति याज्या। इत्यन्तोऽग्निष्टोमोऽग्निष्टोमः"–इति आश्व० श्रौ० ५.२०.८। यदुक्तं भाष्ये "तस्य ज्योतिष्टोमस्य सप्तसंस्थोपेतस्याग्निष्टोमः, उक्थ्यः, षोड़श्यतिरात्रश्चेत्येतास्तस्य: संस्थाः अत्रानुक्रमेण वक्ष्यन्ते"–इति ( १ भा० ९ पृ० १ पं० ), तत्र प्रथमसंस्थारूपस्याग्निष्टोमस्य हौत्राणा मुपदेशा एवेह समाप्ताः ; अत्र हि ब्राह्मणे हौत्राण्येवाम्नातानि, आध्वर्यवाणि तु शतपथादौ द्रष्टव्यानि। तत्र शतपथे तृतीयचतुर्थाभ्यां काण्डाभ्या मेकाहाहीनसत्रलक्षणसकलसोमयागप्रकृतिभूतोऽय मग्निष्टोमोऽभिहितः। तथा कातीयश्रौतसूत्रेऽपि "वसन्तेऽग्निष्टोमः ( ७.१.४. )"–इत्यारभ्य "एष प्रथमः सोमः ( १०.९.२५. )" –इत्यन्तो द्रष्टव्यः। एवं सामब्राह्मणे षष्ठादिषु चतुःप्रपाठकेषु "प्रजापतिरकामयत ( ता० ब्रा० ६. १, १. )"–इत्यादिभिः अग्निष्टोमीयानि औद्गात्राणि विहितानि।

तस्मिन् शस्त्रे प्रतिपादिता यावत्यो देवताः सन्ति, ताः सर्वास्तत्तद्भाग मनतिक्रम्य तर्पयति ॥ अभ्यासोऽध्यायसमाप्त्यर्थः ॥ १४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये
चतुर्दशः खण्डः ॥ १४ ( ३८ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायाः तृतीयोऽध्यायः ॥

---

## ॥ अथ चतुर्थाध्यायः ॥

( तव )

### ॥ अथ प्रथमः खण्डः ॥



॥ॐ॥ देवा वा असुरैर्युद्धमुप प्रायन् विजयाय तानग्नि-र्नान्वकामयतेतु * तं देवा अनुवन्नपि त्व मेह्यस्माकं वै त्व मेकोऽसीति स नास्तुतोऽन्वेष्यामीत्यब्रवीत् स्तुत नु मेति तथेति तं ते समुत्क्रम्योपनिवृत्यास्तुवंस्तान् स्तुतोऽनु प्रैत्स त्रिश्रेणिर्भूत्वा त्र्यनीको ऽसुरान् युद्ध मुप प्रायद् विजयाय त्रिश्रेणिरिति छन्दांस्येव श्रेणीरकुरुत त्र्यनीक इति सवनान्येवानीकानि तानसम्भाव्यं पराभावयत् ततो वै † देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद सा वा एषा गायत्र्येव यद-ग्निष्टोमश्चतुर्विंशत्यक्षरा वै गायत्री चतुर्विंशति-रग्निष्टोमस्य स्तुतशस्त्राणि तद्वै यदिद माहुः सुधायां ह वै वाजी सुहितो दधातीति गायत्री वै तन्न ह वै गायत्री क्षमा रमत ऊर्द्ध्वा ह वा एषा यजमान मादाय स्वरेतीत्यग्निष्टोमो वै तन्न ह वा अग्निष्टोमः

---

* "र्नाकामयतेतु" ङ ।

† नास्त्येतत् पदं ङ-पुस्तके ।

च्चमा रमत ऊर्द्ध्वो ह वा एष यजमान मादाय स्वरेति स वा एष संवत्सर एव यदग्निष्टोमश्चतुर्विंशत्यर्द्ध-मासो वै संवत्सरश्चतुर्विंशतिरग्निष्टोमस्य स्तुत-शस्त्राणि तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपि यन्ति ॥ १ (३६) ॥

त्रयोदशे सोमकथा प्रकीर्त्तिता,
राजक्रयार्थी सवनान्वितापि ।
स्याद्वैश्वदेवश्च मरुत्वतीयं
तत्तद्विशेषा उदिताः क्रमेण ॥

अथ पूर्वाध्यायेषूक्तोऽग्निष्टोमः, सर्वयज्ञक्रतूनां प्रकृतित्वेन स्तूयते। तदर्थ मुपाख्यान माह— "देवा वा असुरैर्युद्ध मुप प्रायन्विजयाय; तानग्निर्नान्वकामयतैतुं ; तं देवा अब्रुवन्नपि त्व मेह्यस्माकं वै त्व मेकोऽसीति ; स नास्तुतोऽन्वेष्यामीत्यब्रवीत्,— स्तुत नु मेति ; तथेति ; तं ते समुत्क्रम्योपनिवृत्त्यास्तुवंस्तान् स्तुतोऽनु प्रैत्"-इति। देवाः स्वविजयार्थं मसुरैः सह युद्धम् 'उप प्रायन्' उपक्रान्तवन्तः। तदानी मग्निः 'तान्' देवान् 'अनु' पश्चात् 'एतुम्' आगन्तुं नाकामयत। अग्नि मिच्छारहितं देवा एव मब्रुवन्,— हे अग्ने! त्व मपि 'एहि' आगच्छ, अस्माक मेव मध्ये 'त्व मेकोऽसि', न त्वस्मत्तोऽन्य इति। ततः 'सः' अग्निरेव मब्रवीत्,— युष्माभि-रस्तुतः सन्नहं 'नान्वेष्यामि' युष्माकं पृष्ठतो न गमिष्यामि,— तस्मात् 'मा' माम् 'नु' क्षिप्र मेव 'स्तुत' स्तोत्रं कुरुतेति। देवा-स्तथेत्यङ्गीकृत्य 'समुत्क्रम्य' उत्थाय 'उपनिवृत्त्य' अग्नेरभिमुखत्वेन

निवृत्तिं कृत्वा 'तम्' अग्निं समस्तुवन्। सोऽप्यग्निः स्तुतः सन् 'तान्' देवान् 'अनु'सृत्य 'प्रैत्' युद्धार्थं प्रकर्षेणागच्छत् ॥

अग्नेर्युद्धप्रकारं दर्शयति — "स त्रिश्रेणिर्भूत्वा त्र्यनीको ऽसुरान् युद्ध मुप प्रायद् विजयाय ;— त्रिश्रेणिरिति च्छन्दांस्येव श्रेणीरकुरुत, त्र्यनीक इति सवनान्येवानीकानि, तानसम्भाव्यं पराभावयत् ; ततो वै देवा अभवन् परासुरा"-इति। 'सः' अग्निः विजयाय 'त्रिश्रेणिः' सोमपानपङ्क्तित्रययुक्तः, 'त्र्यनीकः' त्रिभिरनीकैः सेनापतिरूपैः सेनामुखैर्युक्तो ऽसुरान् प्रति युद्धम् 'उप' एत्य 'प्रायद्' तत्समीपं प्रकर्षेण गतवान्। त्रिश्रेणिरिति यदुक्तं, तत्र गायत्री-त्रिष्टुब्-जगतीरूपाणि छन्दांस्येव तिस्रः श्रेणीरकुरुत। त्र्यनीक इति यदुक्तं, तत्र प्रातस्सवन-माध्यन्दिनसवन-तृतीयसवनान्येव त्रीण्यनीकानि सेनामुखान्यकुरुत। ततः 'तान्' असुरान् पुनः शत्रुशेषो यथा न सम्भाव्यते तथा 'परा भावयन्' पराभूतान् अकरोत्। ततो युद्धाद् देवा विजयिनो ऽभवन्, असुराः पराभूताः॥

वेदनं प्रशंसति— "भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद"-इति ॥

एव मग्निः छन्दस्त्रय-सवनत्रययुक्तो ऽग्निष्टोमरूपो ऽभवदित्येकेन प्रकारेणाग्निष्टोमं स्तुत्वा पुनरपि प्रकारान्तरेण स्तौति —"सा वा एषा गायत्र्येव यदग्निष्टोमश्चतुर्विंशत्यक्षरा वै गायत्री चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि"-इति। योऽयं पूर्वोक्तोऽग्निष्टोमोऽस्ति, 'सा वा एषा गायत्र्येव' अग्निष्टोमगायत्र्योः सङ्ख्यासाम्यात्,— गायत्रीगतेषु अक्षरेषु या सङ्ख्या, सैवाग्निष्टोमगतेषु स्तोत्रशस्त्रेषु। तथा,— बहिष्पवमानः, माध्यन्दिनपवमानः, आर्भवपवमानः, इति त्रीणि पवमानस्तोत्राणि ; चत्वार्याज्य-

स्तोत्राणि ; चत्वारि पृष्ठस्तोत्राणि ; एकं यज्ञायज्ञीयं स्तोत्रम् ; एव मेतानि द्वादश सम्पन्नानि । शस्त्राण्यपि तावन्त्येव,— आज्य-प्रउगे, निष्केवल्ये, मरुत्वतीये, वैश्वदेवाग्निमारुते इति होतुः शस्त्राणि षट् ; तथा अहोत्रकाणा मपि * षट् । एवं स्तोत्रशस्त्र-सङ्ख्ययाग्निष्टोमस्य गायत्रीरूपत्वम् ॥

प्रकारान्तरेण गायत्रीसाम्यं सम्पाद्य स्तौति— "तद्वै यदिद माहुः सुधायां ह वै वाजी सुहितो दधातीति, गायत्री वै तन्न ह वै गायत्री क्षमा रमत, ऊर्द्ध्वा ह वा एषा यजमान मादाय स्वरे-तीत्यग्निष्टोमो वै तन्न ह वा अग्निष्टोमः क्षमा रमत, ऊर्द्ध्वो ह वा एष यजमान मादाय स्वरेति"-इति । 'तद्वै' तत्रैव यज्ञसभायां वेदवादिनो 'यदिदं' वचन माहुः । किं वचन मिति, तदुच्यते— सुष्ठु धीयते सुकृतिनो यस्यां दिवि, सा द्यौः 'सुधा' ; तस्या मेव 'वाजी' वाजोऽन्नं सोमरूपं तदस्मिन्नस्तीत्यग्निष्टोम उच्यते । स च 'सुहितः' साद्गुण्येनानुष्ठितः 'दधाति' सुधाशब्दवाच्यायां दिवि यजमानं स्थापयति ; 'इति' यद्वेदवादिनां वचनं, तद् 'गायत्री वै' गायत्रीसाम्य मभिप्रेत्यैवोक्त मित्यर्थः । 'न ह वै'–इत्यादिना तदेव स्पष्टीक्रियते । क्षमेति सप्तम्यर्थो विवक्षितः ; क्षमायां भूमौ गायत्र्याख्या देवता 'न ह वै रमते' नैव क्रीड़ति, किन्त्वेषा गायत्री 'ऊर्द्ध्वा ह वै' ऊर्द्ध्वगामिन्येव भूत्वानुष्ठितवन्तं यजमान मादाय 'स्वरेति' स्वर्गं प्राप्नोति । 'इति' एवम्प्रकारेण येयं गायत्री वर्णिता, 'तत्' गायत्रीरूपो ऽग्निष्टोम एव ; तयोः समत्वात् ।

---

* अहोतारो मैत्रावरुणादयः । तथाहि— "तदिमं मानुषं होतारं प्रवृणीते ऽहोता ह्येष पुरार्थंतर्हि होता"—इति शत० ब्रा० १.५.१.१३ ।

अग्निष्टोमोऽपि क्षमायां न रमते, किन्त्वनुष्ठित ऊर्द्ध्वगामी सन्नेव यजमान मादाय स्वर्ग माप्नोति ॥

इत्थं गायत्रीसाम्येन स्तुत्वा संवत्सरसाम्येन स्तौति— "स वा एष संवत्सर एव यदग्निष्टोमश्चतुर्विंशत्यर्द्धमासो वै संवत्सरश्चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि"-इति । योऽय मग्निष्टोमः, स एष संवत्सर एव; अर्द्धमाससङ्ख्यायाः स्तोत्रशस्त्रसङ्ख्यायाश्च समानत्वात् ॥

समुद्रसाम्येन प्रशंसति— "तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपि यन्ति"-इति । 'स्रोत्याः' प्रवाहरूपा नद्यो यथा लोके समुद्रं प्राप्नुवन्ति, तथैवोक्थ्यषोडश्यतिरात्राहीनसत्ररूपाः सर्वे क्रतवो विकृतिरूपाः प्रकृतिरूप मग्निष्टोमम् 'अपि यन्ति' प्राप्नुवन्ति । अग्निष्टोमात् प्राचीना इष्टिपशुबन्धादयोऽपि त मग्निष्टोमं प्राप्नुवन्ति । तथा सति सर्वशब्दो मुख्यार्थः सम्पद्यते, न तु सङ्कोचः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां चतुर्थाध्याये
प्रथमः खण्डः ॥ १ ( ३८ ) ॥

———

॥ अथ द्वितीयः खण्डः ॥

**दीक्षणीयेष्टिस्तायते तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोम मपि यन्तीळा मुपह्वयत इळाविधा**

वै पाकयज्ञा इळा मेवानु ये के च पाकयज्ञास्ते सर्वे ऽग्निष्टोम मपि यन्ति सायं प्रातरग्निहोत्रं जुह्वति सायं प्रातर्व्रतं प्र यच्छन्ति स्वाहाकारेणाग्निहोत्रं जुह्वति स्वाहाकारेण व्रतं प्रयच्छन्ति स्वाहाकार मेवान्वग्निहोत्र मग्निष्टोम मप्येति पञ्चदश प्रायणीये सामिधेनीरन्वाह पञ्चदश दर्शपूर्णमासयोः प्रायणीय मेवानु दर्शपूर्णमासावग्निष्टोम मपीतः सोमं राजानं क्रीणन्त्यौषधो वै सोमो राजौषधिभिस्तं भिषज्यन्ति यं भिषज्यन्ति सोम मेव राजानं क्रीयमाण मनु यानि कानि च भेषजानि तानि सर्वाण्यग्निष्टोम मपि यन्त्यग्नि मातिथ्ये मन्थन्त्यग्निं चातुर्मास्येष्वातिथ्य मेवानु चातुर्मास्यान्यग्निष्टोम मपि यन्ति पयसा प्रवर्ग्ये चरन्ति पयसा दाक्षायणयज्ञे प्रवर्ग्य मेवानु दाक्षायणयज्ञोऽग्निष्टोम मप्येति पशुरुपवसथे भवति त मेवानु ये के च पशुबन्धास्ते सर्वेऽग्निष्टोम मपि यन्तीळादधो नाम यज्ञक्रतुस्तं दध्ना चरन्ति दध्ना दधिघर्मे दधिघर्म मेवान्विळादधो ऽग्निष्टोम मप्येति ॥ २ ( ४० ) ॥

अग्निष्टोमादर्वाचीनानां यज्ञाना मग्निष्टोमप्राप्तिं दर्शयति— "दीक्षणीयेष्टि स्तायते, ता मेवानु याः काश्चेष्टयस्ताः सर्वा अग्नि-

ष्टोम मपि यन्ति"-इति। अग्निष्टोमस्य प्रारम्भे येयं दीक्षणीयेष्टिः 'तायते' विस्तार्य्यते, 'ता मनु' तत्सादृश्येन वेदोक्ताः सर्वा अपीष्टयः अग्निष्टोमं प्राप्नुवन्ति। अत्र विकृतिरूपा एवेष्टयो विवक्षिताः; प्रकृतिरूपयोर्दर्शपूर्णमासयोर्वक्ष्यमाणत्वात् ॥

दीक्षणीयेष्टिगतचोदकप्राप्तेडोपह्वानसादृश्येन पाकयज्ञाना मग्निष्टोमप्राप्तिं दर्शयति— "इळा मुपह्वयत, इळाविधा वै पाकयज्ञा, इळा मेवानु ये के च पाकयज्ञास्ते सर्वेऽग्निष्टोम मपि यन्ति"-इति। पाकयज्ञाश्च सप्तसङ्ख्याकाः,—हुतः, प्रहुतः, आहुतः, शूलगवः, बलिहरणम्, प्रत्यवरोहणम्, अष्टकाहोम इति। सोऽयं सूत्रान्तरकारस्य पक्षः; आश्वलायनस्तु हुतादींस्त्रीनेव पाकयज्ञानाह *। ते च पाकयज्ञा 'इळाविधाः' इळासदृशाः; "इळा खलु वै पाकयज्ञः"-इति ( तै० सं० १, ७, ३, १. ) श्रुत्यन्तरात्। ततो दीक्षणीयेष्टौ इडोपह्वानेन तत्सदृशाः पाकयज्ञाः सर्वेऽप्यग्निष्टोमं प्राप्नुवन्ति ॥

अग्निहोत्रस्य प्राप्तिं दर्शयति —"सायं प्रातरग्निहोत्रं जुह्वति, सायं प्रातर्व्रतं प्र यच्छन्ति, स्वाहाकारेणाग्निहोत्रं जुह्वति, स्वाहाकारेण व्रतं प्र यच्छन्ति, स्वाहाकार मेवान्वग्निहोत्र मग्निष्टोम मप्येति"-इति। यथा प्रतिदिनं कालद्वयेऽग्निहोत्रहोमः, तथा दीक्षितस्य कालद्वये क्षीरपानरूपं व्रतदानम्। "अग्निर्ज्योति ज्योतिरग्निः स्वाहा"-इति यथा स्वाहाकारेणाग्निहोत्रहोमः, तथा "ते नः पान्तु, ते नो ऽवन्तु, तेभ्यो नमस्तेभ्यः स्वाहा"-इति

---

* "त्रयः पाकयज्ञाः,—हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः"-इति आश्व० गृ० १. १। मनु० सं० २. ८६।

स्वाहाकारेण दीक्षितो व्रतप्रदान माचरति। अतो व्रतगतस्वाहाकार मेवानुसृत्याग्निहोत्रस्याग्निष्टोमप्राप्तिः॥

अग्निष्टोमगतप्रायणीयेष्टिसादृश्येन दर्शपूर्णमासयोरग्निष्टोमप्राप्तिं दर्शयति—"पञ्चदश प्रायणीये सामिधेनीरन्वाह, पञ्चदश दर्शपूर्णमासयोः, प्रायणीय मेवानु दर्शपूर्णमासावग्निष्टोम मपीतः"—इति। प्रायणीयकर्मणि धाय्यारहितत्वात्सामिधेन्यश्चोदकप्राप्ताः पञ्चदशैव। तथा प्रकृतिभूतयोर्दर्शपूर्णमासयोरपि॥

अग्निष्टोमगतसोमद्वारा लौकिकाना मपि सर्वेषा मोषधीना मग्निष्टोमप्राप्तिं दर्शयति—"सोमं राजानं क्रीणन्त्यौषधो वै सोमो राजौषधिभिस्तं भिषज्यन्ति यं भिषज्यन्ति, सोम मेव राजानं क्रीयमाण मनु यानि कानि च भेषजानि, तानि सर्वाण्यग्निष्टोम मपि यन्ति"—इति। लोके 'यं' व्याधिग्रस्तं चिकित्सकाः 'भिषज्यन्ति' चिकित्सन्ते, 'तं' पुरुषम् 'औषधिभिः' अमृतवल्ल्यादिभिश्चिकित्सन्ते। सोमस्याप्यौषधत्वात्तमनु सर्व्वाण्यप्यौषधान्यग्निष्टोमं प्राप्नुवन्ति॥

अग्निष्टोमगतातिथ्यकर्मद्वारा चातुर्मास्ययागानां तत्प्राप्तिं दर्शयति—"अग्नि मातिथ्ये मन्थन्त्यग्निं चातुर्मास्येष्वातिथ्य मेवानु चातुर्मास्यान्यग्निष्टोम मपि यन्ति"—इति। आतिथ्याया मग्निमन्थनं विहितम्, चातुर्मास्यपर्वस्वपि मन्थनं विहितम्; उभयत्र मन्थनधर्मसाम्यादातिथ्यासदृशानि चातुर्मास्यान्यप्यग्निष्टोमं 'यन्ति' प्राप्नुवन्ति॥

प्रवर्ग्यसाम्येन दाक्षायणयज्ञस्याग्निष्टोमप्राप्तिं दर्शयति—"पयसा प्रवर्ग्ये चरन्ति, पयसा दाक्षायणयज्ञे, प्रवर्ग्य मेवानु दाक्षायणयज्ञोऽग्निष्टोम मप्येति"—इति। दर्शपूर्णमासयोरेव गुणविकृतिरूपः

कश्चिद्दाक्षायणाख्यो यज्ञः। तथा च शाखान्तरे दर्शपूर्णमास-सन्निधौ श्रूयते— "दाक्षायणयज्ञेन स्वर्गकामो यजेत"-इति *। तस्य च प्रवर्ग्यस्य च क्षीरद्रव्यसाम्येन प्रवर्ग्यसदृशो दाक्षायण-यज्ञोऽप्यग्निष्टोम मेति ॥

पशुबन्धाना मग्निष्टोमप्राप्तिं दर्शयति—"पशुरुपवसथे भवति; त मेवानु ये के च पशुबन्धास्ते सर्वे ऽग्निष्टोम मपि यन्ति"–इति। सुत्यादिवसात् पूर्वो दिवस उपवसथाख्यः। तस्मिन्नग्नीषोमीयः पशुरनुष्ठीयते। तद्विकृतिरूपा वेदोक्ताः सर्वे पशुबन्धाः। पशु-द्रव्यसाम्यादग्नीषोमीयसदृशाः सर्वे पशुबन्धा अप्यग्निष्टोमं यन्ति ॥

इळादधनामकस्य यज्ञान्तरस्याग्निष्टोमप्राप्तिं दर्शयति—"इळादधो नाम यज्ञक्रतुस्तं दध्ना चरन्ति; दध्ना दधिघर्मे दधि-घर्म मेवान्विळादधो ऽग्निष्टोम मप्येति"–इति। दर्शपूर्णमास-विकृतिरूप एव कश्चिदिळादधनामको यज्ञोऽस्ति। अतएवा-पस्तम्बो दर्शपूर्णमाससन्निधावेव माह— "एतेनैळादधः सार्वसेनि-यज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः"–इति ( आप० श्रौ० ३. १७. १२. ) †। "दधिघर्मनामकस्तु अग्निष्टोमगतः कश्चिद्

*, † दाक्षायणेन दृष्टो यज्ञो दाक्षायणयज्ञः। स च शतपथब्राह्मणे "आजिं वा एते धावन्ति, ये दर्शपूर्णमासाभ्यां यजन्ते"–इत्याद्यभिधाय ( ११. १. २. १०. ) तत्सन्निधावेव "यद्यु दाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेत"–इत्याद्याम्नात मिति दर्शपूर्ण-मासतो नान्यत्कर्मेति सिद्धान्तितं कातीयसूत्रे "गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम्"–इति ( श्रौ० ४. ४. २. )। "त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत; पञ्चदश दाक्षा-यणयज्ञी"–इत्यादि च पार्थक्यं द्रष्टव्यम् ( कात्या० श्रौ० ४. २. ४७, ४८. )। दाक्षायण-यज्ञेन सुवर्गकामः"–इत्यारभ्य "सन्तिष्ठते दाक्षायणयज्ञः"–इत्यन्त आपस्तम्बीयग्रन्थस्यैव-मर्थकः ( श्रौ० ३. १७. ४–११. )। इत उत्तर मेव तत्रोक्तम् "एतेनैळादधः सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः"–इति ( १२ सू० )।

दधियागः ; तेन माध्यन्दिनं वरन्ति ; इळादधोऽपि दधिद्रव्यकः। अतस्तयोरुभयोर्दधिद्रव्येण साम्यम्। दधिधर्मसदृश इळादधोऽपि अग्निष्टोम मेति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ( ४० ) ॥

---

॥ अथ तृतीयः खण्डः ॥

इति नु पुरस्तादथोपरिष्टात् पञ्चदशोक्थ्यस्य स्तोत्राणि पञ्चदश शस्त्राणि स मासो मासधा संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सर मेवानूक्थ्योऽग्निष्टोम मपेरत्युक्थ्य मपि यन्त मनु वाजपेयोऽपेरत्यत्युक्थ्यो हि स भवति द्वादश-रात्रेः पर्यायाः सर्वे पञ्चदशास्ते द्वौ द्वौ सम्पद्य त्रिंशदेकविंशं षोळशिसाम त्रिवृत्सन्धिः सा त्रिंशत्स मासस्त्रिंशन्मासस्य रात्रयो मासधा संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सर मेवान्वतिरात्रो ऽग्निष्टोम मपेरत्यतिरात्र मपि यन्त मन्व-प्तोर्यामो ऽपेरत्यतिरात्रो हि स भवत्येतद्वै ये च पुर-

स्ताद्ये चोपरिष्टाद्यज्ञक्रतवस्ते सर्वेऽग्निष्टोम मपि यन्ति तस्य संस्तुतस्य नवतिशतं स्तोत्रियाः सा या नवतिस्ते दश त्रिवृतोऽथ या नवतिस्ते दशाथ या दश तासा मेका स्तोत्रियोदेति त्रिवृत्यरि शिष्यते सोऽसावेकविंशोऽध्याहितस्तपति विषुवान्वा एष स्तोमानां दश वा एतस्मादर्वाञ्चस्त्रिवृतो दश पराञ्चो मध्य एष एकविंश उभयतोऽध्याहितस्तपति तद्यासौ स्तोत्रियोदेति सैतस्मिन्नध्यूळ्हा स यजमानस्तद् दैवं क्षत्रं सहो बल मश्नुते ह वै दैवं क्षत्रं सहो बल मेतस्य ह सायुज्यं सरूपतां सलोकता मश्नुते य एवं वेद ॥ ३ ( ४१ ) ॥

क्रत्वन्तराणा मग्निष्टोमप्राप्तिं दर्शयति— "इति नु पुरस्तादथोपरिष्टात्. पञ्चदशोक्थ्यस्य स्तोत्राणि, पञ्चदश शस्त्राणि ; स मासो मासधा संवत्सरो विहितः ; संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सर मेवानूक्थ्योऽग्निष्टोम मप्येत्युक्थ्य मपि यन्त मनु वाजपेयो ऽप्येत्युक्थ्यो हि स भवति"-इति । 'इति नु' पूर्वखण्डोक्तेनैव प्रकारेण 'पुरस्तात्' अग्निष्टोमात् प्राचीनस्य कर्मजातस्याग्निष्टोमप्रवेशः, उक्त इति शेषः । 'अथ' अनन्तर मुपरिष्टाद् अग्निष्टोमादितरेषां क्रतूनां * प्रवेश उच्यते । तत्र योऽयम् 'उक्थ्यः'

* ज्योतिष्टोमसंस्थाविशेषाणा मिति यावत् । तदाहापस्तम्बः— "उक्थ्यः षोडश्यति-रात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकाराः"-इति ( श्रौ० १४. १. १ ।

क्रतुः, तस्य पञ्चदशसङ्ख्याकानि स्तोत्राणि ; अग्निष्टोमविकृतित्वात्तदीयानि द्वादश स्तोत्राण्यतिदिश्यन्ते, तत ऊर्द्ध्वं त्रीणि उक्थसञ्ज्ञकानि स्तोत्राणि च, एवं पञ्चदश सम्पद्यन्ते। शस्त्रेष्वप्ययं न्यायो योज्यः। तानि स्तोत्राणि शस्त्राणि च मिलित्वा मासगतां रात्रिसङ्ख्यां प्राप्नुवन्ति। अतः सोऽयं स्तोत्रशस्त्रसमूहो मासः सम्पद्यते। 'मासशः' मासप्रकारेण मासावृत्त्या संवत्सरो 'विहितः' सम्पादितो भवति। स च संवत्सरो वैश्वानराग्निरूपः ; गर्भे प्रविष्टस्य पुरुषस्य संवत्सरमात्रेण वैश्वानराख्यस्यौदर्याग्नेः पाटवसम्भवात्। अग्निश्चाग्निष्टोमस्वरूपः ; पूर्वोक्तया रीत्या श्रेणित्रयरूपेणानीकत्रयरूपेण चाग्नेरेवाग्निष्टोमरूपेणाविर्भूतत्वात्। एवं सति स उक्थ्याख्यः क्रतुः स्तोत्रशस्त्रादिपरम्परया संवत्सरमेवानु प्रविश्य तद्द्वाराग्निष्टोमं प्रविशति। तं प्रविशन्त मुक्थमनु वाजपेयाख्योऽपि क्रतुरग्निष्टोम मपि 'एति' प्राप्नोति। 'सः' हि वाजपेयोऽत्युक्थ्यो भवति ; उक्थ्याख्यं क्रतु मतिक्रम्य वर्त्तमानत्वात्। उक्थ्ये यानि पञ्चदश स्तोत्राणि, तत ऊर्द्ध्वं वाजपेये स्तोत्रद्वयम्, सोऽय मुक्थ्यातिक्रमः। तस्मादुक्थ्यद्वारा वाजपेयस्य तत्प्राप्तिः॥

अथातिरात्राप्तोर्यामयोः क्रत्वोरग्निष्टोमप्रवेशं दर्शयति—"द्वादशरात्रेः पर्य्यायाः सर्वे पञ्चदशास्ते द्वौ द्वौ सम्पद्य त्रिंशदेकविंशं षोड़शिसाम त्रिवृत्सन्धिः, सा त्रिंशत्स मासस्त्रिंशन्मासस्य रात्रयो मासशः संवत्सरो विहितः। संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सर मेवान्वतिरात्रोऽग्निष्टोम मप्येत्यतिरात्र मपि यन्त मन्वप्तोर्यामो ऽप्येत्यतिरात्रो हि स भवति"—इति। अतिरात्रयागे द्वादशसङ्ख्याका रात्रेः पर्य्यायाः। ते चापस्तम्बेनैवं स्पष्टी-

क्ताः— "अतिरात्रश्चेत् षोड़शिचमसानुन्नयंस्त्रयोदशभ्यश्चमसगणेभ्यो* राजान मति रेचयति । षोडशिना प्रचर्य रात्रिपर्य्यायैः प्रचरति । होतृचमसमुख्यः प्रथमो गणो मैत्रावरुणचमसमुख्यो द्वितीयो ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः ।०—०प्रथमाभ्यां गणाभ्या मध्वर्युश्चरति, उत्तराभ्यां प्रतिप्रस्थाता, एष प्रथमः पर्य्यायः । एवं विहितो द्वितीयस्तृतीयश्च"—इति (श्रौ० १४. ३. ८–१६.)। अस्याय मर्थः। अतिरात्राख्यं क्रतुं यदानुतिष्ठति, तदानीं चोदकप्राप्तं सर्व मनुष्ठाय अनन्तरं सायं काले षोड़शिग्रहसम्बन्धिनश्चमसान् पूरयित्वा तत ऊर्द्धं त्रयोदशचमसगणपर्य्याप्तं सोम मवस्थाप्य षोड़शिग्रहप्रचारं कृत्वा तत ऊर्द्धं रात्रिपर्य्यायैः प्रचरेत्। तेषु पर्य्यायेषु च होतृचमस मादिं कृत्वा यश्चमसगणः प्रवर्त्तते, सोऽयं प्रथमः। मैत्रावरुणचमसस्यादित्वे द्वितीयश्चमसगणो भवति। ब्राह्मणाच्छंसिचमसस्यादित्वे तृतीयश्चमसगणो भवति। अच्छावाकचमसस्यादित्वे चतुर्थश्चमसगणो भवति। तेषु चतुर्षु गणेषु प्रथमद्वितीयाभ्यां गणाभ्या मध्वर्युरनुतिष्ठेत्, तृतीयचतुर्थाभ्यां प्रतिप्रस्थातानुतिष्ठेत्। एवं गणचतुष्टयानुष्ठान मेकः पर्यायो भवति। पुनरपि द्वितीयतृतीयपर्य्यायौ तथैवानुष्ठेयौ। तेषु पर्य्यायेषु द्वादश गणाः सम्पद्यन्ते। एतत्सर्व मभिप्रेत्य 'द्वादशरात्रेः पर्य्यायाः'—इत्युक्तम्।

'ते सर्वे' अपि प्रजाः 'पञ्चदशाः' तदीयस्तोत्रेषु तृचगताना मृचा मावृत्तिविशेषेण पञ्चदशस्तोमस्य सामगैः सम्पादितत्वात्ते पञ्चदशस्तोमयुक्ता द्वादश पर्य्यायाः सन्ति। तेषु 'द्वौ द्वौ' पर्य्यायौ 'सम्पद्य' मिलित्वा पञ्चदशसङ्ख्याया द्विरावृत्त्या त्रिंशत्सङ्ख्यायां ते

* "षोड़शिचमस मुन्नयन् त्रयोदशभ्यश्चमसगणेभ्यो"—इति ग, च।

सर्वे पर्यवस्यन्ति । किञ्च षोड़शिस्तोत्रे यत्सामास्ति, तदेकविंशं भवति ; तदीयतृचगतानां ऋचां आवृत्तया सामगैरेकविंशतिस्तोम-सम्पादनात् (ता० ब्रा० २.१४–१७ )। योऽयं मतिरात्रस्यान्ते 'सन्धि' एतन्नामकं स्तोत्रम्, तत्र त्रिवृत् स्तोमः सामगैः पठ्यते *। तस्य च स्तोमस्य त्रिषु तृचेष्वावृत्तिरहितेषु निष्पन्नत्वादृचां नवत्वं सम्पद्यते। एकविंशतिसङ्ख्या नवसङ्ख्या च मिलित्वा त्रिंशत्सङ्ख्या भवति। अनया त्रिंशत्सङ्ख्यया वा पूर्वोक्तत्रिंशत्सङ्ख्यया वा मास-रात्रिसाम्यान्मासः सम्पद्यते । मासधेत्यादि पूर्ववद्योजनीयम् (१८२पृ० ६पं०)। एवं सति संवत्सरद्वारातिरात्रो ऽग्निष्टोमं प्रवि-शति। प्रविशन्त मतिरात्र मनु तद्द्वारेणाप्तोर्यामोऽपि प्रविशति। स ह्यतिरात्र मतिलङ्घ्य स्तोत्राधिक्येन वर्त्तमानत्वात् 'अत्यतिरात्रः'। एकोनत्रिंशत् स्तोत्राण्यतिरात्रे, आप्तोर्यामे तु त्रयस्त्रिंशदित्या-धिक्यम् ; अतोऽतिरात्रद्वारा आप्तोर्यामस्याग्निष्टोमे प्रवेशः ॥

उक्तं सर्वयज्ञक्रत्वन्तर्भाव मुपसंहरति— "एतद्वै ये च पुरस्ताद् ये चोपरिष्टाद्यज्ञक्रतवस्ते सर्वे ऽग्निष्टोम मपि यन्ति"–इति। 'एतद्वै' एतेनैवोक्तप्रकारेणाग्निष्टोमस्य पूर्वभाविन इष्ट्यग्निहोत्रा-दयो ये यज्ञक्रतवः, ये चोत्तरभाविन उक्थ्यवाजपेयादयो यज्ञ-क्रतवः ; ते सर्वे ऽग्निष्टोमं प्राप्नुवन्ति ॥

अथ प्रकारान्तरेणाग्निष्टोमं प्रशंसति— "तस्य संस्तुतस्य नवतिशतं स्तोत्रियाः ; सा या नवतिस्ते दश त्रिवृतो ऽथ या नवतिस्ते दशाथ या दश, तासा मेका स्तोत्रियोदेति, त्रिवृ-त्परि शिष्यते ; सोऽसावेकविंशोऽध्याहितस्तपति, विषुवान्वा एष स्तोमानां दश वा एतस्मादर्वाञ्चस्त्रिवृतो दश पराञ्चो मध्य एष

* ता० ब्रा० ९.१.२० ; ३.४ ; 'त्रिवृत्सन्धिः' २०.१.१ ।

एकविंश उभयतो ऽध्याहितस्तपति; तद्यासौ स्तोत्रियोदेति, सैतस्मिन्नध्यूळ्हा, स यजमानस्तद् दैवं क्षत्रं सहो बलम्”–इति । ‘तस्य’ अग्निष्टोमस्योद्गातृभिः संस्तुतस्य ‘स्तोत्रियाः’ स्तोत्रसम्बन्धिन्य ऋचो नवत्यधिकं शतं सम्पद्यते ॥

कथ मिति चेत्, तदुच्यते— “प्रातस्सवने बहिष्पवमानाख्य मेकं यत् स्तोत्रम्, तस्य त्रिवृत् स्तोमः क्रियते। त्रिवृतश्चावृत्तिरहितत्वाद्विद्यमानेषु त्रिषु तृचेषु विद्यमाना नवर्चः स्तोत्रिया भवन्ति। तत ऊर्ध्वं चत्वार्याज्यस्तोत्राणि। तेष्वेकैकस्मिन्विद्यमानानां तिसृणा मृचा मावृत्तिविशेषेण पञ्चदशः स्तोमः सम्पादनीयः। तथा सत्येकैकस्मिन् स्तोत्रे पञ्चदशर्च इत्येवं चतुर्षु स्तोत्रेषु मिलित्वा षष्टिः सम्पद्यते। तदेवं प्रातस्सवने एकोनसप्ततिः। माध्यन्दिनसवने माध्यन्दिनपवमानाख्य मेकं स्तोत्रम्, तस्यापि पञ्चदशस्तोमयुक्तत्वात् स्तोत्रियाः पञ्चदश सम्पद्यन्ते। चत्वारि पृष्ठस्तोत्राणि। तेषु सप्तदशस्तोमे कृते सत्यष्टषष्टिसङ्ख्याकाः स्तोत्रिया भवन्ति। उभयं मिलित्वा माध्यन्दिनसवने त्र्यशीतिः सम्पद्यते। तृतीयसवने आर्भवपवमानस्तोत्रस्य सप्तदशस्तोमोपेतत्वात् तस्मिन् सप्तदशर्चः। यज्ञायज्ञीयस्तोत्रस्यैकविंशस्तोमोपेतत्वात् तत्रैकविंशतिः। मिलित्वा तृतीयसवनेऽष्टात्रिंशत्। एवं सवनत्रये मिलित्वा नवत्यधिकशतसङ्ख्याकाः स्तोत्रिया भवन्ति ॥

तत्र या नवतिः, ते दशसङ्ख्याकास्त्रिवृत्-स्तोमाः सम्पद्यन्ते। एकैकस्मिन्दशके अन्तिमा मेकां परित्यज्य अवशिष्टाना मृचां नवसङ्ख्योपेतत्वात् त्रिवृत्स्तोमत्वम्। ततो नवसु दशकेषु नव त्रिवृत्-स्तोमाः। यास्तु तेषु दशकेषु * परित्यक्ता नवर्चः, स एकस्त्रिवृत्-

* “नवकेषु” ग ।

स्तोमः। एवं दशसङ्ख्याकास्त्रिवृत्-स्तोमाः। 'अथ' अनन्तरं यच्छत मस्ति, तस्मिन्नपि या नवतिस्ते पूर्वन्यायेन दश त्रिवृत्-स्तोमा गणनीयाः। अथ नवत्या ऊर्ध्वभाविन्यो 'याः' ऋचो दश, 'तासां' दशाना मृचां मध्ये एका स्तोत्रिया 'उदेति' अतिरिच्यते। अवशिष्टासु स्तोत्रियासु त्रिवृत्-स्तोमः परिशिष्यते। एवं सत्येक-विंशतिसङ्ख्याकास्त्रिवृत्-स्तोमाः, तेभ्योऽतिरिक्ता काचिदृगिति, एतावत्सम्पन्नम्। तत्रैकविंशतित्रिवृत्-स्तोमसङ्घो योऽस्ति, स सर्वोऽपि 'असौ' मण्डले दृश्यमानः, एकविंशतिसङ्ख्यापूरकः 'अध्याहितः' मण्डले स्थापितः आदित्यः 'तपति' प्रकाशते। आदित्यस्यैक-विंशतिसङ्ख्यापूरकत्व मन्यत्र श्रुतम्— "द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंशः"–इति (तै०सं०५.१.१०.४.)॥

यत्तु सत्रं गवामयनाख्यम्, तत्र यान्येकविंशत्यहानि, तत्सा-दृश्यादपि यथोक्तस्त्रिवृत्स्तोमसम्बन्धः प्रशस्तः। कथं सादृश्य मिति, तदुच्यते— तस्मिन् सत्रे यन्मध्यम महः, तद्विषुवन्नामकं दिवा-कीर्त्यं भवति। तस्य पुरस्ताद्दशाहानि, उपरिष्टाद्दशाहानि। एव मत्रापि पूर्वोक्तरीत्या सम्पादिताना मेकविंशतिसङ्ख्याकानां त्रिवृत्स्तोमानां मध्यवर्त्ती यस्त्रिवृत् स्तोमः, स एव विषुवान् भवति। एतस्माद्विषुवद्रूपात्त्रिवृत्स्तोमात् 'अर्वाञ्चः' पूर्वभाविनो दश त्रिवृत्स्तोमाः, 'पराञ्चः' उत्तरभाविनोऽपि दश त्रिवृत्स्तोमाः; उभयोर्दशकयोर्मध्ये एष एकविंशतिसङ्ख्यापूरकस्त्रिवृत्स्तोमः 'उभयतोऽध्याहितः' पार्श्वद्वये दशकव्याप्तः सन् 'तपति' आदित्यवत्प्रकाशते। 'तत्' तत्रैकविंशतित्रिवृत्स्तोमेभ्य ऊर्ध्वं 'यासौ' ऋगेका स्तोत्रिया 'उदेति' अतिरिक्ता भवति, सेयम् 'एतस्मिन्' एकविंशति-सङ्घे 'अध्यूळ्हा' अधिकत्वेनावस्थापिता, 'स यजमानः' अतिरिक्तः

स्तोत्रियारूपो यजमानत्वेनावगन्तव्यः। किञ्च 'तत्' स्तोत्रियारूपं 'दैवं क्षत्रं' देवसम्बन्धिनी क्षत्रियजातिरिन्द्रवरुणादिरूपा। तत् क्षत्रं 'सहः' पराभिभवक्षमं 'बलं' सैन्यम्। एव मग्निष्टोमः स्तोत्रियद्वारा प्रशस्तः॥

उक्तार्थवेदनं प्रशंसति— "अश्नुते ह वै दैवं क्षत्रं सहो बल मेतस्य ह सायुज्यं सरूपतां सलोकता मश्नुते य एवं वेद"–इति। उक्तार्थवेदिता पराभवसहिष्णुसैन्योपेता मिन्द्रादिदेवक्षत्रियजातिम् 'अश्नुते' प्राप्नोति। तत्र तेन क्षत्रेणेन्द्रादिना 'सायुज्यं' सहवासम्, 'सरूपतां' समानरूपत्वम्, 'सलोकताम्' एकलोकावस्थितिं च प्राप्नोति॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां चतुर्थाध्याये तृतीयः खण्डः॥ ३ (४१)॥

---

॥ अथ चतुर्थः खण्डः॥

देवा वा असुरैर्विजिग्याना ऊर्ध्वाः स्वर्गं लोक मायंस्तोऽग्निर्दिविस्पृगूर्ध्व उदश्रयत स * स्वर्गस्य लोकस्य द्वार मवृणोदग्निर्वै स्वर्गस्य लोकस्याधिपतिस्तं वसवः प्रथमा आगच्छंस्त एन मब्रुवन्नति नोऽर्ज-

* 'सः'–इति क।

स्याकाशं नः कुर्विति स नास्तुतो ऽतिसच्य इत्यब्रवीत्
स्तुत नु मेति तथेति तं ते त्रिवृता स्तोमेनास्तुवंस्तान्
स्तुतो ऽत्याजत ते यथालोक मगच्छंस्त रुद्रा आगच्छंस्त
एन मब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति स नास्तुतो
ऽतिसच्य इत्यब्रवीत् स्तुत नु मेति तथेति तं ते पञ्च-
दशेन स्तोमेनास्तुवंस्तान् स्तुतो ऽत्याजत ते यथालोक
मगच्छंस्त मादित्या आगच्छंस्त एन मब्रुवन्नति
नोऽर्जस्याकाशं नः कुर्विति स नास्तुतो ऽतिसच्य
इत्यब्रवीत् स्तुत नु मेति तथेति तं ते सप्तदशेन
स्तोमेनास्तुवंस्तान् स्तुतो ऽत्याजत ते यथालोक मग-
च्छंस्त विश्वेदेवा आगच्छंस्त एन मब्रुवन्नति नोऽर्ज-
स्याकाशं नः कुर्विति स नास्तुतो ऽतिसच्य इत्यब्रवीत्
स्तुत नु मेति तथेति तं त एकविंशेन स्तोमेना-
स्तुवंस्तान् स्तुतो ऽत्याजत ते यथालोक मगच्छन्ने-
कैकेन वै तं देवाः * स्तोमेनास्तुवंस्तान् स्तुतो
ऽत्याजत ते यथालोक मगच्छन्नथ हैन मेष एतैः
सर्वैः † स्तोमैः स्तौति यो यजते यश्चैन मेवं वेदाति
तु त मर्जाता अति ह वा एन मर्जति स्वर्गं लोक
मभि य एवं वेद ॥ ४ ( ४२ ) ॥

*, † कतिपयेषु मूलपुस्तकेषु निर्विसर्गपाठः ।

अथ त्रिवृदादिस्तोमचतुष्टयद्वारेणाग्निष्टोमं स्तोतु माख्यायिका माह— "देवा वा असुरैर्विजिग्याना ऊर्द्धाः स्वर्गं लोक मायन्सोऽग्निर्दिविस्पृगूर्ध्व उदश्रयत; स स्वर्गस्य लोकस्य द्वार मवृणोदग्निर्वै स्वर्गस्य लोकस्याधिपतिस्तं वसवः प्रथमा आगच्छंस्त एन मब्रुवन्नति नो ऽर्जस्याकाशं नः कुर्विति; स नास्तुतो ऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति; तथेति; तं ते त्रिवृता स्तोमेनास्तुवंस्तान् स्तुतो ऽत्यार्जत, ते यथालोक मगच्छन्"—इति। ये देवा अग्निसहिताः पूर्वं मसुरैः सह युद्धं कृत्वा 'विजिग्यानाः' विजयं प्राप्ताः, ते देवा ऊर्द्धगामिनः सन्तः स्वर्गं लोकम् 'आयन्' प्राप्नुवन्। तदानीम् 'अग्निः' स्वस्थान एव स्थित्वा 'दिविस्पृक्' द्युलोकं स्पृशन् 'ऊर्द्धः' उन्नतः सन् 'उदश्रयत' उपरितनं देश माश्रितवान्, द्युलोकपर्य्यन्तं स्वकीयां ज्वालां वर्धितवानित्यर्थः। ततः 'सः' अग्निः स्वर्गलोकद्वारम् 'अवृणोत्' तयाच्छादित मकरोत्। न चेतरेषु देवेषु स्थितेषु कथ मग्नेः ईदृक् सामर्थ्य मिति वाच्यम्; यस्मात् 'अग्निः स्वर्गस्य लोकस्य अधिपतिः'; अग्नौ हि अग्निष्टोमादिकर्माणि अनुष्ठाय स्वर्गं प्राप्नुवन्ति। 'तं' स्वर्गद्वारनिरोधिन मग्निं मष्टौ वसवः 'प्रथमाः' पुरोगामिनो भूत्वा 'आगच्छन्' प्राप्तवन्तः। प्राप्य च 'एनम्' अग्निम् 'ते' वसव एव मब्रुवन्,— हे अग्ने! त्वं 'नः' अस्मान् 'अत्यर्जसि' त्वदीयां ज्वाला मतिलङ्घ्य 'अर्जयितुं' स्वर्गं प्रापयितु मर्हसि, 'नः' अस्माकं तत्प्राप्त्यर्थम् 'आकाशं' त्वदीयज्वालोपशमनेनावकाशं कुर्विति। ततः 'सः' अग्निरेव मब्रवीत्,— युष्माभिरस्तुतोऽहं 'न अतिस्रक्ष्ये' द्वारावरोधं न परित्यक्ष्यामि। तस्मादवरोधपरिहाराय 'नु' क्षिप्र मेव 'मा' मा मग्निं 'स्तुत' स्तोत्रं

कुरुतेति। 'ते' वसवः तथेत्यङ्गीकृत्य त्रिवृन्नामकेन स्तोमेनाग्नि मस्तुवन्।

तस्य च त्रिवृत्स्तोमस्तोत्रस्य विधायकं छन्दोगब्राह्मण मेव माम्नायते— "तिसृभ्यो हिङ्करोति स प्रथमया, तिसृभ्यो हिङ्करोति स मध्यमया, तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः"–इति (ता० ब्रा० २.१.१.)। अस्याय मर्थः। "उपास्मै गायता नरः"–इति यः प्रथमः तृचः, "दविद्युतत्या"–इति यो द्वितीयः तृचः, "पवमानस्य ते कवे"–इति यः तृतीयः तृचः, एतेषु त्रिषु तृचात्मकेषु सूक्तेषु (उ० आ० १.१.१–३.) विद्यमानानां नवाना मृचां त्रिभिः पर्य्यायैर्गानं कर्त्तव्यम्। तत्र प्रथमे पर्य्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचो गातव्याः, द्वितीये पर्य्याये मध्यमा ऋचो गातव्याः, उत्तमे पर्य्याये उत्तमा ऋचो गातव्याः। 'तिसृभ्यः'–इति तृतीयार्थे पञ्चमी। 'हिङ्करोति'–इत्यनेन गान मुपलक्ष्यते। सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्याद्या 'विष्टुतिः' स्तुतिप्रकारविशेषः। तस्या विष्टुतेः 'उद्यती'–इत्येवं नामधेय मिति। ईदृशस्तोमेन स्तुतोऽग्निः 'तान्' देवान् 'अत्याजत' निरुद्धं द्वार मतिलङ्घ्य स्वर्गमध्ये प्रापितवान्। 'ते' च वसवो देवाः 'यथालोकं' स्वस्वोचितं 'लोकं' स्थानविशेष मनतिक्रम्य तत्रागच्छन्॥

अथ पञ्चदशस्तोमेन स्तुतिं दर्शयति— "तं रुद्रा आगच्छंस्त एन मब्रुवन्निति नो ऽर्जस्याकाशं नः कुर्विति; स नास्तुतो ऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति; तथेति; तं ते पञ्चदशेन स्तोमेनास्तुवंस्तान् स्तुतो ऽत्यार्जत, ते यथालोक मगच्छन्"–इति। पञ्चदशनामकस्य स्तोमस्य स्वरूपं छन्दोगैरेव माम्नायते— "पञ्चभ्यो

हिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिङ्करोति स एकया स एकया स तिसृभिः"–इति ( ता० ब्रा० २.४.१.) । अस्याय मर्थः । तृचात्मक मेकं सूक्तं विरावर्त्तनीयम् । तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तावुत्त-मायाः । सोऽयं पञ्चदशस्तोम इति । अन्यत् पूर्ववद् व्याख्येयम् ॥

अथ सप्तदशेन स्तोमेन स्तुतिं दर्शयति—"त मादित्या आगच्छंस्त एन मब्रुवन्नति नोऽर्जस्वाकाशं नः कुर्विति ; स नास्तुतो ऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति ; तथेति ; तं ते सप्तदशेन स्तोमेनास्तुवंस्तान् स्तुतो ऽत्याजत ; ते यथालोक मगच्छन्"–इति । सप्तदशस्तोमस्य स्वरूपं छन्दोगैरेव माम्नायते—"पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः"–इति ( ता० ब्रा० २. ७. १. ) । अत्र प्रथमावृत्तौ प्रथमायास्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ मध्यमोत्तमयोः । सोऽयं सप्तदशस्तोम इति । अन्यत् पूर्ववद् व्याख्येयम् ॥

एकविंशस्तोमेन स्तुतिं दर्शयति— "तं विश्वे देवा आगच्छंस्त एन मब्रुवन्नति नोऽर्जस्वाकाशं नः कुर्विति ; स नास्तुतो ऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति ; तथेति ; तं त एकविंशेन स्तोमेनास्तुवं-स्तान् स्तुतो ऽत्याजत, ते यथालोक मगच्छन्"–इति । एकविंश-स्तोमस्य स्वरूपं छन्दोगैरेव माम्नायते— "सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः, सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स

तिसृभिः"-इति (ता० ब्रा० २.१४.१.)। प्रथमपर्य्याये तृच-स्योत्तमाया ऋचः सकृत्पाठः, द्वितीयपर्य्याये प्रथमायाः सकृत्पाठः, तृतीयपर्य्याये मध्यमायाः सकृत्पाठः, अवशिष्टानां तु त्रिरावृत्तिः। सोऽय मेकविंशस्तोम इति। अन्यत् पूर्ववद् व्याख्येयम्॥

स्तोमचतुष्टय मुपसंहरति— "एकैकेन वै तं देवाः स्तोमे-नास्तुवंस्तान् स्तुतो ऽत्यार्जत; ते यथालोक मगच्छन्"-इति॥

अग्निष्टोमप्रयोगे उक्तानां चतुर्णां स्तोमानां विकल्पशङ्का-व्यावृत्त्यर्थं समुच्चयं विधत्ते—"अथ हैन मेष एतैः सर्वैः स्तोमैः स्तौति यो यजते"-इति। अर्थवादवैलक्षण्येन विधित्वं द्योत-यितुम् 'अथ'-शब्दः;—योऽग्निष्टोमेन यजते, स एतैश्चतुर्भिरपि स्तोमैः स्तुवीत॥

अनुष्ठातुः स्वर्गप्राप्तिफलस्य सिद्धत्वात् तेन सह समुच्चित्य वेदितुरपि तत् फलं दर्शयति— "यश्चैन मेवं वेदाती तु त मर्जति"-इति। यजमानो येन प्रकारेण यजते, अनेनैव प्रकारेण 'एनम्' अग्निष्टोमं 'यश्च' वेदिता, 'तम्' अपि वेदितारं द्वारनिरोधन मतिलङ्घ्य 'अर्जति' प्रापयत्येव। 'अती तु'-इति दीर्घश्छान्दसः॥

वेदनमात्रेणानुष्ठानसमानफलं दृढ़यितुं* पुनरप्याह—"अति ह वा एन मर्जते स्वर्गं लोक मभि य एवं वेद"-इति। वेदन-मात्रेण सिद्धेऽपि फले "कर्मभूयस्त्वात् फलभूयस्त्वम्"-इतिन्याये-नानुष्ठानवैयर्थ्यं नास्ति॥ ४॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां चतुर्थाध्याये चतुर्थः खण्डः॥ ४ (४२)॥

---

* "०समानफलत्वं प्रतिपादयितु" ग।

॥ अथ पञ्चमः खण्डः ॥

स वा एषोऽग्निरेव यदग्निष्टोमस्तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते* परोक्षेण परोक्षप्रिया इव हि देवास्तं यच्चतुष्टया देवाश्चतुर्भिः† स्तोमैरस्तुवंस्तस्माच्चतुः† स्तोमस्तं चतुः† स्तोमं सन्तं चतुष्टोम इत्याचक्षते* परोक्षेण परोक्षप्रिया इव हि देवा अथ यदेनमूर्द्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्योतिः† स्तोमस्तं ज्योतिः† स्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते* परोक्षेण परोक्षप्रिया इव हि देवाः स वा एषोऽपूर्वोऽनपरो यज्ञक्रतुर्यथा रथचक्रमनन्तमेवं यदग्निष्टोमस्तस्य यथैव प्रायणं तथोदयनं तदेषाभि यज्ञगाथा गीयते यदस्य पूर्वमपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम् अहेरिव सर्पणं शाकलस्य न वि जानन्ति यतरत्परस्तादिति यथा ह्येवास्य प्रायणमेवमुदयनमसदिति तदाहुर्यत् त्रिवृत्प्रायणमेकविंशमुदयनं केन ते समे इति यो वा एकविंशस्त्रिवृद्वै सोऽथो यदुभौ तृचौ तृचिनाविति ब्रूयात्तेनेति ॥ ५ ( ४३ ) ॥

---

* "मित्याचक्षते" क ।

† एषु स्थानेषु सविसर्गपाठः क पुस्तके ।

अथाग्निष्टोमादिशब्दं निर्वचनतः प्रशंसति— "स वा एषो ऽग्निरेव यदग्निष्टोमस्तं यदस्तुवंस्तस्मादग्निस्तोमस्त मग्निस्तोमं सन्त मग्निष्टोम इत्याचक्षते परोक्षेण ; परोक्षप्रिया इव हि देवाः"-इति। यो ऽय मग्निष्टोमो ऽस्ति, स एष साक्षात् 'अग्निरेव' स्वशरीर मेव ; त्रिभिश्छन्दोभिस्त्रिभिः सवनैश्च विभज्य क्रतोर्निष्पादितत्वात्। 'तं' क्रतुरूप मग्निं 'यद्' यस्मात् कारणाद् देवा अस्तुवन्, 'तस्मात्' अग्निविषयस्तुतियुक्तत्वादयं क्रतुः 'अग्निस्तोमः'-इत्येतन्नामकः। तन्नामयुक्तं क्रतुं परोक्षनाम्ना व्याहर्त्तुं सकारतकारयोः षकारटकारावादिश्य 'अग्निष्टोमः'–इति वैदिका आचक्षते। वर्णान्तरेण व्यवहितत्वात् शीघ्रप्रतीतिरहितं नाम परोक्ष मितुच्यते। यस्माल्लोके 'देवाः' पूज्या आचार्य्यादयः परोक्षनामप्रिया एव, तस्मात् क्रतोरपि तदुक्तम् ॥

नामान्तरस्य निर्वचनं दर्शयति— "तं यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्माच्चतुस्तोमस्तं चतुस्तोमं सन्तं चतुष्टोम इत्याचक्षते परोक्षेण ; परोक्षप्रिया इव हि देवाः"–इति। 'चतुष्टयाः' चतुर्विधाः,—वसवो रुद्रा आदित्या विश्वेदेवाश्चेति। स्तोमाश्च त्रिवृत्पञ्चदश सप्तदश एकविंश इत्येवं चत्वारः। चतुष्टोमनामनिर्वचनं पूर्ववद्योजनीयम् ॥

ज्योतिष्टोमनामनिर्वचनं * दर्शयति— "अथ यदेन मूर्द्ध सन्तं ज्योतिर्भूत मस्तुवंस्तस्माज्ज्योतिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते परोक्षेण ; परोक्षप्रिया इव हि देवाः"–इति। 'अथ' नामद्वयकथनानन्तरं, तृतीयं नाम कथ्यत इति शेषः। अय मग्निर्भूमि मारभ्य द्युलोकपर्य्यन्त मूर्द्धावस्थितः,

* "नामान्तरनिर्वचनं" घ, च।

तया प्रकाशमानत्वात् ज्योतिर्भूतः। तं तादृशं देवा अस्तुवन्; 'तस्माद् ज्योतिष्टोमः' ज्योतिषः 'स्तोमः' स्तुतिः यस्मिन् क्रतौ, स क्रतुर्ज्योतिष्टोमः। अन्यत् पूर्ववत् ॥

नामनिर्वचनेन प्रशस्य पुनरप्याद्यन्तराहित्येन प्रशंसति— "स वा एषो ऽपूर्वो ऽनपरो यज्ञक्रतुर्यथा रथचक्र मनन्त मेवं यदग्निष्टोमस्तस्य यथैव प्रायणं तथोदयनम्"–इति। 'सः एषः' अग्निष्टोमः पूर्वापररहितः,—'पूर्वः' आदिः, 'अपरः' अन्तः, आद्यन्तरहितो यज्ञक्रतुः। यथा लोके 'रथचक्र मनन्तं' पुनः पुनः परिवर्त्तमानस्य रथचक्रस्य अय मादिरय मन्त इति विभागः कर्त्तुं न शक्यते, तस्मादिद मन्तरहितम् (आदिरहितस्याप्येतदुपलक्षणम्), एवं क्रतुरपि। ननु प्रायणीयेष्टिरादिः, उदयनीयेष्टिरन्त इति चेत्, नैवम्;— योऽग्निष्टोमोऽस्ति, तस्य यादृशं प्रायणीयं कर्म, तादृश मेवोदयनीयं कर्म; तयोर्याग‌धर्मसाम्यात् *। अतो विवेक्तु मशक्यत्वादाद्यन्तरहितः क्रतुः ॥

उक्त मर्थं मन्त्रोदाहरणेन दृढ़यति— "तदेषाभि यज्ञगाथा गीयते,—यदस्य पूर्वं मपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम्, अहेरिव सर्पणं शाकलस्य न वि जानन्ति यतरत्परस्तादिति"–इति। सर्वैरपि सुभाषितत्वेन गीयत इति 'गाथा'; यज्ञविषया गाथा। 'तत्' तस्मिन्नग्निष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोरेकविधत्वे† 'अभि गीयते'‡ सर्वतः पठ्यते। यदस्येकाचिदेषा 'यज्ञगाथा' 'अभि गीयते'‡ सर्वतः पठ्यते। यदस्येत्यादि गाथा। 'अस्य' अग्निष्टोमस्य यत् 'पूर्वम्' उपक्रमरूपं कर्मास्ति, तदेवास्य 'अपरं' समाप्तिरूपं कर्म; 'यद्' यदेवास्य

---

* "तयोः समानधर्मकत्वात्" ग।

† "०रेकविषये" ग।

‡ "अभिन्न गीयते" ग।

'अपरं' समाप्तिरूपम्, 'तद्' तदेवास्य 'पूर्वम्' उपक्रमरूपम्। आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चेति द्रव्यदेवतयोरुभयत्रैकविधत्वात् तयोरेकत्वोपचारः। आद्यन्तयोरपरिज्ञाने पूर्वं ब्राह्मणे रथचक्र-दृष्टान्तो दर्शितः; अन्त्वे त्वन्यो दृष्टान्त उच्यते। 'शाकल'-शब्दः सर्पविशेषवाची। शाकलनाम्नः 'अहेः' सर्पविशेषस्य यथा 'सर्पणं' गमनम्, तथैवाय मग्निष्टोमः। स तु सर्पणकाले मुखेन पुच्छस्य दंशनं कृत्वा वलयाकारो भवति, तत्र किं मुखं किं वा पुच्छ मिति न ज्ञायते; एव मत्राप्यदितिदेवताकस्य चरोः साम्ये सति प्राय-णीयोदयनीययोः 'यतरत्' कर्म 'परस्तात्' पश्चाद्भावि, यतरच्च पूर्व-भावीति कि मपि न विजानन्ति॥

अस्या गाथायास्तात्पर्यं सङ्क्षिप्य दर्शयति— "यथा ह्येवास्य प्रायण मेव मुदयन मसदिति"–इति। 'अस्य' अग्निष्टोमस्य प्रायणं प्रारम्भो यादृशः, एवम् 'उदयनं' समाप्तिः 'असत्' अस्ति, भवतीत्यर्थः॥

अत्र कश्चिदाक्षेप मुद्भावयति— "तदाहुर्यत् त्रिवृत्प्रायण मेकविंश मुदयनं, केन ते समे इति?"–इति। पूर्वोदाहृतस्त्रिवृत् स्तोमः प्रातस्सवनादौ प्रयोज्यत्वात् 'प्रायणम्' उपक्रमरूपम्, एक-विंशस्तोमस्तृतीयसवनान्ते प्रयोज्यत्वात् 'उदयनं' समाप्तिरूपम्। 'केन' कारणेन 'ते' प्रायणोदयने 'समे' भवेता मित्याक्षेपः॥

तत्र परिहारं दर्शयति— "यो वा एकविंशस्त्रिवृद्वै सोऽथो यदुभौ तृचौ तृचिनाविति ब्रूयात्तेनेति"–इति। योऽय मेकविंश-स्तोमोऽस्ति, स एव त्रिवृदवगन्तव्यः; स्तोमत्वाकारेण तयोरेकविध-त्वात्। 'अथो' अपि च 'यत्' यस्मात्कारणात् स्तोमद्वयाश्रयभूतौ 'उभौ तृचौ', 'तृचिनौ' तृचित्वधर्मयुक्तौ। तत्र त्रिवृत्-स्तोमा-

श्रयस्य "उपास्मै गायता नरः"-इतिसूक्तस्य ( उ० आ० १.१.१. ) तृचत्वधर्मः प्रसिद्ध एव, एकविंशस्तोमाश्रयस्य "यज्ञा यज्ञा वो अग्नये"-इतिसूक्तस्य ( उ० आ० १.१.२०. ) प्रगाथत्वाद् यद्यपि तस्मिन् द्वे एव ऋचावाम्नायेते, तथापि स्तोत्रकाले प्रग्रथनेन पादानावर्त्य तृचत्वं सम्पाद्यते; 'तेन' तृचत्वधर्मोपेतत्वकारणेन द्वयोः स्तोमयोरेकविधत्व मित्युत्तरं ब्रूयात् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां चतुर्थाध्याये
पञ्चमः खण्डः ॥ ५ ( ४२ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

यो वा एष तपत्येषोऽग्निष्टोम एष साह्नस्तं सहैवाह्ना संस्थापयेयुः साह्नो वै नाम तेनासन्त्वर-माणाश्चरेयुर्यथैव प्रातस्सवनं एवं माध्यन्दिन एवं तृतीयसवन एव मु ह यजमानोऽप्रमायुको भवति यद्ध वा इदं पूर्वयोः सवनयोरसन्त्वरमाणाश्चरन्ति तस्माद्धेदं प्राच्यो ग्रामता बहुलाविष्टा अथ यद्धेदं तृतीयसवने सन्त्वरमाणाश्चरन्ति तस्माद्धेदं प्रत्यञ्चि दीर्घारण्यानि भवन्ति तथाह यजमानः प्रमायुको भवति तेनासन्त्वरमाणाश्चरेयुर्यथैव प्रातस्सवनं एवं माध्यन्दिन एवं तृतीयसवनं एव मु ह यजमानो

ऽप्रमायुको भवति स एत मेव शस्त्रेणानुपर्यावर्त्तेत यदा वा एष प्रातरुदेत्यथ मन्द्रं तपति तस्मान्मन्द्रया वाचा प्रातस्सवने शंसेदथ यदाभ्येत्यथ बलीयस्तपति तस्माद्बलीयस्या वाचा मध्यन्दिने शंसेदथ यदाभितरा मेत्यथ बलिष्ठतमं तपति तस्माद्बलिष्ठतमया वाचा तृतीयसवने शंसे देवं शंसेद्यदि वाच ईशीत वाग्घि शस्त्रं यया तु वाचोत्तरोत्तरिण्योत्सहेत समापनाय तया प्रतिपद्येतैतत्सुशस्ततम मिव भवति स वा एष न कदाचनास्त मेति नोदेति तं यदस्त मेतीति मन्यन्ते ऽह्न एव तदन्त मित्वाथात्मानं विपर्यस्यते रात्री मेवावस्तात्कुरुते ऽहः परस्तादथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्त मित्वाथात्मानं विपर्यस्यते ऽहरेवावस्तात्कुरुते रात्रीं परस्तात् स वा एष न कदाचन निम्रोचति न ह वै कदाचन निम्रोचत्येतस्य ह सायुज्यं सरूपतां सलोकता मश्नुते य एवं वेद य एवं वेद ॥ ६ (४४) ॥

॥ इत्यैतरेयब्राह्मणे तृतीयपञ्चिकायां चतुर्थोऽध्यायः ॥

पुनरादित्यसाम्येन प्रशंसति— "यो वा एष तपत्येषोऽग्निष्टोम एष साह्नस्तं सहैवाह्ना संस्थापयेयुः ; साह्नो वै नाम"— इति । य एव प्रसिद्धः 'एषः' अस्मत्प्रत्यक्ष आदित्यः तपति, 'एषो'

ऽग्निष्टोमः' ; तयोरादित्याग्निष्टोमयोः सदृशत्वात् । कथं साम्य मिति, तदुच्यते— 'एषः' अग्निष्टोमः आदित्यवत् 'साह्नः', यथा आदित्यो ऽह्ना सह वर्त्तते, तथा ; 'तम्' अग्निष्टोम मपि एके-नाह्ना सहैव 'संस्थापयेयुः' समापयेयुः । तस्मादादित्यस्येव 'साह्नः'—इति क्रतोर्नाम सम्पन्नम् ॥

इदानी मग्निष्टोमानुष्ठाने त्वरां निषेधति—"तेनासन्त्वरमाणा-श्चरेयुर्यथैव प्रातस्सवन एवं माध्यन्दिन एवं तृतीयसवन एव मु ह यजमानो ऽप्रमायुको भवति"—इति । यस्मादेक महः साकल्येनानुष्ठानाय पर्य्याप्तम्, 'तेन' कारणेन सर्वे ऽप्यृत्विजः 'असन्त्वरमाणाः' त्वरा मकुर्वन्त उत्तरोत्तरानुष्ठेयं सम्यक् पर्य्या-लोचयन्तः 'चरेयुः' अनुतिष्ठेयुः । यथैव प्रातस्सवने मध्यरात्रादूर्ध्व मारभ्य मध्याह्नात् पूर्वकालस्यानुष्ठानाय पर्य्याप्तत्वान्नास्ति त्वरा, एव मुत्तरयोरपि सवनयोः । 'एव मु ह' अनेनैव प्रकारेण शनै-रनुष्ठाने सति बुद्धिसमाधानेनाङ्गलोपाभावाद्यजमानः 'अप्रमायुकः' अपमृत्युरहितो भवति ॥ विपक्षे बाधं दर्शयति— "यद्व वा इदं पूर्वयोः सवनयोरसन्त्वरमाणाश्चरन्ति, तस्माद्धेदं प्राच्यो ग्रामता बहुलाविष्टा, अथ यद्धेदं तृतीयसवने सन्त्वरमाणाश्चरन्ति, तस्माद्धेदं प्रत्यञ्चि दीर्घारण्यानि भवन्ति ; तथा ह यजमानः प्रमायुको भवति"—इति । 'यद्व वै' यदि प्रथमद्वितीययोः सवनयोः काल-सङ्कोचाभावात् असन्त्वरमाणाः 'इदं' कर्म्म 'चरन्ति' अनुतिष्ठेयुः, तदानीं 'तस्माद्ध' तस्मादेवाङ्गलोपाभावात् कारणादिदं दृश्यते । किं मिद मिति, तदुच्यते— 'प्राच्यो ग्रामताः' पूर्वदिग्वर्त्तिनो ग्रामसमूहाः 'बहुलाविष्टाः' बहुभिर्जनैः सम्पूर्णा भवन्ति । 'अथ' तद्विपर्य्ययेण 'यद्ध' यदि तृतीयसवने कालसङ्कोच माशङ्क्य 'सन्त्वर-

माणाः' अतित्वरया युक्ताः 'इदं' कर्म 'चरन्ति' अनुतिष्ठन्ति, तदानीं तस्मादङ्गवैकल्यसम्भवादेवेदं लोके दृश्यते,— 'प्रत्यञ्चि' पश्चिमदिग्वर्त्तीनि 'दीर्घारण्यानि' जनशून्यानि भवन्ति। 'तथा ह' तादृशेन सम्भाविताङ्गवैकल्ययुक्तेनानुष्ठानेन यजमानः 'प्रमायुको भवति' अपमृत्युना म्रियत इत्यर्थः॥ विपक्षे बाधक मुक्त्वा स्वपक्षं निगमयति— "तेनासन्त्वरमाणाश्चरेयुर्यथैव प्रातस्सवन एवं माध्यन्दिन एवं तृतीयसवन एव मु ह यजमानो ऽप्रमायुको भवति"-इति॥

अथ त्रिषु सवनेषु शस्त्रस्योत्तरोत्तरं ध्वन्याधिक्यं विधत्ते— "स एत मेव शस्त्रेणानु पर्यावर्त्तेत ; यदा वा एष प्रातरुदेत्यथ मन्द्रं तपति, तस्मान्मन्द्रया वाचा प्रातस्सवने शंसेदथ यदाभ्येत्यथ बलीयस्तपति, तस्माद्बलीयस्या वाचा मध्यन्दिने शंसेदथ यदाभितरा मेत्यथ बलिष्ठतमं तपति ; तस्माद्बलिष्ठतमया वाचा तृतीयसवने शंसेदेवं शंसेद्यदि वाच ईशीत ; वाग्घि शस्त्रं ; यया तु वाचोत्तरोत्तरिण्योत्सहेत समापनाय, तया प्रतिपद्येतैतत्सुशस्ततम मेव भवति"-इति। 'सः' होता 'एत मेव' आदित्य मनुसृत्य 'शस्त्रेण पर्य्यावर्त्तेत' यथायथादित्य उत्तरोत्तराधिक्येन तपति, तथातथैवोत्तरोत्तरध्वन्याधिक्येन होता शंसेत्। "यदा वै"-इत्यादिना तदेव स्पष्टीक्रियते। यस्मिन्नेव काले 'एषः' आदित्यः 'प्रातरुदेति' प्रातःकाल मभिव्यञ्जयितु मुदियात्, 'अथ' तदानीं 'मन्द्रम्' अल्पं यथा भवति तथा तपति ; तस्मादादित्य मनुवर्त्तमानो होता प्रातस्सवने 'मन्द्रया' स्वल्पध्वन्युपेतया वाचा शंसेत्। 'अथ' प्रातःकालादूर्द्ध्वं सूर्य्यो 'यदाभ्येति' मध्याह्नकालं निष्पादयितु माभिमुख्येनोर्द्ध्वं गच्छति, 'अथ' तदानीं सूर्य्यो 'बलीयः' प्रबलं यथा भवति तथा तपति ; तस्माद्धोतापि 'बलीयस्या' प्रबलध्वनियुक्तया

वाचा माध्यन्दिने सवने शंसेत्। 'अथ' मध्याह्नादूर्द्ध्वं यदा सूर्य्यः 'अभितरा मेति' पश्चिमाभिमुखानां पुरुषाणा मत्यन्त माभिमुख्येन गच्छति, 'अथ' इदानी मादित्यो 'बलिष्ठतमं तपति' मध्याह्नतापादपि अत्यन्तप्रबलस्तापो भवति; भूमौ दिक्षु चोष्णत्व-बाहुल्यात्। तस्मात्तदानीं होता माध्यन्दिनसवनध्वनेरप्यधिक-ध्वनियुक्तया वाचा तृतीयसवने शंसेत्। यद्ययं होता वाचः 'ईशीत' ईश्वरो भवेत्,— तस्य वाक् यदि श्लेष्मादिदोषेण ध्वनि-मान्द्यं न प्राप्नुयात्, तदानीं येन ध्वनिना तृतीयसवने प्रारम्भः कृतः, 'एवं' तेनैव ध्वनिना शंसेत्। किमर्थं ध्वन्याधिक्य मिति, तदुच्यते— यस्मात् 'वागेव शस्त्रं' वाङ्निष्पाद्यत्वात्। तस्माद् 'यया तु' यादृशध्वनियुक्तयैव वाचा 'उत्तरोत्तरिण्या' उत्तरोत्त-राभिवृद्धिभाजा 'समापनायोत्सहेत' समापयितु मुत्साहवान् भवेत्, 'तया' तथाविधध्वन्युपेतया वाचा शस्त्रं 'प्रतिपद्येत' प्रारभेत,— न तु श्रान्त्या नीचध्वनिर्भवेत्। तदेतदुक्तलक्षणोपेतं शस्त्रं 'सुशस्त-तम मिव भवति' स्तुतिवैकल्यराहित्येनात्यन्तं शस्त मेव भवति॥

ननु तृतीयसवने त्वरा मन्तरेण शनैः शंसेदिति पूर्वमुक्तम्, तथा सति कालस्याल्पत्वेन समापनात् प्रागेव सूर्य्योऽस्त मियात्? इत्याशङ्क्य वस्तुतोऽस्तमयाभावान्नास्ति दोष इत्यभिप्रेत्याह— "स वा एष न कदाचनास्त मेति नोदेति"–इति। 'अस्तमयः' सूर्य्य-स्वरूपनाशः, 'उदयः' सूर्य्योत्पत्तिः; न हि सूर्य्यस्य कदाचिदपि स्वरूपनाशोत्पत्ती विद्येते॥

कथं तर्हि जनानां सूर्य्यास्तमयव्यवहारः? इत्याशङ्क्याह— "तं यदस्त मेतीति मन्यन्ते, ऽह्न एव तदन्त मित्वाथात्मानं विपर्य-स्यते,—रात्री मेवावस्तात्कुरुते ऽहः परस्तात्"–इति। 'यत्' यदा

प्राणिनः सूर्य्योदयादूर्ध्वं यामचतुष्टयानन्तरं सूर्यो ऽस्त मेतीति 'तं' सूर्य्य मस्तमितं मन्यन्ते, 'तत्' तदानीं सूर्य्यः तत्प्राणियुक्ते देशे प्रकाशरूपस्याह्न एव * 'अन्त मित्त्वा' समाप्तिं प्राप्य 'अथ' अनन्तरं स्वात्मानं 'विपर्यस्यते' विपर्य्यस्तं करोति। कथं विपर्यास इति, तदुच्यते—'अवस्तात्' अतीते देशे रात्रि मेव कुरुते, 'परस्तात्' आगामिनि देशे ऽहः कुरुते। अय मर्थः। मेरोः प्रदक्षिणं कुर्वन्नादित्यो यद्देशवासिनां प्राणिनां दृष्टिपथ मागच्छति, तद्देशवासिभिरय मुदेतीति व्यवह्रियते; यद्देशवासिनां दृष्टिपथ मतिक्रम्य सूर्य्ये गते सति सूर्य्योऽस्त मेतीति तद्देशवासिभिर्व्यवह्रियते; अतस्तस्मिन् देशे रात्रिर्भवति, आदित्येन गन्तव्ये देशान्तरे तद्देशवासिभिः प्राणिभिः सूर्य्यस्य दृष्टत्वादहर्भवति। एवं च सति सूर्य्यस्य विनाशरूपोऽस्तमयः कदाचिदपि नास्तीति सिद्धम्॥

अनेनैव न्यायेन सूर्य्यस्य स्वरूपोत्पत्तिलक्षणोदयाभावं दर्शयति— "अथ यदेनं प्रातरुदेतीति मन्यन्ते, रात्रेरेव तदन्त मित्त्वाथात्मानं विपर्यस्यते; ऽहरेवावस्तात् कुरुते रात्रीं परस्तात्"- इति। पूर्ववद् व्याख्येयम्॥

परमार्थतो ऽस्तमयस्याभावं दर्शयति— "स वा एष न कदाचन निम्रोचति"-इति। निम्रोचन मस्तमयः। एतस्योपलक्षणत्वान्न कदाचिदुदेतीत्यपि द्रष्टव्यम्॥

वेदनं प्रशंसति— "न ह वै कदाचन निम्रोचत्येतस्य ह सायुज्यं सरूपतां सलोकता मश्नुते य एवं वेद य एवं वेद"-इति। वेदितुरस्तमयाभावो नामापमृत्युराहित्यम्; इह जन्मनि तादृशो भूत्वा पश्चादेतस्यादित्यस्य सहवास-समानरूपत्व-समानलोकत्वानि

* "प्रकाशयुक्तस्याह्न एव" घ, च।

प्राप्नोति। न च सहवासेनैव समानलोकत्वं सिद्धतीति वाच्यम्; कदाचिदपि स्वेच्छया पृथगवस्थानेऽपि तल्लोकभ्रंशो नास्तीतिविवक्षया समानलोकत्व मुच्यते ॥ अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ६(४४) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां चतुर्थाध्याये
षष्ठः खण्डः ॥ ६ ( ४४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायाः चतुर्थोऽध्यायः ॥

---

## ॥ अथ पञ्चमाध्यायः ॥

### ॥ अथ प्रथमः खण्डः ॥

॥ ओँ ॥ यज्ञो वै देवेभ्यो ऽन्नाद्य मुदक्रामत् ते देवा अब्रुवन् यज्ञो वै नो ऽन्नाद्य मुदक्रमीदन्विमं यज्ञ मन्न मन्विच्छामेति ते ऽब्रुवन् कथ मन्विच्छामेति ब्राह्मणेन च छन्दोभिश्चेत्यब्रुवंस्ते ब्राह्मणं छन्दोभिरदीक्षयंस्तस्यान्तं यज्ञ मतन्वतापि पत्नीः समयाजयंस्तस्माद्वाप्येतर्हि दीक्षणीयाया मिष्टावान्त मेव यज्ञं तन्वते ऽपि पत्नीः सं याजयन्ति त मनुन्याय मन्ववायंस्ते प्रायणीय मतन्वत तं प्रायणीयेन नेदीयो ऽन्वागच्छंस्ते कर्मभिः समत्वरन्त तच्छंय्वन्त मकुर्वंस्तस्माद्वापेऽतर्हि प्रायणीयं शंय्वन्त मेव भवति त मनुन्याय मन्ववायंस्त आतिथ्य मतन्वत त मातिथ्येन नेदीयो ऽन्वागच्छंस्ते कर्मभिः समत्वरन्त तदिळान्त मकुर्वंस्तस्माद्वाप्येतर्ह्यातिथ्य मिळान्त मेव भवति त मनुन्याय मन्ववायंस्त उपसदो ऽतन्वत त मुपसद्भिर्नेदीयो ऽन्वागच्छंस्ते कर्मभिः समत्वरन्त ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजंस्ते-

स्माद्यापेरतर्ह्युपसत्सु तिस्र एव सामिधेनीरनूच्य तिस्रो देवता यजन्ति त मनुन्याय मन्ववायंस्त उपवसथ मतनुत त मुपवसथ्येऽहन्याप्नुवंस्त माप्त्वान्तं यज्ञ मतन्वतापि पत्नीः समयाजयंस्तस्माद्यापेरतर्ह्युपवसथ आन्त मेव यज्ञं तन्वतेऽपि पत्नीः सं याजयन्ति तस्मादेतेषु पूर्वेषु कर्मसु शनैस्तरां शनैस्तरामिवानुब्रूयादनूत्सार मिव हि ते त मायंस्तस्मादुपवसथे यावत्या वाचा कामयीत तावत्यानुब्रूयादाप्तो हि स तर्हि भवतीति त माप्त्वाब्रुवंस्तिष्ठस्व नोऽन्नाद्यायेति स नेत्यब्रवीत्कथं वस्तिष्ठेयेति तानीक्षत व त मब्रुवन् ब्राह्मणेन च नश्छन्दोभिश्च सयुग् भूत्वान्नाद्याय तिष्ठस्वेति तथेति तस्माद्यापेरतर्हि यज्ञः सयुग् भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च छन्दोभिश्च ॥ १ (४५) ॥

अग्निष्टोमः सर्वयज्ञक्रतूनां योनित्वेनास्तूयत प्राक् परश्च ।
देवैः स्तोमैः संस्तुतो यश्चतुर्भिर्वाचां मन्त्रैर्मध्यमैरुत्तमैश्च ॥

अथेष्टिसंस्थादिकं वक्तव्यम्; तत्र दीक्षणीयेष्टेः संस्था माख्यायिकया दर्शयति— "यज्ञो वै देवेभ्योऽन्नाद्य मुदक्रामत्, ते देवा अब्रुवन्,—यज्ञो वै नोऽन्नाद्य मुदक्रमीदन्विमं यज्ञ मन्न मन्विच्छामेति; तेऽब्रुवन् कथ मन्विच्छामेति; ब्राह्मणेन च छन्दोभिश्चेत्य-

भुवंस्ते ब्राह्मणं छन्दोभिरदीक्षयंस्तस्यान्तं यज्ञ मतन्वतापि पत्नीः समयाजयंस्तस्माद्वाप्येतर्हि दीक्षणीयाया मिष्टावान्त मेव यज्ञं तन्वते, ऽपि पत्नीः सं याजयन्ति ; त मनुन्याय मन्ववायन्"-इति। पुरा कदाचिद् 'यज्ञः' ज्योतिष्टोमाख्यः केनापि निमित्तेनापरक्तः सन् 'देवेभ्यः' सकाशात् 'उदक्रामत्' निष्क्रान्तवान्। तस्मिन्नुत्क्रान्ते तत्स्वरूपम् 'अन्नाद्यम्' अप्युदक्रामत्। ततो देवाः परस्पर मिद मब्रुवन्,—यदेतदुभय मस्मदीय मुदक्रमीत्, तदेतदुभयं सर्वत्र 'अन्विच्छाम' अन्वेषणं करवाम। तत्र कथ मन्वेषण मित्युपायं विचार्य्य, ऋत्विग्यजमानरूपं ब्राह्मणम्, गायत्र्यादिच्छन्दांसि च तदन्वेषणोपायत्वेन निश्चित्य, तैश्छन्दोभिः 'ब्राह्मणं' यजमानम् 'अदीक्षयन्' दीक्षणीयेष्ट्या संस्कृतवन्तः। 'तस्य' ब्राह्मणस्य 'यज्ञं' दीक्षणीयेष्टिरूपम् 'आन्तं' समाप्तिपर्य्यन्तम् 'अतन्वत' विस्तारितवन्तः। तं यज्ञ मनुष्ठाय 'पत्नीः' तन्नामिका देवता अपि * 'समयाजयन्' पत्नीसंयाजानुष्ठान मपि कृतवन्त इत्यर्थः। यस्मादेवं देवैः कृतम्, तस्मादेव कारणादिदानी मपि दीक्षणीयाया मिष्टौ चोदकप्राप्तं यज्ञसमाप्तिपर्य्यन्त मनुतिष्ठन्ति। उत्तरकालोनाङ्गव्यावृत्त्यर्थं पत्नीसंयाजग्रहणम्। पत्नीसंयाजैरेव समाप्तिरित्यभिप्रेत्य 'आन्तम्†'-इत्युक्तम्। 'तं' देवैः कृतम् 'अनुन्यायं' अनुक्रमगत मनुष्ठानम्, 'अनु' पश्चान्मनुष्याः अपि 'आयन्' अवगतवन्तः, अनुष्ठितवन्त इत्यर्थः। 'त मनुन्यायम्'-इति वाक्य मुत्तरशेषत्वेन वा योज्यम्॥

दीक्षणीयेष्टेः पत्नीसंयाजेषु समाप्तिं दर्शयित्वा प्रायणीयेष्टेः शंयुवाके समाप्तिं दर्शयति—"ते प्रायणीय मतन्वत, तं प्रायणीयेन

* निरु० १२.४,१०,११। निघ० ५.६.२१। † 'आ.अन्त'।

नेदीयोऽन्वागच्छंस्ते कर्मभिः समत्वरन्त, तच्छंयून्त मकुर्वंस्तस्मा-द्वाप्येतर्हि प्रायणीयं शंयून्त मेव भवति, त मनुन्याय मन्ववायन्"-इति। 'ते' देवाः प्रायणीयाख्यं कर्मानुष्ठितवन्तः। 'प्रायणीयेन' कर्मणा 'तं' पूर्वोक्तं दीक्षणीयेष्टिरूपं ज्योतिष्टोमरूपं वा यज्ञं 'नेदीयः' अत्यन्तसमीपे यथा भवति तथैव 'अन्वगच्छन्' अनुष्ठित-वन्तः। दीक्षणीयेष्टेरूर्ध्वं चिरं व्यवधान मकृत्वा प्रायणीय मनु-ष्ठितवन्त इत्यर्थः। 'ते' देवाः 'कर्मभिः' प्रायणीयाङ्गरूपैः 'समत्व-रन्त' सम्यक् त्वरां कृतवन्तः। दीक्षणीयेष्टिवत्पत्नीसंयाजपर्य्यन्तं नान्वतिष्ठन्, किन्तु त्वरां कृत्वा पत्नीसंयाजेभ्यः पूर्व मेव शंयु-वाकपर्य्यन्तं कृत्वोपरताः। तस्मादित्यादि पूर्ववत् ॥

अथातिथ्येष्टेरन्तं दर्शयति—"त आतिथ्य मतन्वत; त मातिथ्येन नेदीयो ऽन्वागच्छंस्ते कर्मभिः समत्वरन्त; तदिळान्त मकुर्वंस्तस्मादाप्येतर्ह्यातिथ्य मिळान्त मेव भवति, त मनुन्याय मन्ववायन्"-इति। अनुयाजेभ्यः पूर्वं यदिड़ोपह्वानं, तदन्त मेवा-तिथ्येष्टिरूपं कर्म कृत्वोपरताः। अन्यत् पूर्ववद् व्याख्येयम् ॥

अथोपसत्सु अनुष्ठेयं दर्शयति—"त उपसदो ऽतन्वत; त मुप-सद्भिर्नेदीयो ऽन्वागच्छंस्ते कर्मभिः समत्वरन्त; ते तिस्रः सामिधेनी-रनूच्य तिस्रो देवता अयजंस्तस्मादाप्येतर्ह्युपसत्सु तिस्र एव सामि-धेनीरनूच्य तिस्रो देवता यजन्ति, त मनुन्याय मन्ववायन्"-इति। तिस्रः सामिधेन्य आश्वलायनेन दर्शिताः—"उपसद्याय मीळ्हुष इति तिस्र एकैकां त्रिरनवानन्ताः सामिधेन्यः"-इति (श्रौ० ४. ८.५.)। अग्निः सोमो विष्णुश्चेत्येतास्तिस्रो देवताः। स्पष्ट मन्यत् ॥

अथाग्नीषोमीयपशावनुष्ठेयं दर्शयति—"त उपवसथ मतन्वत; त मुपवसथ्येऽहन्याप्लुवंस्त माप्तान्तं यज्ञ मतन्वतापि पत्नीः समया-

जयंस्तस्माद्याप्येतर्ह्युपवसथ आप्त मेव यज्ञं तन्वते ऽपि पत्नीः सं याजयन्ति"-इति। उपवसथशब्देन सोमयागसमीपवासित्वात् पूर्वस्मिन्नहनि अनुष्ठेयाग्नीषोमीयपशुर्विवक्षितः। 'तं' पशुं देवा 'उपवसथ्येऽहनि' सोमयागदिनात् पूर्वेद्युः 'प्राप्नुवन्' प्राप्तवन्तः 'यज्ञ" समाप्तिपर्य्यन्त मन्वतिष्ठन्; पत्नीसंयाजानप्यन्वतिष्ठन्। दीक्षयेष्टिवत्पत्नीसंयाजान्तत्व मेव द्रष्टव्यम्। स्पष्ट मन्यत्॥

उक्तास्विष्टिषु होतुरनुवचनस्य मन्द्रस्वरं विधत्ते— "तस्मादेतेष पूर्वेषु कर्म्मसु शनैस्तरां शनैस्तरा मिवानुब्रूयात्"-इति। यस्मादग्नीषोमीयात् पूर्वभावित्वेन उपक्रमरूपा दीक्षणीयादयः, 'तस्मात्' 'एतेषु पूर्वेषु' दीक्षणीयादुपसदन्तेषु कर्मसु 'शनैस्तरा मिव' अत्यन्तनीचस्वरेणैव होतानुब्रूयात्॥

अग्नीषोमीये पशौ होतुरनुवचनध्वनेरिच्छानुसारित्वं विधत्ते —"अनुसार मिव हि ते त मायंस्तस्मादुपवसथे यावत्या वाचा कामयीत, तावत्यानुब्रूयादाप्तो हि स तर्हि भवतीति"-इति। 'अनूत्सारम्' उत्तरोत्तरभावी सार उत्सारः, त मनुसृत्यानुसृत्येति तस्यार्थः। दीक्षणीयेष्टेः सारभूता प्रायणीयेष्टिः; तदपेक्षया सोमयागस्य समीपवर्त्तित्वात्। एव मातिथ्यादिषु द्रष्टव्यम्। ईदृश मुत्तरोत्तरसार मनुसृत्य 'ते' देवाः 'तं' सोमयागम् 'आयन्' प्राप्तवन्तः। तस्मादत्यन्तसारे 'उपवसथे' ऽग्नीषोमीये पशौ होता 'यावत्या' वाचा 'कामयीत' यावन्त मुच्चध्वनि मिच्छेत्, तावता ध्वनिनानुवचनं कुर्य्यात्। 'तर्हि' तस्मिन्नग्नीषोमीयपशुकाले 'सः' सोमयागः प्राप्तो भवतीति होतुरभिप्रायः। लोके ऽप्यभीष्टवस्तुनि बन्धौ वा चिरकालेन प्राप्ते सति हर्षद्योतनायोच्चध्वनिना वार्त्तां कुर्वन्ति, तद्वदत्रापि द्रष्टव्यम्॥

देवानां यज्ञप्राप्त्युपाय मभिधाय अन्नाद्यप्राप्त्युपायं दर्शयति—“त माब्रानुवंस्तिष्ठस्व नो ऽन्नाद्यायेति ; स नेत्यब्रवीत्कथं वस्तिष्ठेयेति ; तानीक्षतैव ; त मब्रुवन्,—ब्राह्मणेन च नश्छन्दोभिश्च सयुग् भूत्वान्नाद्याय तिष्ठस्वेति ; तथेति ; तस्माद्वाप्येतर्हि यज्ञः सयुग् भूत्वा देवेभ्यो हव्यं वहति, ब्राह्मणेन च छन्दोभिश्च”-इति। ‘ते’ देवाः ‘तं’ ज्योतिष्टोमं यज्ञं प्राप्येद मब्रुवन्,—हे यज्ञ! ‘नः’ अस्माकम् अन्नाद्यसिद्ध्यर्थं ‘तिष्ठस्व’ स्थितिं कुर्विति। ‘सः’ यज्ञस्तद्वाक्यं निराकरोत्,—मम निष्पादकं साधन मन्तरेण ‘वः’ युष्मदर्थं कथं स्थितः स्या मिति स्वाभिप्राय मब्रवीत्। तेष्वनुग्रहद्योतनाय ‘तान्’ देवान् ‘ईक्षतैव’ पश्यन्नेवास्ते, न तूपेक्षा मकरोत्। ततो देवा यज्ञस्याभिप्रायं ज्ञात्वा ‘ते’ देवास्तं यज्ञ मिद मब्रुवन्,—हे यज्ञ! ‘नः’ अस्मदर्थं त्वत्साधनेन ऋत्विग्यजमानरूपेण ब्राह्मणेन तत्तन्मन्त्रगतैश्छन्दोभिश्च ‘सयुग् भूत्वा’ सहावस्थितो भूत्वा पश्चादन्नाद्याय ‘तिष्ठस्व’ अङ्गीकुर्विति। तथा यज्ञोऽप्यङ्गीचकार। यस्मादेवं तस्मादिदानी मपि यज्ञो ब्राह्मणमन्त्रसहितो भूत्वा देवेभ्योऽन्नाद्यरूपं हविर्वहति॥ १ (४५)॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां पञ्चमाध्याये
प्रथमः खण्डः॥ १ (४५)॥

---

॥ अथ द्वितीयः खण्डः॥

त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तं तद्धैतदेव जग्धं यदा ऽऽशंसमान मार्त्विज्यं कारयत उत

वा मे दद्यादुत वा मा वृणीतेति तद्ध तत्पराङेव यथा जग्धं न हैव तद्यजमानं भुनक्त्यथ हैतदेव गीर्णं यद्बिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति तद्ध तत्पराङेव यथा गीर्णं न हैव तद्यजमानं भुनक्त्यथ हैतदेव वान्तं यदभिशस्यमान मार्त्विज्यं कारयते यथा ह वा इदं वान्तान्मनुष्या बीभत्सन्त एवं तस्माद् देवास्तद्ध तत्पराङेव यथा वान्तं न हैव तद्यजमानं भुनक्ति स एतेषां त्रयाणा माशान्नेयात्तं यद्येतेषां त्रयाणा मेकं चिदकाम मभ्याभवेत्तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिरिदं वा इदं वामदेव्यं यजमानलोकोऽमृतलोकः स्वर्गो लोकस्तत् त्रिभिरक्षरैर्न्यूनं तस्य स्तोत्र उपसृप्य त्रेधात्मानं विगृह्णीयात्पुरुष इति स एतेषु लोकेष्वात्मानं दधात्यस्मिन् यजमानलोकेऽस्मिन्नमृतलोकेऽस्मिन्स्वर्गे लोके स सर्वान् दुरिष्टिमत्येत्यपि यदि समृद्धा इव ऋत्विजः स्युरिति ह स्माहाथ हैतज्जपेदेवेति ॥ २ ( ४६ ) ॥

दीक्षणीयादिष्वग्निषोमीयान्तेषु होतुर्ध्वनिविशेषं विधायान्ते ब्राह्मणेनर्त्विजा यज्ञनिष्पत्तिरित्युक्तम्; तत्र वर्ज्यब्राह्मणविशेषं दर्शयितुं प्रस्तौति—"त्रीणि ह वै यज्ञे क्रियन्ते,— जग्धं गीर्णं

वान्तम्”–इति। ‘जग्धं’ भक्षितावशिष्टं भोजनपात्रे स्थितम्; ‘गीर्णम्’ उदरे प्रविष्टम्; ‘वान्तं’ सकृदुदरे प्रविश्य पुनर्निर्गतम; तान्येतानि ‘त्रीणि’ दुर्बुद्धिभिर्यज्ञे क्रियन्ते; जग्धादिस्थानीयानि त्रीणि वर्ज्यानीत्यर्थः ॥

तत्र जग्धस्थानीयं दर्शयित्वा निषेधति—“तद्वैतदेव जग्धं,—यदा ऽऽशंसमान मार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति; तद्ध तत्पराङेव यथा जग्धं; न हैव तद्यजमानं भुनक्ति”–इति। कश्चिद्ब्राह्मण आर्त्विज्यम् ‘आशंसते’ कामयते। केनाभिप्रायेणेति, तदुच्यते—आर्त्विज्यार्थं यज्ञशालां मयि गते सति यजमानो ‘मे’ मह्यम् ‘उत वा दद्यात्’ किञ्चिद्धनं वा प्रयच्छेत्; ‘उत वा मा वृणीत’ अथवा मां प्रयोगाभिज्ञं दृष्ट्वा त्व मार्त्विज्यं कुर्विति वृणीते ‘इति’ एवं धनार्जनलम्पटः सन् अनुष्ठानतात्पर्य्यरहितो निरन्तर मार्त्विज्यं कामयते, तादृशं कामयमानं पुरुषं यजमान आर्त्विज्यं कारयत इति यदस्ति, तदेव ‘जग्धम्’,—यथा लोके ‘जग्ध” पात्रस्थितं भक्षितावशिष्ट मुच्छिष्टत्वादितरैरस्पृश्यम्, तथा। ‘तद्ध’ तस्मिन्नेव यागे ‘तत्’ धनलम्पट स्यार्त्विज्यं ‘पराङ् एव’ निकृष्ट मेव; ‘तत्’ तादृश मार्त्विज्यं यजमानं ‘न भुनक्ति’ न पालयति, यज्ञो विकलो भवतीत्यर्थः ॥

गीर्णं मुदाहृत्य निषेधति—“अथ हैतदेव गीर्णं,—यद्भिय्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्य्यादिति; तद्ध तत्पराङेव यथा गीर्णं; न हैव तद्यजमानं भुनक्ति” –इति। यजमानो यस्मिन् ग्रामे यजते, तत्र कश्चिद् ब्राह्मणो ‘ग्रामणीः’ प्रभुर्भूत्वा प्रयोगकौशलरहितो ऽवतिष्ठते, त मार्त्विज्ये वर्जयितु मयं यजमानो बिभेति। केनाभिप्रायेणेति, तदुच्यते—अय मत्र प्रभुर्मयि द्वेषं कृत्वा कालान्तरे मां बाधेत; अथवेदानी

मेव 'यज्ञवेशसं' यज्ञविघातं कुर्य्यात्। तदुभयं मा भूदित्यनेनाभिप्रायेण तस्माद्भीतिं प्राप्नुवन्नार्त्विज्यं तेन प्रभुणा कारयत इति यदस्ति, तदेतद् 'गोर्णम्',—यथा लोके 'गीर्णम' उदरस्थं पुनर्भोगयोग्यं न भवति, तथा। 'तत्र' तस्मिन् यागे तद्गीर्णं भीतिमात्रप्रयुक्त मार्त्विज्यम् 'पराङेव' निकृष्ट मेव। 'तत्' तादृशं प्रयोगकौशलरहितेन प्रभुणा कृत मार्त्विज्यं यजमानं न पालयति॥

वान्तं दर्शयित्वा निषेधति – "अथ हैतदेव वान्तं,—यदभिशस्यमान मार्त्विज्यं कारयते; यथा ह वा इदं वान्तान्मनुष्या बीभत्सन्त, एवं तस्माद् देवास्तत्र तत्पराङेव यथा वान्तं, न हैव तद्यजमानं भुनक्ति"–इति। यः कश्चित् पुरुषः प्रयोगकुशलोऽपि केनचित पातित्यापवादेन सर्वैर्निन्द्यते, तादृशम् 'अभिशस्यमानं' यजमानं स्वकीयबन्धुत्वादिदाक्षिण्याभिमानेनापवादपरिहारार्थ मार्त्विज्यं कारयते इति यदस्ति, तदेतद् 'वान्तम्'। तत्रेदं निदर्शन मुच्यते,—यथा लोके मनुष्याः 'वान्ताद् बीभत्सेयुः' वान्तं दृष्ट्वा कश्मल मेतदिति निष्ठीवनं कुर्युः, एवं देवाः 'तस्माद्' अभिशस्यमानकृतादार्त्विज्यात्सर्वे बीभत्सन्ते। ततो यथा लोके वान्त मिति निकृष्टम्, तथा तस्मिन् यज्ञे तदार्त्विज्यं निकृष्टम्। तच्च यजमानं सर्व्वथा न पालयति॥

वर्ज्यत्वेनोक्तं त्रिविध मुपसंहरति—"स एतेषां त्रयाणा माशां नेयात्"–इति। 'सः' यजमानः 'एतेषां' पूर्वोक्तानां धनलम्पटभयहेत्वभिशस्तानां त्रयाणा मार्त्विज्यार्थं मनस्यपेक्षा मपि न कुर्य्यात्॥

अथ प्रमादकृतस्य प्रायश्चित्तं दर्शयति—"तं यद्येतेषां त्रयाणा मेकं चिदकाम मभ्याभवेत्तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिः"

-इति। यदि कदाचित् 'एतेषां' धनलम्पटादीनां त्रयाणां मध्ये वर्त्तमानं तं पुरुषम् 'एकञ्चित्' एक मपि 'अकामम्' अबुद्धिपूर्वम् 'अभ्याभवेत्' अभिलक्ष्यार्त्विज्यं भवेत्, तदानीं 'तस्य' वैकल्यस्य प्रायश्चित्तिरस्ति। कुत्रास्तीति, तदुच्यते—'वामदेव्यस्य स्तोत्रे' वामदेवमहर्षिणा दृष्टं साम वामदेव्यम्*, "कया नश्चित्र आ भुवत्" -इत्येतस्या मृच्युत्पन्नम्†। तच्च साम त्वचे गायन्त उद्गातारः पृष्ठस्तोत्रमनुतिष्ठन्ति‡। तत्र कश्चित्प्रयोगविशेषः प्रायश्चित्तिः॥

उक्तं साम प्रशंसति—"इदं वा इदं वामदेव्यं, यजमान-लोको ऽमृतलोकः स्वर्गो लोकः"-इति। यजमानस्य लोको 'पृथिवी', 'अमृतलोकः' मुक्तिपदम्, 'स्वर्गः' देवलोकः। 'इदं वै' उक्तलोकत्रय मिदं सर्वमपीदं 'वामदेव्यं' "कया नश्चित्रः"-इत्यस्या मृच्युत्पन्न मिदं सामगानां प्रसिद्धं वामदेव्याख्यं साम ( गे० गा० ५. १. २५. )॥

तस्मिन् साम्नि कर्त्तव्यं प्रायश्चित्तप्रकारं दर्शयति—"तत् त्रिभि रक्षरैर्न्यूनं; तस्य स्तोत्र उपसृप्य त्रेधात्मानं विगृह्णीयात् पुरुष इति"-इति। 'तद्' वामदेव्यं साम 'त्रिभिरक्षरैर्न्यूनम्',— "कया नश्चित्रः"-इत्यादिकस्तृचो गायत्रीच्छन्दस्कः; तस्य च छन्दसः त्रिषु पादेषु प्रत्येक मष्टावक्षराणि अपेक्षितानि; "अभी षु णः"-इत्येतस्या मृचि यस्मात् प्रतिपादं सप्तैवाक्षराणि, अतस्त्रिभिरक्षरै-र्न्यूनत्वम्। 'तस्य' वामदेव्यसाम्नः सम्बन्धिनि स्तोत्रे 'उपसृप्य'

---

* "वामदेवाड्ड्यड्यौ"-इति पा० ४. २. ९।

† ऋ० आ० २. २. ३. ५; गे० गा० ५. १. २५।

‡ उ० आ० १. १. १२. १—३; ऊ० गा० १. १. ५। "यो वै सत्रस्य सद्वेद सद्भवति वामदेव्यं वै साम्नां सद"—इत्यादीनि च तद्ब्राह्मणवचनानि। ता० ब्रा० ४. ८, १०।

समीपं* प्रक्रम्य 'आत्मानं' स्ववाचकं 'पुरुषः'-इतिशब्दं 'त्रेधा विगृह्णीयात्' प्रत्यक्षरं विभज्य एकैकस्मिन् पादे प्रक्षिपेत्। तद्यथा—"अभी षु णः सखीनां पु, अविता जरितॄणां रु, शतम्भवासुतिभिः षः"-इति प्रक्षिप्य गायेत् ( उ० आ० १.१.१२.३. )॥

उक्तप्रकारेणार्त्विज्ये वैकल्यपरिहारं दर्शयति— "स एतेषु लोकेष्वात्मानं दधात्यस्मिन् यजमानलोकेऽस्मिन्नमृतलोकेऽस्मिन् स्वर्गे लोके स सर्वां दुरिष्टि मत्येति"-इति। 'सः' कृतप्रायश्चित्तो यजमानः 'एतेषु' लोकेष्वात्मानं स्थापयति। त एव तु लोका अस्मिन्नित्यादिना स्पष्टीक्रियन्ते। 'सः' यजमानः सर्वां दुरिष्टिं दोषोपेतं यज्ञम् 'अत्येति' अतिक्रामति॥

एवं नैमित्तिक मक्षरत्रयप्रक्षेपं विधाय नित्यप्रयोगेऽपि तं विधत्ते— "अपि यदि समृद्धा इव ऋत्विजः स्युरिति ह स्माहाय हैतज्जपेदेवेति"-इति। होत्रादयः 'ऋत्विजः' यद्यपि 'समृद्धा इव' धनलाभस्त्यादिपूर्वोक्तवैकल्यरहिता एव स्युः, तथापि 'एतत्' पुरुष इत्यक्षरत्रयं स्तोत्रे जपेदेवेत्यैतरेयो मुनिराह स्म॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां पञ्चमाध्याये
द्वितीयः खण्डः॥ २ ( ४६ )॥

---

॥ अथ तृतीयः खण्डः॥

**छन्दांसि वै देवेभ्यो हव्य मूढ्वा श्रान्तानि जघनार्द्धे यज्ञस्य तिष्ठन्ति यथाश्वो वाश्वतरो वोहिवां-**

* "गानं" ग।

स्विष्टेदेवं तेभ्य एतं मैत्रावरुणं पशुपुरोळाश मनु देविका हवींषि निर्वपेद् धात्रे पुरोळाशं द्वादशकपालं यो धाता स वषट्कारो ऽनुमत्यै चरुं यानुमतिः सा गायत्री राकायै चरुं या राका सा त्रिष्टुप् सिनीवाल्यै चरुं या सिनीवाली सा जगती कुह्वै चरुं या कुहूः सानुष्टुबेतानि वाव सर्वाणि छन्दांसि* गायत्रं त्रैष्टुभं जागत मानुष्टुभ मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्त एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद तद्वै यदिद माहुः सुधायां ह वै वाजी सुहितो दधातीति छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद तद्धैक आहुर्धातार मेव सर्वासां पुरस्तात्पुरस्तादाज्येन परि यजेत्तदासु सर्वासु मिथुनं दधातीति तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र समानीभ्या मृग्भ्यां समानेऽहन्यजतीति यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं तद्यदासां धातारं पुरस्ताद्यजति तदासु सर्वासु मिथुनं दधातीति नु देविकानाम् ॥ ३ ( ४७ ) ॥

---

* "छन्दांसि" ग, घ। एव मन्यत्र च।

पूर्वत्र यज्ञो ब्राह्मणेन छन्दोभिश्च सयुग् भूत्वा हव्यं वहतीत्युक्तम्; तत्र ब्राह्मणप्रयुक्तो वक्तव्यविशेषोऽभिहितः; अथ छन्दःप्रयुक्तं विशेष माह— "छन्दांसि वै देवेभ्यो हव्य मूढ्वा श्रान्तानि जघनार्द्धे यज्ञस्य तिष्ठन्ति, यथाश्वो वाश्वतरो वोहिवांस्तिष्ठेदेवं; तेभ्य एतं मैत्रावरुणं पशुपुरोळाश मनु देविका हवींषि निर्वपेत्"-इति। गायत्र्यादीनि छन्दांसि देवेभ्यो 'हव्य मूढ्वा' हव्यवहनं कृत्वा श्रमं प्राप्य यज्ञस्य 'जघनार्द्धे' पश्चिमभागे क्वचित्तूष्णीं तिष्ठन्ति। यथा लोके कश्चिदश्वो वा, गर्दभाश्वसाङ्कर्य्येण जातः 'अश्वतरः' वा 'ऊहिवान्' भारवहनं कृतवान् ( सन् * ) दूरदेशे वहनेन श्रान्तस्तिष्ठेत्, एव मेतानि छन्दांस्यपि; 'तेभ्यः' श्रान्तेभ्यः श्रमपरिहारार्थं हवींषि निर्वपेत् †। 'देविकाः'-इति तेषां हविर्विशेषाणां नाम। कस्मिन् काले निर्वाप इति, तदुच्यते— यज्ञस्यावसाने योऽयं 'पशुः' अनूबन्ध्याख्यः, तस्य पशोः सम्बन्धी मित्रावरुणदेवताको यः पुरोडाशः, तम् 'अनु' तस्मिन्ननुष्ठिते पश्चान्निर्वपेत्॥

तत्र प्रथमं हविर्विधत्ते— "धात्रे पुरोळाशं द्वादशकपालं, यो धाता स वषट्कारः"-इति। धातृनाम्ने देवाय द्वादशसु कपालेषु संस्कृतं 'पुरोळाशं' निर्वपेत्। योऽयं धातृनामको देवः, स वषट्कारस्वरूपः; तेन पुरोळाशेन वषट्कारदेवतायाः श्रमोऽपगच्छति॥

द्वितीयं हविर्विधत्ते— "अनुमत्यै चरुं, यानुमतिः सा गायत्री"-इति। "कलाहीने सानुमतिः पूर्णे राका निशाकरे"

---

* नास्त्येतत् पदं ग-पुस्तके।

† "पशुपुरोडाश मन्वनूबन्ध्यस्य देविका हवींषि निर्वपति यजमेषाचि"-इति कात्या॰ श्रौ॰ १८ ६, २०।

-इति ( अम० १.४.८. ) अभिधानाच्चतुर्दशीमिश्रा पूर्णिमा 'अनुमति'-शब्दवाच्या *। तदभिमानिन्या देवताया अपि तदेव नाम। तस्याश्चानुमतेर्गायत्रीरूपत्वात्तदीयः श्रमोऽपगच्छति ॥

तृतीयं हविर्विधत्ते— "राकायै चरुं, या राका सा त्रिष्टुप्"-इति। पूर्ववद् व्याख्येयम् ॥

चतुर्थपञ्चमे हविषी विधत्ते— "सिनीवाल्यै चरुं, या सिनीवाली सा जगती; कुह्वै चरुं, या कुहूः सानुष्टुप्"-इति। "सा दृष्टेन्दुः सिनीवाली, सा नष्टेन्दुकला कुहूः"-इति (अम० १.४.९.) अमावास्याद्वैविध्य मभिहितम् †। तदभिमानिदेवतायास्तदेव नामेति पूर्ववद्योजनीयम् ॥

इतरेषां छन्दसां कथं श्रमपरिहार इत्याशङ्क्य सर्वेषा मन्येषा मुक्तच्छन्दोऽनुवर्त्तित्वात्तावतैव श्रान्तिपरिहार इत्यभिप्रेत्याह— "एतानि वाव सर्वाणि छन्दांसि,—गायत्रं त्रैष्टुभं जागत मानुष्टुभ मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्ते"-इति। 'एतानि' एव गायत्र्यादीनि चत्वारि सर्वच्छन्दोरूपाणि, 'अन्यानि' उष्णिगादीनि गायत्र्यादिक मनुसृत्यैव वर्त्तन्ते। यस्मादेतानि चत्वारि यज्ञप्रयोगे 'प्रतमा मिव' प्राचुर्यातिशयेनैव 'क्रियन्ते' प्रयुज्यन्ते, तस्मादेतदनुसारित्व मितरेषां युक्तम् ॥

---

* "अनुमती राकेति देवपत्न्याविति नैरुक्ताः; पौर्णमास्याविति याज्ञिकाः। या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राकेति विज्ञायते"-इत्यादि निरु० ११. ३. ८। इह चोपरिष्टात् ७. २. १०।

† "सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः; अमावास्ये इति याज्ञिकाः। या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते"-इत्यादि निरु० ११. ३. १०। इह चोपरिष्टात् ७. २. १०।

उक्तार्थवेदनपूर्वक मनुष्ठानं प्रशंसति— "एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद"-इति। 'एतैः' गायत्र्यादिभिः 'सर्वैः' उष्णिगादिभिः ॥

विद्वत्प्रसिद्ध्या छन्दांसि प्रशंसति— "तद्धै यदिद माहुः,— सुधायां ह वै वाजी सुहितो दधातीति *; छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधति"-इति। वाजोऽन्नं हविर्लक्षणम्, तद्युक्तो ज्योतिष्टोमो 'वाजी', स च 'सुहितः' सम्यगनुष्ठितः 'सुधायाम्' अमृते स्वर्गे यजमानं स्थापयतीति शेषः। अनेन प्रकारेण 'तद्धै' तस्मिन्नेव यज्ञप्रतिपादके शास्त्रे 'यदिदं' वचन मभिज्ञा आहुः, तत्तु 'छन्दांसि वै' तद्वचनं यथोक्तगायत्र्यादिच्छन्दांस्येवाभिलक्ष्योक्तम्। यस्माच्छन्दांसि 'एनं' यजमानं 'सुधायां' स्वर्गे स्थापयन्ति †, तस्माच्छन्दोऽभिप्रायेणैतद्वचनं युक्तम् ॥

वेदनं प्रशंसति— "अननुध्यायिनं लोकं जयति य एवं वेद"-इति। मनसापि ध्यातु मनर्हं मत्यपूर्वसुखोपेतं लोक माप्नोति ॥

अत्र कश्चित् पूर्वपक्ष मुद्भावयति— "तद्धैक आहुर्धातार मेव सर्वासां पुरस्तात्-पुरस्तादाज्येन परि यजेत्तदासु सर्वासु मिथुनं दधातीति"-इति। 'तद्ध' तस्मिन्नेव छन्दसां श्रमपरिहारार्थे हविष्पक्षे केचित् पूर्वपक्षिण एव माहुः,—'सर्वासाम्' अनुमत्यादीनां स्त्रीदेवतानां पुरस्तात् पुरुषदेवतारूपं धातार मेवाज्यद्रव्येण परितो यजेत्। सर्वसङ्ग्रहार्थं पुरस्तादिति वीप्सा ‡। 'तत्' तेन

---

* "सुधायां ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी, त मेव तत् प्रीणाति; स एनं प्रीतः प्रीणाति वसीयान् भवति"-इति तै० सं० ५.५.१०.७।

† "सुधायां मा धेहि परमे व्योमन्"-इति अथ० सं० १७. १. ६।

‡ "नित्यवीप्सयोः"-इति (पा० ८.१.४.) द्विर्वचनम्।

सर्वत्र धातृविषयप्रयोगेण 'आसु' सर्वासु स्त्रीदेवतासु मिथुनं सम्पादयति ॥

त मिमं पूर्वपक्षं दूषयति— "तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते, यत्र समानीभ्या मृग्भ्यां समानेऽहन् यजतीति"-इति। 'तदु वै' तत्रैव पूर्वोक्तविषये केचिदभिज्ञा एव माहुः,—'यत्र' यस्मिन् प्रयोगे 'समानीभ्याम्' एकविधाभ्या मृग्भ्यां 'समाने ऽहन्' एकस्मिन्नेवाहनि यजति, 'तदेतत्' अनुष्ठानं 'जामि वै' आलस्य मेव 'क्रियते' सम्पाद्यते; प्रयुक्तयोरेवर्चोः पुनःप्रयोगस्य चर्वितचर्वण-सदृशत्वेनानुचितत्वात्। धातृदेवताके प्रथमे पुरोडाशे "धाता ददातु दाशुषे"-इति * पुरोनुवाक्या, "धाता प्रजानाम्"-इति † याज्या। तत्र य उपरितनाना मपि चतुर्णां हविषां पुरस्तादाज्येन धातारं यजेत्, तदानी मिद मृग्द्वयं पुनरपि चतुर्वार मावर्त्त-नीयम्। तथा सति नीरसो यज्ञः फलं दातुं समर्थो न भवेदित्यर्थः॥

कथं तर्हि मिथुनसिद्धिः स्यादित्याशङ्क्य लौकिकदृष्टान्तेन तत्सिद्धि मुपपादयति— "यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं, तद्यदासां धातारं पुरस्ताद्यजति, तदासु सर्वासु मिथुनं दधाति"-इति। 'यदि ह वा' यद्यपि लोके जायाः 'बह्व्य इव' बहुसङ्ख्याका एव स्युः, तथापि 'पतिर्वाव' परिरेक एव सन् तासां मिथुनं सम्पादयति; तथा सति यदि 'आसाम्' अनु-मत्यादीनां पुरस्तात् धातारं सकृदेव यजति, तदानीम् 'आसु सर्वासु' अनुमत्यादिषु स एक एव धाता मिथुनं सम्पादयति ‡ ॥

वक्ष्यमाणैर्हविर्भिः साङ्कर्यशङ्कां वारयितु मुक्तार्थं विविच्य निग-

*, † इमे ऋचावन्यशाखीये इत्याश्वलायनेन पठिते। (६.१४.१६.)।

‡ "देविका निर्वपेत्"-इत्यादि च तै० सं० ३.४.९ अनु०।

मयति— "इति नु देविकानाम्"-इति। अनेन प्रकारेण देविकाभिधानां देवतानां हवींषुप्रक्तानीति शेषः * ॥ ३ (४७) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां पञ्चमाध्याये तृतीयः खण्डः ॥ ३ (४७) ॥

---

अथ चतुर्थः खण्डः ।

अथ देवीनां सूर्याय पुरोळाश मेककपालं यः सूर्यः स धाता स उ एव वषट्कारो दिवे चरुं या द्यौः सानुमतिः सो एव गायत्र्युषसे चरुं योषाः सा राका सो एव त्रिष्टुब् गवे चरुं या गौः सा सिनीवाली सो एव जगती पृथिव्यै चरुं या पृथिवी सा कुहूः सो एवानुष्टुबेतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागत मानुष्टुभ मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्त एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद तद्वै यदिद माहुः सुधायां ह वै वाजी सुहितो दधा-

* "यद्यनूबन्ध्य पशुपुरोडाश मनु देविका हवींषि निर्वपेयुः ;— धाताऽनुमती राका सिनीवाली कुहूः"-इति आश्व० श्रौ० ६,१४,१५। "अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धात्रे द्वादशकपालः सर्वहुतः"-इति कात्या० श्रौ० १८, ६. २१।

तीति च्छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद तद्धैक आहुः सूर्य मेव सर्वासां पुरस्तात्पुरस्तादाज्येन परि यजेत्तदासु सर्वासु मिथुनं दधातीति तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र समानीभ्या मृग्भ्यां समाने ऽहन्यजतीति यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं तद्यदासां सूर्यं पुरस्ताद्यजति तदासु सर्वासु मिथुनं दधाति ता या इमास्ता अमूर्या अमूस्ता इमा अन्यतराभिर्वाव तं काम माप्नोति य एतासूभयीषु ता उभयीर्गतश्रियः प्रजातिकामस्य सन्निर्वपेन्नेत्वेषिष्यमाणस्य* यदेना एषिष्यमाणस्य† सन्निर्वपेदीश्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अय मात्मने ऽल ममंस्तेति ता ह शुचिवृक्षो गौपालायनो वृद्धद्युम्नस्याभिप्रतारिणस्योभयीर्यज्ञे सन्निरुवाप तस्य ह रथगृत्सं गाहमानं दृष्ट्वोवाचेत्थ मह मस्य राजन्यस्य देविकाश्च देवीश्चोभयीर्यज्ञे समभादयं यदस्येत्थं रथगृत्सो गाहत इति चतुष्षष्टिं कवचिनः शश्वद्धास्यते पुत्रनप्तार आसुः ॥ ४ ( ४८ ) ॥

---

*, † "एषिष्यमाणस्य" घ ।

  

हविरन्तराणि प्रतिजानीते—"अथ देवीनाम्"-इति। 'अथ' अनन्तरं 'देवीनां' देवीनामिकानां देवतानाम्, हवींषि निर्वपेदिति शेषः॥

तत्र प्रथमं हविर्विधत्ते—"सूर्य्याय पुरोळाश मेककपालं,—यः सूर्य्यः स धाता, स उ एव वषट्कारः"—इति। 'एककपालं' निर्वपेदिति शेषः। सूर्य्यस्य पूर्वोक्तं धातृस्वरूपत्वम्, तद्द्वारा वषट्कारस्वरूपत्वं चोपचर्य्य तदीयश्रमापनयो द्रष्टव्यः॥

उक्तानि * चत्वारि हवींषि विधत्ते—"दिवे चरुं,—या द्यौः सानुमतिः, सो एव गायत्र्युषसे चरुं,— योषाः सा राका, सो एव त्रिष्टुब्; गवे चरुं,— या गौः सा सिनीवाली, सो एव जगती; पृथिव्यै चरुं,— या पृथिवी सा कुहूः, सो एवानुष्टुप्"-इति। प्रथमहविर्वद् व्याख्येयम्॥

एतेषां हविषां प्रशंसार्थं पूर्वोक्त मेवार्थवादं (२२७पृ०) पुनरपि पठति—"एतानि वाव सर्वाणि च्छन्दांसि,—गायत्रं त्रैष्टुभं जागत मानुष्टुभ मन्वन्यान्येतानि हि यज्ञे प्रतमा मिव क्रियन्त; एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद; तद्दै यदिद माहुः,—सुधायां ह वै वाजी सुहितो दधातीति; च्छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद; तद्वैक आहुः,—सूर्य्य मेव सर्वासां पुरस्तात्-पुरस्तादाज्येन परि यजेत्, तदासु सर्वासु मिथुनं दधातीति; तदु वा आहुः— जामि वा एतद् यज्ञे क्रियते, यत्र समानीभ्या मृग्भ्यां समाने ऽहन् यजतीति; यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं तद् यदासां सूर्य्यं

* "उत्तराणि" ग।

पुरस्ताद् यजति, तदासु सर्वासु मिथुनं दधाति"-इति। धातार मित्यस्य स्थाने सूर्य्य मित्येतावानेव विशेषः। अन्यत् सर्वं पूर्ववत्॥

देविकानाम्नां देवीनाम्नां च हविषां तुल्यं सामर्थ्य मभिप्रेत्य विकल्पं दर्शयति—"ता या इमास्ता अमूर्या अमूस्ता इमा अन्यतराभिर्वाव तं काम माप्नोति य एतासूभयीषु"-इति। 'ताः' देवीनाम्ना प्रसिद्धाः 'इमाः' इदानीं मुक्ताः (२३२ पृ० ४ पं०) "सूर्य्याय पुरोडाशम्"-इत्यादयो याः सन्ति, 'ताः अमूः' प्राक्तन-ग्रन्थेनोक्ताः (२२६ पृ० १५ पं०) "धात्रे पुरोळाशम्"-इत्यादयो देविकाः। एवं देवीरुद्दिश्य देविकातादात्म्य मुक्तम्, अथ देविका मुद्दिश्य देवीतादात्म्य मुच्यते—'अमूः' पूर्वोक्ता देविकाः सन्ति, ताः 'इमाः' इदानीं मुक्ता देव्यः। एव मन्योन्यतादात्म्ये सति यः काम एतासूभयविधासु लभ्यते, 'तं' कामम् 'अन्यतराभिर्वाव' एकविधाभिरेव प्राप्नोति। तस्माद् विकल्पेन प्रयोग इत्यर्थः॥

अथ नैमित्तिकं समुच्चयं विधत्ते—"ता उभयीर्गतश्रियः प्रजातिकामस्य सन्निर्वपेत्"-इति। अनूचानादीनां मध्ये कश्चिद् 'गतश्रीः'। तथा च श्रुत्यन्तरे श्रूयते—"त्रयो वै गतश्रियः,—शुश्रुवान्, ग्रामणीः, राजन्यः"-इति (तै०सं०२.५.४.४. *)। तादृशो गतश्रीः यदि 'प्रजातिं' प्रजोत्पादनसामर्थ्यं कामयते, तदानीं तस्य 'ताः' देविका देवीश्च 'उभयीः' 'सन्निर्वपेत्' समुच्चित्य निर्वपेत्॥

---

* 'शुश्रुवान्—वेदतदर्थयोः श्रुतवान्, ग्रामणीः—वैश्यपरिवृढः, राजन्यः—क्षत्रियः'-इति, 'गता प्राप्ता श्रीर्येन स गतश्रीः'-इत्यादि चाह रुद्रदत्तः (आप० श्रौ० १.१४.९.ह०)। 'गता प्राप्ता श्रीर्येनासौ, गता श्रीर्यं जिति वा'-इति च याज्ञिकदेवः (कात्या० श्रौ० ४. १३. ५. ३०)। साङ्ख्या० श्रौ० २. ६. ५।

धनकामस्य समुच्चयं निषेधति—"नैत्वेषिष्यमाणस्य"-इति। धन मपेक्ष्यमाणस्य तु 'न सन्निर्वपेत्' उभयविधानां समुच्चित्य निर्वापो न कार्य्यः ॥

विपक्षे बाधं दर्शयति— "यदेना एषिष्यमाणस्य सन्निर्वपेदी- श्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अय मात्मने ऽल ममंस्तेति"- इति। वित्त मेषिष्यमाणस्य यदि 'एनाः' उभयीः समुच्चित्य निर्वपेत्, तदानीम् 'अस्य' धनकामस्य वित्ते देवाः सर्वेऽपि 'अरन्तोः' ईश्वरः, अ-रन्तु मक्रीडितुं समर्था भवन्ति ; एतदपेक्षितं वित्तं द्विषन्ती- त्यर्थः। तत्र हेतुरुच्यते,— 'यद्वै' यस्मादेव कारणादयं धनार्थी 'आत्मने' स्वार्थ मेव 'अल ममंस्त' सम्पूर्णं वित्तं मनसा ध्यातवान्, धनलोभेन यागादिषु प्रवृत्तत्वात् ; एतदपेक्षिते धने देवानां द्वेषो युज्यते ॥

धनकामस्य समुच्चयं निषिध्य प्रजाकामस्य पूर्वत्र विहितं समुच्चय मर्थवादेन प्रशंसति— "ता ह शुचिवृक्षो गौपालायनो वृद्धद्युम्नस्याभिप्रतारिणस्योभयीर्यज्ञे सन्निरुवाप ; तस्य ह रथगृत्सं गाहमानं दृष्ट्वोवाचेत्थ मह मस्य राजन्यस्य देविकाश्च देवीश्चोभयी- र्यज्ञे समसमादयं ; यदस्येत्थं रथगृत्सो गाहत इति चतुष्षष्टिं कवचिनः शश्वद्धास्य ते पुत्रनप्तार आसुः"-इति। 'शुचयः' शुद्धाः समीचीनपुष्पफलोपेता वृक्षाः यस्य महर्षेराश्रमे सन्ति, सोऽयं 'शुचिवृक्ष'-नामकः ; सम्यक् तृणोदकप्रदानेन गोशुश्रूषणं करो- तीति गोपालायननामा कश्चिदृषिः, तस्यापत्यं 'गौपालायनः' ; पूर्वोक्तनामकः शुचिवृक्षः। 'वृद्धं' प्रभूतं 'द्युम्नं' धनं यस्य राज्ञः सोऽयं 'वृद्धद्युम्नः' अभितः शत्रून् प्रकर्षेण 'तरति' निराकरोतीति 'अभिप्रतारी' कश्चिद्राजा, तस्य पुत्रः 'आभिप्रतारिणः' ; पूर्वोक्तो

बृहद्द्युम्नः । तस्य राज्ञो यज्ञे देविकाश्च देवीश्चोभयोः 'इत्थम्' अनेन शास्त्रोक्तप्रकारेण 'सममादयम्' समुच्चित्य मादितवानस्मि, समुच्चयानुष्ठानेन तद्देवता हर्षितवानस्मि। तत्प्रसादादयं 'रथ-गृत्सः' राजपुत्रः क्रीडार्थं जले गाहते इति। न केवलं शुचि-वृक्षेण दृष्टो रथगृत्स एवैकः, किन्तु चतुष्षष्टिसङ्ख्याकाः 'शश्वत् कवचिनः' सर्वदा युद्धार्थं मुद्यताः शूराः। 'अस्य' बृहद्द्युम्नस्य राज्ञः 'ते' तथाविधा एव पुत्राः पौत्राश्च आसुः ॥ ४ ( ४८ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां पञ्चमाध्याये
चतुर्थः खण्डः ॥ ४ ( ४८ ) ॥

---

॥ अथ पञ्चमः खण्डः ॥

अग्निष्टोमं वै देवा अश्रयन्तोक्थान्यसुरास्ते समावद्वीर्या एवासन् न व्यावर्त्तन्त तान् भरद्वाज ऋषीणा मपश्यदिमे वा असुरा उक्थेषु श्रितास्ता-नेषां न कश्चन पश्यतीति सोऽग्नि मुदह्वयदेह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिर इत्यसुर्या ह वा इतरा गिरः सोऽग्निरुपोत्तिष्ठन्नब्रवीत् किंस्विदेव मह्यं कृशो दीर्घः पलितो वक्ष्यतीति भरद्वाजो ह वै कृशो दीर्घः पलित आस सो ऽब्रवीदिमे वा असुरा उक्थेषु

श्रितास्तान्वो न कश्चन पश्यतीति तानग्निरश्वो भूत्वाभ्यत्यद्रवद्यदग्निरश्वो भूत्वाभ्यत्यद्रवत्तत्साकमश्वं सामाभवत्तत्साकमश्वस्य साकमश्वत्वं तदाहुः साकमश्वेनोक्थानि प्रणयेदप्रणीतानि वाव तान्युक्थानि यान्यन्यत्र साकमश्वादिति प्रमंहिष्ठीयेन प्रणयेदित्याहुः प्रमंहिष्ठीयेन वै देवा असुरानुक्थेभ्यः प्राणुदन्त तस्मात्प्रमंहिष्ठीयेन नयेत्स साकमश्वेन ॥ ५ (४९) ॥

ज्योतिष्टोमस्तावत् 'सप्तसंस्थः' समाप्तिभेदात् सप्तविधः; "अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त संस्थाः"–इति (श्रौ० ६. ११. १.) आश्वलायनेनाभिहितत्वात्। तत्राग्निष्टोमसाम्ना यज्ञायज्ञीयाख्येन यत्र समाप्तिः, सोऽयं प्रथमरूपो ऽग्निष्टोमः। स सर्वोऽपि पूर्वत्रोक्तः॥

अथोक्थसंस्थारूपो ज्योतिष्टोमो वक्तव्यः, तदर्थ माख्यायिकामाह— "अग्निष्टोमं वै देवा अश्रयन्तोक्थान्यसुरास्ते समावद्वीर्या एवासन् न व्यावर्तन्त, तान् भरद्वाज ऋषीणा मपश्यदिमे वा असुरा उक्थेषु श्रितास्तानेषां न कश्चन पश्यतीति सोऽग्निमुदह्वयद्"–इति। यदा देवा अग्निष्टोम माश्रितवन्तः, तदानीमसुरा अपि उक्थनामकानि स्तोत्राणि शस्त्राणि चाश्रित्यावस्थिताः। ततश्च 'ते' देवाश्चासुराश्च यज्ञे तुल्यवीर्या एवासन्, न तु देवाः शौर्याधिक्येन व्यावृत्तिं प्राप्ताः। तदानी मृषीणां मध्ये सूक्ष्मदर्शी भरद्वाजः 'तान्' असुरान् रहस्युक्थपरानपश्यत्; दृष्ट्वा

चव मुवाच,— 'इमे' रहस्यवस्थिता असुराः 'उक्थेषु' स्तोत्रशस्त्रेषु आश्रिताः । 'तान्' असुरान् 'एवां' देवाना मृषीणां मध्ये न कोऽपि पश्यतीति । तयोक्तः स भरद्वाजो ऽसुरनिराकरणार्थं केनचिन्मन्त्रेणाग्निम् 'उदह्वयत्' उच्चध्वनिनाह्वानं कृतवान् ॥

त मिमं मन्त्रं दर्शयति – "एह्यू षु ब्रवाणि ते ऽग्न इत्थेतरा गिर इत्यसुर्या ह वा इतरा गिरः"–इति । हे अग्ने ! 'एहि' आगच्छैव । 'ते' तव 'सु ब्रवाणि' शोभनं काव्यं कथयानि । 'इतराः' देववाक्यार्थव्यतिरिक्ताः 'गिरः' असुरवाचः 'इत्था' इत्थ मनेन प्रकारेण, मुत्पन्नाः स्युरित्यादिति शेषः । अस्मिन्मन्त्रे ( सं० ६.१६.१. ) इतराशब्दार्थं दर्शयति—'असुर्या ह वा इतरा गिरः'–इति । असुरेभ्यो हिताः 'असुर्याः', ताश्च गिरः देववाक्यादितराः, देवविरोधिन्य इत्यर्थः ॥

तथाग्निवाक्यं दर्शयति —"सो ऽग्निरुपोत्तिष्ठन्नेव मब्रवीत्किंस्विदेव मह्यं कृशो दीर्घः पलितो वक्ष्यतीति"–इति । भरद्वाजेनाहूतो योऽय मग्निः 'सोऽग्निः' तत्समीपं प्रत्यागन्तु मुत्तिष्ठन्नेव मब्रवीत्,— 'मह्यम्' अग्नये स ऋषिः 'किंस्विदेव' किन्नाम वक्ष्यति, कृशो दीर्घः पलित इति ॥

ऋषिविशेषणानि तानि च स्पष्टीकरोति— "भरद्वाजो ह वै कृशो दीर्घः पलित आस"–इति । स्पष्टोऽर्थः ॥

किंस्वित्पलितो वक्ष्यतीत्यग्निना पृष्टस्य भरद्वाजस्योत्तरं दर्शयति— "सो ऽब्रवीदिमे वा असुरा उक्थेषु श्रितास्तान्वो न कश्चन पश्यतीति"–इति । 'सः' भरद्वाजो ऽग्निं प्रत्येव मब्रवीत्,— 'इमे वा असुरा उक्थेषु श्रितास्तान्वो न कश्चन पश्यतीति'। पूर्ववद् व्याख्येयम् ॥

अथोक्थस्तोत्रस्य साधनभूतं 'साकमश्व'-नामकं साम यदस्ति, तदीयं नाम निर्ब्रूते—"तानग्निरश्वो भूत्वाभ्यत्यद्रवद्, यदग्निरश्वो भूत्वाभ्यत्यद्रवत्तत्साकमश्वं सामाभवत्, तत्साकमश्वस्य साकमश्वत्वम्"-इति। सोऽग्निर्भरद्वाजस्योत्तरं श्रुत्वा तत ऊर्ध्वं स्वय मश्वाकारो भूत्वा 'तान्' असुरान् 'अभि' लक्ष्य 'अद्रवत्' अतिशयेनागच्छत्; असुराणा मुपरि वेगवन्त मात्मरूप मश्वं प्रवर्त्यासुरान् मारितवानित्यर्थः। यस्मात् स्वय मश्वो भूत्वा तैरसुरैः साकं युद्धं कृत्वा जितवान्, तस्मादेतद्वृत्तान्तसूचनाय प्रवृत्तायाम् "एह्यू षु ब्रवाणि ते"-इत्यादिकाया मृचि (छ०आ० १.१.१.७.) उत्पन्नस्य साम्नः (ग्रे०गा०१.१.१४.) साकमश्व मिति नाम सम्पन्नम् * ॥

तस्य साम्न उक्थस्तोत्रनिष्पादकत्वं विधत्ते—"तदाहुः साकमश्वेनोक्थानि प्रणयेदप्रणीतानि वाव तान्युक्थानि यान्यन्यत्र साकमश्वादिति"-इति। 'तत्' तत्र साकमश्वविषये प्रयोगाभिज्ञा एव माहुः,—साकमश्वनामकेन साम्ना स्तोत्राण्युक्थनामकानि प्रणयेत् †; साकमश्वादन्यत्र सामान्तरेण यान्युक्थानि स्तोत्राणि प्रणीयन्ते, तान्यप्रणीतान्येव भवन्ति। तस्मादिद मेव सामोक्थस्तोत्रनिष्पादकम् ‡ ॥

पक्षान्तरं विधत्ते—"प्रमंहिष्ठीयेन प्रणयेदित्याहुः; प्रमंहिष्ठीयेन वै देवा असुरानुक्थेभ्यः प्राणुदन्त"-इति। "प्र मंहिष्ठाय गायत"-इत्यस्या मृचि (छ०आ०२.१.२.१.) उत्पन्नं साम

---

* नामविधिः आ० ब्रा० १.२१।

† उ० आ० १,१.२१.१—२; ऊ० गा० १.१.१५।

‡ "तस्मात् साकमश्वेनोक्थानि प्रणयन्ति"-इत्यादि विधायकं ब्राह्मणम् (ता०८.८.)।

'प्रमंहिष्ठीयम्' ( गे०गा०३.१.२६. ); तेन साम्नोक्थस्तोत्राणि * निष्पादयेत्। उक्थेष्वाश्रितानसुरान् देवा एतेन साम्ना उक्थेभ्यो निराकृतवन्तः ॥

एतयोः साम्नोरैच्छिकविकल्पं दर्शयति—"तत्राहैव प्रमंहिष्ठीयेन नयेत् प्र साकमश्वेन"–इति। 'अह'–इत्ययं शब्दोऽन्यत्र निषेधार्थोऽप्यत्र विकल्पार्थः; निपातानामनेकार्थत्वात्। तान्युक्थस्तोत्राणि 'प्रमंहिष्ठीयेन' साम्ना प्रणयेत्, 'अहैव' अथवा 'साकमश्वेन' साम्ना प्रणयेत् ॥ ५ ( ४९ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां पञ्चमाध्याये पञ्चमः खण्डः ॥ ५ ( ४९ ) ॥

---

॥ अथ षष्ठः खण्डः ॥

ते वा असुरा मैत्रावरुणस्योक्थ मश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितो ऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्वरुणस्तस्मादैन्द्रावरुणं; मैत्रावरुणस्तृतीयसवने शंसतीन्द्रश्च हि तान्वरुणश्च ततो नुदेतां ते वै ततो ऽपहता असुरा ब्राह्मणाच्छंसिन उक्थ मश्रयन्त सो ऽब्रवीदिन्द्रः कश्चाहं चेमानितो

* उ० आ० २.२,१७.१,२; ऊ० गा० २.२.५। नामविधिः—आ० ब्रा० १.१२। विधायकं ब्राह्मणम्—ता० ब्रा० १२.६।

ऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद् बृहस्पतिस्तस्मा-
दैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसतीन्द्रश्च हि तान् बृहस्पतिश्च ततो नुदेतां ते वै ततो ऽपहता असुरा अच्छावाकस्योक्थ मश्रयन्त सो ऽब्रवीदिन्द्रः कश्चाहं चेमानितो ऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्विष्णुस्तस्मादैन्द्रावैष्णव मच्छावाकस्तृतीयसवने शंसतीन्द्रश्च हि तान्विष्णुश्च ततो नुदेतां द्वन्द्व मिन्द्रेण देवताः शस्यन्ते द्वन्द्वं वै मिथुनं तस्माद् द्वन्द्वान्मिथुनं प्र जायते प्रजात्यै प्र जायते प्रजया पशुभिर्य एवं वेदाथ हैते पोत्रीयाश्च * नेष्ट्रीयाश्च † चत्वार ऋतुयाजाः षळ् ऋचः सा विराड् दशिनी तद्विराजि यज्ञं दशिन्यां प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति ॥ ६ ( ५० ) ॥

॥इत्यैतरेयब्राह्मणे तृतीयपञ्चिकायां पञ्चमोऽध्यायः॥

उक्थस्तोत्रेषु सामविशेषं विधाय उक्थशस्त्रेषु सूक्तविशेषान् विधातु मादौ मैत्रावरुणस्य शस्त्रे किञ्चित् सूक्तं विधत्ते— "ते वा असुरा मैत्रावरुणस्योक्थ मश्रयन्त ; सोऽब्रवीदिन्द्रः कश्चाहं चेमानितो ऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद् वरुणस्तस्मादैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसतीन्द्रश्च हि तान्वरुणश्च ततो

* "पोत्रियाश्च" क, टी॰ ग, टी॰ घ। † "नेष्ट्रियाश्च" टी॰ घ।

नुदेताम्''-इति। उक्थ्यस्य क्रतोरग्निष्टोमविकृतित्वात्* अतिदिष्ट मग्निष्टोमप्रयोग मनुष्ठाय तत ऊर्द्ध मुक्थ्यपर्य्यायास्त्रयोऽनुष्ठेयाः। तथा चापस्तम्ब आह— "उक्थ्यश्चेदग्निष्टोमचमसानुन्नयंस्त्रिभ्य-श्चमसगणेभ्यो राजान मति रेचयति"-इति (श्रौ० १४.१.१६.)। तत्र प्रथमचमसगणे मैत्रावरुणस्य यच्छस्त्र मस्ति, उक्थस्तोत्रेषु साम्ना निराकृतास्त एव असुराः 'इदं' मैत्रावरुणशस्त्र मश्रयन्त। 'तत्' तदानीं तत्रावस्थितः स इन्द्र इतरदेवान् प्रत्येव मब्रवीत्,— असुराणा मपनोदने मम सहायो ऽपेक्षितः, ततो हे देवाः! युष्माकं मध्ये कश्चाहं च 'इमान्' असुरान् 'इतः' मैत्रावरुणशस्त्रात् 'नोत्स्यावहै' अपनोदनं करिष्याव इति। देवेष्ववस्थितो वरुणः 'अहं च' इत्यब्रवीत्; हे इन्द्र! त्वं चाहं चेत्यर्थः। यस्मादेवं तस्मादुभयोर्मेलनेन तेषा मसुराणा मपनोदनार्थम् 'ऐन्द्रावरुणं' सूक्तं तृतीयसवने 'मैत्रावरुणः' एतन्नामक ऋत्विक् शंसेत्। "इन्द्रा-वरुणा युव मध्वराय नः"— इत्येतदृग्वर्ग सूक्तम् (सं ७. ८२.) ऐन्द्रावरुणम्; तेन तुष्टः इन्द्रश्च वरुणश्च 'तान्' असुरान् 'ततः' शस्त्रात् 'अप नुदेतां' निराकुर्य्याताम्॥

द्वितीये चमसगणे किञ्चित्सूक्तद्वयं विधत्ते,— "ते वै ततो ऽपहता असुरा ब्राह्मणाच्छंसिन उक्थ मश्रयन्त; सो ऽब्रवीदिन्द्रः कश्चाहं चेमानितो ऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद् बृहस्पति-स्तस्मादैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसतीन्द्रश्च हि तान् बृहस्पतिश्च ततो नुदेताम्"-इति। 'ततः' मैत्रावरुण-शस्त्रान्निराकृता असुरा ब्राह्मणाच्छंसिनः शस्त्र माश्रितवन्तः।

---

* तदुक्त मापस्तम्बेन—"उक्थ्यः षोडश्यतिरात्रो ऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकाराः। ०—०। तेषा मग्निष्टोमवत् कल्पः"-इति १४. १. १, ३।

"उदप्रुतो न वयो रक्षमाणाः"-इत्येतद् बृहस्पतिदेवताकं द्वादशर्चं सूक्तं ( सं० १०.६८. ), "अच्छा म इन्द्रं मतयः स्वर्विदः"-इति एकादशर्चं मैन्द्रं सूक्तम् ( सं० १०.४३. ); तदुभयं मिलितं सदैन्द्राबार्हस्पत्यं सम्पद्यते। तदेतद् ब्राह्मणाच्छंसी ब्रूयात्। अन्यत् पूर्ववद् व्याख्येयम् ॥

तृतीयचमसगणे सूक्तं विधत्ते--"ते वै ततो ऽपहता असुरा अच्छावाकस्योक्थ मश्रयन्त ; सो ऽब्रवीदिन्द्रः कश्चाहं चेमानितो ऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्विष्णुस्तस्मादैन्द्रावैष्णव मच्छावाकस्तृतीयसवने शंसतीन्द्रश्च हि तान् विष्णुश्च ततो नुदेताम्"-इति। "सं वां कर्मणा स मिषा"-इत्यष्टर्चं मैन्द्रावैष्णवं सूक्तम् ( सं० ६. ६९. )। अन्यत् पूर्ववद् व्याख्येयम् ॥

सूक्तानां द्विदेवताकत्वं प्रशंसति— "द्वन्द्व मिन्द्रेण देवताः शस्यन्ते ; द्वन्द्वं वै मिथुनं, तस्माद् द्वन्द्वान्मिथुनं प्र जायते प्रजात्यै" –इति। इन्द्रेण सह 'द्वन्द्वं' युग्मं भूत्वा वरुण-बृहस्पति-विष्णुदेवताः क्रमेण शस्यन्ते। द्वन्द्वं च लोके स्त्रीपुरुषरूपं 'मिथुनम्' तादृशान्मिथुनात् अपत्यरूपं 'मिथुनं' प्र जायते। ततो द्वन्द्वशंसनं यजमानस्य प्रजात्यै भवति। वेदनं प्रशंसति— "प्र जायते प्रजया पशुभिर्य एवं वेद"-इति ॥

शस्त्रिणां त्रयाणां होत्रकाणां * सूक्तानि विधाय, पोतुर्नेष्टुश्च मन्त्रान्तराणि विधत्ते — "अथ हैते पोत्रीयाश्च नेष्ट्रीयाश्च चत्वार ऋतुयाजाः षळ् ऋचः"-इति। प्रैषयन्ये पञ्चमे सूक्ते "होता यक्षत्"-इत्यादिकौ द्वितीयाष्टमौ मन्त्रौ पोतुर्द्वावृतुयाजौ, तथा तत्रैव प्रैषसूक्ते तृतीयनवमौ मन्त्रौ नेष्टुर्द्वावृतुयाजौ ; एवं चत्वार

* "प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रकाः"-इति आश्व०श्रौ०५.१.१०।

ऋतुयाजाः ; ते मिलित्वा पोतृसम्बन्धान्नेष्टृसम्बन्धाच्च 'पोत्रीयाः नेष्ट्रीयाश्च' भवन्ति। तथा प्रस्थितयाज्याः पोतुस्तिस्र ऋचः, नेष्टुस्तिस्र ऋचः ; इत्येवं 'षळ् ऋचः' भवन्ति * ॥

तदेतन्मन्त्रदशकं प्रशंसति— "सा विराड् दशिनी, तद्विराजि यज्ञं दशिन्यां प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति"—इति। 'सा' पूर्वोक्ता मन्त्रसमष्टिः 'दशिनी' दशसङ्ख्यायुक्ता सती विराट् छन्दः सम्पद्यते ; "दशाक्षरा विराट्"—इतिश्रुत्यन्तरात्। 'तत्' तेन दशसम्बयोगेण 'दशिन्यां' दशसङ्ख्योपेतायां विराजि यज्ञं ऋत्विजः प्रतिष्ठापयन्ति †। अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ६ (५०) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां पञ्चमाध्याये
षष्ठः खण्डः ॥ ६ ( ५० ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादिशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायाः पञ्चमोऽध्यायः ॥

---

* उक्थ्यस्याग्निष्टोमविकृतित्वात् अग्निष्टोमे विहितानि प्रायः सर्वाण्येवाङ्गकार्याण्यत्रातिदिश्यन्ते, तदपवादभूता विशेषविधय एवेह पञ्चमषष्ठखण्डयोः समाम्नाताः। तथाश्वलायनेनापि "उक्थ्ये तु हीनकाणाम्। ०—०। इत्यन्त उक्थ्यः"—इति (श्रौ० ६.१.) उक्थ्याश्रिता विशेषविधय एवोक्ताः।

† 'अग्निष्टोमं वै'—इत्याद्यारब्धमुक्थ्यक्रतुप्रकरणमिहैव समाप्तम् ( २३५—२४३पृ० ) "उक्थ्येन पशुकामो यजेत"—इति तु आप० श्रौ० १४. १. २।

अह्नोक्थ मेकादश[१] । देवविशस्त्रयोदश[२] । सोमो वै राजामुष्मिंश्चतुर्दश[३] । देवा वा असुरैः षट्[४] । यज्ञो वै देवेभ्यः षट्[५] ॥ ३ * ॥

अह्नोक्थं, सौर्या वै, इन्द्रो वै, वैश्वदेवं शंसति, इति नु दश ॥ ३ † ॥

॥ इति तृतीयपञ्चिका समाप्ता ॥

---

*, † १भा० २१६ पृ० टीप्पनीदयं द्रष्टव्यम् ।

# ॥ ऐतरेयब्राह्मणम् ॥

## ॥ अथ चतुर्थपञ्चिका ॥

(तत्र)

### ॥ प्रथमाध्यायस्य प्रथमः खण्डः ॥



॥ ॐ ॥ देवा वै प्रथमेनाह्नेन्द्राय वज्रं समभरंस्तं द्वितीयेनाह्नासिञ्चंस्तृतीयेनाह्ना प्रायच्छंस्तं चतुर्थेऽहन् प्राहरत् तस्माच्चतुर्थेऽहन् षोळशिनं शंसति वज्रो वा एष यत् षोळशी तद्यच्चतुर्थेऽहन् षोळशिनं शंसति वज्र मेव तत्प्र हरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै वज्रो वै षोळशी पशव उक्थानि तं परस्तादुक्थानां पर्यस्य शंसति तं यत्परस्तादुक्थानां पर्यस्य शंसति वज्रेणैव तत् षोळशिना पशून् परि गच्छति तस्मात्पशवो वज्रेणैव षोळशिना परिगता मनुष्यानभ्युपावर्त्तन्ते तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा परिगत एव स्वय मात्मनेऽत एव वाचाभिषिद्ध उपावर्त्तते वज्र मेव षोळशिनं पश्यन्वज्रेणैव षोळशिना परिगतो वाग्घि वज्रो वाक् षोळशी

तदाहुः किं षोळशिनः षोळशित्व मिति षोळश * स्तोत्राणां षोळश † शस्त्राणां षोळशभिरक्षरै रादत्ते षोळशभिः प्र णौति षोळशपदां निविदं दधाति तत् षोळशिनः षोळशित्वं द्वे वा अक्षरे अतिरिच्येते षोळशिनोऽनुष्टुभ मभिसम्पन्नस्य वाचो वाव तौ स्तनौ सत्यानृते वाव ते अवत्येनं सत्यं नैन मनृतं हिनस्ति य एवं वेद ॥ १ ॥

संस्थेष्टीनां वाग्यमश्चर्त्विजां च
यागा देवोदेविकानां विशेषाः ।
संस्थोक्थ्यस्य स्तोत्रशस्त्रप्रक्लृप्तिः
शस्त्राण्याहुः शस्त्रिणां होत्रकाणाम् ॥

ज्योतिष्टोमभेद उक्थ्यः समापितः, अथ षोड़शी ‡ उच्यते; तद्विषयं शंसनं विधत्ते— "देवा वै प्रथमेनाह्नेन्द्राय वज्रं सम-भरंस्तं द्वितीयेनाह्नासिञ्चंस्तृतीयेनाह्ना प्रायच्छंस्तं चतुर्थेऽहन् प्राहरत्; तस्माच्चतुर्थेऽहन् षोळशिनं शंसति"—इति। अग्निष्टो-मोक्थ्यादिसंस्थाविशेषः § स्वतन्त्रक्रतुत्वाद् ‖ यथा पृथगनुष्ठातुं योग्यस्तथा षोड़शी न ¶ स्वतन्त्रः क्रतुः। तथा च शाखान्तरे पठन्ति— "न वै षोड़शी नाम यज्ञोऽस्ति; यद्वाव षोड़शं स्तोत्रं

*, † "षोळशः" ग, घ, ङ, ज, झ, ट।

‡ "षोळशी" क, घ, ङ,। एव मन्यत्रापि तत्र सर्वत्र भाव्यं।

§ "अग्निष्टोमोक्थ्यादिसंस्था संस्थाविशेषः" क, घ, ङ।

‖, ¶, "स्वतन्त्रः क्रतुत्वात्"—इति पाठो मद्दृष्टसर्वपुस्तकेषु; "न"—इति च पदं न दृश्यते क्वाप्यादर्शे, तदत्र मञ्चतपादः सुधीभिः स्वबुद्ध्या निर्णेतव्यः।

षोड़शᳩ शस्त्रं तेन षोड़शी"-इति ( तै० सं० ६.६.११.१.) । तथा सत्ययं संस्थाविशेषः पृष्ठ्यषड़हचतुर्थेऽहनि प्रयुज्यते, अतस्तत्रैवै-तच्छंसनविधानम्। देवाः पुरा पृष्ठ्यषड़हे 'प्रथमेनाह्ना' प्रथम-दिवसनिष्पाद्येन सोमप्रयोगेण इन्द्रार्थं वज्रं 'समभरन्' सम्पादित-वन्तः। अत्र सर्वत्राहःशब्दोऽह्ना निष्पाद्यं सोमप्रयोग मभिधत्ते। तत्र सम्पादितं वज्रं द्वितीयेनाह्ना 'असिञ्चन्'। सेचनं नाम लोह-मयानां शङ्कुकुठारादीनां तीक्ष्णत्वाय दार्ढ्याय चाग्नौ प्रताप्य यथोचितं तोरे स्थापनम्; तदिदं सेचनं वज्रे कृतवन्तः। कृत्वा च तृतीयेनाह्ना 'तं' वज्र मिन्द्राय 'प्रायच्छन्' दत्तवन्तः। स चेन्द्रस्तं वज्रं चतुर्थे ऽहनि शत्रोरुपरि प्राहरत्। तस्मात्पृष्ठ्यषड़-हस्य चतुर्थमहःप्रयोगे (?) षोड़शिनं शस्त्रं शंसेत्। "असावि सोम इन्द्र ते"-इत्यादिकं ( सं० १.८४.१—२०.) षोड़श्याख्यं शस्त्रम्। तथा चाश्वलायन आह— "अथ षोड़श्यसावि सोम इन्द्र त इति स्तोत्रियानुरूपौ"-इति ( श्रौ० ६.२.१,२. ) ॥

षोड़शिशंसनं प्रशंसति— "वज्रो वा एष यत् षोळशी; तद्य-चतुर्थेऽहन् षोळशिनं शंसति, वज्र मेव तत्प्रहरति, द्विषते भ्रातृ-व्याय वधं, योऽस्य स्तृत्यस्तस्मै स्तर्त्तवै"-इति। षोड़शिनो वज्र-स्वरूपत्वाद् 'यः' पुमान् 'अस्य' यजमानस्य 'स्तृत्यः' हिंसनीयः 'तस्मै स्तर्त्तवै' तस्य हिंसार्थं वधहेतुं वज्र मेव भ्रातृव्याय प्रहरति ॥

तस्य शस्त्रस्य कालं विधत्ते— "वज्रो वै षोळशी पशव उक्थानि; तं परस्तादुक्थानां पर्यस्य शंसति"-इति। यथा पूर्वत्राग्निष्टोमप्रयुक्तानां द्वादशशस्त्राणा मुपरि त्रीणि उक्थ-शस्त्राणि प्रयुक्तानि, तथात्रापि त्रयाणा मुक्थशस्त्राणां 'परस्तात्' उपरि पर्यस्य षोड़शिन मवशंसेत् ॥

उक्थानां पशुरूपत्वात् षोडशिनो वज्ररूपत्वाच्चायं क्रम उपपन्नः ; ता मेता मुपपत्तिं प्रकटयति— "तं यत्परस्तादुक्थानां पर्यस्य शंसति, वज्रेणैव तत् षोळशिना पशून् परि गच्छति; तस्मात् पशवो वज्रेणैव षोळशिना परिगता मनुष्यानभ्युपावर्त्तन्ते; तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा परिगत एव स्वय मात्मनेऽत एव वाचाभिषिद्ध उपावर्त्तते, वज्र मेव षोळशिनं पश्यन् वज्रेणैव षोळशिना परिगतो वाग्घि वज्रो वाक् षोळशी"-इति। 'तं' षोडशिनं 'यद्' यस्मात्कारणादुक्थशस्त्राणां परस्तात् पर्यस्य शंसति, 'तत्' तेन शंसनेन षोड़शिरूपेण वज्रेणैवोक्तरूपान् पशून् 'परि गच्छति' परितो नियमेन याति। 'तस्मात्' लोकेऽप्यरण्ये सञ्चारार्थं गताः पशवः षोळशिना वज्रेणैव नियमितत्वात्, सायं काले मनुष्यान् अभिलक्ष्य तत्तद्गृहेषु उपावर्त्तन्ते; अन्यथा तस्मादरण्यादरण्यान्तर मेव गच्छेयुः। न केवलं तृणचारणार्थं मरण्ये गतानां सायं काले पुनरागमनाय वज्ररूपेण नियमितत्वं, किं तर्हि ग्रामेष्वपि तस्मात् षोड़शिवज्रनियमितत्वादश्वपुरुषगोहस्त्यादीना मन्यतमः 'स्वय मेव' परप्रेरणा मन्तरेणैव 'परिगतः' नियमितः, आत्मना स्वयं बन्धनाय तत्स्थाने समागच्छति। किञ्च 'अत एव' षोड़शिवज्रनियमितत्वादेव 'वाचा' शीघ्र मागच्छेत्यादिवाक्येन 'अभिषिद्धः' अभितो बद्धः पुरुषो वर्त्तते। यथा रज्वा बद्धो बलीवर्द आनीयमान आगच्छति, तद्वद्वाचा बद्धः पुरुषः। अत एवारण्यकाण्डे वक्ष्यति—"तस्य वाक् तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्"-इति (२.१. ६.)। वाङ्मात्रेणागमने कारण मुच्यते,— षोड़शिनं वाग्वज्ररूप मेव पश्यन्, षोड़शिना वज्रेणैव नियमितो भवति, तदा तस्य

वज्रत्वम् ; षोड़शी च वाग्रूपैः सूक्तादिभिर्निष्पन्नत्वात् स्वय मपि वाग्रूपो भवति, वाचश्च वज्रत्वं लोके प्रसिद्धम् ; राजादीनां भर्त्सनादौ वज्रप्रहारेणेव चित्ते व्यथोदयात् । तदेव सर्वनियामकत्वात षोड़शिनः प्रशस्तत्वं सिद्धम् ॥

यदुक्तं 'परस्तादुक्थानां पर्यस्य शंसति'-इति, तच्चोक्थशस्त्रेभ्य उत्तरकालावस्थान मेव 'पर्यस्य'-इतिशब्देन विवक्षित मिति व्याख्यातम् ; अथवोत्तरकालस्य परस्तादितिशब्देनैव सिद्धत्वात् पर्यस्येतिशब्देन शस्त्रगताना मृचा मध्ययनपाठादिपर्यासोऽभिधीयते । द्विविधं षोड़शिशस्त्रम्,— विहृत मविहृतं च । तत्राविहृतं नामाध्ययनक्रमेणैव शंसनम्, विहृतन्तु ऋचां परस्परव्यतिषङ्गः । स तु आश्वलायनेन दर्शितः— "ऊर्द्धं स्तोत्रियानुरूपाभ्यां तदेव शस्त्रं विहरेत्, पादान् व्यवधायार्द्धर्चशः शंसेत्, पूर्वासां पूर्वाणि पदानि, गायत्रः पङ्क्तिभिः, पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रणुयात्"-इति ( श्रौ० ६.२.२-६. ) । तदेतदुदाहृत्य प्रदर्श्यते—"इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे"-इत्येषा गायत्री ( सं० १.१६.२. ), "सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि । प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरीम्"-इति ( सं० १.८२.३. ) । योऽय मध्ययनपाठः सोऽविहृतः । विहृतपाठस्तूच्यते—' 'इमा धाना घृतस्नुवः सुसंदृशं त्वा वयं हरी इहोप वक्षतो मघवन् वन्दिषीमहीन्द्रं सुखतमे रथे प्र नूनं पूर्णवन्धुरः । स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरीम्"-इति । अनेन प्रकारेण विपर्यस्य शंसेत् ।

अथ प्रश्नोत्तराभ्यां षोड़शिशब्दं निर्वक्ति— "तदाहुः किं

षोळशिनः षोळशित्व मिति ? षोळश स्तोत्राणां षोळश शस्त्राणां, षोळशभिरक्षरैरादत्ते षोळशभिः प्रणौति षोळशपदां निविदं दधाति, तत् षोळशिनः षोळशित्वम्”–इति। षोड़शिशब्दो ग्रहविशेषं स्तोत्रविशेषं शस्त्रविशेषं चाभिधत्ते *। तेषा मेकैकस्वरूपवतां षोड़शशब्दवाच्यत्व मयुक्तम् ? तच्छब्दप्रवृत्तौ निमित्तान्तरं तु न पश्याम इति ब्रह्मवादिना मभिप्रायः। षोड़शसङ्ख्यायुक्तत्वात् षोड़शित्व मित्युत्तरम्। तत्र कथ मिति, तदुच्यते—अग्निष्टोमसंस्थो ज्योतिष्टोमः द्वादशस्तोत्त्रोपेतः। तथा च शाखान्तरे श्रूयते—“द्वादशाग्निष्टोमस्य स्तोत्राणि”–इति (ता० ब्रा० ६.३.३.)। तद्गर्भित उक्थ्यसंस्थस्त्रिभिः स्तोत्रैरतिरिच्यते; तस्मात् पञ्चदश स्तोत्राणि भवन्ति। तद्गर्भितः षोड़शिसंस्थ एकेन स्तोत्रेणातिरिच्यते; ततः स्तोत्राणां मध्ये एतत्स्तोत्रप्रयोगः षोड़शसङ्ख्यापूरको भवति। तथा शस्त्राणां मध्येऽप्येतच्छस्त्रप्रयोगः षोड़शसङ्ख्यापूरकः। किञ्चास्मिञ्छस्त्रे होता सम्पादितायाः अनुष्टुभः पूर्वार्द्धगतानि षोड़शाक्षराण्युच्चार्य्य अवस्यति, उत्तरार्द्धगतानि षोड़शाक्षराण्युच्चार्य्य ‘प्रणौति’ प्रणव मुच्चारयति। किञ्च “अस्य मदे जरितः”–इत्यादिका षोड़शपदोपेता निवित् (निवि० ११.१—१६.) शस्त्रमध्ये प्रक्षिप्यते। अतो बहुधा षोड़शसङ्ख्यायोगात् अयं प्रयोगः षोड़शिनामोपेतः॥

प्रकारान्तरेण षोड़शिनं प्रशंसति— “द्वे वा अक्षरे अतिरिच्येते षोड़शिनोऽनुष्टुभ मभिसम्पन्नस्य वाचो वाव तौ स्तनौ, सत्यानृते वाव ते”–इति। योऽयं षोड़शी, सोऽयं द्व्यक्षराधिका मनुष्टुभं यदा सम्प्राप्तो भवति, तदानीं द्वे एवाक्षरे अधिके भवतः।

* “एतत् वर्ध मह क्रियते यद्ग्रहः स्तोत्रं शस्त्रं”–इति शत० ब्रा० ८.१.३.४।

तथा हि सूत्रकारः—"विहृतस्य"-इत्युपक्रम्य शाखान्तरीया मिन्द्र जुषस्वेत्यादिका ऋचः पठितवान् ( आश्व० श्रौ० ६.३.१. )। तस्याः पूर्वस्मिन्नर्द्धर्चे षोड़शाक्षराणि, उत्तरे ऽर्द्धर्चे अष्टादश; ततो ऽक्षरद्वयाधिक्यम्। "वाग् वा अनुष्टुप्"-इतिश्रुत्यन्तरेण ( ६.५.१०. ) तस्या वाचो ऽनुष्टुबवयवत्वात्तदात्मिकाया वाग्देवतायाः स्त्रीरूपाया अधिकाक्षररूपौ 'स्तनौ' सम्पद्येते;—यदेतत् लोके सत्यवदनम्, यच्चानृतवदनम्, तदुभय मपि वाचः स्तनरूपम्; अतोऽधिकाक्षरायाः सत्यानृतरूपत्वम्॥

उक्तार्थवेदनं प्रशंसति— "अवत्येनं सत्यं नैन मनृतं हिनस्ति य एवं वेद"-इति। 'एनं' वेदितारं सत्यवाक् पालयति, सुकृतोत्पादकत्वात्; अनृतवाक् न हिनस्ति, दुरितस्यानुदयात्॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां प्रथमाध्याये
( षोड़शाध्याये ) प्रथमः खण्डः॥ १॥

———

॥ अथ द्वितीयः खण्डः॥

गौरिवीतं षोळशिसाम कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं गौरिवीतं तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गौरिवीतं षोळशिसाम कुरुते नानदं षोळशिसाम कर्त्तव्य मित्याहु-

रिन्द्रो वै वृत्राय वज्र मुदयच्छत्त मस्मै प्राहरत्त मभ्यहनत्सोऽभिहतो व्यनदद्यद् व्यनदत्तं नानदं सामाभवत्तन्नानदस्य नानदत्व मभ्रातृव्यं वा एतद् भ्रातृव्यहा साम यन्नानद मभ्रातृव्यो भ्रातृव्यहा भवति य एवं विद्वान्नानदं षोळशिसाम कुरुते तद्यदि नानदं कुर्युरविहृतः षोळशी शंस्तव्योऽविहृतासु हि तासु स्तुवते यदि गोरिवीतं विहृतः षोळशी शंस्तव्योऽविहृतासु हि तासु स्तुवते ॥ २ ॥

षोड़शिशस्त्रं विधाय षोड़शिस्तोत्रनिष्पादकं सामविशेषं विधत्ते— "गौरिवीतं षोळशिसाम कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं गौरिवीतं तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गौरिवीतं षोळशिसाम कुरुते"—इति। केनचिन्महर्षिणा गौरिवीतनाम्ना दृष्टत्वात्सामापि गौरिवीतनामकम्। तत्तु "अभि प्र गोपतिं गिरा"—इत्यस्या मृचि उत्पन्नम्*; तदत्र षोळशिस्तोत्रे साम कुर्वीत †। 'तेजः' शरीरकान्तिः। 'ब्रह्मवर्चसं' श्रुताध्ययनसम्पत्तिः॥

सामान्तरं विधत्ते— "नानदं षोळशिसाम कर्तव्य मित्याहुरिन्द्रो वै वृत्राय वज्र मुदयच्छत्, त मस्मै प्राहरत्, त मभ्यहनत्; सोऽभिहतो व्यनदद्; यद् व्यनदत्तन्नानदं सामाभवत्, तन्नानदस्य नानदत्वम्; अभ्रातृव्यं वा एतद् भ्रातृव्यहा साम यन्नानदम्"—

* ऋ० आ० २.२.३. ४ ; गे० गा० ५.१. २० ।

† ऊ० आ० १.१.२२,१—२ ; ऊ० गा० ३.१.२ ; ता० ब्रा० १२, १३.९ ।

इति । नानदाख्यं किञ्चित् साम ; तत्तु "प्रत्यस्मै पिपीषते"-इत्यस्या मृचि उत्पन्नम्*, तदेतत्साम षोडशिस्तोत्रे† कर्त्तव्य मित्यन्ये केचिदाहुः‡ । तस्य नानदत्वं कथ मिति, तदुच्यते—वज्रप्रहारेणाभिहतो वृत्रो 'व्यनदत्' विशिष्ट मुच्चैर्ध्वनिं नादं कृतवान् । स च ध्वनिर्नानदसामाकारेण सम्पन्नः । ततो नादोत्पन्नत्वान्नानद मिति नाम । तत्साम भ्रातृव्यरहितम् ;— तत्परिशीलनवन्तः सर्वेऽपि मैत्री मेव प्रतिपद्यन्ते, न तु कश्चिदपि द्वेषम् । किञ्चैतत्साम 'भ्रातृव्यहा' पूर्वं विद्यमानस्य शत्रोर्घातकम् ॥

वेदनं प्रशंसति— "अभ्रातृव्यो भ्रातृव्यहा भवति य एवं विद्वान्नानदं षोळशिसाम कुरुते"-इति । गौरिवीतं नानदं वा सामेत्येवं पक्षद्वयं सम्पन्नम् § ॥

द्वयोः पक्षयोः शस्त्रविशेषव्यवस्थां विधत्ते— "तद्यदि नानदं कुर्युरविहृतः षोळशी शंस्तव्यो ऽविहृतासु हि तासु स्तुवते ; यदि गौरिवीतं विहृतः षोळशी शंस्तव्यो विहृतासु हि तासु स्तुवते"-इति । अविहृतरूपः परस्परव्यतिषङ्गरहितो यथाधीतपाठः ; सोऽयं नानदपक्षे कर्त्तव्यः । यतः सामगा अपि 'अविहृतासु' व्यतिषङ्गरहितासु नानदसाम्ना स्तुवते, तस्मादविहृतत्व मेवात्र योग्यम् ; "यथा वाव स्तोत्र मेवं शस्त्रम्"-इतिन्यायात् । गौरिवीतपक्षे शस्त्र मपि परस्परव्यतिषङ्गेण विहृतं पठनीयम् ;

---

* ऋ० आ० ४.२.२.१ ; गे० गा० ९.२.१३ ।

† उ० आ० १.१.१८.१—३ ; ऊ० गा० २. २. १८ ।

‡ "गौपालपुत्र उपोदितिर्नाम ऋषिरुवाच"-इति ता० ब्रा० १२. १३.११. सा० भा० ।

§ देशभेदेन चानयो[illegible] ख्यापिता (ता० ब्रा० १२.१३.११.) सा० भा० ।

सामगैः 'विहृतासु' व्यतिषक्तास्वृत्तु गौरिवीतसाम्ना सूय-मानत्वात् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां प्रथमाध्याये (षोड़शाध्याये) द्वितीयः खण्डः ॥ २ ॥

---

॥ अथ तृतीयः खण्डः ॥

अथातश्छन्दांस्येव व्यतिषजत्या त्वा वहन्तु हरय उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च व्यतिष-जति गायत्रो वै पुरुषः पाङ्क्ताः पशवः पुरुष मेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यद् गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ तेनो वाचोरूपा-दनुष्टुभोरूपाद्वज्ररूपान्नैति यदिन्द्र पृतनाज्ये ऽयन्त अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो बार्हताः पशवः पुरुष मेव तत्पशुभिर्व्यति-षजति पशुषु प्रतिष्ठापयति यदुष्णिक् च बृहती च ते द्वे अनुष्टुभौ तेनो वाचोरूपादनुष्टुभोरूपाद्वज्ररू-पान्नैत्या धूर्ष्वस्मै वृषन्वीर वृषक्रतुं जुषाण इति द्विपदां च त्रिष्टुभं च व्यतिषजति द्विपाद्वै पुरुषो वीर्यं त्रिष्टुप्पुरुष मेव तद्वीर्येण व्यतिषजति वीर्ये

प्रतिष्ठापयति तस्मात्पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमो यद्द्विपदा च विंशत्यक्षरा त्रिष्टुप् च ते द्वे अनुष्टुभौ तेनो वाचोरूपादनुष्टुभो रूपाद्वज्ररूपान्नैत्येष वृक्ष्ण प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यतिषजति द्विपाद्वै पुरुषो जागताः पशवः पुरुष मेव तत्पशुभिर्व्यति-षजति पशुषु प्रतिष्ठापयति तस्मात्पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य यद्द्विपदा च षोळशाक्षरा जगती च ते द्वे अनुष्टुभौ तेनो वाचोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैति त्रिकद्रु-केषु महिषो यवाशिरं प्रो ष्वस्मै पुरो रथ मित्यतिच्छ-न्दसः शंसति छन्दसां वै यो रसो ऽत्यक्षरत्सोऽतिच्छ-न्दस मभ्यत्यक्षरत्तदतिच्छन्दसो ऽतिच्छन्दस्त्वं सर्वेभ्यो वा एषच्छन्दोभ्यः सन्निर्मितो यत् षोळशी तद्य-दतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोळ-शिना राध्नोति य एवं वेद ॥ ३ ॥

अथ विहरणप्रकारं विधत्ते— "अथातश्छन्दांस्येव व्यतिष-जति; आ त्वा वहन्तु हरय, उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च व्यतिषजति ; गायत्रो वै पुरुषः, पाङ्क्ताः पशवः पुरुष मेव

तत्पशुभिर्व्यतिषजति, पशुषु प्रतिष्ठापयति यद्‌ गायत्री च पङ्क्तिश्च, ते द्वे अनुष्टुभौ, तेनो वाचोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैति"-इति। 'अथ' सामद्वयविधानानन्तरम्, 'अतः' गोरिवीतपक्षे विहृतस्यापेक्षितत्वात्, तदुच्यत इति शेषः। स्वस्वस्थानाद्विभज्यान्यत्र नयनं 'विहरणम्'। तच्च समानच्छन्दस्कयोरेव भवति, तद्व्यावृत्त्यर्थमुच्यते— 'छन्दांस्येव व्यतिषजति'-इति। परस्परविलक्षणानि छन्दांस्येव व्यतिषिक्तानि कुर्युरिति। तत्र कस्य छन्दसः केन छन्दसा सह व्यतिषङ्ग इति, तदेतदुदाहरणपूर्वकं प्रदर्श्यते— "आ त्वा वहन्तु"-इत्यादिकास्तिस्र ऋचः ( सं० १. १६. १-३. ) गायत्रीच्छन्दस्काः; "उपो षु"-इति ( सं० १.८२.१. ), "सुसन्दृशम्"-इति द्वे (सं०१.८२.३,४.); एतास्तिस्रः पङ्क्तिच्छन्दस्काः; ता उभयीः परस्परं व्यतिषजन्मिश्रयेत्। गायत्र्याः प्रथमपादमुक्त्वा तेन सह पङ्क्तेः प्रथमपादमुच्चारयेत्। सोऽयं प्रकारोऽस्माभिः पूर्वमेवोदाहृतः ( २४९ पृ० )। लोके 'पुरुषो गायत्रः' उपनीतेन गायत्र्या अनुष्ठेयत्वात्, 'पशवश्च पाङ्क्ताः' चतुर्भिः पादैर्मुखेन च पञ्चसङ्ख्योपेतत्वात्। तत्र गायत्रीपङ्क्त्योर्मेलनेन पुरुषस्य पशूनां च मेलनं भवति। अतः पुरुषं पशुषु प्रतिष्ठापयति। किं च तद्रूपेणैव कारणेन गायत्री च पङ्क्तिश्च मिलिते सत्येते द्वे अनुष्टुभौ सम्पद्येते; गायत्र्यास्त्रिपादत्वात्, पङ्क्तेश्च पञ्चपादत्वात्, मिलित्वाष्टानां पादानां विद्यमानत्वात्। 'तेनो' तेनैव मेलनेन कारणेनायं पुरुषो वाग्रूपादनुष्टुब्रूपाद्वज्ररूपाच्च 'नैति' कदाचिदपि वियुक्तो न भवति। शस्त्रस्याक्षरात्मकत्वेन वाग्रूपत्वम्, अष्टपादसम्पत्तावनुष्टुब्द्वयरूपत्वम्, षोडशिनः पश्वादिनियामकत्वेन वज्ररूपत्वम्; अतो नास्ति त्रिविधवियोगम्॥

छन्दोन्तरयोर्विहरणं विधत्ते— "यदिन्द्र पृतनाज्ये, ऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो बार्हताः पशवः, पुरुष मेव तत् पशुभिर्व्यतिषजति, पशुषु प्रतिष्ठापयति ; यदुष्णिक् च बृहती च ते द्वे अनुष्टुभौ, तेनो वाचोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैति"-इति । "यदिन्द्र"-इत्यादिकास्तिस्र उष्णिक्छन्दस्का ऋचः (सं० ८.१२.२५-२७.), "अयं ते अस्तु"-इत्यादिकास्तिस्रो बृहतीच्छन्दस्काः (सं० ३.४४.१-३.); उपनीतः पुरुषो व्याहृत्यक्षरचतुष्टयोपेतां चतुर्विंशत्यक्षरां गायत्रीं व्यतिषजति, उष्णिक् चाष्टाविंशत्यक्षरा ; ततः पुरुषस्यौष्णिहत्वं पशूनां बार्हतत्वम् । शाखान्तरे श्रुतम्— "छन्दांसि पशुष्वाजिमयुस्तान् बृहत्युदजयत् ; तस्माद्बार्हताः पशव उच्यन्ते"-इति (तै० सं० ५.३.२.३.) । बृहती च षट्त्रिंशदक्षरा, तस्या उष्णिग्योगे सति षष्ट्यक्षरसम्पत्तेरनुष्टुब्द्वयम् ॥

छन्दोन्तरयोर्विहरणं विधत्ते— "आ धूर्ष्वस्मै, ब्रह्मन्वीर ब्रह्मकृतिं जुषाण इति द्विपदां च त्रिष्टुभं च व्यतिषजति ; द्विपाद्वै पुरुषो वीर्यं त्रिष्टुप्पुरुष मेव तद्वीर्येण व्यतिषजति, वीर्ये प्रतिष्ठापयति ; तस्मात्पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमो यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप् च, ते द्वे अनुष्टुभौ, तेनो वाचोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैति"-इति । "आ धूर्ष्वस्मै"-इत्येषा (सं० ७.३४.४.) पादद्वयोपेता, "ब्रह्मन् वीर"-इत्येषा (सं० ७.२९.२.) त्रिष्टुप्छन्दस्का ; पुरुषस्य द्विपादत्वं प्रसिद्धम्, त्रिष्टुभो वीर्यहेतुत्वाद्वीर्यत्वम् ; तस्मादुभयमेलनेन पुरुषं वीर्ये प्रतिष्ठापयति । तस्मात् लोकेऽपि सर्वेषां द्विपदां चतुष्पदानां पशूनां मध्ये पुरुषस्य शक्त्याधिक्यात् पुरुषो वीर्ये प्रतिष्ठितः ।

द्विपदा चेयं विंशत्यक्षरा ; अष्टाक्षरे प्रथमे पादे संयुक्ताक्षरयोर्विभागेन पञ्चाक्षरत्वे सति दशसङ्ख्यापूर्त्तिः। एवं पञ्चाक्षरैस्त्रिष्टुभश्चतुर्णां पादानां सन्धानम्। त्रिष्टुप् चत्वारिंशदक्षरा। मिलित्वा चतुष्षष्टिसम्पत्त्यानुष्टुब्द्वयं सम्भवति ॥

छन्दोन्तरयोर्विहरणं विधत्ते— "एष ब्रह्म, प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यतिषजति; द्विपाद्वै पुरुषो जागताः पशवः, पुरुषमेव तत्पशुभिर्व्यतिषजति, पशुषु प्रतिष्ठापयति ; तस्मात् पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य; यदु द्विपदा च षोडशाक्षरा जगती च, ते द्वे अनुष्टुभौ, तेनो वाचोरूपादनुष्टुभोरूपाद्वज्ररूपान्नैति"–इति। "एष ब्रह्म"-इत्यादिकास्तिस्रो द्विपदाः, "प्र ते महे"–इत्यादिकास्तिस्रो जगत्यः ( सं० १०.९६.१–३. ) ; पशूनां जागतत्वं शाखान्तरे सोमाहरणकथायां श्रूयते— "सा पशुभिश्च दीक्षया चागच्छत् ; तस्माज्जगतीच्छन्दसां पशव्यतमा"–इति ( तै० सं० ६.१.६.२. ) ! यस्मात् मेलनेन पुरुषं पशुषु प्रतिष्ठापयति, तस्मादयं पुरुषः पशुषु प्रतिष्ठितः, तस्मिन् क्षीरादिकमत्ति च, 'एनान्' पशून् 'अधितिष्ठति' नियमयति च ; तस्मात् 'अस्य' पुरुषस्य वशे सर्वे पशवो वर्त्तन्ते। 'यदु' यस्मादेव कारणादियं द्विपदा षोड़शाक्षरा, जगती चाष्टाचत्वारिंशदक्षरा, ततो मिलित्वा चतुष्षष्टित्वादनुष्टुब्द्वयम् ॥

छन्दोन्तरसंयुक्ताः काश्चिदृचो विधत्ते— "त्रिकद्रुकेषु महिषो यवाशिरं, प्रो ष्वस्मै पुरो रथमित्यतिच्छन्दसः शंसति; छन्दसां वै यो रसोऽत्यक्षरत्सोऽतिच्छन्दसमभ्यत्यक्षरत्तदतिच्छन्दसोऽतिच्छन्दस्त्वं ; सर्वेभ्यो वा एष छन्दोभ्यः सन्निर्मितो यत् षोळशी, तद्यदतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते"–

इति । "त्रिकद्रुकेषु"-इतितृचे 'यास्तिस्रः ( सं० २.२२.१-३. ) ऋचस्ता अतिच्छन्दोयुक्ताः, तथा "प्रो ष्वस्मै"-इति ( सं० १०. १३३.१-३. ) तृचोऽपि; ता उभयीः शंसेत्। 'छन्दसां' गायत्र्या-दीनां यो 'रसः' सारः 'अत्यक्षरत्' अतिशयेनास्रवत्, तदानीं स रसोऽतिच्छन्दस मभिलक्ष्यातिशयेनास्रवत्। 'तत्' तस्माच्छन्दोरस-स्यातिशयेन स्रवणादतिच्छन्दस्त्वं नाम सम्पन्नम्। षोडशी चोक्तप्रकारेण सर्वेभ्यः छन्दोभ्यः सम्यक् निर्मितः; तस्माद् अतिच्छन्दसां शंसनेनायं होता 'एनं' यजमानं सर्वच्छन्दोभ्यो निर्मिमीते ॥ वेदनं प्रशंसति— "सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद"-इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां प्रथमाध्याये ( षोड़शाध्याये ) तृतीयः खण्डः ॥ ३ ॥

———

॥ अथ चतुर्थः खण्डः ॥

महानाम्नीना मुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयासौ लोक-स्तृतीया सर्वेभ्यो वा एष लोकेभ्यः सन्निर्मितो यत् षोळशी तद्यन्महानाम्नीना मुपसर्गानुप सृजति सर्वेभ्य एवैनं तल्लोकेभ्यः सन्निर्मिमीते सर्वेभ्यो लोकेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद

प्र प्र वस्त्रिष्टुभ मिष मर्चत प्रार्चत यो व्यतीँरफाणयदिति प्रज्ञाता अनुष्टुभः शंसति तद्यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात्ताहृक्तद्यत्प्रज्ञाता अनुष्टुभः शंसति स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्नेच्छन्दसां कृच्छ्रादवपद्या इत्यथ यः पाप्मान मप जिघांसुः स्याद्विहृतं षोळशिनं शंसयेद् व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्त मेवास्मै तत्पाप्मानं शमल मपहन्त्यप पाप्मानं हते य एवं वेदोद्यद् ब्रध्नस्य विष्टप मित्युत्तमया परि दधाति स्वर्गो वै लोको ब्रध्नस्य विष्टपं स्वर्ग मेव तल्लोकं यजमानं गमयत्यपाः पूर्वेषां हरिवः सुताना मिति यजति सर्वेभ्यो वा एष सवनेभ्यः सन्निर्मितो यत् षोळशी तद्यदपाः पूर्वेषां हरिवः सुताना मिति यजति पीतवद्वै प्रातस्सवनम् प्रातस्सवनादेवैनं तत्सन्निर्मिमीतेऽथो इदं सवनं केवलं त इति माध्यन्दिनं वै सवनं केवलं माध्यन्दिनादेवैनं तत्सवनात्सन्निर्मिमीते ममद्धि सोमं मधुमन्त मिन्द्रेति मद्वद्वै तृतीयसवनं तृतीयसवनादेवैनं तत्सन्निर्मिमीते सत्रा वृषञ्जठर आ वृषस्वेति वृषण्वद्वै षोळशिनो रूपं सर्वेभ्यो वा एष सव-

नेभ्यः सन्निर्मितो यत् षोळशी तद्यदपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्य एवैनं तत्सवनेभ्यः सन्निर्मिमीते सर्वेभ्यः सवनेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्यो वा एष छन्दोभ्यः सन्निर्मितो यत् षोळशी तद्यन्महानाम्नीनां पञ्चाक्षरानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद ॥ ४ ॥

अथ पूर्वोक्तानामतिच्छन्दसामनुष्टुप्सम्पादनाय मेलनं विधत्ते — "महानाम्नीनामुपसर्गानुपसृजति"-इति। "विदा मघवन्"-इत्यस्मिन्ननुवाके प्रोक्ता ऋचो 'महानाम्न्यः' (आर० ४.१. १-६.); तासां सम्बन्धिन उपसर्गाः पञ्चविधाः। ते चाश्वलायनेन दर्शिताः — "प्र चेतन, प्र चेतया, आ याहि पिब मत्स्व, क्रतुश्छन्द ऋतं बृहत्, सुम्न आ धेहि नो वसवित्यनुष्टुप्"-इति (श्रौ० ६.२.६.)। तत्र 'प्र चेतन'त्येकः प्रथम उपसर्गः, 'प्र चेतये'ति द्वितीयः; तावुभावपि द्वितीयस्यां महानाम्न्यामाम्नातौ। 'आ याहि पिब मत्स्वे'ति तृतीय उपसर्गस्तृतीयस्यां महानाम्न्यामाम्नातः। 'क्रतुश्छन्द ऋतं बृहदि'त्ययं चतुर्थ उपसर्गः; स च षष्ठ्यां महानाम्न्यामाम्नातः। 'सुम्न आ धेहि नो वसवि'ति पञ्चम उपसर्गः; स

चाष्टम्यां महानाम्न्या माम्नातः। एतेषु पञ्चसूपसर्गेषु मिलित्वा द्वात्रिंशदक्षरसद्भावादिय मेकानुष्टुबिति सूत्रस्यार्थः। इयं चानुष्टुबविहृतषोडशिनि तथैव पठनीया, अन्यत्र तु विहृतषोड़शिनि पञ्चाप्युपसर्गान्विभज्यातिच्छन्दःसु पञ्चसु योजनीयाः। अतएवोपसृज्यमानत्वादुपसर्गा इत्युच्यन्ते। तदेतत्संयोजन मत्र 'उपसृजति' -इति शब्देन विधीयते। "त्रिकद्रुकेषु"-इति येयं प्रथमा अतिच्छन्दाः, तस्याश्चतुष्षष्ट्यक्षरत्वात् परानपेक्षेणैव अनुष्टुब्द्वयसम्पत्तिः शक्येति द्वितीयस्या ऋचि तदनुष्टुब्द्वयं पूरयितुं 'प्र चेतन'-इत्यक्षरचतुष्टयं योजनीयम्, तृतीयस्या ऋचि 'प्र चेतया'-इति योजनीयम्। "प्रो ष्वस्मै"-इत्यादिषु तिसृषु अवशिष्टास्त्रय उपसर्गाः क्रमेण योजनीयाः। सोऽयं प्रकार आश्वलायनेनोक्तः--"ता मनुष्टुभ मतिच्छन्दःस्ववधाय द्वितीयतृतीययोः पादयोरवसानत उपदध्यात्;—प्र चेतनेति पूर्वस्याम्, प्र चेतयेत्युत्तरस्याम्, उत्तरास्वितरान् पादान् षष्ठान् कृत्वानुष्टुप्कारं शंसेत्"-इति (श्रौ० ६.३.११.१२.)॥

अथ महानाम्नीः प्रशंसति— "अयं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयासौ लोकस्तृतीया; सर्वेभ्यो वा एष लोकेभ्यः सन्निर्मितो यत् षोऌशी तद्यन्महानाम्नीना मुपसर्गानुपसृजति; सर्वेभ्य एवैनं तल्लोकेभ्यः सन्निर्म्मिमीते"-इति। प्रथमत्वादिसाम्येन लोकत्रयरूपत्व' ऋचां द्रष्टव्यम्; षोडशिनो लोकत्रये निर्म्मितत्वात्। महानाम्नीना मुपसर्गैः संयोजने सति तन्निर्म्माणं सिध्यति॥

वेदनं प्रशंसति— "सर्वेभ्यो लोकेभ्यः सन्निर्म्मितेन षोडशिना राध्नोति य एवं वेद"-इति॥

अथ विहरणेनेरपेक्ष्येणाध्यापकैः प्रज्ञाताः नवानुष्टुभो विधत्ते —"प्र प्र वस्त्रिष्टुभ मिष मर्चत प्रार्चत, यो व्यतीँरफाण-यदिति प्रज्ञाता अनुष्टुभः शंसति"—इति। "प्र प्र वः"-इत्येकस्तृचः प्रथमः ( सं० ८.६९.१-३.), "अर्चत"-इति द्वितीयः ( सं० ८.६९.८-१०.), "यो व्यतीन्"-इति तृतीयः (सं०८.६९.१३-१५)। यथा लोके कश्चिन्मार्गानभिज्ञः तत्र तत्र केनचिदपथेन चरित्वा पश्चादन्यमुखेन विज्ञाय समीचीनं पन्थानं परिगच्छेत्, एव मत्रापि पूर्वोक्तरीत्या कृत्रिमा अनुष्टुभः शस्त्वा पश्चादेतासां स्वतःसिद्धाना मनुष्टुभां शंसनं द्रष्टव्यम् ॥

पूर्वत्र सामविशेष मुपजीव्य विहृताविहृतयोः शस्त्रविशेषयोर्व्यवस्था दर्शिता; इदानीं पुरुषविशेष मुपजीव्य तां व्यवस्थां दर्शयति— "स यो व्याप्तो गतश्रीरिव मन्येताविहृत षोळशिनं शंसयेन्न छन्दसां कृच्छ्रादवपद्या इत्यथ यः पाप्मान मप जिघांसुः स्याद्विहृतं षोळशिनं शंसयेद्; व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्त मेवास्मै तत् पाप्मानं शमल मप हन्ति"-इति। 'सः' लोकप्रसिद्धः, यः पुरुषः पुत्रपौत्रादिभिः व्याप्तो 'गतश्रीरिव' प्राप्तश्रीवत् सम्द्धधन एवाह मिति मन्येत, स पुमान् 'अविहृतं' विहरणरहितं षोड़शिनं 'शंसयेत्' अविहृते शस्त्रे होतारं प्रेरयेत्। तस्य कोऽभिप्राय इति, स उच्यते—'छन्दसां कृच्छ्रात्' पूर्वोक्तानां गायत्र्यादीनां विहरणक्लेशात् 'अवपद्यै' अवपत्तिं आपदं प्राप्नुयात् तन्मा भूदिति। विहरणप्रयुक्तभीतिद्योतनार्थो 'नेत्'-इति शब्दः। अथ यः पुमान् पुत्रधनराहित्यरूपं 'पाप्मानम्' 'अप जिघांसुः' अपहन्तु मिच्छन् स्यात्, स पुमान् विहृते शस्त्रे होतारं प्रेरयेत्। अयं पुरुषो दारिद्र्यादिरूपेण 'पाप्मना' 'व्यतिषक्त इव वै'

मिश्रित एव। तस्मात् विहृतप्रयोगेण पापरूपं 'शमलं' मालिन्यहेतुं 'व्यतिषक्तं' दारिद्र्यादिसम्बन्ध मपहन्ति॥ वेदनं प्रशंसति— "अप पाप्मानं हते य एवं वेद"–इति॥

अथ शस्त्रसमापनीयां काञ्चिदृचं विधत्ते— "उदद् ब्रध्नस्य विष्टप मित्युत्तमया परि दधाति ; स्वर्गो वै लोको ब्रध्नस्य विष्टपं, स्वर्ग मेव तल्लोकं यजमानं गमयति"–इति। अस्या मृचि "ब्रध्नस्य विष्टपम्"–इति ( सं० ८. ६९. ७. ) श्रूयते,— आदित्यो 'ब्रध्न'-शब्दवाच्यः ; "असौ वा आदित्यो ब्रध्नः"–इति श्रुत्यन्तरात् ( तै० सं० ५.३.३.५. ) ; तस्य 'विष्टपं' स्थानं स्वर्गलोकः ; अतस्तत्पाठेन यजमानं स्वर्गं प्रापयति॥

शस्त्रयाज्यां विधत्ते— "अपाः पूर्वेषां हरिवः सुताना मिति यजति"–इति। 'हरिवः' हे इन्द्र! षोड़शिनः पूर्वेषां 'सुतानां' सोमानां, रस मिति शेषः ; 'अपाः' पीतवानसीति प्रथमपादस्यार्थः ( सं० १०.९६.१३.)॥ त मिमं पादं प्रशंसति— "सर्वेभ्यो वा एष सवनेभ्यः सन्निमितो यत् षोळशी ; तद्यदपाः पूर्वेषां हरिवः सुताना मिति यजति, पीतवद्वै प्रातस्सवनं ; प्रातस्सवनादेवैनं तत्सन्निर्मिमीते"–इति। यः षोडशी विद्यते, एष सर्वेभ्यः सवनेभ्यः सम्यक् निर्मित इत्येवं सम्पादनीयम्। तथा सति यद्यपाः पूर्वेषा मिति पादं पठेत्, तदानीं तत्र प्रातस्सवनं 'पीतवत्' इन्द्रेण पीत मेवेत्यय मर्थः प्रतीयते ; तस्मात् 'एनं' षोडशिनं प्रातस्सवनादेव निर्मितवान् भवति॥

तस्या ऋचो द्वितीयपाद मनूद्य व्याचष्टे— "अथो इदं सवनं केवलं त इति, माध्यन्दिनं वै सवनं केवलं, माध्यन्दिनादेवैनं तत्सवनात्सन्निर्मिमीते"–इति। 'अथो' अपि च हे इन्द्र! 'इदं' माध्य-

न्दिनं सवनं 'ते केवलं' तवैव सर्वम् । अस्मिन् पादे केवलं सवन मपीन्द्रस्येत्येतदुपपन्नम् ; इन्द्रेण पुरो द्वारं वृखता माहेन्द्रं ग्रहं माध्यन्दिनं सवनानां निष्केवल्यादीनां स्वार्थं मेव कृतत्वात् । अत एतत्पादपाठेन माध्यन्दिनसवनात् षोडशी निर्मितो भवति ॥

तृतीयपाद मनूद्य व्याचष्टे—"ममद्धि सोमं मधुमन्त मिन्द्रेति ; मद्वद्वै तृतीयसवनं, तृतीयसवनादेवैनं तत्सन्निर्मिमीते"—इति । हे इन्द्र ! 'मधुमन्तं' माधुर्य्यरसोपेतं सोमं पीत्वा 'ममद्धि' मदं हर्षं प्राप्नुहि । अस्मिन् पादे मदिधात्वर्थः श्रूयते, तृतीयसवन मपि 'मद्वद्वै' मदिधातूपेतम् ; निवित्पदेषु * मदिधातोर्विद्यमानत्वात् । तस्मादेतत्पादपाठेन षोड़शी तृतीयसवनान्निर्म्मितो भवति ॥

चतुर्थं पाद मनूद्य व्याचष्टे—"सत्रा वृषञ्जठर आ वृषस्वेति वृषण्वद्वै षोळशिनो रूपं, सर्वेभ्यो वा एष सवनेभ्यः सन्निर्म्मितो यत् षोळशी ; तद्यदपाः पूर्वेषां हरिवः सुताना मिति यजति, सर्वेभ्य एवैनं तत्सवनेभ्यः सन्निर्मिमीते"—इति । हे 'वृषन्' वर्षणसमर्थ ! 'सत्रा' सोमयागरूपे सत्रे 'जठरे' स्वकीय उदरे 'आ वृषस्व' समन्तात् सोमरसवृष्टिं कुरु । अत्र चतुर्थपादे 'वृषन्'-शब्दो विद्यते, षोडशिस्वरूप मपि 'वृषण्वत्' वर्षणोपेतम् ; तृप्तिहेतुत्वात् । यः षोडशी विद्यते, सोऽय मुक्तेन प्रकारेण सर्वेभ्यः सवनेभ्यो हि निर्मितः, तस्मादपाः पूर्वेषा मिति याज्यापाठेन सर्वसवनेभ्य एवैनं निर्मितवान् भवति ॥ वेदनं प्रशंसति—"सर्वेभ्यः सवनेभ्यः सन्निर्म्मितेन षोळशिना राध्नोति य एवं वेद"—इति ।

अस्या याज्यायाः पादेषु पूर्ववदुपसर्गान् विधत्ते—"महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु ; सर्वेभ्यो

* "अस मदे"—इत्यादिषु ( निवि० ११.१–१६. )

वा एष छन्दोभ्यः सन्निर्म्मितो यत् षोळशी ; तद्यन्महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु, सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते"–इति । महानाम्नीना मृचां सम्बन्धिनस्तदीयानुवाके समाम्नाताः "एवा ह्येवा"–इत्यादयः पञ्चाक्षरा उपसर्गाः ( आर० ४.१.१०–१५. ) तानेकादशाक्षरेष चतुर्ष्वपि पादेषु संयोजयेत् ; तथा सति चतुष्षष्ट्यक्षरत्वादनुष्टुब्द्वयं सम्पद्यते। एवं सति यः षोडशी सर्वेभ्यः छन्दोभ्यो निर्मातव्यः, सोऽयमेतत्संयोजनेन तथैव निर्मितो भवति ॥ वेदनं प्रशंसति– "सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन षोडशिना राध्नोति य एवं वेद"–इति * ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां प्रथमाध्याये
( षोड़शाध्याये ) चतुर्थः खण्डः ॥ ४ ॥

---

॥ अथ पञ्चमः खण्डः ॥

अहर्वै देवा अश्रयन्त रात्रीमसुरास्ते समावद्वीर्या एवासन्न व्यावर्तन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितो

---

* षोड़शिसंस्थस्य ज्योतिष्टोमस्य विशेषविधय एवेषु प्रथमादिचतुःखण्डेषु विहिताः, एभ्योऽन्ये ऽग्निष्टोमवत् ; २४१ पृ० '*' द्रष्टव्यम्। आश्वलायनेनापि "अथ षोड़शी"–इत्यारभ्य "भक्षजपः"–इत्यन्तेन ग्रन्थेन ( ६. २, ३. ) तथैवोक्तः। "षोड़शिना वीर्यकामः"–इति चापस्तम्बीयविधिसूत्रम ( १४ १.२. )।

ऽसुरान् रात्री मन्ववेष्याव इति स देवेषु न प्रत्यविन्ददविभयू रात्रेस्तमसो मृत्योस्तस्माद्वाप्येतर्हि नक्तं यावन्मात्र मिवैवापाक्रम्य बिभेति* तम इव हि रात्रिर्मृत्युरिव तं वै छन्दांस्येवान्ववायंस्त यच्छन्दांस्येवान्ववायंस्तस्मादिन्द्रश्चैव छन्दांसि च रात्रीं वहन्ति न निविच्छस्यते न पुरोरुङ् न धाय्या नान्या देवतेन्द्रश्च ह्येव छन्दांसि च रात्रीं वहन्ति तान्वै पर्यायैरेव पर्याय मनुदन्त यत् पर्यायैः पर्याय मनुदन्त तत्पर्यायाणां पर्यायत्वं तान्वै प्रथमेनैव पर्यायेण पूर्वरात्रादनुदन्त मध्यमेन मध्यरात्रादुत्तमेनापररात्रादपिशर्वर्या अनु स्मसीत्यब्रुवन्नपिशर्वराणि खलु वा एतानि छन्दांसीति ह स्माहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यत मत्यपारयंस्तदपिशर्वराणा मपिशर्वरत्वम् ॥ ५ ॥

षोडशी समाप्तः, अथातिरात्रो वक्तव्यः; तत्रेन्द्रस्य छन्दसां च प्राधान्यं कथयितु मितिहास माह— "अहवै देवा अश्रयन्त रात्री मसुरास्ते समावद्वीर्या एवासन्न व्यावर्तन्त, सोऽब्रवीदिन्द्रः,– कश्चाहं चेमानितो असुरान् रात्री मन्ववेष्याव इति ; स देवेषु न प्रत्यविन्ददबिभयूरात्रेस्तमसो मृत्योस्तस्माद्वाप्येतर्हि नक्तं यावन्मात्र मिवैवापक्रम्य बिभेति ; तम इव हि रात्रिर्मृतुरिव"–इति ।

* "बिभेति" भ ।

पुरा कदाचिदहोरात्रयोर्मध्ये देवा अहरेवाश्रितवन्तः, असुराश्च रात्रि माश्रितवन्तः ; 'ते' देवाश्च असुराश्च समानबला एवासन् ; बलाधिक्येन वर्गान्तराद् व्यावृत्त मितरवर्गस्थानं नाप्नुवन् । तदानीं इन्द्रो देवान् प्रत्यब्रवीत्,—मम सहायोऽपेक्षितः, हे देवाः ! भवतां मध्ये कश्चाहं च 'इमान्' असुरान् रात्रौ मनुगतान् 'इतः' रात्र्या 'अवेष्यावः' अपसारयिष्यावः ? इति । ततो विचार्य स इन्द्रो देवेषु मध्ये तादृशं शूरं क मपि प्रतीक्ष्य 'नाविन्दत्' न लब्धवान् । रात्रेः सम्बन्धि यत्तमो मृत्युसदृशम्, तस्मात्तमसो मृत्योरिव सर्वे देवाः 'अबिभयुः' भीता अभवन् । यस्माद्देवानां भीतिस्तस्मादिदानीमपि 'यावन्मात्र मिवेव' यत्किञ्चिदपि वा दूरं रात्रौ गृहादपक्रम्य सर्वपुरुषो ('बिभेति') बिभेति ; 'तम इव हि' तमोरूपैव रात्रिस्तस्मात् मृत्युरिव भयहेतुः ॥

अथ छन्दसा मिन्द्रसहकारित्वं दर्शयति— "तं वै छन्दांस्येवान्ववायंस्तं यच्छन्दांस्येवान्ववायंस्तस्मादिन्द्रश्चैव छन्दांसि च रात्रीं वहन्ति ; न निविच्छस्यते, न पुरोरुङ्, न धाय्या, नान्या देवतेन्द्रश्चैव छन्दांसि च रात्रीं वहन्ति"–इति । 'तं वै' असुरनिराकरणाय प्रवृत्तं त मेवेन्द्र मेकं गायत्र्यादिच्छन्दांस्येव 'अन्ववायन्' अनुगम्य निराकर्त्तुं गताः ; यस्मादेवं तस्मादिन्द्रच्छन्दांस्येवाङ्गतया अतिरात्रप्रयोगे 'रात्रीं वहन्ति' रात्रिप्रयोगस्य निर्वाहकाणि भवन्ति । इन्द्रविषयच्छन्दांस्येव तत्र शस्यन्ते, न तु निविद्या पुरोरुग्वा धाय्या वा देवतान्तरं वा किञ्चिच्छस्यते ; तस्मादिन्द्रः छन्दांसि चेत्येतावन्त एव निर्वाहकाः ॥

तेषा मिन्द्रच्छन्दसा मसुरान्निराकरणसाधनं दर्शयति— "तान्वै पर्यायैरेव पर्याय मनुदन्त ; यत् पर्यायैः पर्याय मनुदन्त,

तत् पर्य्यायाणां पर्य्यायत्वम्"–इति । 'तान्वै' रात्रिं माश्रितान् असुरान् 'पर्य्यायैः' चमसगणानां क्रमानुष्ठानैरेव पर्य्यायैः, तत्र तत्र यतमाना यागभूमौ परीत्य 'अनुदन्त' निराकृतवन्तः । यत्र यत्रासुराः सुप्ता अवस्थिताः, तत्र तत्र प्रयत्नेनावेक्ष्य निःसारितवन्तः । द्वादशानाञ्चमसगणाना मनुष्ठानाय त्रयः पर्यायाः ; एकैकस्मिन् पर्याये चत्वारो गणा अनुष्ठीयन्ते । यस्मात्परितो गत्वा गत्वा चमसपर्यायैर्निराकृतवन्तः, तस्मात्परिगम्य निराकरणसाधनत्वात्पर्यायत्वं सम्पन्नम् ॥

क्रमेण निराकरणप्रकारं दर्शयति—"तान्वै प्रथमेनैव पर्यायेण पूर्वरात्रादनुदन्त, मध्यमेन मध्यरात्रादुत्तमेनापररात्राद्"–इति । दश दश घटिका एकैको भागः ; इत्येवं रात्रेस्त्रयो भागाः ; चत्वारश्चमसगणा एकः पर्यायः, इत्येव द्वादशानाञ्चमसगणानां त्रयः पर्यायाः ; तैः क्रमेण रात्रिभागत्रयादसुरानपानुदन्त ॥

तस्मिन्निराकरणे छन्दसां सौकार्याधिक्येन प्रशंसां दर्शयति— "अपि शर्वर्या अनु स्मसीत्यब्रुवन्नपिशर्वराणि खलु वा एतानि छन्दांसीति ह स्माहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यत मत्यपारयंस्तदपिशर्वराणा मपिशर्वरत्वम्"–इति । हे इन्द्र ! वय मपि 'शर्वर्याः' कृत्स्नाया रात्रेः सकाशादसुरानपसारयितुं त्वा मनु गम्य 'स्मसि' तिष्ठामः, इत्येवं छन्दांस्यब्रुवन् । तदेतद्वाक्य मैतरेयः श्रुत्वा तदानी मेवैतानि छन्दांसि 'अपिशर्वराणि' एवेति नाम्ना व्यवहृतवान् * । एतच्च युक्तम्,—यस्मात् मृत्योरिव रात्रेस्तमसो बिभ्यत मिन्द्रम् 'एतानि' छन्दांसि 'अत्यपारयन्', यस्मात् हेतो रात्रि

* "अपिशर्वरे—शर्वरीमुखे ऽग्निविहरणकाले"–इति ( ऋ० सं० ३.१.७. ), "अपिशर्वरे— शर्वरीं रात्रि मपिगतः कालोऽपिशर्वरः"–इति च (ऋ० सं० ८.१.२९.) सा०भा० ।

मतीत्य नीतवन्ति, तस्मात्कारणाच्छर्वर्या: सर्वस्मादपि पारनयनं द्योतयितुम् 'अपिशर्वराणि' इति नाम छन्दसां युक्तम् ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां प्रथमाध्याये
( षोड़शाध्याये ) पञ्चमः खण्डः ॥ ५ ॥

———

॥ अथ षष्ठः खण्डः ॥

पान्त मा वो अन्धस इत्यन्धस्वत्यानुष्टुभा रात्रीं प्रतिपद्यत आनुष्टुभी वै रात्रिरेतद्रात्रिरूपमन्धस्वत्यः पीतवत्यो मद्वत्यस्त्रिष्टुभो याज्या भवन्त्यभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धं प्रथमेन पर्यायेण स्तुवते प्रथमान्येव पदानि पुनराददते * यदेवैषामश्वा गाव आसंस्तदेवैषां तेनाददते मध्यमेन पर्यायेण स्तुवते मध्यमान्येव पदानि पुनराददते यदेवैषां मनो रथा आसंस्तदेवैषां तेनाददत उत्तमेन पर्यायेण स्तुवत उत्तमान्येव पदानि पुनराददते यदेवैषां वासो हिरण्यं मणिरध्यात्ममासीत्तदेवैषां तेनाददत आ द्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं

* इह खण्डे सर्वत्र "आदत्ते"-इति ग ।

वेद पवमानवदहरित्याहुर्न रात्रिः पवमानवती कथ मुभे पवमानवती भवतः केन ते समावद्भाजौ भवत इति यदेवेन्द्राय मद्वने सुत मिदं वसो सुत मन्ध इदं ह्यन्वोजसा सुत मिति स्तुवन्ति च शंसन्ति च तेन रात्रिः पवमानवती तेनोभे पवमानवती भवतस्तेन ते समावद्भाजौ भवतः पञ्चदशस्तोत्र महरित्याहुर्न रात्रिः पञ्चदशस्तोत्रा कथ मुभे पञ्चदश-स्तोत्रे भवतः केन ते समावद्भाजौ भवत इति द्वाद-शस्तोत्राण्यपिशर्वराणि तिसृभिर्देवताभिः सन्धिना राथन्तरेण स्तुवते तेन रात्रिः पञ्चदशस्तोत्रा तेनोभे पञ्चदशस्तोत्रे भवतस्तेन ते समावद्भाजौ भवतः परिमितं स्तुवन्त्यपरिमित मनु शंसति परिमितं वै भूत मपरिमितं भव्य मपरिमितस्यावरुध्या इत्यति शंसति स्तोत्र मति वै प्रजात्मान मति पशव स्तद्यत् स्तोत्र मति शंसति यदेवास्यात्यात्मानं तदेवास्यैतेनावरुन्धे ऽवरुन्धे ॥ ६ ॥

॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां प्रथमोध्यायः ॥१॥

इन्द्रस्य छन्दसां च प्राधान्य मभिहितम्; अथ शस्त्रं विधा-तव्यम् । षोड़शिपर्यन्तं पूर्ववदनुष्ठाय षोडशिन ऊर्ध्वं रात्रिपर्यायाः

शंसनीयाः। त्रयस्त्रयः पर्यायाः। तत्रैकपर्यायश्चतुःशस्त्रोपेतः। होतुरेकं शस्त्रम्, होत्रकाणां च त्रयाणा मेकैक मिति चतुष्टयम्।

अत्र प्रथमपर्य्याये होतुः शस्त्रं विधत्ते—"पान्तमावो अन्धस इत्यन्धस्वत्यानुष्टुभा रात्रीं प्रतिपद्यते"–इति। 'अन्धः'-शब्दो यस्या मृच्यस्ति, सेय मन्धस्वती सा चात्रानुष्टुप्छन्दस्का; तया 'रात्रीं' रात्रिशस्त्रं 'प्रतिपद्यते' प्रारभेत ॥ तस्या मृचि छन्दः प्रशंसति—"आनुष्टुभो वै रात्रिरेतद्रात्रिरूपम्"–इति। गायत्री त्रिष्टुब्जगत्यनुष्टुभां मध्ये गायत्र्यादीनां त्रयाणां सवनत्रयगताना महनि प्रयुक्तत्वादनुष्टुभः प्रयोगाय रात्रिरेव कालः परिशिष्यते। तस्माद्रात्रेरनुष्टुप्सम्बन्धत्वादिय मनुष्टुप् रात्रेः स्वरूपम् ॥

अथ त्रिषु पर्यायेषु शस्त्रयाज्यां विधत्ते— "अन्धस्वत्यः पीतवत्यो मद्वत्यस्त्रिष्टुभो याज्या भवन्त्यभिरूपा; यद्यज्ञेऽभिरूपं तत्समृद्धम्"–इति। 'अन्धः'-शब्दो यास्वृच्वस्ति, ताः 'अन्धःस्वत्यः'; तादृश्यश्चतस्रः ऋचः प्रथमपर्य्याये होत्रादीनां चतुर्णां शस्त्रयाज्याः कर्त्तव्याः। ताश्च त्रिष्टुप्छन्दस्का एव। तत्र "अध्वर्यवो भरतेन्द्राय सोमम्" इत्येषा ( सं० २.१४.१. ) होतुः शस्त्रयाज्या। सा चान्धस्वती त्रिष्टुप्छन्दस्का च। तस्या द्वितीयपादे "सिञ्चता मद्य मन्धः"--इति अन्धः-शब्दः श्रूयते। एव मितरेषां त्रयाणां शस्त्रयाज्या उदाहरणीयाः। पिबतिधातुर्यास्वृच्वस्ति, ताः 'पीतवत्यः'; तादृश्यो मध्यमपर्य्याये याज्याः कर्त्तव्याः। "अपाय्यस्यान्धसो मदाय"–इति ( सं० २.१९.१. ) होतुः शस्त्रयाज्या। तत्र 'अपायि'-इति पिबति-धातुः श्रूयते। मदिधातुर्यास्वृच्वस्ति, ताः 'मद्वत्यः'; तादृश्यस्तृतीयपर्य्याये याज्याः कर्त्तव्याः। "तिष्ठा हरी"-इत्येषा ( सं० ३.३५.१. ) होतुः शस्त्रयाज्या। तस्या अवसाने

"इरिमा ते मदाय"–इति मदिधातुः श्रूयते। एवं सर्वं मुदाहार्यम्। रात्रावन्नभोजनादन्धस्वतीनाम् मानुरूप्यम्, क्षीरपानात् पीवतीनाम्; तत ऊर्ध्वं हर्षात् मद्वतीनाम्। एव मानुरूप्ये सति तत्तत्कर्म समृद्धं भवति ॥

प्रथमपर्याये प्रयोगविशेषं विधत्ते— "प्रथमेन पर्यायेण स्तुवते, प्रथमान्येव पदानि पुनराददते, यदेवैषा मश्वा गाव आसंस्तदेवैषां तेनाददते"–इति। यदा सामगाः प्रथमेन पर्यायेण स्तुवते, तदानीं स्तोत्रियाणां प्रथमपादान् द्विरभ्यस्यन्ति *। एवं शस्त्रेऽपि "पुरुहूतं पुरुष्टुतम्"–इत्यादिकाः प्रथमपादा द्विरभ्यसनीयाः; "यथा वाव स्तोत्र मेवं शस्त्रम्"–इत्युक्तत्वात्। एवं सति 'एषाम्' असुराणा मश्वा गाव आसन्निति यदस्ति, तत्सर्वं मसुराणां धनम्; 'तेन' प्रथमपादाभ्यासेन स्वीकुर्वन्ति ॥

द्वितीयपर्याये विशेषं विधत्ते— "मध्यमेन पर्यायेण स्तुवते, मध्यमान्येव पदानि पुनराददते; यदेवैषा मनो रथा आसंस्तदेवैषां तेनाददते'–इति। "अयन्त इन्द्र सोमः"–इत्यस्या मृचि ( सं० ८.१७.११. ) "नि पूतो अधि बर्हिषि, नि पूतो अधि बर्हिषि"–इत्येवं मध्यमः पादो द्विरभ्यसनीयः। 'एषाम्' असुराणाम् 'अनः' शकटं यदस्ति, ये च 'रथाः', तत्सर्वं 'तेन' अभ्यासेन स्वीकृतं भवति ॥

तृतीयपर्याये विशेषं विधत्ते— "उत्तमेन पर्यायेण स्तुवत, उत्तमान्येव पदानि पुनराददते; यदेवैषां वासो हिरण्यं मणि-

* सामब्राह्मणे देवावा इति पान्त मा वो अन्धस इति च द्वाभ्यां खण्डाभ्यां रात्रिपर्याया विहिताः ( ता० ब्रा० ९.१,२. )। तत्रैव "तान् समन्त पर्यायं प्राणुदन्त, यत् पर्यायं प्राणुदन्त तत् पर्यायाणां पर्यायत्वम्"–इति पर्यायनिरुक्तिरुक्ता।

रध्यात्म मासीत्तदेवैषां तेनाददते"-इति। "इदं ह्यन्वोजसा सुतम्" -इत्यस्या मृचि ( सं० ३.५१.१०. ) "पिबा त्वस्य गिर्वणः, पिबा त्वस्य गिर्वणः"-इत्युत्तमस्य पादस्य द्विरभ्यासः। आत्मानं शरीर मधिकृत्य वर्त्तत इति 'अध्यात्मम्', असुराणां शरीरे ऽवस्थितं वासः, 'हिरण्यं' मणिरित्येवमादिकम्, सर्वं गृहीतं भवति॥

वेदनं प्रशंसति—"आ द्विषतो वसु दत्ते निरेन मेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद"-इति। 'द्विषतः' शत्रोः सकाशात् तदीयं धन मादत्ते, 'एनं' शत्रुं सर्वेभ्यो लोकेभ्यो 'निर्णुदते' निराकरोति॥

अत्र कश्चित्प्रश्न मुत्थापयति— "पवमानवदहरित्याहुर्न रात्रिः पवमानवती ; कथ मुभे पवमानवती भवतः, केन ते समावद्भाजौ भवत इति"--इति। बहिष्पवमानः, माध्यन्दिनः पवमानः, आर्भवः पवमानश्चेत्येव मह्नि पवमानस्तोत्रत्रयं विद्यते *, न तु रात्रौ तदस्ति ; अत उभयोः पवमानत्वं कथं सिध्यति,— तदसिद्धौ च केनोपायेनाहश्च रात्रिश्चेत्येते 'समावद्भाजौ भवतः' समानभागयुक्ते भवतः ? इति प्रश्नवादिन आहुः॥

तत्रोत्तर माह— "यदेवेन्द्राय मद्वने सुत मिदं वसोसुत मन्ध इदं ह्यन्वोजसा सुत मिति स्तुवन्ति च शंसन्ति च, तेन रात्रिः पवमानवती, तेनोभे पवमानवती भवतस्तेन ते समावद्भाजौ भवतः"-इति। यदेव "इन्द्राय मद्वने सुतम्", "इदं वसो सुत मन्धः", "इदं ह्यन्वोजसा सुतम्"-इति †; ताभिरेताभिस्तिसृभिः

---

* ता० ब्रा०— बहिष्पवमानः ( ६.७-१०.) ७. १, २ ; माध्यन्दिनपवमानः ३-५ ; आर्भवपवमानः ८.४,५।

† सं० ८. ९२. १९ ; ८. २. ११ ; ३. ५१. १०।

उद्गातारः स्तुवन्ति, होतारः शंसन्ति। अहनि यथा त्रिष्वपि पवमानस्तोत्रनामसु पवमानशब्दोऽनुवृत्तः, एव मत्रापि तिसृषु ऋक्षु सुतशब्दोऽनुवृत्तः; अतः पवमानसाम्याद्रात्रिः पवमानवती; 'तेन' प्रकारेण उभयोः पवमानवत्त्वे साम्ये सति तुल्यभागत्वं सिध्यति ॥

पुनरपि प्रश्नोत्तर मुत्थापयति – "पञ्चदशस्तोत्र मह्हरित्याहुर्न रात्रिः पञ्चदशस्तोत्रा; कथ मुभे पञ्चदशस्तोत्रे भवतः, केन ते समावद्भाजौ भवत इति"–इति। अग्निष्टोमस्तोत्राणि द्वादश, उक्थ्यस्तोत्राणि त्रीणि; एतान्यहनि प्रयुज्यन्ते; तस्मादहः पञ्चदशस्तोत्रोपेतम्; रात्रौ तु न तानि विद्यन्ते, कथं पञ्चदशस्तोत्रसाम्येन तयोर्भागसाम्यं सिध्यति? इति प्रश्नः ॥

तत्रोत्तर माह— "द्वादशस्तोत्राण्यपिशर्वराणि तिसृभिर्देवताभिः सन्धिना राथन्तरेण स्तुवते; तेन रात्रिः पञ्चदशस्तोत्रा, तेनोभे पञ्चदशस्तोत्रे भवतस्तेन ते समावद्भाजौ भवतः"–इति। द्वादशसु चमसगणपर्य्यायेषु द्वादश स्तोत्राणि विद्यन्ते, तानि 'अपिशर्वराणि' रात्रावनुष्ठेयानां छन्दसाम् 'अपिशर्वर'–सञ्ज्ञा पूर्वमुक्ता ( २६९ पृ० ), तैश्छन्दोभिर्निष्पाद्यत्वात् स्तोत्राण्यपि तन्नामकानि; रथन्तरसाम्ना निष्पाद्यं यत्सन्धिस्तोत्रं *, तत्र तिस्रो देवताः श्रूयन्ते †, ताभिः स्तोतव्याभिस्तिसृभिर्देवताभिः स्तोत्रमपि त्रेधा भिद्यते; 'तेन' कारणेन ताभिः पञ्चदशस्तोत्रा सम्पन्ना। तथा सति उभयोरहोरात्रयोः स्तोत्रसङ्ख्यासाम्यात्समानभागोपेतत्वं सिध्यति ॥

---

* "रथन्तरं प्रतिष्ठाकामाय सन्धिं कुर्यात्"–इति ता०. ब्रा० ९.१.२८।

† "त्रीण्युक्थ्यानि त्रिदेवत्यः सन्धिः"–इति ता० ब्रा ९. १. २६।

शस्त्रबाहुल्यं प्रशंसति— "परिमितं स्तुवन्त्यपरिमित मनुशंसति ; परिमितं वै भूत मपरिमितं भव्य मपरिमितस्यावरुध्या-इति"—इति। उद्गातारः परिमितं यथा भवति तथा स्तुवन्ति, त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंश इत्येवं चतुर्भिरेव स्तोमैरत्र सर्वस्तोत्रनिष्पत्तेः*। होता तु अपरिमितं यथा भवति तथा अनुशंसति ; शंसनीया ऋच एतावत्य एवेति सर्वत्रानुगतस्य सङ्ख्या-नियमस्य कस्यचिदभावात्। पूर्वभाविनः स्तोत्रस्य परिमितत्व मुत्तरभाविनः शस्त्रस्यापरिमितत्वं च लौकिकन्यायानुसारि ; लोके 'भूतं' पूर्वं सम्पादितं धनम्, 'परिमितम्' इयदेवेति नियतिरस्ति ; 'भव्यम्' इतः परं सम्पादनीयं धनम्, 'अपरिमितं' तृष्णायाः निरवधिकत्वेनैतावदेव सम्पादयिष्यामि, न त्वधिक मिति नियते-रभावात्। तस्मादुपरितनशंसनबाहुल्य मपरिमितधनप्राप्त्यै भव-तीत्यभिप्रेत्य होतुरपरिमित मनुशंसनम् ॥

प्रकारान्तरेण शस्त्रबाहुल्यं प्रशंसति— "अति शंसति स्तोत्र मति वै प्रजात्मान मति पशवस्तद्यत् स्तोत्र मति शंसति यदेवास्या-त्मानं तदेवास्यैतेनावरुन्धे"—इति†। स्तोत्रगता सूक्सङ्ख्या मतिलङ्घ्य होता शंसतीति यदस्ति तदुक्त मेव ; लोके ह्यात्मान मतिलङ्घ्य प्रजानां चावस्थितत्वात्। स्वय मेक एव, पुत्रादयस्तु बह्वः, गवाश्वादिपशवश्च बह्वः ; तस्मादात्मस्थानीयं स्तोत्रम्, प्रजापशुस्थानीयशस्त्राधिक्येन 'यदेव' प्रजापश्वादि धनं, तस्य यज-

---

* ता० ब्रा० ६. २. २।

† अतिरात्रे चत्वारः सवनीयाः, षोडश्यन्ते रात्रिपर्यायास्त्रयः, ततः सन्धिस्तोत्रम्, तत्राश्विनं शस्त्रम्, ततोऽनुयाजादि। तदिह सर्वं सन्धिस्तोत्रान्तं विहितम्, शिष्टं पर-स्ताद् वक्ष्यति।

मानस्य स्वात्मानमतिक्रम्याधिकमभीष्टम्, तत्सर्वम् 'अस्य' यजमानस्य होता सम्पादयति ॥ पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां प्रथमाध्याये
( षोडशाध्याये ) षष्ठः खण्डः ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः प्रथमोऽध्यायः ॥

———

## ॥ अथ द्वितीयाध्यायः ॥

(तत्र)

### ॥ अथ प्रथमः खण्डः ॥

---

॥ ॐ ॥ प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगच्छं-स्तस्या एतत्सहस्रं वहतु मन्वाकरोद् यदेतदाश्विन मित्याचक्षते ऽनाश्विनं हैव तद्यदर्वाक्सहस्रं तस्मा-त्तत्सहस्रं वैव शंसेद् भूयो वा प्राश्य घृतं शंसेद्यथा ह वा इद मनो वा रथो वाक्तो वर्त्तत एवं हैवाक्तो वर्तते शकुनिरिवोत्पतिष्यन्नाह्वयीत तस्मिन् देवा न सम-जानत ममेद मस्तु ममेद मस्त्विति ते सञ्जानाना अब्रुवन्नाजि मस्यायामहै स यो न उज्जेष्यति तस्येदं भविष्यतीति ते ऽग्नेरेवाधि गृहपतेरादित्यं काष्ठा मकुर्वत तस्मादाग्नेयी प्रतिपद् भवत्याश्विनस्याग्नि-र्होता गृहपतिः स राजेति तद्धैक आहुरग्निं मन्ये पितर मग्नि मापि मित्येतया प्रतिपद्येत दिवि शुक्रं यजतं सूर्यस्येति प्रथमयैव ऋचा काष्ठा माप्नोतीति तत्तन्नादृत्यं य एनं तत्र ब्रूयादग्नि मग्नि मिति वै प्रत्यपादाग्नि मापत्स्यतीति शश्वत्तथा

स्यात्तस्मादग्निर्होता गृहपतिः स राजेत्येतयैव प्रतिपद्येत गृहपतिवती प्रजातिमती शान्ता सर्वायुः सर्वायुत्वाय सर्वायुरेति य एवं वेद ॥ १ (७) ॥

षष्ठे षोडश्यङ्कि संस्थाचतुर्थे सर्वच्छन्दोविक्रियानुष्टुबाख्ये।
पर्य्यायाणां स्याच्चतुःशस्त्रकाणां रात्री सन्धेः सङ्ख्यया पाञ्चदश्यम् ॥

अथातिरात्रक्रतावेव रात्रिपर्य्यायेभ्य ऊर्द्ध्वं माश्विनं शस्त्र माख्यायिकामुखेन विधत्ते—"प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं; तस्यै सर्वे देवा वरा आगच्छंस्तस्या एतत्सहस्रं वहतु मन्वाकरोद्,— यदेतदाश्विन मित्याचक्षते; ऽनाश्विनं हैव, तद्यदर्वाक्सहस्रं; तस्मात्तत्सहस्रं वैव शंसेद् भूयो वा"—इति। पुरा कदाचित्प्रजापतिः काञ्चिद् दुहितरं सोमाय राज्ञे 'प्रायच्छत्' विवाहार्थं दातु मुद्युक्तवान्। कीदृशीं दुहितरम् ? 'सूर्याम्' इत्येतन्नामधेययुक्तां 'सावित्रीं' सवित्रा लब्धाम्। यद्यप्येषा सवितुः पुत्री, तथापि स्नेहातिशयेन प्रजापतेर्दुहितेत्युच्यते। 'तस्यै' दुहित्रे तल्लाभार्थं सर्वे देवा वरा भूत्वा प्रजापतेः सकाश मागमन्। स च प्रजापतिः 'तस्यै' दुहितृलाभार्थम् 'एतद्' वक्ष्यमाण मृचां सहस्रं 'वहतु मन्वाकरोत्'। वहनस्य विवाहस्य अलङ्कारार्थं माङ्गल्यार्थं च वरस्य पुरतो वहनीयो हरिद्रागुड़ादिमङ्गलद्रव्यसङ्घो 'वहतुः'; यदेतदृक्सहस्रं याज्ञिका आश्विनसहस्र मित्याचक्षते, तत्सहस्र मेव वहतुरूपेण प्रत्यभिज्ञातवान्; स देवानां मध्ये यो वरः आश्विनशस्त्रमन्त्रानेक एव पठति, तस्मै दास्यामीति प्रतिज्ञातवानित्यर्थः। सहस्रादर्वाचीना ऋचो यस्मिन् शस्त्रे, तत् 'अर्वाक्सहस्रं' तादृशं यदस्ति, तत् 'अनाश्विन मेव'।

यस्मादाश्विनसहस्रं प्रजापतिरङ्गीकृतवान्, तस्माद्धोता सहस्र मेव शंसेत्, ततोऽप्यधिकं वा शंसेत्, न तु न्यूनम् * ॥

शंसनस्येतिकर्त्तव्यतां विधत्ते— "प्राश्य घृतं शंसेद्यथा ह वा इद मनो वा रथो वाक्तो वर्त्तत एवं हैवाक्तो वर्त्तते"–इति। प्रथमतो घृतं प्राश्य पश्चाच्छंसेत्। यथा लोके किञ्चिदिदं निदर्शनं तद्वत्। किं निदर्शन मिति,— तदुच्यते। 'अनः' स्वल्प-शकटं वा प्रौढ़ो 'रथः' वा यदा प्रवर्त्त्यते, तदानी मस्य चक्रस्य भ्रमणस्थाने मषीमिश्रेण तैलेनाञ्जने कृते पश्चात् स्वल्पं शकटं रथो वा सहसा प्रवर्त्तते, एव मसौ होता घृतेनाक्तः शस्त्रे प्रवर्त्तते ॥

इति कर्त्तव्यतान्तरं विधत्ते—"शकुनिरिवोत्पतिष्यन्नाह्वयीत" –इति। यथा लोके 'शकुनिः' कश्चित्पक्षी पद्भ्यां भूमिं दृढ़ मवष्टभ्य 'उत्पतिष्यन्' ऊर्ध्वमुखोत्पतनं कर्त्तु मिच्छन् पक्ष्यन्तर मभिलक्ष्य ध्वनिं करोति, एव मसौ होता तदाकारं घटनं कुर्वन्नाह्वावं पठेत्। तदेतदाश्वलायनाचार्य्यैः स्पष्टीकृतम्—"प्राश्य प्रतिप्रहृय पश्चात् स्वस्य धिष्ण्यस्योपविशेत्, समस्तजङ्घोरुररत्निभ्यां जानुभ्यां चोपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन्नुपस्थकृतस्वेवाश्विनं शंसेत्"–इति ( श्रौ० ६.५.४. ) ॥

आश्विनशस्त्रस्य प्रतिपद माख्यायिकामुखेन विधत्ते—"तस्मिन् देवा न समजानत,— ममेद मस्तु ममेद मस्त्विति ; ते सञ्ज्ञानाना अब्रुवन्नाजि मस्यायामहै, स यो न उज्जेष्यति, तस्येदं भविष्यतीति ; ते ऽग्नेरेवाधि गृहपतेरादित्यं काष्ठा मकुर्वत, तस्मादाग्नेयी

* "प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममीदितोः शंसेत्"–इति आश्व० श्रौ० ६. ५. ८.

प्रतिपद् भवत्याश्विनस्याग्निर्होता गृहपतिः स राजेति"-इति । 'तस्मिन्' आश्विनशस्त्रे देवाः परस्परं 'न समजानत' सञ्ज्ञानं प्रतिपत्तिं नाकुर्वन् । कीदृशी तदीया प्रतिपत्तिः ? इति, सोच्यते— 'ममेदमाश्विन मस्त्विति' सर्वेषा मभिप्रायः । सर्व-विषयत्वं द्योतयितु मियं वीप्सा । 'ते' विप्रतिपन्ना देवाः 'सञ्ज्ञा-नानाः' सम्प्रतिपत्तिं कर्त्तुं मुद्युक्ताः परस्पर मिद मब्रुवन्— 'अस्य' आश्विनशस्त्रस्य लाभाय वयं सर्वे काञ्चिदाजिम् 'आयामहै' समयबन्धपुरःसरा धावनरूपा गतिः 'आजिः', तां प्राप्नुवामः । तस्मिन्नाजिधावने 'नः' अस्माकं मध्ये च यः प्रबलः, यः कोऽपि प्रथम मुत्कर्षेण जेष्यति, तस्य 'इदम्' आश्विनं भविष्यतीति समयबन्धः । 'ते' कृतसमया देवाः 'गृहपतेरग्नेरेवाधि' गार्हपत्य-स्योपरि द्युलोकवर्त्तिन मादित्यं 'काष्ठां' धावनसमाप्ति मनु-कुर्वते,—गार्हपत्य मारभ्यादित्यपर्यन्तं धावेदिति तदीया मर्यादा । यस्मादग्निः आश्विनप्राप्तिहेतोर्धावनस्योपक्रमस्थानं, तस्मादाग्नेयी काचिदृगाश्विनस्य 'प्रतिपद् भवति' प्रारम्भरूपा कर्त्तव्या । "अग्निर्होता"-इति ( सं० ६.१५.१३. ) तस्याः प्रतीकम् ॥

अत्र कश्चित् पूर्वपक्ष मुद्भावयति— "तद्धैक आहुरग्निं मन्ये पितर मग्नि मापि मित्येतया ( सं० १०.७.३.) प्रतिपद्येत"-इति । प्रारभेतेत्यर्थः ॥

तत्रोपपत्तिं पूर्वपक्ष्यभिप्रेतां दर्शयति— "दिवि शुक्रं यजतं सूर्यस्येति प्रथमयैव ऋचा काष्ठा माप्नोति"-इति । तस्याश्चतुर्थ-पादे 'सूर्यस्य यजतं' यस्मादग्निविशेषणं पठ्यते, तथा सति प्रथमे-वर्चा सूर्यरूपा काष्ठा धावनाग्निरूपाप्ता भवतीति तेषा मभि-प्रायः ॥

त मिमं पक्षं दूषयति— "तत्तन्नादृत्यं, य एनं तत्र ब्रूयादग्नि मग्नि मिति वै प्रत्यपाद्यग्नि मापत्स्यतीति, शश्वत्तथा स्यात्" -इति। तस्मिन् शस्त्रोपक्रमे 'तत्' मतम्, "अग्निं मन्ये पितरम्" -इत्यादिकं नादरणीयम्। अनादरणे हेतुरुच्यते— 'तत्र अग्निं मन्ये'-इत्येतया उपक्रमपक्षे, यः कोऽपि विरोधी समागत्य 'एनं' होतारं 'ब्रूयात्' शपेत्। कथं शाप इति, तदुच्यते— अनेन होत्रा 'अग्नि मग्नि मिति' एव 'प्रत्यपादि' प्रारब्धम्, तस्या मृचि "अग्निम्पितरमग्निम्भ्रातरम्"-इत्येव मसकृदग्निस्वरूपम्; पित्राद्यभिधानादग्नि मसौ होता प्राप्नोतीति दग्धो भविष्यतीति यदि शपेत्, तदानीं 'शश्वत्' अवश्यं तथा स्यात्॥

परमतं दूषयित्वा स्वमतं निगमयति— "तस्मादग्निर्होता गृहपतिः स राजेत्येतयैव प्रतिपद्येत, गृहपतिवती प्रजातिमती शान्ता; सर्वायुः सर्वायुत्वाय"-इति। अस्या मृचि गृहपतिशब्दः स्पष्टं दृश्यते ( सं० ६.१५.१३. ); तस्मादियं 'गृहपतिवती'; तथा द्वितीयपादे "विश्वा वेद जनिमा"-इति सर्वप्राणिजननाभिज्ञानकथनादियं 'प्रजातिमती'; बहुकृत्वोऽग्निशब्दस्याभावादियं 'शान्ता'; तस्मादेतया प्रतिपद्यमानो होता सर्वायुर्भवति, तच्च यजमानस्य सर्वायुत्वाय सम्पद्यते॥ वेदनं प्रशंसति — "सर्व मायुरेति य एवं वेद"-इति॥ १॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) प्रथमः खण्डः॥ १ (७)॥

॥ अथ द्वितीयः खण्डः ॥

तासां वै देवतानामाजिं धावन्तीनामभिसृष्टानामग्निर्मुखं प्रथमः प्रत्यपद्यत तमश्विनावन्वागच्छतां तमब्रूतामपोदिह्यावां वा इदं जेष्याव इति स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति तथेति तस्मा अप्यत्राकुरुतां तस्मादाग्नेयमाश्विने शस्यते ता उषसमन्वागच्छतां तामब्रूतामपोदिह्यावां वा इदं जेष्याव इति सा तथेत्यब्रवीत्तस्यै वै ममेहाप्यस्त्विति तथेति तस्या अप्यत्राकुरुतां तस्मादुषस्यमाश्विने शस्यते ताविन्द्रमन्वागच्छतां तमब्रूतामावां वा इदं मघवञ्जेष्याव इति न ह तं दधृषतुरपोदिहीति वक्तुं स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति तथेति तस्मा अप्यत्राकुरुतां तस्मादैन्द्रमाश्विने शस्यते तदश्विना उदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां तस्मादेतदाश्विनमित्याचक्षते ऽश्नुते यद्यत्कामयते य एवं वेद तदाहुर्यच्छस्यत आग्नेयं शस्यत उषस्यं शस्यत ऐन्द्रमथ कस्मादेतदाश्विनमित्याचक्षत इत्यश्विनौ हि तदुदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां

तस्मादेतदाश्विन मित्याचक्षते ऽश्नुते यद्यत्कामयते य एवं वेद ॥ २ ( ८ ) ॥

अथाग्नेयं काण्डं विधत्ते— "तासां वै देवताना माजिं धावन्तीना मभिसृष्टाना मग्निर्मुखं प्रथमः प्रत्यपद्यत, त मश्विनावन्वागच्छतां, त मब्रूता मपोदिह्यावां वा इदं जेष्याव इति ; स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति ; तथेति ; तस्मा अप्यत्राकुरुतां ; तस्मादाग्नेय माश्विने शस्यते"–इति । देवताः सर्वा गार्हपत्याग्निसमीपात् निर्गत्य सूर्य्यपर्य्यन्ता माजि मुद्दिश्य धावन्त्यो 'अभिसृष्टाः' अभितः प्रवृत्ताः,—एकदेवता एकस्यां दिशि धावति, अन्या परस्यां दिशीत्येवं सर्वतो धावन्ति । 'तासां' देवतानां मध्ये अग्निः मुखं यथा भवति तथा, मुख्यो भविष्यामीति अभिप्रायेण प्रथमतः 'प्रत्यपद्यत' पुरोगामी धावनं कृतवान् । 'तम्' अग्निम् 'अनु' पश्चादश्विनावगच्छताम्, समीपं गत्वा 'तम्' अग्नि मब्रूताम्,—हे अग्ने ! त्वं शान्तो भविष्यसि, तस्माद् 'अपोदिहि' उत्कर्षेणापेहि, दूरेऽपसर । 'आवाम्' उभावेव 'इदम्' आश्विन मुद्दिश्य जेष्याव इति । 'सः' अग्निरङ्गीकृत्य 'तस्य' अपगच्छतो ममापि 'इह' शस्त्रे भागोऽस्त्विति अङ्गीकृतवान् । अश्विनावङ्गीकृत्य 'तस्मै' अग्नये विभागं दत्तवन्तौ । यस्मादेवं 'तस्मात्' 'आग्नेयं' बह्वना मृचां समूहरूपं काण्डम् 'आश्विने' शस्त्रे होता शस्यते । शंसनीयं तच्च काण्डं सर्वं सूत्रे द्रष्टव्यम् * ॥

---

* "आश्विनं शंसेत् । अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनी पच्छः । एतयाग्नेयं गायत्र मुपसन्तनुयात् । प्रातरनुवाकन्यायेन"–इत्यादि आश्व० श्रौ० ६. ५. ५–८ । "प्रातरनुवाक मनुब्रूयान्मान्द्रेण"–इत्यादिः, "इत्याग्नेयः क्रतुः"–इत्यन्तश्च ४. १३.६–८ द्रष्टव्यः । "त्रीणि षष्टिशतान्याश्विनम"–इति च ६.६.१० ।

अथोषस्यं काण्डं विधत्ते— "ता उषस मन्वागच्छतां, ता मब्रूता मपोदिह्यावां वा इदं जेष्याव इति; सा तथेत्यब्रवीत्तस्यै वै ममेहाप्यस्त्विति; तथेति; तस्या अप्यत्नाकुरुतां; तस्मादुषस्य माश्विने शस्यते"-इति। 'तौ' अश्विनौ 'उषसम्' एतन्नामयुक्तां देवताम्। अन्यत् पूर्ववद् व्याख्येयम् ॥

ऐन्द्रं काण्डं विधत्ते— "ताविन्द्र मन्वागच्छतां, त मब्रूता मावां वा इदं मघवञ्जेष्याव इति; न ह तं दधृषतुरपोदिहीति वक्तुं; स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति; तथेति; तस्मा अप्यत्नाकुरुतां; तस्मादैन्द्र माश्विने शस्यते"-इति। हे मघवन्! आवां जेष्याव इत्येव अब्रूताम्; इन्द्रस्य स्वामित्वात् 'तम्' इन्द्रम् उद्दिश्य 'अपोदिहीति वक्तुं न दधृषतुः' धार्ष्ट्यं नाकुरुताम्। अन्यत् पूर्ववत् ॥

अथाश्विनं काण्डं विधत्ते—"तदश्विना उदजयता मश्विनावाश्नुवातां; यदश्विना उदजयता मश्विनावाश्नुवातां, तस्मादेतदाश्विन मित्याचक्षते"–इति। 'तत्' तस्या माजौ सहसा सूर्यपर्य्यन्तं गत्वा तावश्विनौ उत्कर्षेणाजयताम्। ततस्तावेव शस्त्रम् 'अश्नुवातां' व्याप्तवन्तौ। 'यद्' यस्मादश्विनौ जयपूर्वकं शस्त्रं व्याप्तवन्तौ, तस्मात् 'एतत्' शस्त्र माश्विन मिति याज्ञिका आचक्षते, आश्विनं काण्डं शंसेदित्यभिप्रायः ॥

वेदनं प्रशंसति— "अश्नुते यद् यत्कामयते य एवं वेद"-इति ॥

प्रश्नोत्तराभ्यां शस्त्रस्याश्विनत्व मुपपादयति— तदाहुर्यच्छस्यत आग्नेयं शस्यत उषस्यं शस्यत ऐन्द्र मथ कस्मादेतदाश्विन मित्याचक्षत इत्यश्विनौ हि तदुदजयता मश्विनावाश्नुवातां; यदश्विना

उदजयता मश्विनावाश्नुवातां, तस्मादेतदाश्विन मित्याचक्षते"- इति। आश्विनकाण्डवत् आग्नेयोषस्यैन्द्रकाण्डाना मपि शस्यमानत्वाच्छस्त्रस्याग्नेयत्वादिनामपरित्यागेनाश्विनत्वनाम्नि कः पक्षपातः? इति प्रश्नः। अग्निरुषा इन्द्रश्चैते परतोऽपसृप्ताः, न तु सूर्यपर्य्यन्त मधावन्, अश्विनौ तु धावन्तौ जयपूर्वकं शस्त्रं प्राप्तवन्ताविति तदीयत्वप्रसिद्धिः शस्त्रस्य युक्ता॥

वेदनं प्रशंसति—"अश्नुते यद् यत्कामयते य एवं वेद"-इति। पूर्वं माश्विनसम्बन्धमात्रवेदनम्, इह त्वग्न्यादिसम्बन्धराहित्यवेदनं चेति विशेषः॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये
( सप्तदशाध्याये ) द्वितीयः खण्डः॥ २ (८)॥

———

॥ अथ तृतीयः खण्डः॥

अश्वतरीरथेनाग्निराजि मधावत्तासां प्राजमानो योनि मकूलयत्तस्मात्ता न विजायन्ते गोभिररुणैरुषा आजि मधावत्तस्मादुषस्यागताया मरुणमिवैव प्रभातुषसो रूपं मश्वरथेनेन्द्र आजि मधावत्तस्मात्स उच्चैर्घोष उपब्दिमान् क्षत्रस्य रूपं मैन्द्रो हि स गर्दभरथेनाश्विना उदजयतां मश्विनावाश्नुवातां

यदश्विना उदजयता मश्विनावाश्नुवातां तस्मात्स स्तजवो दुग्धदोहः सर्वेषा मेतर्हि वाहनाना मना-शिष्ठो रेतसस्त्वस्य वीर्यं नाहरतां तस्मात्स द्विरेता वाजी तदाहुः सप्त सौर्याणि छन्दांसि शंसेद्यथैवा-ग्नेयं यथोषस्यं यथाश्विनं सप्त वै देवलोकाः सर्वेषु देवलोकेषु राध्नोतीति तत्तन्नादृत्यं त्रीण्येव शंसेत्त्रयो वा इमे त्रिवृतो लोका एषा मेव लोकाना मभि-जित्यै तदाहुरुदु त्यं जातवेदस मिति सौर्याणि प्रतिपद्येतेति तत्तन्नादृत्यं यथैव गत्वा काष्ठा मप-राध्नुयात्तादृक्तत् सूर्यो नो दिवस्पात्वित्येतेनैव प्रति-पद्येत यथैव गत्वा काष्ठा मभिपद्येत तादृक्तदुदु त्यं जातवेदस मिति द्वितीयं शंसति चित्रं देवाना मुदगादनीक मिति त्रैष्टुभं मसौ वाव चित्रं देवाना मुदेति तस्मादेतच्छंसति नमो मित्रस्य वरुणस्य चक्षस इति जागतं तदाशीःपद माशिष मेवैते-नाशास्त आत्मने च यजमानाय च ॥ ३ (९) ॥

अथाश्विनशस्त्रप्रशंसार्थं देवाना माजिधावनकथा पूर्व मुप-न्यस्ता, त मेव कथाशेष माश्विनशस्त्रप्रशंसार्थ मेव पुनरप्यनुवर्त्त-यति— “अश्वतरीरथेनाग्निराजि मधावत् ; तासां प्राजमानो योनि मकूलयत् ; तस्मात्ता न विजायन्ते”—इति । अश्वगर्दभसाङ्क-र्येण जाताः स्त्रीव्यक्तयोऽश्वतर्यः । तद्युक्तेन रथेनाय मग्निराजि

मुद्दिश्य धावनं कृतवान्। तदानीं 'प्राजमानः' प्रकर्षेणाश्वतरीः प्रेरयन्। "अज गतिक्षेपणयोः"- इतिधातुजन्योऽयं शब्दः। तत्प्रेरणकाले तासां पूर्वपुच्छभाग मुपस्पृश्य योनिम् 'अकूलयद्' दग्धवान्। 'तस्माद्' दग्धयोनित्वात् 'ताः' अश्वतर्यो 'न विजायन्ते' विजनन मपत्योत्पादनं न कुर्वन्ति ॥

अग्नेराजिधावन मुक्त्वोषसो धावनं दर्शयति— "गोभिररुणै-रुषा आजि मधावत्; तस्मादुषस्यागताया मरुण मिवैव प्रभात्यु-षसो रूपम्"-इति। 'अरुणैर्गोभिः' ईषद्रक्तवर्णैर्बलीवर्दैर्युक्तेन रथेन यस्मादुषसो धावनम्, तस्माल्लोकेऽपि रात्रेरवसाने समागताया मुषसि, तस्या उषसो रूपं प्राच्यां दिशि 'अरुण मिवैव' रक्तवर्ण मेव भूत्वा 'प्रभाति' प्रभायुक्तं भवति ॥

इन्द्रस्याजिधावनं दर्शयति—"अश्वरथेनेन्द्र आजि मधावत्; तस्मात्स उच्चैर्घोष उपब्दिमान् क्षत्रस्य रूप मैन्द्रो हि सः"-इति। यस्मादश्वयुक्तेन रथेनेन्द्रो ऽधावत्, तस्माल्लोकेऽपि सोऽश्वयुक्तो रथः 'उच्चैर्घोषः' बहुलध्वनिर्दृश्यते, तथा क्षत्रस्य रूपम् 'उपब्दिमान्' शब्दोपेतं दृश्यते। यदा क्षत्रियो निर्गच्छति, तदीया याष्टिका अन्ये सेवकाः अश्वपुरतः शब्दं कुर्वन्त एव गच्छन्ति। स च शब्दः 'ऐन्द्रो हि' असुरयुद्धेषु तद्धोत्यर्थ मिन्द्रेण कृतत्वादैन्द्रत्वम् ॥

अश्विनोर्धावनं दर्शयति— "गर्दभरथेनाश्विना उदजयता मश्विना वाश्नुवातां; यदश्विना उदजयता मश्विना वाश्नुवातां, तस्मात् स सृतजवो दुग्धदोहः सर्वेषा मेतर्हि वाहनाना मनाशिष्ठो रेतसस्त्वस्य वीर्यं नाहरतां; तस्मात्स द्विरेता वाजी"-इति। अश्विनौ गर्दभयुक्तेन रथेन शीघ्रं गत्वा जयपूर्वकं व्याप्तवन्तौ। 'यत्' यस्मादुभौ रथ मारुह्यातिवेगेन गत्वा व्याप्तवन्तौ, तस्मात् 'सः'

गर्दभो भारातिशयेन तीव्रधावनेन च लोके 'हृतजवः' गतवेगः 'दुग्धदोहः' गतचीररसश्चाभवत्। तस्मादिदानीमपि गजाश्वादिवाहनानां सर्वेषां मध्ये गर्दभः 'अनाशिष्ठः' अत्यन्तवेगरहितो दृश्यते। तदीयस्य रेतसस्तु 'वीर्य्यं' सामर्थ्यम् अश्विनौ 'नाहरतां' न विनाशितवन्तौ। तस्माद्वेगेन यानयोग्यं चीरेण च राहित्येऽपि 'सः' गर्दभो 'द्विरेताः' गर्दभाश्वतरजातिद्वयोत्पादको 'वाजी' गमनवान् दृश्यते॥

एवं शस्त्रप्रशंसार्थ मवशिष्ट मुपाख्यानशेष मभिधाय सौर्याणां मन्त्रसमूहानां सङ्ख्यां विधातुं पूर्वपक्षम् उद्भावयति— "तदाहुः सप्त सौर्याणि छन्दांसि शंसेद्यथैवाग्नेयं यथोषस्यं यथाश्विनं; सप्त वै देवलोकाः, सर्वेषु देवलोकेषु राध्नोतीति"–इति। आग्नेयोषस्याश्विनकाण्डानि यथा प्रत्येकं गायत्र्यादिभिः सप्तच्छन्दोभिर्युक्तानि *, एव मत्र सौर्य्येऽपि काण्डे सप्त छन्दांसि शंसनीयानि। तथा सति भोगस्थानरूपाणां देवलोकाना मवान्तरभेदेन सप्तविधत्वात् तत्समृद्धिः सिध्यतीति पूर्वपक्षिण आहुः॥

तं पक्षं निराकृत्य छन्दस्त्रयपक्षं विधत्ते—"तत्तन्नादृत्यं; त्रीण्येव शंसेत्त्रयो वा इमे त्रिवृतो लोका एषा मेव लोकाना मभिजित्यै"–इति। पृथिव्यन्तरीक्षद्युलोकास्त्रय एव 'त्रिवृतः' सत्वरजस्तमोगुणैस्त्रिविधाः; अतस्त्रयाणा मभिजयाय त्रीण्येव छन्दांसि शंसेत्॥

त्रयाणां छन्दसां प्रारम्भं निश्चेतुं पूर्वपक्ष माह— "तदाहुरुदु त्यं जातवेदस मिति सौर्याणि प्रतिपद्येतेति"–इति। यानि 'सौर्याणि' त्रीणि छन्दांसि, तेषां प्रारम्भे "उदु त्यम्"–इति (सं० १.५०.१.) शंसेदिति पूर्वपक्षः॥

---

* आश्व० श्रौ० ४.१३, १४, १५ कण्डिका द्रष्टव्याः।

त मितं दूषयति — "तत्तन्नादृत्य ; यथैव गत्वा काष्ठा मपराध्नुयात्तादृक्तत्"-इति। लोके कश्चिद्भाषापूर्वक मप्रमादेन धावनं कृत्वा 'काष्ठाम्' अवधिस्थानं प्राप्य 'अपराध्नुयात्' तत्रावसाने स्खलनपतनादिरूप मपराधं कुर्यात्, तादृगेव तद्भवति। आग्नेयकाण्ड मारभ्य सूर्य्यकाण्डपर्य्यन्तं मस्खलन्होता समाप्तौ सूर्य्यकाण्डे स्खलति ; तस्माद् "उदु त्यं" न शंसेत् ॥

इदानीं सिद्धान्त माह—"सूर्यो नो दिवस्पात्वित्येतेनैव ( सं० १०.१५८.१–५. ) प्रतिपद्येत ; यथैव गत्वा काष्ठा मभिपद्येत तादृक्तद्"-इति। यथा लोके कश्चिदवधिं प्राप्य स्खलनरहितः स्वाभीष्टं प्राप्नुयात्, तादृगेव तत् द्रष्टव्यम्। "सूर्य्यो नः"-इत्यस्मिन् मन्त्रे सूर्य्यवाय्वग्नीनां लोकत्रयाद्रक्षणं * प्रार्थयतो रक्षितत्वादेवापराधं न प्राप्नोति ; पूर्वत्र एतत् नास्तीति विशेषः ॥

प्रथमं सूक्तं विधाय नवर्चं † सूक्तान्तरं विधत्ते— "उदु त्यं जातवेदस मिति ( सं० १.५०.१–९. ) द्वितीयं शंसति"-इति। तदेतदुभयं गायत्रीच्छन्दस्कम् ॥

अथ त्रैष्टुभं सूक्तं विधत्ते— "चित्रं देवाना मुदगादनीक मिति ( सं० १.११५.१–६. ) त्रैष्टुभ मसौ वाव चित्रं देवाना मुदेति, तस्मादेतच्छंसति"-इति। अस्मिन् मन्त्रे देवानां सम्बन्धि किञ्चित् 'चित्रं' रूपम् 'उदगात्' उदयं प्राप्नोतीति श्रूयते, असौ वा आदित्य एव देवानां सम्बन्धि चित्रं रूप मुदेति ; कालभेदेन वर्णभेददर्शनात्। तस्मादेतत्सूक्तं प्रशस्तत्वादत्र शंसनीयम् ॥

---

* "सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः"-इति।

† उदु त्य मिति सूक्तं तु त्रयोदशर्चम् ; तत्रादौ नव गायत्र्यः, ता एवेह शंसनीया भवन्ति ; "उदु त्यं जातवेदस मिति नव"-इतिसूत्रकारोक्तेः ( आश्व० श्रौ० ६.५.१८. )।

तृतीयं छन्दो विधत्ते — "नमो मित्रस्य वरुणस्य चक्षस इति (सं० १०. ३७. १-१२.) जागतं; तद्वाशोःपद माशिष मेवैतेनाशास्त आत्मने च यजमानाय च"-इति। 'तद्' तदस्य नमो मित्रस्येत्यादिकम् 'आशोःपदम्' आशिषः प्रतिपादकम्; द्वितीयचतुर्थपादयोः "सपर्यत-शंसत"-इत्याशीरर्थस्य लोडन्तस्य पदद्वयस्य प्रयुक्तत्वात्। तच्छंसनेन होता स्वस्य यजमानस्य चाशिषं प्रार्थयते * ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये
( सप्तदशाध्याये ) तृतीयः खण्डः ॥ ३ ( ९ ) ॥

---

॥ अथ चतुर्थः खण्डः ॥

तदाहुः सूर्यो नातिशस्यो बृहती नातिशस्या यत्सूर्य मति शंसेद् ब्रह्मवर्चस मति पद्येत यद् बृहती मति शंसेत्प्राणानति पद्येतेतीन्द्र क्रतुं न आ भरेत्यैन्द्रं प्रगाथं शंसति शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहीत्यसौ वाव ज्योतिस्तेन सूर्यं नाति शंसति यद्‌ बार्हतः प्रगाथस्तेन बृहतीं

---

* 'सूर्यो नो', 'उदु त्यं', 'चित्रं', 'नमो मित्रस्य' इति चत्वारि सूक्तानि सौर्याणि। "उदिते सौर्याणि प्रतिपद्यते"-इति आश्व० श्रौ० ६.५.१७।

नाति शंसत्यभि त्वा शूर नोनुम इति राथन्तरीं योनिं शंसति राथन्तरेण वै सन्धिनाश्विनाय स्तुवते तद्यद्राथन्तरीं योनिं शंसति रथन्तरस्यैव सयोनित्वायेशान मस्य जगतः स्वर्दृश मित्यसौ वाव स्वर्दृक् तेन सूर्यं नाति शंसति यदु वार्हतः प्रगाथस्तेन बृहतीं नाति शंसति बह्वः सूरचक्षस इति मैत्रावरुणं प्रगाथं शंसत्यहर्वै मित्रो रात्रिर्वरुण उभे वा एषो ऽहोरात्रे आरभते योऽतिरात्र मुपैति तद्यन्मैत्रावरुणं प्रगाथं शंसत्यहोरात्रयोरेवैनं तत्प्रतिष्ठापयति सूरचक्षस इति तेन सूर्यं नाति शंसति यदु वार्हतः प्रगाथस्तेन बृहतीं नाति शंसति मही द्यौः पृथिवी च नस् ते हि द्यावापृथिवी विश्वशंभुवेति द्यावापृथिवीये शंसति द्यावापृथिवी वै प्रतिष्ठे इय मेवेह प्रतिष्ठासावमुत्र तद्यद् द्यावापृथिवीये शंसति प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति देवो देवी धर्मणा सूर्यः शुचिरिति तेन सूर्यं नाति शंसति यदु गायत्री च जगती च ते द्वे बृहत्यौ तेन बृहतीं नाति शंसति विश्वस्य देवी मृचयस्य जन्मनो न या रोषाति न ग्रभदिति द्विपदां शंसति चितैध मुक्थमिति ह स्म वा एतदाचक्षते यदेतदाश्विनं निष्कं-

तिर्ह स्म पाशिन्युपास्ते यदैव होता परिधास्यत्यथ पाशान् प्रति मोक्ष्यामीति ततो वा एतां बृहस्पतिर्द्विपदा मपश्यन्न या रोषाति न ग्रभदिति तया निर्ऋत्याः पाशिन्या अधराचः पाशानपास्यत्तं यदेतां द्विपदां होता शंसति निर्ऋत्या एव तत्पाशिन्या अधराचः पाशानपास्यति स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय सर्व मायुरेति य एवं वेद ऋचयस्य जन्मन इत्यसौ वाव मर्चयतीव तेन सूर्यं नाति शंसति यद्‌ द्विपदा पुरुषच्छन्दसं सा सर्वाणि छन्दांस्यभ्याप्ता तेन बृहतीं नाति शंसति ॥ ४ (१०) ॥

ऐन्द्रादिप्रगाथान् विधातुं प्रस्तौति— "तदाहुः सूर्यो नातिशस्यो, बृहती नातिशस्या ; यत्सूर्यं मति शंसेद्, ब्रह्मवर्चस मति पद्येत ; यद्‌ बृहती मति शंसेत्प्राणानति पद्येत"-इति । 'तत्' तस्मिन्नाश्विनशस्त्रे केचिदभिज्ञा एव माहुः । देवानां मध्ये योऽयं सूर्योऽस्ति, सः 'नातिशस्यः' सूर्य्यं मति लङ्घ्य शंसनं न कर्त्तव्यम्, तथा छन्दसां मध्ये बृहती मतिलङ्घ्य शंसनं न कर्त्तव्यम् ; सूर्यस्योपासकेषु ब्रह्मवर्चसप्रदत्वात्तदभिलङ्घने ब्रह्मवर्चसं नश्येत्, बृहत्याः प्राणरूपत्वात्तदतिलङ्घने प्राणान्विनाशयेदिति तेषा मभिप्रायः ॥

इदानी मेकं प्रगाथं विधत्ते— "इन्द्र क्रतुं न आ भरेत्यैन्द्रं प्रगाथं ( सं० ७.३२.२६.) शंसति"-इति । हे इन्द्र ! 'नः' अस्माकं 'क्रतुम्' अतिरात्राख्यम् 'आ भर' आनयेति अस्य पादस्यार्थः ॥

द्वितीय मृर्चं पठति— "शिक्षा णो अस्मिन् पुरुहूत यामनि, जीवा ज्योतिरशीमहीति"—इति। 'पुरुषु' बहुषु यागेषु आह्वयमान, हे इन्द्र! 'नः' अस्मान् 'अस्मिन्' अतिरात्रयागरूपे 'यामनि' नियमविशेषे 'शिक्ष' उपदेशेन प्रवर्त्तय। 'जीवाः' त्वत्प्रसादेन जीवन्तो वयं 'ज्योतिः' आदित्यमण्डलरूपम् 'अशीमहि' प्राप्नुयाम। अत्र ज्योतिःशब्दस्यादित्यपरत्वात् प्रगाथस्यैन्द्रत्वेऽपि सूर्य्य मतिक्रम्य शंसनं न भविष्यतीत्येतद्दर्शयति— "असौ वाव ज्योतिस्तेन सूर्यं नाति शंसति"-इति॥

अत्र उत्तरस्या ऋचो विष्टारपङ्क्तित्वेऽपि प्रग्रथनेन बृहतीसम्पादनात् बृहती मतिलङ्घ्य शंसनं न भविष्यतीत्येतद्दर्शयति— "यदु बार्हतः प्रगाथस्तेन बृहतीं नाति शंसति"-इति। अस्मिन् प्रगाथे पूर्वस्या ऋचः षट्त्रिंशदक्षरत्वात्पादचतुष्टयोपेतत्वाच्च सा स्वभावत एव बृहती; पुनरपि तस्याश्चतुर्थपाद मष्टाक्षरं द्विरावर्त्त्य इतरस्या ऋचः प्रथमार्द्धेन विंशत्यक्षरेण सह प्रग्रथ्य षट्त्रिंशदक्षरा द्वितीया बृहती सम्पादनीया; तत्राप्यन्तिमं पाद मष्टाक्षरं द्विरावर्त्त्य इतरार्द्धेन विंशत्यक्षरेण सह प्रग्रथ्य तृतीया बृहती सम्पादनीया; एवं सति बृहत्या अतिक्रमो न भवति॥

प्रगाथान्तरं विधत्ते— "अभि त्वा शूर नोनुम इति (सं० ७.३२.२२) राथन्तरीं योनिं शंसति; राथन्तरेण वै सन्धिनाश्विनाय स्तुवते, तद्यद्राथन्तरीं योनिं शंसति रथन्तरस्यैव सयोनित्वाय"—इति। रथन्तराख्यं साम "अभि त्वा शूर"-इत्यतोत्पन्नम्*; तस्माद्रथन्तरयोनित्वम्। उद्गातारो ह्यतिरात्रे रथन्तरसामसाध्येनान्तिमेन सन्धिना स्तोत्रेण आश्विनशस्त्रप्रदर्शनार्थं

* छ० आ० ३.१.५.१। आर० गा० २.१.२१। आर्षे० ब्रा० ९.१३।

मेव स्तुवते *, अतो राथन्तरयोनिशंसने सति स्तोत्रगतस्य रथन्तरस्यैव साम्नः 'सयोनित्व' समानयोनित्वं सम्पद्यते ॥

अत्र सूर्य्यातिक्रमाभावं दर्शयति— "ईशान मस्य जगतः स्वर्दृश मित्यसौ वाव स्वर्दृक्तेन सूर्यं नाति शंसति"-इति। ईशान मित्यादिकः प्रथमायास्तृचः तृतीयः पादः। 'अस्य' सर्वस्य जगतः 'ईशानं' स्वामिनं 'स्वर्दृशं' स्वर्गलोके दृश्यमानम्, 'अभि नोनुमः'-इतिप्रथमपादगतेनान्वयः। अत्र स्वर्दृक्शब्देनासावादित्य एवोच्यते, तेन सूर्यातिक्रमो नास्ति ॥

पूर्ववद् बृहत्यतिक्रमाभावं दर्शयति— "यद् बार्हतः प्रगायस्तेन बृहतीं नाति शंसति"-इति ॥

प्रगायान्तरं विधत्ते— "बहवः सूरचक्षस इति (सं० ७.६६.१०.) मैत्रावरुणं प्रगाथं शंसत्यहर्वै मित्रो रात्रिर्वरुण उभे वा एषो ऽहोरात्रे आरभते योऽतिरात्र मुपैति; तद्यन्मैत्रावरुणं प्रगाथं शंसत्यहोरात्रयोरेवैनं तत्प्रतिष्ठापयति"-इति। अह्नो 'मित्रः' स्वामी, रात्रेश्च 'वरुणः' तस्मात्तयोस्तद्रूपत्वम्। 'यः' यजमानः 'अतिरात्र' क्रतु मनुतिष्ठति, 'एषः' पुमानहोरात्रे 'उभे' अपि उद्दिश्य क्रतुं प्रारभते; उभयोः कालयोरनुष्ठेयविशेषसद्भावात्। अतो मैत्रावरुणप्रगाथशंसनेनाहोरात्रयोरेव कालयोः 'एनं' यजमानं प्रतिष्ठितं करोति † ॥

पूर्ववदनतिक्रमं दर्शयति— "सूरचक्षस इति तेन सूर्यं नाति शंसति; यद्बार्हतः प्रगायस्तेन बृहतीं नाति शंसति"-इति। 'सूरचक्षसः'-इति श्रूयमाणं सूरपदं सूर्य्यवाचि; अतस्तस्य नातिक्रमः ॥

* ता० ब्रा० ९.१.२०—३८. द्रष्टव्यानि।

† 'इन्द्र क्रतुं', 'अभि त्वा', 'बहवः सूरचक्षसः'-इति त्रयः प्रगाथाः। आश्व०श्रौ० ६.५.१८।

पुनरप्यन्ये द्वे ऋचौ विधत्ते— "मही द्यौः पृथिवी च नस्, ते हि द्यावापृथिवी विश्वशम्भुवेति द्यावापृथिवीये शंसति; द्यावापृथिवी वै प्रतिष्ठे; इय मेवेह प्रतिष्ठासावमुत्र; तद्यद् द्यावापृथिवीये शंसति, प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति"–इति। "मही द्यौः"–इत्येका (सं० १.२२.१३.), "ते हि"–इति (सं० १.१६०.१.) द्वितीया; उभे अप्यृचौ द्यावापृथिवी-देवताके। ते च द्यावापृथिव्यौ सर्वेषां प्राणिना माधारभूते 'इह' मनुष्यजन्मनि 'इयम्' पृथिवी प्राणिना माश्रयः; 'अमुत्र' जन्मान्तरे 'असौ' द्युलोक आश्रयः। तथा सति द्यावापृथिवीययोः ऋचोः शंसनेनोभयोरपि प्रतिष्ठारूपयोर्लोकयोः 'एनं' यजमानं प्रतिष्ठापयति॥

अत्र सूर्यस्यानतिक्रमं दर्शयति— "देवो देवी धर्मणा सूर्यः शुचिरिति तेन सूर्यं नाति शंसति"–इति। उत्तरस्या मृचि "देवो देवी"–इत्यस्मिन् पादे सूर्यस्य श्रूयमाणत्वात्तदतिक्रमो नास्ति॥

बृहत्या अनतिक्रमं दर्शयति— "यद्‌ गायत्री च जगती च ते द्वे बृहत्यौ; तेन बृहतीं नाति शंसति"–इति। प्रथमा गायत्रीच्छन्दस्का चतुर्विंशत्यक्षरा, द्वितीया जगतीच्छन्दस्काष्टाचत्वारिंशदक्षरा; मिलित्वा द्वासप्ततिरक्षराणि सम्पद्यन्ते; तेषां द्वेधा विभागे सति षट्त्रिंशदक्षरे द्वे बृहत्यौ भवतः। तेन बृहत्या अनतिक्रमः॥

अथाप्यन्या मेका मृचं विधत्ते— "विश्वस्य देवी मृचयस्य जन्मनो न या रोषाति न ग्रभदिति द्विपदां शंसति"–इति। इयमृक् पाददृयोपेता* अस्मिन् ब्राह्मणे एवोक्ता। मृचि धातुर्गत्यर्थः।

* आश्वलायनेनाप्युक्ता—"विश्वस्य०—०ग्रभदिति द्विपदा"–इति ६.५.१८।

मर्चयति गच्छतीति गतिमान् प्राणी *। 'विश्वस्य' सर्वस्य 'मृचयस्य' गतिमतः प्राणिनो यज्जन्म, तस्य 'जन्मनः' 'देवी' स्वामिनी काचिन्निर्ऋतिरूपा मृत्युदेवता विद्यते ; 'या' मृत्युदेवता अस्मासु 'न रोषाति' न कुप्यति, 'न ग्रभत्' नैव गृह्णातीति द्विपदाया ऋचोऽर्थः । ता मेतां द्विपदां शंसेत् ॥

एता मृचं प्रशंसति—"चितैध मुक्थ मिति ह स्म वा एतदाचक्षते, यदेतदाश्विनं ; निर्ऋतिर्ह स्म पाशिन्युपास्ते, यदैव होता परिधास्यत्यथ पाशान् प्रति मोक्ष्यामीति ; ततो वा एतां बृहस्पतिर्द्विपदा मपश्यद्य या रोषाति न ग्रभदिति ; तया निर्ऋत्याः पाशिन्या अधराचः पाशानपास्यत्तद्यदेतां द्विपदां होता शंसति निर्ऋत्या एव तत्पाशिन्या अधराचः पाशानपास्यति स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय"—इति । यदेतत् 'आश्विनं' शस्त्र मस्ति, तदेतच्चितैध मुक्थ मिति रहस्याभिज्ञा आचक्षते । चिता एधाः काष्ठसमूहा मनुष्यं दग्धुं यस्मिन् श्मशानस्थाने, तत् स्थानं 'चितैधम्' ; तत्सदृश मिदम् 'उक्थं' शस्त्रम्, यथा श्मशानं जीवनार्थिनो बिभ्यति, तद्वदाश्विनं शस्त्रं भयहेतुरित्यर्थः । तत् कथ मिति, तदेवोच्यते— "निर्ऋतिः' मृत्युदेवता, सा च 'पाशिनी' पाशहस्ता सती 'उपास्ते' होतुः समीपे निवसति । केनाभिप्रायेणेति सोऽभिधीयते,— यदैवायं होता 'परिधास्यति' शस्त्रसमाप्तिं करिष्यति, तदैव बन्धनार्थं पाशान् अस्मिन् होतरि 'प्रति

* "मृचिर्हिंसाकर्मा ; 'यत् चुरेण मर्चयता सुपेशसा'—इत्यादिषु ( अथ० सं० ८.२.१७ ; आश्व० गृ० १.१७.१६ ; पार० गृ० २.१ ) तथा दृष्टत्वात्"—इति, "मर्चयात—मर्चयतिहिंसाकर्मा, हिंस्यात्"—इति च ऋग्भाष्ये सायणः ( ८.६७.९,२,२३.७. ) । 'मर्चं च ( शब्दार्थः ) '—इति चु० पं० ११६ । 'मर्चं ग्रहणे' चौरः ; उणा० ३.४३ । मर्चयतेर्मर्कः पा० १.१.५८. वा० २ ।

मोक्ष्यामि' प्रजेष्यामि 'इति' तस्या अभिप्रायः। 'ततो वै' तस्मादेव निर्ऋत्याः परिहरणीयत्वकारणात् तदपाकरणार्थं बृहस्पतिः 'एतां' द्विपदां तत्परिहारहेतुत्वेनापश्यत्। कासौ द्विपदेति विवक्षायां तदीयो द्वितीयः पादो "न या"-इत्यादिकः प्रदर्शनार्थमुपादीयते। 'तया' द्विपदया पाशहस्ताया निर्ऋत्याः सकाशात् 'अधराचः' अधो लम्बमानान् पाशान् बृहस्पतिः 'अपास्यत्' द्विपदायां पठ्यमानायां तद्धस्तात्पाशाः पतिता इत्यर्थः। तद्वदोतापि द्विपदायाः शंसनेन पाशान् 'अपास्यति' निराकरोति। 'स्वस्त्येव' क्षेमेणैवायं होता निर्ऋतिपाशात् मुच्यते। ततः सर्वायुर्भवति, यजमानस्यापि सर्वायुत्वाय शंसनं सम्पद्यते॥ वेदनं प्रशंसति— "सर्वमायुरेति य एवं वेद"-इति॥

तत्र सूर्यस्यानतिक्रमं दर्शयति— "मृचयस्य जन्मन इत्यसौ वाव मर्चयतीव; तेन सूर्यं नाति शंसति"-इति। द्विपदायां गतिवाची 'मृचय'-शब्दोऽस्ति, 'असौ वाव' आदित्योऽपि मर्चयतीव सर्वदा गच्छत्येव; 'तेन' सूर्याभिधानान्नास्त्यतिक्रमः॥

बृहत्या अनतिक्रमं दर्शयति— "यद्रु द्विपदा, पुरुषच्छन्दसं सा सर्वाणि छन्दांस्यभ्याप्ता; तेन बृहतीं नाति शंसति"-इति। 'यद्रु' यस्मादेव कारणादियं द्विपदा, तस्मादेव पुरुषसादृश्यात् पुरुषसम्बन्धिच्छन्दो भवति। पुरुषश्च सर्वच्छन्दसां प्रयोक्तेति पुरुषद्वारा 'सा' द्विपदा सर्वाणि छन्दांसि अभितो व्याप्नोति; 'तेन' बृहत्या अपि व्याप्तत्वात् नास्त्यतिक्रमः॥ ४॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) चतुर्थः खण्डः॥ ४ (१०)॥

॥ अथ पञ्चमः खण्डः ॥

ब्राह्मणस्पत्यया परि दधाति ब्रह्म वै बृहस्पति र्ब्रह्मण्येवैनं तदन्ततः प्रतिष्ठापयत्येवा पित्रे विश्व-देवाय वृष्ण इत्येतया परि दध्यात्प्रजाकामः पशु-कामो बृहस्पते सुप्रजा वीरवन्त इति प्रजया वै सुप्रजा वीरवान्वयं स्याम पतयो रयीणा मिति प्रजावान् पशुमान् रयिमान् वीरवान् भवति यएवं विद्वानेतया परि दधाति बृहस्पते अति यदर्यो अर्हा-दित्येतया परि दध्यात्तेजस्कामो ब्रह्मवर्चसकामो ऽतीव वान्यान् ब्रह्मवर्चस मर्हति द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्र मिति चित्र मिव वै ब्रह्मवर्चसं ब्रह्मवर्चसी ब्रह्मयशसी भवति यएवं विद्वानेतया परि दधाति तस्मादेवं विद्वानेतयैव परि दध्याद् ब्राह्मणस्पत्या तेन सूयं नाति शंसति यदु त्रिष्टुभं त्रिः शंसति सा सर्वाणि छन्दांस्यभ्याप्ता तेन बृहतीं नाति शंसति गायत्र्या च त्रिष्टुभा च वषट् कुर्याद् ब्रह्म वै गायत्री वीर्यं त्रिष्टुब् ब्रह्मणैव तद्वीर्यं सन्दधाति ब्रह्मवर्चसी ब्रह्मयशसी वीर्यवान्

भवति यत्रैवं विद्वान् गायत्र्या च त्रिष्टुभा च वषट् करोत्यश्विना वायुना युवं सुदक्षोभा पिबत मश्विनेति गायत्र्या च विराजा च वषट् कुर्याद् ब्रह्म वै गायत्र्यन्नं विराड् ब्रह्मणैव तदन्नाद्यं सन्दधाति ब्रह्मवर्चसी ब्रह्मयशसी भवति ब्रह्माद्य मन्न मत्ति यत्रैवं विद्वान् गायत्र्या च विराजा च वषट् करोति तस्मादेवं विद्वान् गायत्र्या चैव विराजा च वषट् कुर्यात् प्र वा मन्धांसि मद्यान्यस्थुरुभा पिबत मश्विनेत्येताभ्याम् ॥ ५ (११) ॥

अथाश्विनस्य समाप्त्यर्थ मेका मृचं विधत्ते— "ब्राह्मणस्पत्यया परि दधाति ; ब्रह्म वै बृहस्पतिर्ब्रह्मण्येवैनं तदन्ततः प्रतिष्ठापयति" –इति । "बृहस्पते अति यदर्य्यः"–इति ( सं० २.२३.१५. ), एषा 'ब्राह्मणस्पत्या' ; बृहस्पतेर्देवेषु ब्राह्मणजातिस्वरूपत्वात् । तेन परिधानेनैतच्छस्त्रं 'ब्रह्मण्येव' ब्राह्मणरूपे बृहस्पतावेव प्रतिष्ठितं भवति ॥

नित्यप्रयोगार्थं परिधानीयां विधाय काम्यप्रयोगं विधत्ते— "एवा पित्रे विश्वदेवाय वृष्ण इत्येतया ( सं० ४.५०.६. ) परि दध्यात् प्रजाकामः पशुकामः"–इति ॥

तस्या ऋचस्तृतीयपाद मनूद्य व्याचष्टे— "बृहस्पते सुप्रजा वीरवन्त इति प्रजया वै सुप्रजा वीरवान्"–इति । पुत्रादिरूपया 'प्रजया' पिता 'सुप्रजाः' शोभनापत्यः 'वीरवान्' शूरभृत्ययुक्तश्च । तेन तृतीयपादोक्तं "सुप्रजा वीरवन्तः"–'इति' एतदुपपन्नम् ॥

चतुर्थपाद मनुवदति— "वयं स्याम पतयो रयीणा मिति"-इति। हे बृहस्पते! त्वत्प्रसादाद् वयं 'रयीणां' धनानां पतयः स्याम॥ अस्यार्थस्य स्पष्टत्वाद् व्याख्यान मुपेक्ष्य ज्ञानपूर्वकानुष्ठानं प्रशंसति— "प्रजावान् पशुमान् रयिमान् वीरवान् भवति, यत्रैवं विद्वानेतया परि दधाति"-इति॥

फलान्तरार्थम् * अन्या मृचं विधत्ते— "बृहस्पते अति यदर्यो अर्हाद्दित्येतया (सं० २.२३.१५.) परि दध्यात्तेजस्कामो ब्रह्मवर्चसकामो ऽतीव वान्यान् ब्रह्मवर्चस मर्हति"-इति। अत्र पादे यो ऽय मतिशब्दस्तत्प्रसादादनुष्ठातान्यपुरुषान् 'अतीव' अतिक्रम्यैवाधिकं ब्रह्मवर्चसम् 'अर्हति' प्राप्नोतीत्यर्थः॥

द्वितीयपादे प्रथमपद मनूद्य व्याचष्टे— "द्युमद्दिति द्युमदिव वै ब्रह्मवर्चसं विभातीति, वीव वै ब्रह्मवर्चसं भाति"-इति। "द्युमद्विभाति क्रतुमज्जनेषु"-इति द्वितीयः पादः। ब्रह्मवर्चसविशेषणेन द्युतिमत्पर्यायो 'द्युमद्दिति' शब्दः प्रयुज्यते। श्रुताध्ययनसम्पत्तिरूपं 'ब्रह्मवर्चसं' विद्वत्सभायां 'द्युमदिव वै' प्रकाशयुक्त मेव भूत्वा 'विभाति' सर्वेषा मेव भासते 'इति' तस्य पादस्य तात्पर्यम्। एतत्पादप्रशंसनेन ब्रह्मवर्चसं 'वीव वै' विशेषेणैव भाति॥

तृतीयपाद मनूद्य व्याचष्टे— "यद्दीदयच्छवस ऋतप्रजातेति, दीदायेव वै ब्रह्मवर्चसम्"-इति। अस्मिन्नपि पादे ब्रह्मवर्चसविशेषणत्वेन दीप्यमानत्ववाचकं दीदयदिति पद मस्ति; ब्रह्मवर्चसं 'दीदायेव वै' ब्राह्मणेषु दीप्यत एवेति तस्य पदस्यार्थः॥

चतुर्थपाद मनूद्य व्याचष्टे— "तदस्मासु द्रविणं धेहि चित्र मिति, चित्र मिव वै ब्रह्मवर्चसम्"-इति। अस्मिन् पादे यच्चित्र

* नित्यप्रयोगार्थश्च। आश्व० श्रौ० ६.५.१९. द्रष्टव्यम्।

मिति विशेषणम्, तद्युक्त मेव ; ब्रह्मवर्चसस्य वेदेन शास्त्रेणाचारेण च विचित्रत्वात् ॥

वेदनपूर्वक मनुष्ठानं प्रशंसति— "ब्रह्मवर्चसी ब्रह्मयशसी भवति, यत्रैवं विद्वानेतया परि दधाति"–इति। 'ब्रह्मवर्चसी' श्रुत-सम्पन्नः 'ब्रह्मयशसी' तन्निमित्तकीर्त्तियुक्तः ॥ उक्त मर्थं निगमयति— "तस्मादेवं विद्वानेतयैव परि दध्याद्"–इति ॥

सूर्य्यस्यानतिक्रमं दर्शयति—"ब्राह्मणस्पत्या ; तेन सूर्यं नाति-शंसति"–इति। यस्मादिय मृक् ब्रह्मणस्पतिदेवताका, सूर्य्यश्च सन्ध्योपासनादौ ब्राह्मणानां स्वामी, तस्मान्नातिक्रमः ॥

बृहत्या अनतिक्रमं दर्शयति— "यद् त्रिष्टुभं त्रिः शंसति ; सा सर्वाणि छन्दांस्यभ्याप्ता ; तेन बृहतीं नाति शंसति"–इति। "त्रिः प्रथमां त्रिरुत्तमाम्"–इतिन्यायेन ❋ परिधानीयायास्त्रिरावृत्ति-रस्ति ; इयं त्रिष्टुप् त्रिरावर्त्त्यमाना द्वात्रिंशदधिकशताक्षरा सम्पद्यते ; तद्यदक्षरेषु सर्वच्छन्दसा मन्तर्भावयितुं शक्यत्वादियं सर्वाणि छन्दांस्यभितो व्याप्नोति, अतो बृहत्या अपि तद्व्याप्तत्वान्नास्त्यति-क्रमः ॥

यदुक्तं सूत्रकारेण "आश्विनेन ग्रहेण सपुरोडाशेन चरन्ति"–इति ( आश्व० श्रौ० ६.५.२३. ), तत्रोभयार्थं द्वे याज्ये विधत्ते— "गायत्र्या च त्रिष्टुभा च वषट् कुर्य्याद्"–इति। "उभा पिबत मश्विना"–इति ( सं० १.४.६.१५.) गायत्री, "अश्विना वायुना"–इति ( सं० ३.५८.७. ) त्रिष्टुप् ; ताभ्यां 'वषट् कुर्यात्' याज्यात्वेन तदुभयं पठेदित्यर्थः ॥

तदेतदुभयं प्रशंसति—"ब्रह्म वै गायत्री, वीर्यं त्रिष्टुब् ; ब्रह्मणैव

❋ १भा० २३पृ० ४पं०, ९७पृ० १६ पं० इत्यादिषु द्रष्टव्यम्।

तद्वीर्य्यं सन्दधाति"-इति। गायत्र्या ब्राह्मणस्य च प्रजापति-मुखजत्वसाम्यादेकत्वम् *, त्रिष्टुभो वीर्य्यहेतुत्वात् तद्रूपत्वम् †; तदुभयपाठे सति ब्राह्मणेन सह वीर्य्यं सम्पादयति ॥

वेदनपूर्वक मनुष्ठानं प्रशंसति— "ब्रह्मवर्चसी ब्रह्मयशसी वीर्यवान् भवति, यत्रैवं विद्वान् गायत्र्या च त्रिष्टुभा च वषट् करोति"-इति ॥

तदुक्तयोर्गायत्रीत्रिष्टुभोः प्रतीकद्वयं दर्शयति— "अश्विना वायुना युवं सुदक्षोभा पिबत मश्विनेति"-इति। अश्विनेत्या-दिकं त्रिष्टुभः प्रतीकम्, उभा पिबत मित्यादिकं गायत्र्याः प्रती-कम्। एते त्रिष्टुब्-गायत्र्यौ याज्ये इत्येकः पक्षः ॥

पक्षान्तरं विधत्ते—"गायत्र्या च विराजा च वषट् कुर्याद्; ब्रह्म वै गायत्र्यन्नं विराड्; ब्रह्मण्येव तदन्नाद्यं सन्दधाति"-इति। गायत्र्या ब्रह्मत्वं पूर्वं मुक्तम्, विराजोऽन्नसाधनत्वादन्नत्वम्; अत-स्तदुभयपाठे सति 'आद्यम्' अन्नं ब्राह्मणजात्या संयोजयति ॥

वेदनपूर्वक मनुष्ठानं प्रशंसति— "ब्रह्मवर्चसी ब्रह्मयशसी भवति, ब्रह्माद्य मन्न मत्ति, यत्रैवं विद्वान् गायत्र्या च विराजा च वषट् करोति"-इति। ब्राह्मणेनात्तुं योग्यं पवित्रीभूतं 'ब्रह्माद्यम्' ॥

तयोर्गायत्रीविराजोः प्रतीकप्रदर्शनपुरःसर मेतं पक्षं निग-मयति— "तस्मादेवं विद्वान् गायत्र्या चैव विराजा च वषट् कुर्य्यात्,— प्र वा मन्धांसि मद्यान्यस्थुरुभा पिबत मश्विनेत्ये-ताभ्याम्"--इति। "प्र वा मन्धांसि"--इति ( सं० ७.६८.२. ) विराट्, "उभा पिबतम्"--इति ( सं० १.४६.१५. ) गायत्री।

* १भा० १९ पृ० ५पं०, ३५पृ० १५पं०। † ४८पृ० ९पं०, १५०पृ० १५पं०।

'गायत्र्या चैव विराजा च'-इत्येवकारेण पूर्वोक्तस्य त्रिष्टुप्पक्षस्य व्यावृत्तिः ; तस्मादपि विराट्पक्षः प्रशस्त इत्यर्थः * ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये
(सप्तदशाध्याये) पञ्चमः खण्डः ॥ ५ (११) ॥

---

॥ अथ षष्ठः खण्डः ॥

चतुर्विंश मेतदहरुपयन्त्यारम्भणीयं मेतेन वै संवत्सर मारभन्त एतेन स्तोमांश्च छन्दांसि चैतेन सर्वा देवता अनारब्धं वै तच्छन्दोऽनारब्धा सा देवता यदेतस्मिन्नहनि नारभन्ते तदारम्भणीयस्यारम्भणीयत्वं चतुर्विंशः स्तोमो भवति तच्चतुर्विंशस्य चतुर्विंशत्वं चतुर्विंशतिर्वा अर्द्धमासा अर्द्धमासश एव तत्संवत्सर मारभन्त उक्थ्यो भवति पशवो वा उक्थानि पशूना मवरुद्ध्यै तस्य पञ्चदश स्तोत्राणि भवन्ति पञ्चदश

---

* 'अहर्वै'-इत्यारभ्य (२६६पृ०) एतदन्ता उक्ता अतिरात्रविषयः ; कल्पेऽप्येवम् 'अतिरात्रे'-इत्यारभ्य कण्डिकाद्वये (६.४,५.)। "अतिरात्रेण प्रजाकामः पशुकामो वा"-इत्यापस्तम्बीयविधिसूत्रम् (१४.१.२.)। यत्तोक्त मुपक्रमे 'चतुःसंस्थो ज्योतिष्टोमः प्रथमं विधीयते'-इति (१भा० ८पृ०), 'अग्निष्टोमः०—०वचनात्'-इति च (१भा० ९पृ०), तत्सर्व मेतदन्तं ज्ञातव्यम् ।

शस्त्राणि स मासो मासश एव तत्संवत्सर मारभन्ते तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सर मारभन्ते ऽग्निष्टोम एतदहः स्यादित्याहुरग्निष्टोमो वै संवत्सरो न वा एतदन्यो ऽग्निष्टोमादहर्दाधार न विव्याचेति स यद्यग्निष्टोमः स्यादष्टाचत्वारिंशास्त्रयः पवमानाः स्युश्चतुर्विंशानीतराणि स्तोत्राणि तदु षष्टिश्चैव त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सर मारभन्त उक्थ्य एव स्यात्पशुसमृद्धो यज्ञः पशुसमृद्धं सत्रं सर्वाणि चतुर्विंशानि स्तोत्राणि प्रत्यक्षाद्ध्येतदहश्चतुर्विंशं तस्मादुक्थ्य एव स्यात् ॥ ६ (१२) ॥

अग्निष्टोम उक्थ्यः षोड़श्यतिरात्रश्चेत्येवं चतुःसंस्थो ज्योतिष्टोमः सार्द्धेनाध्यायषोड़शकेनाभिहितः; अथ एतच्चतुष्टय मुपजीव्य प्रवर्त्तमानं "गवामयनं" नाम संवत्सरसत्र मभिधातव्यम् * । संवत्सरगतेषु षष्ट्यधिकशतत्रयदिवसेष्वेकैकस्मिन् दिवसे पूर्वोक्तानां चतसृणां संस्थानां मध्ये कयाचित् संस्थया युक्तः सोमप्रयोगः सर्वोऽप्यनुष्ठेयः । सोऽय मेकैकदिनसाध्यः सोमप्रयोगो वेदेष्वहःशब्देन व्यवह्रियते । संवत्सरसत्रस्याद्ये दिवसे कश्चिदतिरात्रसंस्थः सोमप्रयोगोऽनुष्ठेयः । तदनन्तरभाविनि द्वितीयदिवसेऽनुष्ठेयं सोम-

* सामब्राह्मणे चैतत् चतुर्थपञ्चमप्रपाठकयोराम्नातम् ।

  

प्रयोगं विधत्ते— "चतुर्विंश मेतदहरुपयन्त्यारम्भणीयम्"-इति। 'चतुर्विंश'-नामकः कश्चित् स्तोमविशेषः। स च छन्दोगैरेव माम्नायते— "अष्टाभ्यो हिङ्करोति, स तिसृभिः स चतसृभिः स एकया; अष्टाभ्यो हिङ्करोति, स एकया स तिसृभिः स चतसृभिः; अष्टाभ्यो हिङ्करोति, स चतसृभिः स एकया स तिसृभिः"-इति*। अस्याय मर्थः— स्तोत्रस्याधारभूते तृचे विद्यमानास्तिस्र ऋच आवृत्तिविशेषेण चतुर्विंशतिसङ्ख्याका ऋचः कर्त्तव्याः। सा चावृत्तिस्त्रिभिः पर्य्यायैः सम्पद्यते। तत्र प्रथमे पर्य्याये प्रथमा मृचं त्रिरभ्यस्य 'सः' उद्गाता ताभिस्तिसृभिर्गायेत्, द्वितीया मृचं चतुर्वार मभ्यस्य ताभिश्चतसृभिर्गायेत्, तृतीयाया ऋचः सकृदेवपाठो न चावृत्तिः। एवं प्रथमपर्य्याये ऽष्टौ ऋचः सम्पद्यन्ते; ताभिः 'हिङ्करोति' उद्गायेत्। द्वितीयपर्य्याये प्रथमायाः सकृत्पाठः, द्वितीयायास्त्रिरावृत्तिः, तृतीयायाश्चतुरावृत्तिः; इत्येव मत्राप्यष्टौ सम्पद्यन्ते। तृतीयपर्य्याये प्रथमायाश्चतुरावृत्तिः, द्वितीयायाः सकृत्पाठः, तृतीयायास्त्रिरावृत्तिः; इत्येव मत्राप्यष्टौ सम्पद्यन्ते। तत् सर्वं मिलित्वा चतुर्विंशतिसङ्ख्या ऋचो भवन्ति। सोऽयं चतुर्विंश-स्तोमः। अनेन स्तोमेन स्तोत्राणि यस्मिन्नहनि निष्पाद्यन्ते, तदहः 'चतुर्विंशम्'; तादृश मेतदहः 'उपयन्ति' अनुतिष्ठेयुः। अत्र सत्रेषु सर्वत्रोपयन्त्यासत इति शब्दावनुष्ठानपरौ; एताभ्यां विधान मेव सत्रलिङ्गम्। "तत्र ये यजमानास्त ऋत्विजः"-इति श्रुत्यन्तरादृत्विजां सर्वेषां यजमानत्वेनोपयन्तीति बहुवचनम्। तस्यैतस्याह्नः 'आरम्भणीयम्'-इति नामधेयम् ॥

---

* ता० ब्रा० ३.८। पृष्ठ्यषडहस्य त्रिवृदादयः षट् स्तोमाः, ततश्छन्दोमानां चतुर्विंशादयस्त्रयः स्तोमा आम्नाताः; तेष्वयं प्रथमः।

तस्यैतस्य नाम्नो निर्वचनं दर्शयति— "एतेन वै संवत्सर मारभन्त, एतेन स्तोमांश्च छन्दांसि चैतेन सर्वा देवता; अनारब्धं वै तच्छन्दो ऽनारब्धा सा देवता, यदेतस्मिन्नहनि नारभन्ते; तदारम्भणीयस्यारम्भणीयत्वम्"-इति। एतेनैव चतुर्विंशनाम्ना सत्रिणः 'संवत्सरं' सत्र मारभन्ते। तत्र सामगैः प्रयोक्तव्या ये स्तोमाः, बह्वृचैः प्रयोक्तव्यानि यानि छन्दांसि, याश्च तत्तन्मन्त्र-प्रतिपाद्याः सर्वा देवताः, तत् सर्वं मनेनैवाह्नारभन्ते। यदि कथञ्चिदेतस्मिन्नहनि छन्दो वा देवतान्तरं वा नारभेरन्, तदानीं मन्यस्मिन्नहनि आरब्ध मपि छन्दोदेवतादिक मनारब्धसदृश मेव भवति। तस्मादस्मिन्नेवाहनि सर्वस्य मुख्यः प्रारम्भः। तथा सत्यारभ्यते सर्व मस्मिन्नहनीति व्युत्पत्त्यारम्भणीयं नाम सम्पन्नम्। यद्यप्येतस्मादह्नः पूर्वभाविनि प्रायणीयाख्येऽहनि सत्रं प्रारब्धम्, तथापि तथा प्रायणीयस्यातिरात्रसंयुक्तस्य संवत्सरोपक्रमसाधारणत्वात् अस्य सत्रस्य विशेषेण प्रारम्भोऽस्मिन्नेव भवतीत्यभिप्रेत्यैतस्यारम्भणीयत्व मेव युक्तम्॥

अस्मिन्नहनि स्तोमविशेषं विधत्ते—"चतुर्विंशस्तोमो भवति; तच्चतुर्विंशस्य चतुर्विंशत्वम्"-इति। यान्यत्र स्तोत्राणि सन्ति, तेषु सर्वेषु यः पूर्व मुदाहृतः * चतुर्विंशत्वसञ्ज्ञासम्पादनरूपः स्तोमः; स एव कर्त्तव्यः। ईदृशस्तोमयोगादेवाह्नोऽपि चतुर्विंशं नाम सम्पन्नम्॥

तं स्तोमं प्रशंसति— "चतुर्विंशतिर्वा अर्द्धमासा, अर्द्धमासश एव तत्संवत्सर मारभन्ते"-इति। द्वादशसु मासेषु विद्यमाना अर्द्धमासाश्चतुर्विंशतिसञ्ज्ञाकाः। तथा सत्यर्द्धमासशब्द एक मर्द्ध-

* 'यत् पूर्व मुदाहृतम्' क।

मासं समाप्य पुनरप्यपरोऽर्द्धमास इत्येवं क्रमेण चतुर्विंशतिसम्पत्तौ संवत्सरसत्रप्रारम्भो भवति। तस्माच्चतुर्विंशस्तोमः प्रशस्तः ॥

एतस्मिन्नहनि सोमयागस्य संस्थाविशेषं विधत्ते—"उक्थ्यो भवति; पशवो वा उक्थानि, पशूना मवरुद्ध्यै"--इति। अग्निष्टोमादूर्द्ध्वभावी योऽय मुक्थ्योऽस्ति *, सोऽस्मिन्नहनि प्रयोक्तव्यः। तत्र द्वादशस्तोत्रेभ्य उत्तराणि त्रीण्युक्थनामकानि स्तोत्राणि; तेषां पशुप्राप्तिहेतुत्वात् पशुत्वम्। अत उक्थ्यानुष्ठानं पशुप्राप्त्यै भवति ॥

तस्मिन्नहनि चोदकप्राप्तस्तोत्रशस्त्रसङ्ख्यां प्रशंसति— "तस्य पञ्चदश स्तोत्राणि भवन्ति, पञ्चदश शस्त्राणि; स मासो, मासश एव तत्संवत्सर मारभन्ते"–इति। मासगतानां दिवसानां त्रिंशत्त्वात् स्तोत्रशस्त्रसङ्ख्यायाश्च तथात्वान्मासत्वसम्पत्तिः। 'मासशः' एकैकमासक्रमेणेत्यर्थः ॥

स्तोत्रगताना मृचां सङ्ख्यां प्रशंसति— "तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सर मारभन्ते"–इति। एकैकस्य स्तोत्रस्य चतुर्विंशतिसङ्ख्यायावत्तत्वात्तत्र्याः स्तोत्रयोग्या ऋचश्चतुर्विंशतिः सम्पद्यन्ते; तथा सति दशसु स्तोत्रेषु चत्वारिंशदधिकं शतद्वयम्, पञ्चसु स्तोत्रेषु विंशत्यधिक मेकं शतम्,—एतदुभयं मिलित्वा षष्ट्यधिकशतत्रयसङ्ख्याकाः स्तोत्रियाः सम्पद्यन्ते। संवत्सरसम्बन्धीन्यहान्यपि तत्सङ्ख्याकानि; तथा सति 'अहःशः' अहःक्रमेणैव संवत्सरसत्र मारभन्ते। तदेव मुक्तः पक्ष उपपादितः † ॥

* २३५—२४३पृ० द्रष्टव्यम्।

† "चतुर्विंशं भवति०—० प्रतितिष्ठन्ति"–इति च ता० ब्रा० ४.२,४–१०।

अथ पक्षान्तरं विधत्ते*—"अग्निष्टोम एतदहः स्यादित्याहुरग्निष्टोमो वै संवत्सरो ; न वा एतदन्यो ऽग्निष्टोमादहर्दाधार, न विव्याचेति"–इति। यदिदं द्वितीय मह:, सोऽग्निष्टोमः कर्त्तव्यः ; अग्निष्टोमस्य संवत्सरसत्वरूपत्वात्। कथ मिति चेत्, तदुच्यते— 'अग्निष्टोमादन्यः' उक्थ्यादिरूपः कश्चिदपि क्रतुः संवत्सरसत्वावयवभूतः, एतदहः 'नैव दाधार' नैव धारयितुं शक्तः। अनुपदिष्टान्यङ्गानि सर्वाण्यग्निष्टोमादतिदिश्यन्ते ; तदेतदग्निष्टोमस्य धारयितृत्वम्। तस्मादग्निष्टोमव्यतिरिक्तः क्रतुरेतदहः 'न विव्याच' विवेक्तु मनुष्ठापयितुं न शक्तः। 'इति' एवं पक्षान्तरवादिना मभिप्रायः॥

अस्मिन् पक्षे स्तोमविशेषं विधत्ते—"स यद्यग्निष्टोमः स्यादष्टाचत्वारिंशास्त्रयः पवमानाः स्युश्चतुर्विंशानीतराणि स्तोत्राणि ; तदु षष्टिश्चैव त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहःश एव तत्संवत्सर मारभन्ते"–इति। अग्निष्टोमपक्षे बहिष्पवमान-माध्यन्दिनपवमानार्भवपवमानेषु त्रिषु स्तोत्रेष्वष्टाचत्वारिंशनामकः स्तोमः कर्त्तव्यः। स च छन्दोगैरेव माम्नातः— "षोड़शभ्यो हिङ्करोति, स तिसृभिः स द्वादशभिः स एकया ; षोड़शभ्यो हिङ्करोति, स एकया स तिसृभिः स द्वादशभिः ; षोड़शभ्यो हिङ्करोति, स द्वादशभिः स एकया स तिसृभिः"–इति †। प्रथमे पर्य्याये प्रथमाया ऋचस्त्रिरावृत्तिः, द्वितीयाया द्वादशकृत्व आवृत्तिः, तृतीयायाः सकृत्पाठः ; द्वितीयपर्य्याये प्रथमायाः सकृत्पाठः,

---

* एव मेव पक्षान्तरं सामब्राह्मणेऽपि ( ता० ब्रा० ४.२.११,१२. )।

† एषाष्टाविंशस्य 'प्रतिष्ठिता' विष्टुतिः( ता० ब्रा० ३.१२. ), आम्नाता चापरा तत्रैव 'नेदीयःसङ्क्रमा'–इति ( ३.१३. )।

द्वितीयायास्त्रिरावृत्तिः, तृतीयाया द्वादशकृत्व आवृत्तिः ; तृतीय-पर्य्याये प्रथमाया द्वादशकृत्व आवृत्तिः, द्वितीयायाः सकृत्पाठः, तृतीयायास्त्रिरावृत्तिः ; मिलित्वाष्टाचत्वारिंशत् स्तोत्रीयाः सम्पद्यन्ते। सोऽय मष्टाचत्वारिंशः स्तोमः। त मेतं पवमानेषु त्रिषु कृत्वा शिष्टेषु नवसु स्तोत्रेषु चतुर्विंशं स्तोमं कुर्य्यात्। तथा सति पवमानस्तोत्रेषु चतुश्चत्वारिंशदधिकशतसङ्ख्याकाः स्तोत्रीयाः सम्पद्यन्ते ; इतरस्तोत्रेषु षोड़शाधिकशतद्वयसङ्ख्याकाः; ततो मिलित्वा षष्ट्यधिकशतत्रयसङ्ख्याका भवन्ति। संवत्सरगताना मह्ना मपि तावत्त्वादहःक्रमेणैव संवत्सर मारभन्ते ॥

एवं पक्षद्वय मुपन्यस्य तयोः समविकल्पत्व मभिप्रेत्य पुनरपि पूर्वोक्त मुक्थ्य मुपन्यस्यति—"उक्थ्य एव स्यात्; पशुसमृद्धो यज्ञः, पशुसमृद्धं सत्रं, सर्वाणि चतुर्विंशानि स्तोत्राणि प्रत्यक्षाद्येतदहश्चतुर्विंशं ; तस्मादुक्थ्य एव स्यात्"–इति। उक्थ्यस्तोत्राणां पशुसाधनत्वात् उक्थ्यो यज्ञः पशुसमृद्धः, सत्रं च पशुसमृद्धं कर्त्तव्यम्। किञ्च उक्थ्यपक्षे सर्वाणि स्तोत्राणि चतुर्विंशस्तोमकानि; स त्वग्निष्टोमपक्षे पवमानव्यतिरिक्तान्येव। तथा सति प्रत्यक्षात् मुख्यवृत्त्यैवैतदहश्चतुर्विंशं भवति ; सङ्ख्यान्तरस्य कुत्राप्यप्रविष्टत्वात्। 'तस्मादुक्थ्य एव' कार्य्यः *। एवशब्दो विकल्पार्थः ; "अग्निष्टोम इद महरुक्थ्यो वा"–इतिसूत्रकारवचनात् † ॥ ६ ॥

इति श्रीमत्सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये (सप्तदशाध्याये) षष्ठः खण्डः ॥ ६ (१२) ॥

---

* एवं सामब्राह्मणेऽपि द्रष्टव्यम् ( ता० ब्रा० ४.२.१३,१४. )।

† आश्व० श्रौ० ७, ४, १४, १५।

॥ अथ सप्तमः खण्डः ॥

बृहद्रथन्तरे सामनी भवत एते वै यज्ञस्य नावौ सम्पारिण्यौ यद् बृहद्रथन्तरे ताभ्या मेव तत्संवत्सरं तरन्ति पादौ वै बृहद्रथन्तरे शिर एतदहः पादाभ्या मेव तच्छ्रियं शिरोऽभ्यायन्ति पक्षौ वै बृहद्रथन्तरे शिर एतदहः पक्षाभ्या मेव तच्छ्रियं शिरोऽभ्यायुवते ते उभे न समवसृज्ये य उभे समवसृजेयुर्यथैव छिन्ना नौर्बन्धनात्तीरं तीर मृच्छन्ती प्लवेतैव मेव ते सत्रिणस्तीरं तीर मृच्छन्तः प्लवेरन् य उभे समवसृजेयुस्तद्यदि रथन्तर मव सृजेयुर्बृहतैवोभे अनवसृष्टे अथ यदि बृहदवसृजेयू रथन्तरेणैवोभे अनवसृष्टे यद्वै रथन्तरं तद्वैरूपं यद् बृहत्तद्वैराजं यद्रथन्तरं तच्छाक्वरं यद् बृहत्तद्रैवत मेव मेते उभे अनवसृष्टे भवतो ये वा एवं विद्वांस एतदहरुपयन्त्याप्त्वा वै ते ऽहःशः संवत्सर माप्नार्द्धमासश आप्त्वा मासश आप्त्वा स्तोमांश्च छन्दांसि चाप्त्वा सर्वा देवतास्तप एव तप्यमानाः सोमपीथं भक्षयन्तः संवत्सर मभिषुण्वन्त आसते ये वा अत ऊर्द्ध्वं संवत्सर मुपयन्ति गुरुं वै ते भार मभि नि दधते सं वै गुरुर्भारः शृणात्यथ य एनं परस्तात्

कर्मभिराप्नुवस्तादुपैति स वै स्वस्ति संवत्सरस्य पारमश्नुते ॥ ७ ( १३ ) ॥

पृष्ठस्तोत्रे चोदकप्राप्तं विकल्पितं * सामद्वय मनूद्य प्रशंसति— "बृहद्रथन्तरे सामनी भवत ; एते वै यज्ञस्य नावौ सम्पारिण्यौ यद् बृहद्रथन्तरे ; ताभ्या मेव तत्संवत्सरं तरन्ति"–इति। "त्वा मिद्धि हवामहे"–इत्यस्या मृच्युत्पन्नं साम 'बृहत्' †, "अभि त्वा शूर नोनुमः"–इत्यस्या मृच्युत्पन्नं 'रथन्तरम्' ‡। एते उभे अपि यज्ञाख्यस्य समुद्रस्य सम्यक् परतीरप्राप्तिसाधनभूते नावौ। संवत्सरसत्रस्य समुद्ररूपत्वं शाखान्तरे दर्शितम्— "समुद्रं वा एते प्र प्लवन्ते, ये संवत्सर मुपयन्ति"–इति ( तै० सं० ७.५.१.२. § )। तथा सति तत्पारनयनहेत्वोः साम्नोर्नौरूपत्वं युक्तम्। अतो बृहद्रथन्तररूपाभ्या मेव संवत्सरसत्ररूपं समुद्रं 'तरन्ति' गवामयनस्य पारं गच्छन्तीत्यर्थः ॥

प्रकारान्तरेण प्रशंसति— "पादौ वै बृहद्रथन्तरे, शिर एतदहः ; पादाभ्या मेव तच्छ्रियं शिरोऽभ्यायन्ति"–इति। यथा मनुष्यस्य पादौ, तथा सत्रस्य 'बृहद्रथन्तरे' सामनी ; 'एतत्' आरम्भणीय महः शिरःस्थानीयम्। ततो यथा लोके पुरुषाः पादाभ्या मेव देशान्तरात् स्वगृहे गत्वा, तत्र शिरोऽभिलक्ष्याभ्यङ्गकर्णाभरणादि-

---

* "रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेत"–इति आप० श्रौ० १०.२.६।

† छ० आ० ३.१.५.२. ऋचि आर० गा० १.१.२७. बृहत् ( योनिसाम ); उ० आ० २.१.१२.१,२ ऋचोः प्रगाथत्वेचे ऊह्य० गा० १.१.५. बृहत् ( स्तोत्रम् )।

‡ छ० आ० ३.१.५.१ ऋचि आर० गा० २.१.२१. रथन्तरं ( योनिसाम ); उ० आ० १.१.११.१,२ ऋचोः प्रगाथत्वेचे ऊह्य० गा० १.१.१. रथन्तरं ( स्तोत्रम् )।

§ एव मेव ता० ब्रा० ५.८.४.६. ( प्लवसाम—गे० गा० १४.१.३४. )।

रूपां 'श्रियम्' 'आयन्ति' प्राप्नुवन्ति ; एव मेते सत्रिणः साम्भ्या मेतदहः प्राप्नुवन्ति ॥

पुनरपि प्रकारान्तरेण प्रशंसति — "पक्षौ वै बृहद्रथन्तरे, शिर एतदहः ; पक्षाभ्या मेव तच्छ्रियं शिरोऽभ्यायुवते" — इति । यथा लोके पक्षी पक्षाभ्या मेवाकाशे सञ्चरन्, शिरोऽभिलक्ष्य नानाविध-दिग्दर्शनरूपां 'श्रियं' मिश्रयति ; एव मत्रापि साम्भ्या मेतस्मिन्न-हनि 'श्रियम्' अनुष्ठानरूपां सत्रिणो 'युवते' मिश्रयन्ति ॥

सामद्वयस्य परित्यागं निषेधति — "ते उभे न समवसृज्ये ; य उभे समवसृजेयुर्यथैव छिन्ना नौर्बन्धनात्तीरं तीर ऋच्छन्ती प्लवेतैव मेव ते सत्रिणस्तीरं तीर ऋच्छन्तः प्लवेरन् य उभे समवसृजेयुः" — इति । 'उभे' सामनी 'न समवसृज्ये' न परित्याज्ये ; एकस्याप्यन-नुष्ठान मुभयपरित्यागः । 'ये' सत्रिणो ऽनभिज्ञाः सन्तः उभयं परित्यजन्ति, तेषां छिन्ननौसादृश्यं प्रसज्येत । लोके हि नाविकः सायं काले नावं कयाचिद्रज्ज्वा तीरस्थे स्थाणौ बध्नाति ; यदा प्रवाहवेगाद्रात्रौ सा रज्जुस्त्रुट्यति, तदानीं बन्धनस्थाणोश्छिन्ना नौः प्रवाहवेगेनितस्ततो नीयमाना परतीर मर्वाक्तीरञ्च पुनः पुनः प्राप्नु-वन्ती रक्षकाभावात् 'प्लवेत' यत्र क्वापि गच्छेत् । एव मेव ते सत्रिणः सामद्वयाभावे तत्तत्तीरसदृशानहर्विशेषान् 'ऋच्छन्तः' अनु-तिष्ठन्तोऽपि 'प्लवरन्' विनश्येयुरित्यर्थः । ये सामद्वय मपि परि-त्यजन्ति, तेषा मेवायं दोष इति दर्शयितुं 'य उभे समवसृजेयुः' — इति पुनरभिधानम् ॥

उभयोः साम्नोर्विकल्पितत्वादेकपरित्यागे दोषो नास्तीत्ये-तद्दर्शयति — "तद्यदि रथन्तर मवसृजेयुर्बृहतैवोभे अनवसृष्टे ; अथ यदि बृहदवसृजेयू रथन्तरेणैवोभे अनवसृष्टे" — इति । 'तत्' तयोः

साम्नोर्मध्ये यदा रथन्तरं परित्यजेयुः,— बृहदेवानुतिष्ठेयुः, तदा बृहतैव प्रयोगसम्पूर्त्तेः फलत उभय मप्यपरित्यक्त मेव भवति ; एवं बृहत्परित्यागपक्षेऽपि रथन्तरेणैव सम्पूर्त्तिः ॥

प्रकारान्तरेण सामद्वयं प्रशंसति— "यद्वै रथन्तरं तद्वैरूपं, यद् बृहत्तद्वैराजं, यद्रथन्तरं तच्छाक्वरं, यद् बृहत्तद्रैवत मेव मेते उभे अनवसृष्टे भवतः"–इति। पृष्ठ्यषडहे* षट्स्वपि दिवसेषु क्रमेण पृष्ठस्तोत्रनिष्पादकानि षट् सामानि,— रथन्तरं, बृहद्, वैरूपं वैराजं, शाक्वरं, रैवत मिति। तत्र रथन्तरस्य बृहतश्चोत्पत्तिस्थानं पूर्व मुक्तम् ( ३१२ पृ० ); "यद् द्याव इन्द्र ते शतम्"–इत्यस्या मृच्युत्पन्नं वैरूपं साम†; "पिबा सोम मिन्द्र मन्दतु त्वा"–इत्यस्या मृच्युत्पन्नं वैराजं साम ‡; "प्रो ष्वस्मै पुरो रथम्"–इत्यस्यां गीयमानं शाक्वरं साम§; "रेवतीर्नः सधमादे"–इत्यस्यां गीयमानं रैवतं साम ‖। तत्र बृहद्रथन्तरयोरेवात्रोत्तरस्थानीयत्वादशेषसामफलसिद्ध्यर्थ मेते उभे अपरित्यक्ते एव भवतः ; उभयपरित्यागः सर्वथा न योग्य इत्यर्थः ॥

---

* "पृष्ठ्यः षड़हो भवति"–इति तै० सं० ७.२.६.२। पृष्ठानां समूहः पृष्ठ्यः पा० ४.२.४२. वा०। "अभिप्लवं पूर्वं पुरस्ताद् विषुवत उपयन्ति पृष्ठ मुत्तरम्"–इति शत० ब्रा० १२.२.३.४। परस्तात् टीप्पन्यां ( ३१६ पृ० ) द्रष्टव्यम्।

† छ० आ० ३.२.४.६ ऋचि आर० गा० १.१.३. वैरूपं ( योनिसाम ); उ० आ० २.२.११.१,२ ऋचोः प्रगाथत्वचे ऊह्य० गा० १.१.७. वैरूपं ( स्तोभम् )।

‡ छ० आ० ५.१.१.८ ऋचि आर० गा० २.१.३१. वैराजं ( योनिसाम ); उ० आ० ३.१.१३.१–३ तृचे ऊह्य० गा० १.१.१०. वैराजं ( स्तोभम् )।

§ उ० आ० ९.१.१४.१. (?)।

‖ छ० आ० २.२.१.९ ऋचि आर० गा० २.१.१७. रैवतं ( योनिसाम ); उ० आ० ४.१.१४.१–३. तृचे ऊह्य० गा० २.२.७. रैवतं ( स्तोभम् )।

उक्तस्याह्नोऽनुष्ठानं प्रशंसति— "ये वा एवं विद्वांस एतदह रुपयन्त्याप्ता वै तेऽहःशः संवत्सर माप्तार्द्धमासश आप्ता मासश आप्ता स्तोमाश्च छन्दांसि च आप्ता सर्वा देवतास्तप एव तप्यमानाः सोमपीथं भक्षयन्तः संवत्सर मभिषुण्वन्त आसते"–इति । 'ये' सत्रिणः पूर्वोक्तप्रकारेण एतस्याह्नो महिमानं विद्वांस एतदहः अनुतिष्ठन्ति, ते सत्रिणः संवत्सरसत्र महद्द्वारेण, अर्द्धमासद्वारेण, मासद्वारेण, स्तोमच्छन्दोद्वारेण, सर्वदेवताद्वारेण प्राप्य तपश्चरन्तो निर्विघ्नं सोमपानं कुर्वन्तः संवत्सर मपि नैरन्तर्येण सोम मभिषुण्वन्त आसते ; विघ्नः कोऽपि न भवतीत्यर्थः ॥

अथ सत्रगतस्योत्तरपक्षस्य प्रत्यवरोहं विधत्ते— "ये वा अत उर्द्ध्वं संवत्सर मुपयन्ति, गुरुं वै भार मभि नि दधते ; सं वै गुरुर्भारः शृणात्यथ य एनं परस्तात् कर्म्मभिराप्ता ऽवस्तादुपैति, स वै स्वस्ति संवत्सरस्य पार मश्नुते"–इति । 'ये वै' केचन मन्दबुद्धयः सत्रिणः 'अतः' आरम्भणीयं चतुर्विंश महः प्रारभ्योर्द्ध्व मानुलोम्येनैतत्संवत्सरसत्रम् 'उपयन्ति' अनुतिष्ठन्ति, ते सत्रिणो 'गुरुं वै' प्रौढ़ मेव भारम् 'अभिनिदधते' स्वस्योपरि स्थापयन्ति ; 'स वै'* स एव गुरुभारः 'शृणाति' भारवाहकान् सत्रिणो विनाशयति । 'अथ' पूर्वोक्तवैलक्षण्येन 'ये' सत्रिणः 'एनं संवत्सरं 'परस्ताद्' आदित आरभ्य विहितैः 'कर्म्मभिः' पूर्वपक्षगतैः 'आप्ता' अनुष्ठायोत्तरपक्षे 'अवस्तात्' प्रत्यवरोहक्रमेण 'उपैति' उपयन्ति, अनुतिष्ठन्ति । 'स वै' त एव सत्रिणः 'स्वस्ति' क्षेमेण संवत्सरसत्रस्य 'पारं' समाप्तिम् 'अश्नुते' अश्नुवते, प्राप्नुवन्ति ॥

अथ मर्थः ।—अस्ति किञ्चिद्विषुवन्नामकं संवत्सरसत्रस्य मध्ये

* 'स वै'–इत्येव भाष्यसम्मतः पाठः, परं सर्वमूलपुस्तकविरुद्धः ।

प्रधान मह्ः; तस्याधस्तात् षण्मासाः, सोऽयं प्रथमः पक्षः; उपरिष्टादपि षण्मासाः, सोऽय मुत्तरः पक्षः। यथा लोके कस्याश्चिच्छालायाः स्तम्भयोः पूर्वं दीर्घं वंशं प्रौढ़ं प्रसार्य्य उभयोः पार्श्वयोः पक्षद्वयं कुर्वीत, एवं संवत्सरसत्रस्यापि। तथा च शाखान्तरे श्रूयते—"यथा शालायै पक्षसी मध्यमं वꣳश मभि समायच्छति, एवꣳ संवत्सरस्य पक्षसी दिवाकीर्त्त्य मभि सन्तन्वन्ति"--इति (तै० ब्रा० १.२.३.१,२.)। दिवैव मन्त्राणां कीर्त्तनीयत्वात् विषुवन्नामक मेकं दिवाकीर्त्त्यम्। तत्र पूर्वपक्षरूपे मासषट्के यः प्रयोगक्रमः, एव मुत्तरपक्षे मासषट्केऽपि। तेनैव क्रमेण स प्रयोगो यद्यनुष्ठीयेत, तदानीं मतिभारः स्यात्; नूतनानुष्ठानविशेषाभावेनालस्ये सति वैकल्यं भवति; स एव भार इत्युच्यते। अतस्तत्परिहारार्थं पूर्वेषु षट्सु मासेषु यानि कर्म्माणि येनानुपूर्व्येणानुष्ठितानि, तानि कर्म्माण्युत्तरेषु मासेषु तद्विपरीतक्रमेणानुष्ठेयानि *; तथा सत्यालस्याभावाद् अविघ्नेनैव संवत्सरसत्रं समाप्यत इति ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये
( सप्तदशाध्याये ) सप्तमः खण्डः ॥ ७ (१३) ॥

---

* द्वादशमासनिर्वर्त्त्यस्य गवामयनस्य प्रायणीयोऽतिरात्रः प्रथम महः, ततश्चतुर्विंश उक्थ्य आरम्भणीयः। ते उभे अहनी अनुष्ठाय, ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्याभिप्लविकः षडहः; स चतुर्वार मावर्त्तनीयः; ततस्त्रिवृदादिस्तोमषट्कसाध्यः पृष्ठ्यः षडहः; एवं पञ्चभिः षडहैरेको मासः पूर्य्यते। एतस्यैवावर्त्तनेन पञ्च मासाः सम्पाद्याः। ततः षष्ठमासस्यादौ त्रयोऽभिप्लवाः षडहाः कार्य्याः; तत एकः पृष्ठ्यः षडहः; ततोऽभिजिदेक महः;

## ॥ अथ अष्टमः खण्डः ॥

यद्वै चतुर्विंशं तन्महाव्रतं बृहद्दिवेनाच होता रेतः सिञ्चति तददो महाव्रतीयेनाह्ना प्र जनयति संवत्सरे संवत्सरे वै रेतः सिक्तं जायते तस्मात्समानं बृहद्दिवो निष्केवल्यं भवत्येष ह वा एनं परस्तात्कर्मभि राप्नो ऽवस्तादुपैति य एवं विद्वानेतदहरुपैति स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद यो वै संवत्सरस्यावारं च पारं च वेद स वै स्वस्ति संवत्सरस्य पार मश्नुते ऽतिरात्रो वा अस्य प्रायणीयो ऽवार मुदयनीयः पारं स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद स वै स्वस्ति संवत्सरस्य पार मश्नुते ऽति-

---

ततस्त्रयः स्वरसामानः, इत्येवमष्टाविंशत्यहानि। आद्याभ्यां प्रायणीयचतुर्विंशाभ्यां षष्ठमास-
पूरणम्। इत्थं पूर्वपक्षे अशीत्युत्तरशतसङ्ख्यान्यहानि सम्पन्नानि। ततो विषुवदेकमहः।
तदस्य सत्रस्य प्रधानभूतम्। सप्तमे मासस्यादौ त्रयः स्वरसामानः प्रतिलोमाः कार्याः, ततो
विश्वजिदावृत्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशाख्यस्त्रिवृदुत्तमः; ततस्त्रयोऽभिप्लवाः षडहा आवृत्ताः;
एवमष्टाविंशत्यहानि स्युः (सर्वान्तेऽनुष्ठीयमानौ महाव्रतातिरात्रौ चास्य मासस्य पूरकौ)।
ततः पृष्ठ्यः षडहः; पूर्वकैश्चतुर्भिराभिप्लविकैः प्रतिलोमक्रमेणानुष्ठितैरष्टमो मासः। तथै-
वावृत्त्या नवमदशमैकादशा अपि मासाः सम्पाद्याः। द्वादशमासस्यादौ त्रयोऽभिप्लवाः
षडहाः, ततो गोआयुषी द्वे अहनी, द्वादशाहस्य दशाहानि चेति त्रिंशदहानि; स
द्वादशो मासः। ततो महाव्रत मुपान्त्य महः; तेन उदयनीयोऽतिरात्र इत्यपि सप्तम-
मासस्य पूरकाविति। तदेतत् सर्वं मिहैव क्रमात् स्फुटीभविष्यति।

रात्रो वा अस्य प्रायणीयो ऽवरोधन मुदयनीय उद्रोधनं स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद यो वै संवत्सरस्य प्राणोदानौ वेद स वै स्वस्ति संवत्सरस्य पार मश्नुते ऽतिरात्रो वा अस्य प्रायणीयः प्राण उदान उदयनीयः स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद य एवं वेद ॥ ८ (१४) ॥

॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां द्वितीयोध्यायः ॥२॥

अथास्मिन्नारम्भणीये चतुर्विंशेऽहनि निष्केवल्यशस्त्रे कञ्चिद्विशेषं विधत्ते— "यद्वै चतुर्विंशं तन्महाव्रतं बृहद्दिवेनात्र होता रेतः सिञ्चति ; तददो महाव्रतीयेनाह्ना प्र जनयति ; संवत्सरे संवत्सरे वै रेतः सिक्तं जायते ; तस्मात्समानं बृहद्दिवो निष्केवल्यं भवत्येष ह वा एनं परस्तात् कर्म्मभिराप्त्वा ऽवस्तादुपैति य एवं विद्वानेतदहरुपैति"-इति । यदेतद् द्वितीयं चतुर्विंश महः, तदेव संवत्सरसत्रस्योपान्त्यं महाव्रताख्य महर्भवति । आरोहक्रमेण चतुर्विंशाख्यं पूर्वपक्षगतद्वितीय महः ; अवरोहक्रमेण महाव्रताख्य मुपान्त्यत्वाद् द्वितीय महर्भवति । अनेन द्वितीयत्वसाम्येन तयोः परस्परैक्य मुपचर्यते, किञ्चोभयत्र बृहद्दिवसाम्य मस्ति । "तदिदास भुवनेषु ज्येष्ठम्"--इत्येतत्सूक्तं ( सं० १०.१२०.१-९. ) बृहद्दिवशब्देन विवक्षितम् ; प्रौढस्य द्युलोकस्य प्राप्तिहेतुत्वात् । एतदेवोभयत्र निष्केवल्यशस्त्रे क्रियते । तथा सत्यस्मिन् द्वितीयेऽह्नि चतुर्विंशनामके बृहद्दिवनाम्ना तदिदासेत्यादिना निष्केवल्यशस्त्रगसूक्तेन होता रेतः सिञ्चति । 'तत्' एतत् सिक्तं रेतो 'महाव्रती-

येन' उपान्त्येन 'अह्ना' बृहद्दिवाख्यनिष्केवल्यसूक्तयुक्तेन 'प्रजनयति' अत्र संवत्सरसत्रमध्ये एव रेतःसेकः प्रजननं च द्वितीयोपान्त्यदिवसयोः सम्पन्नम्। ततो लोकेऽप्येकैकस्मिन् संवत्सरे रेतःसेकः उत्पत्तिश्चेत्युभयं सम्पद्यते। यस्माद् द्वितीयोपान्त्ययोरह्नोरुभयोरपि मिलित्वा प्राणिनो जन्मरूप मेकं कार्य्यं सम्पेचितम्, 'तस्माद्' बृहद्दिवनामकेन सूक्तेनोभयत्र निष्केवल्यं शस्त्रं 'समानम्' एकरूपं कर्त्तव्यम्। 'यः' पुमान् 'एवं' महाव्रताहःसाम्येन निष्केवल्यस्य कर्त्तव्यतां विद्वान् 'एतद्' द्वितीय महरनुतिष्ठति, स पुमान् 'परस्तात्' सत्रस्य प्रथमभागे आनुलोम्येन क्रियमाणैः कर्म्मभिः 'आप्त्वा' प्राप्य 'अवस्तात्' अपरभागे प्रातिलोम्येनैव संवत्सर मनुतिष्ठति॥ वेदनं प्रशंसति— "स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"-इति॥

अथ संवत्सरसत्रस्याद्यन्ते द्वे अहनी विधत्ते— "यो वै संवत्सरस्यावारञ्च पारञ्च वेद, स वै स्वस्ति संवत्सरस्य पार मश्नुते; ऽतिरात्रो वा अस्य प्रायणीयो ऽवार मुदयनीयः पारम्"-इति। 'यः' पुमान् संवत्सरसत्रस्य समुद्रस्थानीयस्य 'अवारम्' अर्वाक्तीरस्थानीयं प्रथम महः, 'पारं' परतीरस्थानीय मन्तिम महः, 'वेद' तयोरह्नोरनुष्ठेयं कर्त्तव्यं निश्चिनोति, 'सः' पुमान् अविघ्नेनैव संवत्सरसत्रस्य 'पारं' समाप्तिं प्राप्नोति। योऽय मतिरात्रसंस्थः, स एवास्य 'प्रायणीयः' आरम्भे अनुष्ठेयत्वादर्वाक्तीरस्थानीयः; स एवातिरात्रः पुनः 'उदयनीयः' समाप्तावनुष्ठेयत्वात् परतीरस्थानीयः॥ वेदनं प्रशंसति— "स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"-इति॥

उक्तावाद्यन्तावतिरात्रौ प्रशंसति—"यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद, स वै स्वस्ति संवत्सरस्य पार मश्नुते; ऽतिरात्रो

वा अस्य प्रायणीयो ऽवरोधन मुदयनीय उद्रोधनम्"–इति। अवरुध्यते स्वाधीनं क्रियते येन प्रारम्भरूपेण कर्म्मणा तत्कर्म 'अवरोधनम्'। उद्रुध्यते समाप्यते येन कर्मणा तत् 'उद्रोधनम्'। अन्यत् पूर्ववत् ॥ वेदनं प्रशंसति—"स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"–इति ॥

पुनरपि प्रकारान्तरेण प्रशंसति—"यो वै संवत्सरस्य प्राणोदानौ वेद, स वै स्वस्ति संवत्सरस्य पार मश्नुते ; ऽतिरात्रौ वा अस्य प्रायणीयः प्राण, उदान उदयनीयः"–इति। 'प्रायणीयः' अतिरात्रः 'प्र'शब्दसामान्यात् 'प्राणः' इत्युच्यते ; उच्छब्दसामान्याद् 'उदयनीयः' अतिरात्रः 'उदानः'॥ वेदनं प्रशंसति—"स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद य एवं वेद"–इति। अभ्यासो ऽध्यायसमाप्त्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां द्वितीयाध्याये
( सप्तदशाध्याये ) अष्टमः खण्डः ॥ ८ ( १४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायाः द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयाध्यायः ॥

(तत्र)

### ॥ अथ प्रथमः खण्डः ॥

---

॥ ॐ ॥ ज्योतिर्गौरायुरिति स्तोमैभिर्यन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयुः स एवैष उत्तरस्त्र्यहो ज्योतिर्गौरायुरिति चीण्यहानि गौरायुर्ज्योतिरिति चीण्ययं वै लोको ज्योतिरसौ लोको ज्योतिस्ते एते ज्योतिषी उभयतः सं लोकेते * तेनैतेनोभयतोज्योतिषा षळहेन यन्ति तद्यदेतेनोभयतोज्योतिषा षळहेन यन्त्यनयोरेव तल्लोकयो-† रुभयतः प्रति तिष्ठन्तो यन्त्यस्मिंश्च लोके ऽमुष्मिंश्चोभयोः परि यद्वा ‡ एतद्देवचक्रं यदभिप्लवः षळहस्तस्य यावभितो ऽग्निष्टोमौ तौ प्रधी ये चत्वारो मध्य उक्थ्यास्तन्नभ्यं गच्छति वै वर्त्तमानेन यत्र कामयते तत्स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद यो वै तद्वेद यत्प्रथमः षळहः स वै स्वस्ति संवत्सरस्य पार मश्नुते यस्तद्वेद यद् द्वितीयो यस्तद्वेद यत्तृतीयो यस्तद्वेद यच्चतुर्थो यस्तद्वेद यत्पञ्चमः ॥ १ ( १५ ) ॥

---

* 'सल्लोकेते' ख। † 'तंल्लोकयो' ङ, 'तंलोकयो' ञ, ट, ठ। ‡ 'पर्यद्वा' ग, घ।

आश्विनस्य विधिः प्रातरनुवाक उदीरितः ।
सङ्ख्याप्रतिपदावन्ये सौर्य्यादीन्यधिकानि तु * ॥

तत्र † गवामयनस्य प्रायणीयोदयनीयावाद्यन्तावतिरात्रावुक्तौ; अथ मासक्लृप्तिविधानायाभिप्लवषड़हे पूर्वभागरूपाणि त्रीण्यहानि विधत्ते— "ज्योतिर्गौरायुरिति स्तोमैर्यन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयुः"–इति। स्तोमशब्दो ज्योतिरादिभिः प्रत्येक मभि सम्बध्यते। तथा सति ज्योतिष्टोमः, गोष्टोमः, आयुष्टोम इत्येतैरहोभिः 'यन्ति' अनुतिष्ठेयुरित्यर्थः। तदेतदहस्त्रयं त्रित्वसाम्यात् क्रमेण लोकत्रयरूपम्। शाखान्तरेऽप्येतद्दर्शितम्— "ज्योतिष्टोमं प्रथम मुपयन्त्यस्मिन्नेव तेन लोके प्रतितिष्ठन्ति; गोष्टोमं द्वितीय मुपयन्त्यन्तरिक्ष एव तेन प्रतितिष्ठन्ति; आयुष्टोमं तृतीय मुपयन्त्यमुष्मिन्नेव लोके प्रतितिष्ठन्ति"–इति (तै० सं० ७.४.११.१.)॥

षड़हे पूर्वभागं त्र्यह मुक्त्वा तदुत्तरभागं विधत्ते— "स एवैष उत्तरस्त्र्यहः"–इति। त्रयाणां पूर्वोक्ताना मेवाह्नां समूहः पुनरनुष्ठीयमान उत्तरस्त्र्यहो भवति। तत्र षड़हे षण्णा मप्यह्नां क्रमं दर्शयति— "ज्योतिर्गौरायुरिति त्रीण्यहानि, गौरायुर्ज्योतिरिति त्रीणि"–इति। ज्योतिष्टोमादीना मेव ज्योतिरित्यादीनि नामानि; तैर्नामभिर्धर्मा अतिदिश्यन्ते। ज्योतिरादिनामकाः ये स्वतन्त्रा एकाहाः सन्ति, तदीयधर्म्मा अत्रानुष्ठेया इत्यर्थः॥

योऽय मुभयोस्त्र्यहयोः क्रमव्यत्यासस्त मिमं प्रशंसति— "अयं वै लोको ज्योतिरसौ लोको ज्योतिस्ते एते ज्योतिषी उभयतः सं

* प्रथमादिषु पञ्चखण्डेष्वित्येव बोध्यम् ( २०८–२०४ पृ० )।

† 'ततः'–इत्येव पाठो युक्ततरः स्यात्।

लोकेते"–इति। प्रथमस्य षडहस्यादौ ज्योतिर्नामक महर्यदस्ति, तत्प्राथम्यसाम्याद्भूलोकस्वरूपम्; यच्चोत्तरस्य षडहस्यावसाने ज्योतिर्नामक महः, तदुत्तमत्वसाम्याद् द्युलोकस्वरूपम्। 'ते एते' षड्हस्याद्यन्तयोर्वर्त्तमाने 'ज्योतिषी' उभयतो ऽवस्थाय परस्परं 'सं लोकेते' सम्मुखत्वेनेक्षेते। अहर्विशेषांस्तत्क्रमं चोक्त्वा समष्टिरूपं षड्हं विधत्ते— "तेनैतेनोभयतोज्योतिषा षळहेन यन्ति; तद्यदेतेनोभयतोज्योतिषा षळहेन यन्त्यनयोरेव तल्लोकयोरुभयतः प्रतितिष्ठन्तो यन्त्यस्मिंश्च लोके ऽमुष्मिंश्चोभयोः"–इति। 'उभयतः' आद्यन्तयोर्ज्योतिर्नामक महर्यस्मिन् षड्हे तदेतत् 'उभयतोज्योतिः', तेनैतेन षड्हेनानुतिष्ठेयुः। तदनुष्ठानेनोभयतो वर्त्तमानयोः प्रतिष्ठां प्रापयन्तो वर्त्तन्ते। 'लोकयोरुभयतः'-इत्यस्यैव विवरणम् –'अस्मिंश्च लोके ऽमुष्मिंश्चोभयोः'–इति; अथवोत्तरशेषत्वेनास्मिंश्चेत्यादिक मन्वेतव्यम्॥

अस्मिन्नभिप्लवषड्हे संस्थाविशेषान् विधत्ते— "परि यद्वा एतद्देवचक्रं यदभिप्लवः षळहस्तस्य यावभितो ऽग्निष्टोमौ तौ प्रधी, ये चत्वारो मध्य उक्थ्यास्तन्नभ्यम्"–इति। योऽय मभिप्लवः षड्हस्तदेतदस्मिंश्चामुष्मिंश्चोभयोर्लोकयोः 'परि यद्' परिवर्त्तमान मेव 'देवचक्रम्',— यथा लोके रथस्य चक्रं पुनः पुनः परिवर्त्तते, तद्वदिदं देवचक्रम्; असकृत् षड्हपरिवर्तनस्य वक्ष्यमाणत्वात्। रथचक्रस्य हि निष्पादकानि त्रीणि फलकानि; तत्र मध्यमफलके अरं प्रवेशयितुं प्रौढं नाभिच्छिद्रं क्रियते, तस्य फलकस्योभयोः पार्श्वयोर्वर्तुलत्वाय फलकद्वयं कीलितं भवति; एव मस्मिन्नपि षड्हे ज्योतिर्यागावाद्यन्तवर्त्तिनावग्निष्टोमसंस्थौ 'प्रधी' भवतः, प्रकर्षेणोभयतो धीयेते स्थाप्येते इति प्रधी, फलकद्वयस्थानीया-

वित्यर्थः । एतस्मिन् 'ये' तु मध्ये 'चत्वारः' अहर्विशेषाः उक्थसंस्थाः, तदेतत् 'नभ्य' ; नाभियोग्यस्थानम् उक्थ्यसंस्थाः कर्त्तव्या इत्यर्थः ॥ वेदनं प्रशंसति— "गच्छति वै वर्तमानेन यत्र कामयते, तत् स्वस्ति संवत्सरस्य पार मश्नुते य एवं वेद"-इति। वेदिता 'यत्र' यस्मिन् लोके गन्तुं कामयते, तत्रानेनैव परिवर्तमानेन देवचक्रेण गच्छति ; 'तत्' तेन देवचक्रेण निर्विघ्न मेव संवत्सरसत्रसमाप्तिं गच्छति ॥

उक्तस्याभिप्लवषड़हस्यैकस्मिन्मासि पञ्चकृत्व आवृत्तिं विधत्ते —"यो वै तद्वेद यत्प्रथमः षळहः, स वै स्वस्ति संवत्सरस्य पार मश्नुते, यस्तद्वेद यद् द्वितीयो यस्तद्वेद यत् तृतीयो यस्तद्वेद यच्चतुर्थो यस्तद्वेद यत्पञ्चमः"-इति । 'प्रथमः षळहः'-इति यदस्ति, तद्यो वेद, 'सः' पुमान् निर्विघ्नेन सत्रपारं प्राप्नोति । तथा 'द्वितीयः' षड़ह इति यदस्ति, तद्यो वेद, स वै स्वस्तीत्यादिक मनुवर्त्तनीयम् । एव मुत्तरेष्वपि त्रिषु पर्यायेषु द्रष्टव्यम् । षड़हे पञ्चकृत्व आवर्त्तमाने सति त्रिंशदहानि भूत्वा मासः सम्पद्यते ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये
(अष्टादशाध्याये) प्रथमः खण्डः ॥ १ (१५) ॥

———

॥ अथ द्वितीयः खण्डः ॥

**प्रथमं षळह मुपयन्ति षळहानि भवन्ति षड़्वा ऋतव ऋतुश एव तत्संवत्सर माप्नुवन्त्यृतुशः संव-**

त्सरे प्रतितिष्ठन्तो यन्ति द्वितीयं षळह मुपयन्ति द्वादशाहानि भवन्ति द्वादश वै मासा मासश एव तत्संवत्सर माप्नुवन्ति मासशः संवत्सरे प्रतितिष्ठन्तो यन्ति तृतीयं षळह मुपयन्त्यष्टादशाहानि भवन्ति तानि द्वेधा नवान्यानि नवान्यानि नव वै प्राणा नव स्वर्गा लोकाः प्राणांश्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति चतुर्थं षळह मुपयन्ति चतुर्विंशतिरहानि भवन्ति चतुर्विंशतिर्वा अर्द्धमासा अर्द्धमासश एव तत्संवत्सर माप्नुवन्त्यर्द्धमासशः संवत्सरे प्रतितिष्ठन्तो यन्ति पञ्चमं षळह मुपयन्ति त्रिंशदहानि भवन्ति त्रिंशदक्षरा वै विराड् विराळन्नाद्यं विराज मेव तन्मासि मास्यभि सम्पादयन्तो यन्त्यन्नाद्यकामाः खलु वै सत्र मासत तद्यद्विराजं मासि मास्यभि सम्पादयन्तो यन्त्यन्नाद्य मेव तन्मासि मास्यवरुन्धाना यन्त्यस्मै च लोकायामुष्मै चोभाभ्याम् ॥ २ ( १९ ) ॥

उक्तेषु पञ्चसु षड़हेषु प्रथम मनूद्य प्रशंसति— "प्रथमं षळह मुपयन्ति ; षळहानि भवन्ति ; षड्वा ऋतव ऋतुश एव तत्संवत्सर माप्नुवन्त्यृतुशः संवत्सरे प्रतितिष्ठन्तो यन्ति"–इति। अनुष्ठिते

षड़हे षट्सङ्ख्यकान्यहानि भवन्ति ; ततः सङ्ख्यासाम्यादृतुद्वारा संवत्सरं प्राप्य तत्र प्रतिष्ठिताः सन्तो वर्तन्ते ॥

पूर्वेण षडहेन सहितं द्वितीयं षड़हं प्रशंसति – "द्वितीयं षळह मुपयन्ति ; द्वादशाहानि भवन्ति ; द्वादश वै मासा, मासश एव तत्संवत्सर माप्नुवन्ति, मासशः संवत्सरे प्रतितिष्ठन्तो यन्ति"– इति । पूर्ववद् व्याख्येयम् ॥

उक्ताभ्यां षड़हाभ्यां तृतीयं षड़हं प्रशंसति— "तृतीयं षळह मुपयन्त्यष्टादशाहानि भवन्ति ; तानि द्वेधा नवान्यानि नवान्यानि ; नव वै प्राणा, नव स्वर्गा लोकाः ; प्राणांश्चैव तत् स्वर्गांश्च लोका- नाप्नुवन्ति, प्राणेषु चैव तत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति"– इति । त्रिषु षड़हेषु यान्यष्टादशाहानि, तेषां द्वेधा विभागे सति प्रत्येकं 'नव' सङ्ख्या सम्पद्यते । 'प्राणाः' सप्तसु ऊर्द्ध्वच्छिद्रेषु द्वयोरधश्छिद्रयोर्नवसङ्ख्याकाः,—स्वर्गलोकाश्च नवभोगस्थानभेदेन* नवविधाः । अतः सङ्ख्यासाम्यात् प्राणान् स्वर्गलोकांश्च प्राप्य तत्र प्रतिष्ठिता वर्त्तन्ते ॥

पूर्वैस्त्रिभिः षड़हैश्चतुर्थं षड़हं प्रशंसति—"चतुर्थं षळह मुप- यन्ति ; चतुर्विंशतिरहानि भवन्ति ; चतुर्विंशतिर्वा अर्द्धमासा, अर्द्धमासश एव तत् संवत्सर माप्नुवन्त्यर्द्धमासशः संवत्सरे प्रति- तिष्ठन्तो यन्ति"–इति । अतः सङ्ख्यासाम्यात् अर्द्धमासद्वारा संवत्सरे प्रतिष्ठिताः ॥

पूर्वैश्चतुर्भिः षड़हैः सहितं पञ्चमं षड़हं प्रशंसति – "पञ्चमं षळह मुपयन्ति ; त्रिंशदहानि भवन्ति ; त्रिंशदक्षरा वै विराड्,

* 'अष्टाभिर्लोकपालैः परिपालिता अष्टसङ्ख्याकाः स्वर्गा लोकाः ; तेषां मध्ये कश्चि- दूर्द्ध्वगामी स्वर्ग इतीत्थं नवसङ्ख्याकाः स्वर्गाः'–इति तै० ब्रा० १.२.२.१. सा० भा० ।

विराळन्नाद्यं, विराज मेव तन्मासि मास्यभि सम्पादयन्तो यन्ति”-इति । अहस्सङ्ख्याया विराट्साम्याद्विराजश्चान्नाद्यहेतुत्वात् प्रतिमासं विराड्द्वारा अन्नाद्यं प्राप्नुवन्ति ॥

पुनरपि षड़हपञ्चकं प्रशंसति— “अन्नाद्यकामाः खलु वै सत्र मासत ; तद्यद्विराजं मासि मास्यभि सम्पादयन्तो यन्त्यन्नाद्य मेव तन्मासि मास्यवरुन्धाना यन्त्यस्मै च लोकायामुष्मै चोभाभ्याम्”-इति । ये सत्रस्यानुष्ठातारः, ते हि ‘अन्नाद्यकामाः’ अनुतिष्ठन्ति ; तथा सति पूर्वोक्तरीत्या सङ्ख्यासाम्यात् पञ्चसु षड़हेषु त्रिंशदक्षररूपां विराजं प्रतिमासं सम्पादयन्तो वर्त्तन्ते, प्रतिमास मन्नाद्यं प्राप्नुवन्तो लोकद्वयार्थं गच्छन्ति ; प्रतिमासं षड़हपञ्चक मनुतिष्ठेयुरिति तात्पर्य्यार्थः । तत्र चत्वारोऽभिप्लवाः षडहाः, पञ्चमस्तु पृष्ठ्यषडह इति ; सूत्रकारैरभिधानादयं विशेषः शाखान्तरे द्रष्टव्यः * ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये
( अष्टादशाध्याये ) द्वितीयः खण्डः ॥ २ (१६) ॥

---

॥ अथ तृतीयः खण्डः ॥

**गवामयनेन यन्ति गावो वा आदित्या आदित्याना मेव तदयनेन यन्ति गावो वै सत्र मासत**

* “चत्वारोऽभिप्लवाः पृष्ठ्यश्च मासः”-इति च कात्या० श्रौ० १३.२.३ । तथा “चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुपयन्ति”-इति च आश्व० श्रौ० ११.७.२ ।

शफाञ्छृङ्गाणि सिषासत्यस्तासां दशमे मासि शफाः शृङ्गाण्यजायन्त ता अब्रुवन् यस्मै कामायादीक्षामह्यापाम त मुत्तिष्ठामेति ता या उदतिष्ठंस्ता एताः शृङ्गिण्यो ऽथ याः समापयिष्यामः संवत्सरमित्यासत तासा मश्रद्धया शृङ्गाणि प्रावर्त्तन्त ता एतास्तूपरा ऊर्जं त्वसुन्वंस्तस्माद् ताः सर्वानृतून्प्राप्त्वोत्तर मुत्तिष्ठन्त्यूर्जं ह्यसुन्वन्त्सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः सर्वस्य प्रेमाणं सर्वस्य चारुतां गच्छति य एवं वेदादित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके स्पर्धन्त वयं पूर्वं एष्यामो वयमिति ते हादित्याः पूर्वे स्वर्गं लोकं जग्मुः पश्चेवाङ्गिरसः षष्ठ्यां वा वर्षेषु यथा वा प्रायणीयो ऽतिरात्रश्चतुर्विंश उक्थ्यः सर्वे ऽभिप्लवाः षळहा आत्यन्त्यन्यान्यहानि तदादित्यानामयनं प्रायणीयो ऽतिरात्रश्चतुर्विंश उक्थ्यः सर्वे पृष्ठ्याः षळहा आत्यन्त्यन्यान्यहानि तदङ्गिरसामयनं सा यथास्रुतिरञ्जसायन्येव मभिप्लवः षळहः स्वर्गस्य लोकस्याथ यथा महापथः पर्याण एवं पृष्ठ्यः षळहः स्वर्गस्य लोकस्य तद्यदुभाभ्यां यन्त्युभाभ्यां वै यन्न रिष्यत्युभयोः कामयोरुपाप्त्यै यश्चाभिप्लवे षळहे यश्च पृष्ठ्ये ॥३(१०)

संवत्सरसत्रस्यावयवान्मासानभिधाय सत्रं विधत्ते— "गवामयनेन यन्ति ; गावो वा आदित्या, आदित्याना मेव तदयनेन यन्ति"-इति । संवत्सरसत्राणां प्रकृतिभूतस्यैतस्य सत्रस्य 'गवामयनम्' इति नामधेयम्, तेन 'यन्ति' अनुतिष्ठेयुः । गमनसाम्याद् गवा मादित्यत्वम् ; तथा सति आदित्याना मेवायनेनानुष्ठानं कृतं भवति ॥

तदेतद्गवामयनं प्रशंसति— "गावो वै सत्र मासत, शफाञ्छृङ्गाणि सिषासत्यस्तासां दशमे मासि शफाः शृङ्गाण्यजायन्त ; ता अब्रुवन् यस्मै कामायादीक्षामह्यापाम त मुत्तिष्ठामेति ; ता या उदतिष्ठंस्ता एताः शृङ्गिण्यः"-इति । पुरा कदाचिद् गवाभिमानिन्यो देवताः स्वकीयानां गोदेहानां पादगतान् 'शफान्', शिरोगतानि 'शृङ्गाणि' च 'सिषासत्यः' प्राप्तु मिच्छन्त्यः सत्र मन्वतिष्ठन् । तासां दशमे मासि तदुभयं सम्पन्नम् । ततः 'ताः' गावः परस्पर मिद मब्रुवन्,— यस्मै कामाय वयम् 'अदीक्षामहि' सत्रदीक्षा मासवत्यः, 'तं' कामम् 'आपाम' वयं प्राप्तवत्यः ; ततोऽस्मात्सत्रादुत्तिष्ठामेति विचार्य उत्थाय गताः । 'ताः' प्रसिद्धाः या गाव उदतिष्ठन्, ता इमाः शृङ्गिण्यो दृश्यन्ते । अनेन दशसु मासेषु अनुष्ठेयं गवामयनं प्रशस्तम् ॥

द्वादशसु मासेष्वनुष्ठेयं यद्गवामयन मस्ति, तदिदानीं प्रशंसति— "अथ याः समापयिष्यामः संवत्सर मित्यासत, तासा मश्रद्धया शृङ्गाणि प्रावर्त्तन्त ; ता एतास्तूपरा ऊर्जं त्वसुन्वंस्तस्मादु ताः सर्वानृतून् प्राप्तोत्तर मुत्तिष्ठन्त्यूर्जं ह्यसुन्वन्सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः"-इति । सत्र मनुतिष्ठन्तीनां गवां मध्ये शफशृङ्गार्थिनीनां दशभिर्मासैः सिद्धिर्जाता ; यासां तु गवां

शृङ्गापेक्षा नास्ति, किन्तु ऊर्गपेक्षैव; तादृश्यो या गाव ऊर्ज-सिद्ध्यर्थं द्वादशमासात्मकं संवत्सरं समापयिष्याम इति अभिप्रेत्य, तथैवान्वतिष्ठन्। 'तासां' गवां शृङ्गेषु अश्रद्धया शृङ्गाणि 'प्रावर्त्तन्त' नोत्पन्नानीत्यर्थः। 'ता एताः' गावो लोके 'तूपराः' शृङ्गरहिता दृश्यन्ते। ताः शृङ्गरहिता अपि सत्रानुष्ठानेन 'ऊर्ज्जं' बलाधिक्यम् 'असुन्वन्' सम्पादितवत्यः। 'तस्मादु" बलाधिक्यलक्षणस्य फलस्य सद्भावादेव 'ताः' गावः 'सर्वानृतून्' षट्सङ्ख्याकानपि तस्मिन् सत्रानुष्ठाने प्राप्य 'उत्तरम्' ऊर्ध्वकाले सत्रादुत्तिष्ठन्ति। 'हि' यस्मात् 'ऊर्जम्' बलातिशयम् 'असुन्वन्' प्राप्तवत्यः, तस्माद् द्वादश-मासानुष्ठानं युक्तम्। 'ताः' शृङ्गरहिता गावः प्रहारभयाभावात् 'सर्वस्य' जगतः 'प्रेमाणं' प्रियत्वं गताः, तथा बलाधिक्येन शरीर-पुष्ट्या च 'सर्वस्य' भारवहनादिकार्य्यस्य नेत्रदर्शनस्य चात्यन्तं 'चारुतां' रमणीयतां गताः॥ वेदनं प्रशंसति— "सर्वस्य प्रेमाणं सर्वस्य चारुतां गच्छति य एवं वेद"-इति॥

अथादित्यानामयन मङ्गिरसामयनं च गवामयनविकृतिरूप मुभयं वक्तुं प्रस्तौति— "आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके ऽस्पर्द्धन्त वयं पूर्व एष्यामो वय मिति; ते हादित्याः पूर्वे स्वर्गं लोकं जग्मुः, पश्चेवाङ्गिरसः षष्ट्यां वा वर्षेषु"-इति। आदित्याख्याश्च ये देवाः, ये चाङ्गिरसनामका ऋषयः, तदुभये परस्परं स्वर्गप्राप्तौ 'अस्पर्द्धन्त' अस्माक मेव प्रथमं गमन मिति आदित्याः, अङ्गिरसो-ऽपि तथैव तत्रादित्याः सहसा प्रथमं स्वर्गं प्रापुः अङ्गिरसस्तु 'पश्चेव' विलम्बेनैव षष्टिसङ्ख्याकेषु वर्षेषु अतीतेषु स्वर्गं प्राप्ताः। 'वा'-शब्देन पक्षान्तरं द्योत्यते। अङ्गिरसां मध्ये तत्तच्छक्त्यनुसारेण केचित् षष्टेः पूर्वं वा गता इत्यर्थः॥

अथादित्यानामयनेऽहःक्लृप्तिं विधत्ते— "यथा वा प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः, सर्वे ऽभिप्लवाः षळहा, आच्यन्त्यन्यान्यहानि ; तदादित्यानामयनम्"–इति । अत्र 'वा' शब्दो न विकल्पार्थः, किन्तु गवामयनप्रकारव्यावृत्त्यर्थः। गवामयने प्रायणीयाख्यं प्रथम मह:, अतिरात्रसंस्थं चतुर्विंश मुक्थ्य महर्द्वितीयम्, तदुभयं तत्र 'यथा' तथैवादित्यानामयनेऽपि ; तत ऊर्द्ध्वं विशेषोऽस्ति । सर्वेऽभिप्लवाः षड़हाः पूर्वोक्ताभ्याम् प्रथमद्वितीयाभ्या महोभ्या मन्यानि सर्वाण्यहानि 'आच्यन्ति' व्याप्तिं करिष्यन्ति ; गवामयने तु एकैकस्मिन्मासि चत्वार एवाभिप्लवषड़हाः, अत इदं वैषम्यम् । तदिदम् 'आदित्यानामयनम्' ॥

अथाङ्गिरसामयनस्य क्लृप्तिं दर्शयति— "प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः, सर्वे पृष्ठ्याः षळहा, आच्यन्त्यन्यान्यहानि ; तदङ्गिरसामयनम्"–इति । प्रथमद्वितीय मतिक्रान्तानि सर्वाण्यहानि पृष्ठ्यषड़हैर्व्याप्तानि, इत्येतावानत्र विशेषः । अथवा 'आच्यन्ति'-शब्दोऽहर्विशेषनामधेयम् । तथाच बोधायन* आह— "अभिजिद्विषुवान्विश्वजिद्दशम महर्महाव्रत मुदयनीयोऽतिरात्र इत्येतान्याच्यन्ति भवन्ति"–इति । तदेतद् बोधायनस्य† मतम् । अन्यदपि यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालिकाचार्य्यो मेने । यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्च इत्यौपमन्यव इति । तथा सति प्रायणीयारक्षणीयाभ्या मभिप्लवषड़हेभ्यश्चान्यानि यान्यहानि सन्ति, तानि 'आच्यन्ति' एतन्नामकानीत्युभयत्र व्याख्येयम् । सर्वथाप्यस्त्यनयोरुभयोरपि गवामयनाद्विशेषः । गवामयने त्वेकस्मिन्मासि चत्वारोऽभिप्लवाः षड़हाः, पञ्चमः पृष्ठ्यः षड़हः ।

*, † 'बौधा०' ग ।

तथा चाश्वलायन आह— "अथ गवामयनं सर्वकामाः प्रायणीय-चतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुप-यन्ति"–इति ( श्रौ० ११.७.१. * )। आदित्याना मयने पृष्ठ्यः षड़हो नास्तीति †, अङ्गिरसामयने अभिप्लवषड़हो नास्तीति ‡ वैषम्यम् ॥

अयनद्वयगत मभिप्लवषड़हं पृष्ठ्यषड़हं च दर्शयति— "सा यथा स्रुतिरञ्जसायन्येव मभिप्लवः षळहः स्वर्गस्य लोकस्याथ यथा महापथः पर्याण एवं पृष्ठ्यः षळहः स्वर्गस्य लोकस्य ; तद्यदुभाभ्यां यन्त्युभाभ्यां वै यन्न रिष्यत्युभयोः कामयोरुपाप्त्यै,— यश्चाभिप्लवे षळहे, यश्च पृष्ठ्ये"–इति। यथा लोकस्य प्रसिद्धा 'स्रुतिः' राज-मार्गरूपा 'अञ्जसायनी' दुःखहेतूनां कण्टकपाषाणादीना मभा-वाद् अञ्जसा सम्यगयनस्य गमनस्य साधनभूता, एव मय मभिप्लवः षड़हः स्वर्गस्य लोकस्य अञ्जसा प्राप्तिहेतुः §। अथ पृष्ठ्यषड़-हस्य दृष्टान्त उच्यते,—यथा लोके 'महापथः' प्रौढ़मार्गः नगरद्वय-मध्यवर्त्ती 'पर्याणः' परितोऽयनस्य गमनस्य साधनभूतः,—नगर-

---

* आश्वलायनो हि "अथ गवामयनम्"–इत्यारभ्य "इति गवामयनम्"–इत्यन्तं ग्रन्थ मुक्त्वापि पुनरुवाच "सर्वे वा षड़हा अभिप्लवाः स्युः"–इति ( ११.७.२१. )। ततो ज्ञायते केषाञ्चिन्नये गवामयनादित्यानामयनयोर्न षड़हकृतं वैषम्य मपि त्वन्यथैवेति। तच्च वैषम्य तत्र तदुत्तर मेव स्फुटीकृतं द्रष्टव्यम्।

† "गवामयनेनादित्यानामयनं व्याख्यातम्। सर्वे त्वभिप्लवास्त्रिवृत्पञ्चदशाः"–इत्यादि आश्व० श्रौ० १२.१.१–७। तथाच सर्वेऽभिप्लवाः पर्यायतस्त्रिवृत्पञ्चदशस्तोमकृता एव तत्र भवन्तीति प्रधानं वैषम्यं द्योतितम्।

‡ "आदित्यानामयनेनाङ्गिरसामयनं व्याख्यातम्। चित्तु तस्त्वभिप्लवाः सर्वे"–इत्यादि आश्व० श्रौ० १२.२.१–६। तयाचात्र सर्व एवाभिप्लवास्त्रिवृदेकसाध्या इति प्रधानं वैषम्यम्।

§ "स्वर्गं लोक मभ्यप्लवन्त, यदभ्यप्लवन्त तस्मादभिप्लवाः"–इति शत० ब्रा० १२.२.२.१०।

समीपे अरण्यपर्वताद्यभावाद्यस्यां दिशि गन्तुमपेक्षा तत्र गन्तुं शक्यते, एवमयं पृष्ठ्यः षड़हः स्वर्गस्य लोकस्य प्राप्तिहेतुः *। तथा सत्यनयोरुभयोः 'उभाभ्यां' षड़हाभ्यां यन्तीति यदस्ति, तेन 'उभाभ्यां' पादद्वयस्थानीयाभ्यां 'यन्' गच्छन् पुरुषो 'न रिष्यति' न विनश्यति,—योऽभिप्लवकामोऽस्ति, यश्च पृष्ठ्यषड़हे; तयोरुभयोः कामयोः प्राप्तिः षड़हद्वयं सम्पद्यते † ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये (अष्टादशाध्याये) तृतीयः खण्डः ॥ ३ (१७) ॥

---

॥ अथ चतुर्थः खण्डः ॥

एकविंश मेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्यैतेन वै देवा एकविंशेनादित्यं स्वर्गाय लोकायोदयच्छन्त्स एष इत एकविंशस्तस्य दशावस्तादहानि दिवाकीर्त्यस्य भवन्ति दश परस्तान्मध्य एकविंश उभयतो विराजि प्रतिष्ठित उभयतो हि वा एष विराजि प्रतिष्ठितस्तस्मादेषोऽन्तरेमांल्लोका-

* "स्वर्गं लोक मस्पृशंस्तस्मात् पृष्ठाः"–इति शत० ब्रा० १२.२.२.११।

† "गावो वै सत्र मासत"–इत्याख्यायिका (३२७ पृ०) सामयजुषोरपि प्राय एव मेव (ता०ब्रा०४.१, तै०सं०७.५.१.) स्तुतयो हेता: सवस्य'–इत्यादि जै०सू०१.१.३२ शा०भा०।

न्यन्न व्यथते तस्य वै देवा आदित्यस्य स्वर्गाल्लोका-दवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्-नुवन्त्स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचो ऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्नुवन्त्स्तोमा वै त्रयः स्वर्गा लोकास्तत्त्रयो ऽवस्तात्सप्तदशा भवन्ति त्रयः परस्तान्मध्य एष एकविंश उभयतः स्वरसामभिर्धृत उभयतो हि वा एषः स्वरसामभिर्धृतस्तस्मादेषोऽन्तरेमांल्लोकान्यन्न व्यथते तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादव-पातादबिभयुस्तं परमैः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नु-वन्त्स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽति-पातादबिभयुस्तं परमैः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्-नुवन्त्स्तोमा वै परमाः स्वर्गा लोकास्तत्त्रयो ऽवस्ता-त्सप्तदशा भवन्ति त्रयः परस्तात्ते द्वौ द्वौ सम्पद्यन्त्त्रय-श्चतुस्त्रिंशा भवन्ति चतुस्त्रिंशो वै स्तोमाना मुत्त-मस्तेषु वा एष एतदध्याहितस्तपति तेषु हि वा एष एतदध्याहितस्तपति स वा एष उत्तरो ऽस्मात् सर्व-स्माद् भूताद्भविष्यतः सर्व मेवेद मतिरोचते यदिदं किञ्चोत्तरो भवति यस्मादुत्तरो बुभूषति तस्मा-दुत्तरो भवति य एवं वेद ॥ ४ ( १८ ) ॥

इत्थं नयन मादित्यानामयन मङ्गिरसामयनं चेति संवत्सर-सत्रवि[illegible]त्ताः। तत्र सर्वत्र पूर्वोत्तरयोर्मासषट्कयोः मध्य-वर्त्ति[illegible]न महरस्ति, तदेतद् विधत्ते — "एकविंश मेत-दहरु विषुवन्तं मध्ये संवत्सरस्य"–इति। छन्दोगब्राह्मणे—[illegible]"[illegible] हिङ्करोति"–इत्यादिना ( ता० ब्रा० २.१४–१७ ख० ) विहितो योऽय मेकविंशः स्तोमः, तेनैव स्तोमेनास्य सर्वस्तोत्र-प्रवृत्तेरिद महः 'एकविंशम्' इत्युच्यते। तत्र विषुवन्नामकं, संव-त्सरसत्रस्य ये पूर्वे षण्मासाः, ये चोत्तरे, तयोर्मासषट्कयोरुभयतो वर्त्तमानयोर्मध्ये तदेतदहरनुष्ठेयम्। एतच्च नोभयोर्मासषट्कयो-रन्तर्भवति, किन्त्वतिरिक्त मेकम्। तथा चाश्वलायन आह— "अथ विषुवानेकविंशो न पूर्वस्य पञ्चसो नोत्तरस्य"–इति ( श्री० ११.७.७,८. )॥

तदेतदहः प्रशंसति—"एतेन वै देवा एकविंशेनादित्यं स्वर्गाय लोकायोदयच्छन्"–इति। पुरा देवाः 'एतेन' अह्ना स्वर्गलोकाख्यम् 'आदित्यम्' 'उदयच्छन्' इत ऊर्ध्वं प्रापितवन्तः। तथाच शाखान्तरे पठ्यते—"एकविꣳश एष भवति, एतेन वै देवा एकविंशेनादित्य मित उत्तमꣳ सुवर्गं लोक मारोहयन्"–इति (तै०ब्रा०१.२.४.१.*)॥

आदित्यस्य तेनाह्ना साम्यं दर्शयति—"स एष इत एकविंशः"–इति। योऽय मादित्योऽस्ति, स एषः 'इतः' भूलोकादारभ्य गण्यमान एकविंशतिसङ्ख्यापूरको भवति। तथा चान्यत्राम्ना-यते— "द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंशः"–इति ( तै० सं० ५.१.१०.३. )। अथवात्रैव विषुवतः पुरस्तात् पश्चाच्च वक्ष्यमाण महर्दशकद्वय मपेक्ष्य 'विषुवान्'

* "एष एवैकविंशो य एष तपति"–इति च शत० ब्रा० १.३.५.११।

न्यन्न व्यथते तस्य वै देवा आदित्यस्य स्वर्गाल्लोका-
दवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्-
नुवन्त्स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचो
ऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात्
प्रत्यस्तभ्नुवन्त्स्तोमा वै त्रयः स्वर्गा लोकास्तत्त्रयो
ऽवस्तात्सप्तदशा भवन्ति त्रयः परस्तान्मध्य एष
एकविंश उभयतः स्वरसामभिर्धृत उभयतो हि
वा एषः स्वरसामभिर्धृतस्तस्मादेषोऽन्तरेमांल्लोकान्यन्न
व्यथते तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादव-
पातादबिभयुस्तं परमैः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नु-
वन्त्स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽति-
पातादबिभयुस्तं परमैः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्-
नुवन्त्स्तोमा वै परमाः स्वर्गा लोकास्तत्त्रयो ऽवस्ता-
त्सप्तदशा भवन्ति त्रयः परस्तात्ते द्वौ द्वौ सम्पद्यन्त्त्रय-
श्चतुस्त्रिंशा भवन्ति चतुस्त्रिंशो वै स्तोमाना मुत्त-
मस्तेषु वा एष एतदध्याहितस्तपति तेषु हि वा एष
एतदध्याहितस्तपति स वा एष उत्तरो ऽस्मात् सर्व-
स्माद् भूताद्भविष्यतः सर्व मेवेद मतिरोचते यदिदं
किञ्चोत्तरो भवति यस्मादुत्तरो बुभूषति तस्मा-
दुत्तरो भवति य एवं वेद ॥ ४ (१८) ॥

मयन मादित्यानामयन मङ्गिरसामयनं चेति संवत्सर-इत्युक्ताः । तत्र सर्वत्र पूर्वोत्तरयोर्मासषट्कयोः मध्य-सत्रविधान महरस्ति, तदेतद् विधत्ते — "एकविंश मेत-वर्त्ति * विषुवन्तं मध्ये संवत्सरस्य"–इति । छन्दोगब्राह्मणे—दहरु हिङ्करोति"–इत्यादिना ( ता० ब्रा० २.१४–१७ ख० ) विहितो योऽय मेकविंशः स्तोमः, तेनैव स्तोमेनास्य सर्वस्तोत्र-प्रवृत्तेरिद महः 'एकविंशम्' इत्युच्यते । तच्च विषुवन्नामकं, संवत्सरसत्रस्य ये पूर्वे षण्मासाः, ये चोत्तरे, तयोर्मासषट्कयोरुभयतो वर्त्तमानयोर्मध्ये तदेतदहरनुष्ठेयम् । एतच्च नोभयोर्मासषट्कयो-रन्तर्भवति, किन्त्वतिरिक्त मेकम् । तथा चाश्वलायन आह — "अथ विषुवानेकविंशो न पूर्वस्य पक्षसो नोत्तरस्य"–इति ( श्रौ० ११.७.७,८. ) ॥

तदेतदहः प्रशंसति—"एतेन वै देवा एकविंशेनादित्यं स्वर्गाय लोकायोदयच्छन्"–इति । पुरा देवाः 'एतेन' अह्ना स्वर्गलोकाख्यम् 'आदित्यम्' 'उदयच्छन्' इत ऊर्द्ध्वं प्रापितवन्तः । तथाच शाखान्तरे पठ्यते— "एकविꣳश एष भवति, एतेन वै देवा एकविंशेनादित्य मित उत्तमꣳ सुवर्गं लोक मारोहयन्"–इति (तै०ब्रा०१.२.४.१.*)॥

आदित्यस्य तेनाह्ना साम्यं दर्शयति—"स एष इत एकविंशः"–इति । योऽय मादित्योऽस्ति, स एषः 'इतः' भूलोकादारभ्य गण्यमान एकविंशतिसङ्ख्यापूरको भवति । तथा चान्यत्राम्नायते— "द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंशः"–इति ( तै० सं० ५.१.१०.३. ) । अथवात्रैव विषुवतः पुरस्तात् पश्चाच्च वक्ष्यमाण महर्दशकद्वय मपेक्ष्य 'विषुवान्'

* "एष एवैकविंशो य एष तपति"–इति च शत० ब्रा० १.३.५.११ ।

'एकविंशः' इत्युच्यते। अस्मिन् पक्षे इदं वाक्य मुत्प्रेक्षत्वेन योजनीयम्॥

इदानी मुभयतो दशकद्वयं विधत्ते—"तस्य दशावस्ताद्हानि दिवाकीर्त्यस्य भवन्ति, दश परस्तान्, मध्य एष एकविंशः उभयतो विराजि प्रतिष्ठित, उभयतो हि वा एष विराजि प्रतिष्ठितः स्तस्मादेषोऽन्तरेमांल्लोकान्यन्न व्यथते"-इति। दिवैव कीर्त्तनीयं मन्त्रजातं यस्मिन्विषुवत्यहनि तदहः 'दिवाकीर्त्यम्'। तस्याह्नः 'अवस्तात्' अधोभागे दशाहानि भवन्ति, 'परस्तात्' ऊर्द्ध्वभागेऽपि दशाहानि भवन्ति; तयोर्दशकयोर्मध्ये 'एष एकविंशः' विषुवान् वर्त्तते। 'तस्य' विषुवतः 'अधस्तात्' पूर्वपक्षे षष्ठे मासे 'स्वरसामानः' अहर्विशेषास्त्रयः, तेभ्यः पूर्व मभिजिदाख्य मेकाहः, ततः पूर्वं पृष्ठ्यः षडह इति 'दशाहानि'। विषुवत ऊर्द्ध्वं तु प्रत्यवरोहक्रमेण त्रयः स्वरसामानः, ततो विश्वजिदाख्य एकाहः, तत ऊर्द्ध्वं पृष्ठ्यः षडह इति 'दश' अहानि। एव मुभयोः पार्श्वयोरह्नां दशसङ्ख्योपेतत्वात् विराट्त्वम्। एतस्या मुभयतोऽवस्थितायां 'विराजि' अय मेकविंशः प्रतिष्ठितः। यथोक्तगणनया विराजि प्रतिष्ठा मेव 'हि'-शब्दोपेतेन वाक्येन स्पष्टीकरोति *। 'तस्मात्' उभयतो विराट्द्वयेन रक्षितत्वात् 'एषः' आदित्यो विषुवदहःस्थानीयः, 'इमान् लोकानन्तरा' एषां लोकानां सर्वेषां मध्ये 'यन्' गच्छन्नपि 'न व्यथते' व्यथां न प्राप्नोति। विषुवानप्येकविंश आदित्योऽप्येकविंशः; तस्मादुभयोरेकत्वे सति विषुवतो यद्विराड्द्वयोपेतत्वम्, तदेवादित्यस्योभयतोविराट्त्वं भवति। आदित्यस्य व्याथाराहित्येन विषुवतो वैकल्यराहित्यं सिद्ध्यति।

* "विराजि हि वा एष उभयतः प्रतिष्ठितः"-इति तै० ब्रा० पाठः (१.२.४.१.)।

अथवा विषुवतो यथा विराड्द्वय मुभयतो रुचकम्, एव मादित्यस्याप्यधस्तादुपरिष्टाच्च वर्त्तमानं लोकद्वयम्। एतदेवाभिप्रेत्य शाखान्तरे श्रूयते— "तस्मादन्तरेमौ लोकौ यन् सर्वेषु सुवर्गेषु लोकेष्वभि तपन्नेति"-इति ( तै० ब्रा० १.२.४.१. )॥

अथ विषुवत उभयतः समीपवर्त्तिनः स्वरसामाख्यानह्वर्विशेषान् प्रशंसति—"तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात् प्रत्युत्तम्भुवन्त्स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात्प्रत्यस्तम्भुवन्त्स्तोमा वै त्रयः स्वर्गा लोकास्तत्त्रयो ऽवस्तात्सप्तदशा भवन्ति, त्रयः परस्तान्मध्य एव एकविंश, उभयतः स्वरसामभिर्धृत, उभयतो हि वा एष स्वरसामभिर्धृतस्तस्मादेषोऽन्तरेमांल्लोकान् यन्न व्यथते"-इति। योऽय मादित्योऽस्ति, 'तस्य' आदित्यस्य स्वर्गलोकात् 'अवपातः' आधाराभावादधःपतनम्, तस्माद् देवाः 'अबिभयुः' आदित्योऽधः पतिष्यतीति भीताः सन्तः 'तम्' आदित्यम् 'अवस्तात्' मण्डलस्याधोभागे 'त्रिभिः स्वर्गैर्लोकैः' स्वर्गशब्दोपलक्षितैः भूरादिभिः 'प्रत्युत्तम्भुवन्' अधःपातप्रतिबन्धार्थ मुत्तम्भन माधाररूप मकुर्वन्। यथा गृहगतवंशादीना मधःपातनिवारणाय स्तम्भेनोत्तम्भनं कुर्वन्ति, तद्वदिति। वर्त्तमानस्यादित्यस्य यथा त्रयो लोका उत्तम्भकाः, तथैवादित्यस्थानीयस्य विषुवतोऽह्नः स्वर्गलोकसदृशास्त्रयः स्तोमा एवोत्तम्भकाः। सप्तदशस्तोमयुक्ताः स्वरसामानो ऽह्वर्विशेषाः स्तोमशब्देनात्र विवक्षिताः। पुनरपि देवास्तस्यादित्यस्य 'पराचोऽतिपातात्' मण्डलात्पराभूतेषु ऊर्द्ध्ववर्त्तिषु लोकेषु योऽयम् 'अतिपातः' दृष्टिगोचरं देश मुल्लङ्घ्य यत्र क्वापि दूरदेशगमनम्, तस्मादति-

पाताद्भीताः सन्तः 'परस्तात्' आदित्यमण्डलस्योपरि त्रिभिः जन-तपःसत्यशब्दाभिधेयैः 'त्रिभिः स्वर्गैर्लोकैः' 'तम्' आदित्यं 'प्रत्य-स्तभ्नुवन्'। यथा पूर्वत्राधःपतननिवृत्त्यर्थ मुत्तम्भनं कृतम्, एव मुपरिष्टादतिपातनिवृत्त्यर्थं 'प्रतिस्तम्भनं' प्रतिबन्धकस्तम्भ मकुर्वन्। आदित्यस्थानीयस्य तु विषुवतोऽह्नः उत्तरपक्षगताः स्तोमशब्दो-पलक्षिताः स्वरसामाख्यस्त्रयोऽहर्विशेषा एव प्रतिस्तम्भकाः। 'तत्' तथा सति ये विषुवतोऽह्नः 'अवस्तात्' अधोवर्त्तिनस्त्रयोऽहर्विशे-षास्ते सप्तदशस्तोमयुक्ताः कार्य्याः। ये च 'परस्तात्' उपरि-वर्त्तिनस्त्रयोऽहर्विशेषास्तेऽपि सप्तदशस्तोमयुक्ताः कार्य्याः। एवं च सति मध्येऽवस्थित एकविंशाख्योऽहर्विशेषः 'उभयतः' अधस्ता-दुपरिष्टाच्च स्वरसामनामकैः त्रिभिस्त्रिभिरहोभिर्धृतः। अय मेवार्थः शाखान्तरप्रसिद्धिद्योतकेन 'हि'-शब्दयुक्तेन वाक्येन पुनर्दृढीकृतः। यस्माद्विषुवदहस्थानीय आदित्यः, स्वरसामस्थानीयैरुभयतोऽव-स्थितैस्त्रिभिस्त्रिभिर्लोकैर्धृतः, 'तस्मात्' कारणादपि आदित्यः 'अन्तरा' मध्येऽवस्थित इमान् लोकान् सर्वान् सर्वदा 'यन्' गच्छ-न्नपि 'न व्यथते' व्यथां न प्राप्नोति। अत्रार्थवादेन पूर्वोत्तरेषु च त्रिष्वहस्सु सप्तदशस्तोमविधिरुन्नेयः। तथाच शाखान्तरे श्रूयते—"उक्थ्या एव सप्तदशाः परःसामानः कार्य्याः"—इति (तै० ब्रा० १.२.२.१.)। स्वरसामाख्याना मह्ना मेव परःसामेति नामान्तरम् ॥

अथ विहितानेतान् पूर्वोत्तरान् सप्तदशस्तोमान् प्रकारान्तरेण पुनः प्रशंसति— "तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपाता-दबिभयुस्तम् परमैः स्वर्गैर्लोकैरवस्तात् प्रत्युत्तभ्नुवन्त्स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तम् परमैः

स्वर्गैर्लोकैः परस्तात् प्रत्यस्तम्भुवंस्तोमा वै परमाः स्वर्गा लोकास्तत्र योऽवस्तात्सप्तदशा भवन्ति त्रयः परस्तात्ते द्वौ द्वौ सम्पद्य त्रयस्त्रयस्त्रिंशा * भवन्ति ; चतुस्त्रिंशो वै स्तोमाना मुत्तमस्तेषु वा एष एतदध्याहितस्तपति, तेषु हि वा एष एतदध्याहितस्तपति"–इति। तेषु हि लोकेषु वर्त्तमानो य आदित्यस्तस्य स्वर्गलोकादवपातः स्यादिति देवा भीताः सन्तः, त मित्यादि पूर्ववत्। स्तोमाना मादित्यस्य स्तम्भकत्वाय परमत्वम्। तेनोभयतो वर्त्तमानाः षट्सङ्ख्याकाः सप्तदशस्तोमकाः द्वौ द्वौ एकीभूय त्रिसङ्ख्याकाश्चतुस्त्रिंशस्तोमा भवन्ति। त्रिवृत्-पञ्चदश–सप्तदश–कविंश–त्रिणव–त्रयस्त्रिंशाख्याश्छन्दोगैराम्नाताः सन्ति †, तेषा मयं चतुस्त्रिंशस्तोम उत्तमः ; पूर्वापेक्षया सङ्ख्याधिक्यात्। 'तेषु' स्तोमस्थानीयेषु उभयतः स्थितेषु स्वर्गेषु 'एषः' आदित्यः 'अध्याहितः' जगत्स्रष्ट्रा स्थापितः सन् 'एतत्' प्रत्यक्षं यथा भवति तथा 'तपति' सन्तापं करोति। 'तेषु हि'–इतिवाक्येन तदेव दृढीक्रियते॥

विषुवत एव प्रशंसा मभिप्रेत्य तद्रूपत्वेनोपचरित मादित्यं पुनः प्रशंसति— "स वा एष उत्तरोऽस्मात्सर्वस्माद्भूताद्भविष्यतः,— सर्व मेवेद मति रोचते यदिदं किञ्चोत्तरो भवति"–इति। योऽय मादित्यो ऽभिहितः, स एवैष भूताद्भविष्यतश्च 'सर्वस्मात्' अस्माज्जगतः 'उत्तरः' उत्कृष्टः,— 'यदिदं किञ्च' जगदस्ति, इदम् सर्व मेव 'अति'क्रम्य 'रोचते' दीप्यते ; तद्वदयं विषुवानप्यन्येभ्यः सर्वेभ्योऽहोभ्यः 'उत्तरः' उत्कृष्टो भवति॥

---

* 'सम्पद्यत्रय०'–इत्येव पाठो बहुपुस्तकेषु। तदत्र तकारस्य द्विर्वचनम् 'अनचि च'–इति (पा० ८.४.४७.), प्रातिशाख्यसम्मतं वेति। स्यादेवं परस्तादपि १९१ पृ०, १४ पं०।

† ता० ब्रा० २.१–७ खण्डेषु क्रमात् द्रष्टव्याः।

वेदनं प्रशंसति—"यस्मादुत्तरो बुभूषति, तस्मादुत्तरो भवति य एवं वेद"-इति। एतद्वेदनादुत्कृष्टो भूत्वा प्रतिष्ठयाधिकं शोभते, तस्मादुत्कृष्टतरो भवति॥ ४॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये
( अष्टादशाध्याये ) चतुर्थः खण्डः ॥ ४ (१८) ॥

---

॥ अथ पञ्चमः खण्डः ॥

स्वरसाम्न उपयन्तीमे वै लोकाः स्वरसामान इमान् वै लोकान्त्स्वरसामभिरस्पृण्वंस्तत्स्वरसाम्नां स्वरसामत्वं तद्यत् स्वरसाम्न उपयन्त्येष्वेवैनं तल्लोकेष्वा भजन्ति तेषां वै देवाः सप्तदशानां प्रम्लयादबिभयुः समा इव वै स्तोमा अविगूळ्हा इवेमे ह न प्रम्लियेरन्निति तान्त्सर्वैः स्तोमैरवस्तात्पर्यार्षंस्तसर्वैः पृष्ठैः परस्तात् तद्यदभिजित्सर्वस्तोमोऽवस्ताद् भवति विश्वजित्सर्वपृष्ठः परस्तात् तत्सप्तदशानुभयतः पर्यृषन्ति धृत्या अप्रम्लयाय तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं पञ्चभी रश्मिभिरुदवयन् रश्मयो वै दिवाकीर्त्यानि महादिवाकीर्त्यं

पृष्ठं भवति विकर्णं ब्रह्मसाम भास मग्निष्टोम-सामोभे बृहद्रथन्तरे पवमानयोर्भवतस्तदादित्यं पञ्चभी रश्मिभिरुद्यन्ति धृत्या अनवपातायोदित आदित्ये प्रातरनुवाक मनुब्रूयात्सर्वं ह्येवैतदहर्दिवा-कीर्त्यं भवति सौर्यं पशु मन्यङ्गश्वेतं सवनीयस्योपा-लम्भ्य मालभेरन्त्सूर्यदेवत्यं ह्येतदहरेकविंशतिं सामि-धेनीरनुब्रूयात्मत्यचाङ्क्षतदहरेकविंश मेकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति तावती-रुत्तराः शंसति शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति ॥ ५ (१९) ॥

स्वरसामाख्येष्वहस्सु सप्तदशस्तोमाः पूर्वं विहिताः; इदानीं तान्यहानि विधत्ते— "स्वरसाम्न उपयन्तीमे वै लोकाः स्वरसा-मान इमान् वै लोकान्त्स्वरसामभिरस्पृखंस्तत् स्वरसाम्नां स्वरसा-मत्वं ; तद्यत् स्वरसाम्न उपयन्त्येष्वेवैनं तल्लोकेष्वा भजन्ति"-इति । स्वरसामाख्यान् षट्सङ्ख्याकान् अहर्विशेषाननुतिष्ठेयुः । आदित्यस्य अधस्तादुपरिष्टाच्च वर्त्तमाना इमे एव लोकाः स्वरसामरूपाः । तस्मादनुष्ठितैरेतैः स्वरसामभिरिमान् लोकान् 'अस्पृखन्' प्रीतान-कुर्वन् । तस्मादेतेषा मह्नां स्वरोपेतसामवत् प्रीतिहेतुत्वात् स्वर-सामेति नाम सम्पन्नम् । एतेषा मनुष्ठातारो लोकेषु सर्वेषु 'आ भजन्ति' भोगभाजो भवन्ति ॥

अथ स्वरसामभ्यः सर्वेभ्योऽधस्तादुपरिष्टाच्च द्वे अहनी विधत्ते

—"तेषां वै देवाः सप्तदशानां प्रव्लयादबिभयुः, समा इव वै स्तोमा अविगूळ्हा इवेमे ह न प्रव्लियेरन्निति तान्त्सर्वैः स्तोमैरवस्तात्पर्यार्षन्त्सर्वैः पृष्ठैः परस्तात्; तद्यदभिजित् सर्वस्तोमोऽवस्ताद्भवति, विश्वजित् सर्वपृष्ठः परस्तात्, तत् सप्तदशानुभयतः पर्युषन्ति, धृत्या अप्रव्लयाय"—इति। ये स्वरसामानः सप्तदशस्तोमयुक्ताः 'तेषां' 'प्रव्लयात्' प्रकर्षेण विशरणाद् देवा अबिभयुः। 'व्ली विशरणे'—इतिधातोरिदं रूपम्। विशरणशङ्का कथ मिति, तदुच्यते— षट्सु अहस्सु प्रयोक्तव्या एते सप्तदशस्तोमाः 'समा इव वै' सदृशा एव; तस्मात् 'अविगूळ्हा इव' गूहनस्य गोपनस्याभावाच्छिथिला एव,—एकबन्धे ह्यसति नूतनत्वचमत्काराभावादनादरेण विशीर्णा भवन्ति। तस्मादिमे स्तोमाः 'न प्रव्लियेरन्' प्रकर्षेण विशीर्णा मा भूवन्निति विचार्य 'तान्' सप्तदशस्तोमान् 'अवस्तात्' अधोभागे सर्वैः स्तोमैः त्रिवृत्-पञ्चदश-सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशाख्यैः 'पर्यार्षन्' परितो गताः, रक्षणाय परितो वेष्टनं कृतवन्त इत्यर्थः। तथा 'परस्तात्' सप्तदशस्तोमाना मुपरि भागे 'सर्वैः पृष्ठैः' रथन्तरबृहद्-वैरूप-वैराज-शाक्वर-रैवत-सामाख्यैः पृष्ठस्तोत्रैः 'पर्यार्षन्'। तस्मात् स्वरसाम्नाम् 'अधस्तात्' पूर्वस्मिन् दिवसे सर्वस्तोमयुक्तम् 'अभिजिद्'आख्य महरनुष्ठेयम्। तथा तेषा मुपरिष्टात् सर्वपृष्ठस्तोत्रयुक्तं 'विश्वजिद्'आख्य महरनुष्ठेयम्। यदेतद् द्विविध मनुष्ठानं तेन सप्तदशस्तोमान् उभयतः 'पर्युषन्ति' परिरक्षन्ति। तच्च रक्षणं 'धृत्यै' दार्ढ्याय 'अप्रव्लयाय' शैथिल्याभावाय सम्पद्यते॥

अथ विषुवत्यहनि पञ्च सामानि विधत्ते— "तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं पञ्चभी रश्मिभिरुदवयन्; रश्मयो वै दिवाकीर्त्यानि, महादिवाकीर्त्यं पृष्ठं भवति,

विकर्णं ब्रह्मसाम, भास मग्निष्टोमसामोभे बृहद्रथन्तरे पवमानयो-र्भवतस्तदादित्यं पञ्चभी रश्मिभिरुदयन्ति धृत्या अनवपाताय"-इति। देवाः पुनरपि 'तस्य' आदित्यस्य स्वर्गलोकादधःपात माशङ्क्य तस्माद्भीताः। यद्यपि पृथिव्यादिलोकत्रय मुत्तम्भक मुक्तम्, तथापि उपरि रज्जुभिरिव दृढ़बन्धनस्याभावात् ततश्चलने सति पार्श्वयोः पतन माशङ्क्यते। तन्माभूदिति देवाः त मादित्यं 'पञ्चभिः रश्मिभिः' प्रग्रहैः 'उदवयन्' ऊर्द्ध मुत्कृष्य वयनं कृतवन्तः, दृढ़ं बद्धवन्त इत्यर्थः। ये बन्धनहेतवो रश्मयः, तत्स्थानीयानि अस्मिन् विषुवति 'दिवाकीर्त्यानि' दिवैव पठनीयानि पञ्च सामानि। तेषु मध्ये महादिवाकीर्त्यनामक मेकं साम। तच्च "विभ्राड् बृह-त्पिबतु सोम्यं मधु"-इत्यस्या मृच्युत्पन्नम् *। तत्सामयुक्तं पृष्ठ-स्तोत्रं कर्त्तव्यम्। तथा विकर्णाख्य मेकं साम। तच्च "प्रचस्य वृष्णो अरुषस्य नू महः"-इत्यस्या मृचुत्पन्नम् †। तदेतद् ब्रह्म-साम कर्त्तव्यम्। ब्राह्मणाच्छंसिन मभिलक्ष्य गीयमानं साम 'ब्रह्म-साम'। तथा भासाख्य मपरं साम। तदपि "प्रचस्य"-इत्यस्या मेवोत्पन्नम् ‡। तच्चाग्निष्टोमसाम कर्त्तव्यम्। येन साम्ना अग्नि-

---

* 'आर० आ० ५. २ ऋचि आर० गा० ६.१.१५. महादिवाकीर्त्यं ( योनिसाम ); उ० आ० ६.२.५.१-३ तृचे ऊह्य० गा० २.१.१२. महादिवाकीर्त्यं ( स्तोत्रम् )।

† 'प्रचस्य'-इत्यस्याम् ( आर० आ० २.८ ) ऋचि विकर्णं नावगम्यते, अपि तु 'विभ्राड् बृहत्'-इत्यस्या मेव ( आर० आ० ५.२ ऋचि ) योनिगान मुत्पन्नं ( आर० गा० ६.१.७. ) श्रूयते। 'इन्द्र क्रतुं नः'-इत्यत्र ( उ० आ० ६.२.६.१,२ ) प्रगाथे गीतं ( ऊह्य० २.१.१७. ) स्तोत्र मेवेह विहित मिति च गम्यते; ताण्ड्यभाष्यदर्शनादितः ( ता०ब्रा०४.६.१५.सा०भा० )।

‡ आर० आ० ३.८ ऋचि आर० गा० ६.१.८. उ० आ० नास्ति, तस्मादिदं योनि-सामैव स्तोत्रम्। एतदेव दशस्तोभ मित्युच्यते।

ष्टोमसंस्था समाप्यते, तत् 'अग्निष्टोमसाम'। बृहद्रथन्तरे प्रसिद्धे भवतः * ; माध्यन्दिनपवमानार्भवपवमानयोः कर्त्तव्यत्वात् †। पञ्चसामप्रयोगेणादित्यं पञ्चभिः सामरज्जुभिरूर्द्ध्वं बध्नन्ति, तच्चादित्यस्य धारणाय भवति; तेन धारणेनाधःपातो न भवति ॥

अथ प्रातरनुवाकस्य चोदकप्राप्तं कालं बाधितुं कालान्तरं विधत्ते — "उदित आदित्ये प्रातरनुवाक मनुब्रूयात् ; सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"–इति। प्रकृतावादित्योदयात् प्रागेव प्रातरनुवाकः पठ्यते ‡, अत्र तु सर्वस्याह्नो दिवाकीर्त्यत्वसिद्ध्यर्थमुदयादूर्द्ध्वं मनुब्रूयात् ॥

सवनीयपशौ कञ्चिद्विशेषं विधत्ते—"सौर्यं पशुमन्यङ्गश्वेतं सवनीयस्योपालम्भ्य मालभेरन्त्सूर्य्यदेवत्यं ह्येतदहः"–इति। सूर्य्या देवता यस्य पशोः सो'यं 'सौर्यः', 'न्यङ्ग' वर्णान्तरेण सम्पादितं चिह्नम्, तन्नास्ति यत्र सः 'अन्यङ्गः', तादृशश्चासौ श्वेतश्च सो'यम् 'अन्यङ्गश्वेतः' वर्णान्तरेणामिश्रितः, सर्वश्वेत इत्यर्थः §। तादृशः पशुरत्र सवनीयस्थाने उपालम्भ्य ‖; अतस्तं मालभेरन्। यस्मात् एतदहः सूर्यदेवत्यम्, तस्माद्युक्तः सौर्य्यः पशुः ॥

सामिधेनीषु विशेषं विधत्ते— "एकविंशतिं सामिधेनीरनुब्रूयात्प्रत्यक्षाद्ध्येतदहरेकविंशम्"–इति। 'एतद्' विषुवन्नामकमह-

---

* ३१२ पृ० †, ‡ टीप्पनीद्वयं द्रष्टव्यम्।

† "दीवाकीर्त्यसामा भवति"–इत्यादि ( ता० ब्रा० ४.६.१२–१६।

‡ "महति रात्र्या मनूच्यः प्राक् शकुनिवादात्"–इति १ भा ३३५ पृ०।

§ "जातवेदसे न्यङ्गम्"–इति १भा० ४६४पृ० २पं०। "मैत्रावरुणी न्यङ्गः"–इति, "एष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि"–इति शत० ब्रा० १.८.१.१७ ; ४.५.१०.२।

‖ 'उपात् प्रशंसायाम्'–इति ( पा० ७.१.६६. ) नुमि रूपम्।

रैकविंशस्तोमयुक्तत्वात् 'प्रत्यक्षादि' साक्षादेव मुख्य मेवैकविंशम् । तस्मात्सामिधेनीना मेकविंशतिसङ्ख्या युक्ता । अत्र चोदकप्राप्ताः पञ्चदश, धाय्याः षट्सङ्ख्यका इत्येकविंशतिः । तथा चाश्वलायन आह—"विषुवान् दिवाकीर्त्यं, उदिते प्रातरनुवाकः, पृथु पाजा अमर्त्य इति षट् धाय्याः सामिधेनीनां, सौर्य्यः सवनीयस्योपालम्भः"—इति ( श्रौ० ८.६.१-४. ) ॥

निष्केवल्यशस्त्रे निविदं विधत्ते—"एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति; तावतीरुत्तराः शंसति; शतायुर्वै पुरुषः शतवीर्य्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य्य इन्द्रिये दधाति"—इति । तस्मिन् शस्त्रे स्तोत्रियानुरूपयोस्तृचयोः षड्चः *, 'यद्वावान'—इत्येका ( सं० १०.७४.६. ) धाय्या, बृहद्रथन्तरयोर्योनी द्वे †, उत्तमसामप्रगाथस्य प्रग्रथनेन तिस्रः ‡, 'नृणा मु त्वा नृतमम्'-इति ( सं०३.५१.४. ) तिस्र, 'यस्तिग्मशृङ्गः'—इत्येकादशर्चः ( सं० ७.१९.१-११. ), 'अभि त्वम्'—इति पञ्चदशर्चः ( सं० १.५१.१-१५. ); इत्येव मेकचत्वारिंशत् । तत्र प्रथमया त्रिरभ्यस्तया सह त्रिचत्वारिंशत् । 'इन्द्रस्य नु वीर्याणि'-इत्यस्मिन् पञ्चदशर्चे ( सं०१.३२.१-१५. ) सूक्ते अष्टौ नव वा शंसनीयाः; तत्राष्टत्वपक्षे एकपञ्चाशद्भवन्ति, नवपक्षे द्विपञ्चाशत् । तच्छंसनादूर्ध्वम् 'इन्द्रस्य नु वीर्य्याणि'-इत्यस्य सूक्तस्य मध्ये ऐन्द्रीं 'निविदं' दध्यात् § । तत ऊर्द्ध्वं पुनरपि 'तावतीः' ऋचः शंसेत् । तथा सति

* विभ्राड् बृहत् पिबतु, नमो मित्रस्य—सं० १०.१७०.१-३, १०.३७.१-३=६ ।

† बृहद्रथन्तरयोर्योनी—सं० ६.४६.१, ७.३२.२२= उ० आ० ३.१.५.२, ५.१ ।

‡ इन्द्र मिद् देवतातये—सं० ८.३.५, ६=उ० आ० ७.३.८.१, २=१-३ ।

§ आश्व० श्रौ० ८.६.११-१३. सूत्राणि द्रष्टव्याणि ।

शतसङ्ख्यासाम्यात् सम्पत्त्या पुरुषायुःसाम्यं भवति। इन्द्रियाणि च शतसङ्ख्यासु नाड़ीषु सञ्चाराच्छतं भवन्ति ; तदीयव्यापाराश्च तथा शतसङ्ख्याकाः। एवं सति यजमानं सम्पूर्णं आयुषि वीर्यं इन्द्रियेषु अवस्थापयति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये
(अष्टादशाध्याये) पञ्चमः खण्डः ॥ ५ (१८) ॥

---

॥ अथ षष्ठः खण्डः ॥

दूरोहणं रोहति स्वर्गो वै लोको दूरोहणं स्वर्गमेव तं लोकं रोहति य एवं वेद यदेव दूरोहणा३म् असौ वै दूरोहो यो ऽसौ तपति कश्चिद्वा अत्र गच्छति स यद्दूरोहणं रोहत्येत मेव तद्रोहति हंसवत्या रोहति हंसः शुचिषदित्येष वै हंसः शुचिषद् वसुरन्तरिक्षसदित्येष वै वसुरन्तरिक्षसद्धोता वेदिषदित्येष वै होता वेदिषदतिथिर्दुरोणसदित्येष वा अतिथिर्दुरोणसन् नृषदित्येष वै नृषद् वरसदित्येष वै वरसद्वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपत्यृतसदित्येष वै सत्यसद् व्योमसदित्येष वै व्योम-

सद्' व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तप-त्यब्जा इत्येष वा अब्जा अद्भ्यो वा एष प्रातरुदेत्यपः' सायं प्रविशति गोजा इतीएष वै गोजा ऋतजा इतीएष वै सत्यजा' अद्रिजा इतीएष वा अद्रिजा' ऋत मितीएष वै सत्य मेष एतानि सर्वाण्येष ह वा अस्य छन्दस्सु प्रत्यक्षतमादिव रूपं' तस्माद्यत्र क्व च दूरो-हणं रोहेद्धंसवत्यैव रोहेत्तार्क्ष्यं स्वर्गकामस्य रोहे-त्तार्क्ष्यो ह वा एतं पूर्वोऽध्वान मैद्यत्राहो गायत्री सुपर्णो भूत्वा सोम माहरत्तद्यथा क्षेत्रज्ञ मध्वनः पुर एतारं कुर्वीत' तादृक्तद्यदेव तार्क्ष्यं' ऽयं वै तार्क्ष्यो योऽयं पवत एष स्वर्गस्य लोकस्याभिवोळ्हा त्य मू षु वाजिनं देवजूत मितीएष वै वाजी देवजूतः सहावानं तरुतारं रथाना मितीएष वै सहावांस्तरुतैष हीमां-ल्लोकान्त्सद्यस्तरत्यरिष्टनेमिं पृतनाज माशु मितीएष वा अरिष्टनेमिः पृतनाजिदाशुः' स्वस्तय इति स्वस्तिता माशास्ते' तार्क्ष्य मिहा हुवेमेति' ह्वयतीएवैन मेत-दिन्द्रस्येव राति माजोहुवाना: स्वस्तय इति स्वस्तिता मेवाशास्ते' नाव मिवा रुहेमेति समेवैन मेतदधि-रोहति स्वर्गस्य लोकस्य समष्ट्यै' सम्पत्त्यै सङ्गत्त्यै' उर्वी न पृथ्वी बहुले गभीरे' मा वा मेतौ मा परेतौ

रिषामेतीमे एवैतदनुमन्त्रयत आ च परा च मेष्य-
न्त्सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषा-
पस्ततानेति प्रत्यक्षं सूर्यमभिवदति सहस्रसाः
शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्या
मित्याशिषमेवैतेनाशास्त आत्मने च यजमाने-
भ्यश्च ॥ ६ ( २० ) ॥

अथ कस्याश्चिदृचः शंसनं विधत्ते—"दूरोहणं रोहति ; स्वर्गो वै लोको दूरोहणम्"–इति। दुःशकं रोहणं यस्मिन्नादित्यमण्डले तद् 'दूरोहणं', तत्रारोहणस्य साधनत्वान्मन्त्रस्वरूप मपि 'दूरोहणम्'–इत्युच्यते ; तद् 'रोहति' आरोहणार्थं शंसेदित्यर्थः। यद्वा मन्त्रस्य दुःशकं उच्चारणविशेषः 'दूरोहणम्' ; स च विशेषः सूत्रे ऽवगन्तव्यः*। तं 'रोहति' विशिष्ट मुच्चारणं कुर्यादित्यर्थः। योऽयं स्वर्गलोकः, तस्यारोहणं दुःशक मिति दूरोहणत्वम् ; तादृशं स्वर्गलोकं प्रापयतीत्यर्थः। वेदनं प्रशंसति— "स्वर्ग मेव तं लोकं रोहति य एवं वेद"–इति ॥

विहित मर्थं प्रशंसति—"यदेव दूरोहणा३म् असौ वै दूरोहो यो ऽसौ तपति ; कश्चिद्वा अत्र गच्छति, स यद् दूरोहणं रोहत्येत मेव तद्रोहति"–इति। दूरोहण मिति यदुक्तं तत् किमिति शेषः। प्रश्नार्था प्लुतिः। असावित्यत्रोत्तर मुच्यते। 'यो ऽसौ' आदित्यस्तपति, असावेव 'दूरोहः' दुःशकारोहणस्थानावस्थितत्वात्।

* आश्व० श्रौ० ८.२.१२–१५।

अथवा यः 'कश्चिद्' यजमानः सम्यगनुष्ठायादित्यलोकं गच्छति, सोऽपि 'दूरोहः' दुःशकस्थानारोहणत्वात् । एवं सति 'यद्' यदि 'रोहणं' मन्त्रं 'रोहति' शंसेत्, 'तत्' तेन शंसनेन 'एत मेव' आदित्यं लोकं 'रोहति' प्राप्नोति ॥

मन्त्रविशेषं विधत्ते—"हंसवत्या रोहति"-इति । हंसशब्दो यस्या ऋच्यस्ति, सेयं 'हंसवती' *, तया रोहेत्, ता मुच्चारये-दित्यर्थः ॥ तस्या ऋचः प्रथमपादे पूर्वभाग मनूद्य व्याचष्टे—"हंसः शुचिषदित्येष वै हंसः शुचिषत्"-इति । हन्ति सर्वदा गच्छतीति 'हंसः'; शुचौ शुद्धे द्युलोके सीदति तिष्ठतीति 'शुचिषत्' । अस्मिन् भागे यः प्रतिपाद्यते, स 'एष वै' मण्डले दृश्यमान एव ;— स च सर्वदा गतिमत्त्वाद्धंसो भवति, द्युलोकेऽवस्थानाच्छुचिषदपि भवति ॥ उत्तरभाग मनूद्य व्याचष्टे—"वसुरन्तरिक्षसदित्येष वै वसुरन्तरिक्षसत्"-इति । वसति सर्वदेति 'वसुः वायुः', न हि वायोरहनि रात्रौ वा कदाचिदस्तसमयोऽस्ति ; तादृशो वायुरन्तरिक्षे सीदतीति 'अन्तरिक्षसत्' । आदित्यस्य परमात्मरूपत्वेन सर्वात्मकत्वादन्तरिक्षसद्वायुरप्येष एवेत्युच्यते ॥ द्वितीयपादस्य पूर्वभाग मनूद्य व्याचष्टे—"होता वेदिषदित्येष वै होता वेदिषत्"-इति । 'होता' होमस्य कर्त्ता ; यागवेद्यां सीदतीति 'वेदिषत्' । आदित्यस्य तद्रूपत्वं पूर्ववत् ॥ उत्तरभाग मनूद्य व्याचष्टे—"अतिथिर्दुरोणसदित्येष वा अतिथिर्दुरोणसत्"-इति । न विद्यते तिथिविशेषनियमो यात्रार्थं यस्य, सोऽयम् 'अतिथिः' ;

---

* "हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥"
–इति ४.४०.५ । तै० सं० १.८.१५.२ । शत० ब्रा० ६.५.२.१२ । निरु० १३.४.१ ।

दुरोणेषु तत्तद्गृहेषु सीदति याचितुं प्रविशतीति 'दुरोणसत्'। आदित्यस्य तद्रूपत्व मपि द्रष्टव्यम् ॥ तृतीयपादं चतुर्धा विभज्य प्रथमभाग मनूद्य व्याचष्टे—"नृषदित्येष वै नृषद्"-इति। नृषु मनुष्येषु वृष्टिरूपेण सीदतीति 'नृषत्'। तथा चारण्यकाण्डे वक्ष्यति —"आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्"-इति (४.२.४.)। तस्मादेष आदित्य एव नृषच्छब्दवाच्यः॥ द्वितीयभाग मनूद्य व्याचष्टे— "वरसदित्येष वै वरसद्; वरं वा एतत्सद्मनां यस्मिन्नेष आसनस्तपति"-इति। वरे श्रेष्ठे मण्डले सीदतीति 'वरसत्'। एतस्यादित्यस्य मण्डले अवस्थानं प्रसिद्धम्। यानि 'सद्मानि' निवासस्थानानि सन्ति, तेषां मध्ये 'यस्मिन्' मण्डले 'एषः' आदित्यः 'आसन्नः' उपविष्टः सन् तपति। 'एतत्' मण्डलं 'वरं' श्रेष्ठं सद्म॥ तृतीयभाग मनूद्य व्याचष्टे— "ऋतसदित्येष वै सत्यसद्"-इति। ऋतं सत्यवदनं वेदवाक्यं तत्र सीदति प्रतिपाद्यते इति 'ऋतसत्'। आदित्यस्य सत्येन वेदवाक्येन प्रतिपाद्यत्व मनेकमन्त्रेषु प्रसिद्धम्॥ चतुर्थभाग मनूद्य व्याचष्टे—"व्योमसदित्येष वै व्योमसद्; व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति"-इति। व्योम्नि आकाशमार्गे सीदतीति 'व्योमसत्'। आदित्यस्य तथाविधत्वं प्रसिद्धम्। 'यस्मिन्' व्योमस्थाने 'एषः' आदित्यः प्रत्यासन्नस्तपति, तत् 'एतत्' स्थानं 'सद्मनां' निवासस्थानानां मध्ये 'व्योम' गृहाद्यावरणशून्य माकाशम्॥ चतुर्थं पादं पञ्चधा विभज्य प्रथमभाग मनूद्य व्याचष्टे—"अब्जा इत्येष वा अब्जा, अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति"-इति। अद्भ्यो जायते योऽय मकारादिः, सोऽयम् 'अब्जाः' तद्रूपत्व मस्य सर्वात्मकत्वादवगन्तव्यम्। किञ्चाय मादित्यो ऽस्मद्दृष्ट्या प्रातः काले

पूर्वसमुद्रगताभ्योऽद्भ्य उदेति, सायं काले पश्चिमसमुद्रगता अपः प्रविशतीव लक्ष्यते ; तस्मादब्जा ॥ द्वितीयभाग मनूद्य व्याचष्टे— "गोजा इत्येष वै गोजाः"-इति । गोभ्यो जायते जीवादिः, स 'गोजाः' । अस्य तद्रूपत्वं पूर्ववत् ॥ तृतीयभाग मनूद्य व्याचष्टे— "ऋतजा इत्येष वै सत्यजाः"-इति । ऋतं सत्यं वैदिकमन्त्रजातम्, तस्माज्जायत इति 'ऋतजाः' ; वैदिकानुष्ठानेन हि देवलोकादौ जायते इति प्रसिद्धम् । आदित्यस्य तद्रूपत्वं पूर्ववत् ॥ चतुर्थभाग मनूद्य व्याचष्टे— "अद्रिजा इत्येष वा अद्रिजाः"-इति । अद्रावुदयगिरावुत्पद्यत इति 'अद्रिजाः' ; आदित्यस्य तथात्वं पुराणादौ प्रसिद्धम् ॥ पञ्चमभाग मनूद्य व्याचष्टे— "ऋत मित्येष वै सत्यम्"-इति । ऋतशब्दः सत्यवाची । सत्यं च द्विविधम्,— व्यावहारिकं पारमार्थिकं च । तत्र 'व्यावहारिकं' वाचा सत्यभाषणम्, 'पारमार्थिकं' परं ब्रह्म ; "सत्यं ज्ञान मनन्तं ब्रह्म"-इतिश्रुतेः ( तै० आ० ८.१ )। तदिद मृतशब्देन विवक्षितम् । अयं चादित्यो ब्रह्मरूपं सत्यम् । अत एव शाखान्तरे "ऋतं बृहत्" इति मन्त्रशेषं पठन्ति * । मन्त्रान्तरं चैवं श्रूयते— "असौ वा अदित्यो ब्रह्म"-इति ( शत० ब्रा० ७.४.१.१४. ) ॥

कृत्स्नस्य मन्त्रस्य तात्पर्यं दर्शयति— "एष एतानि सर्वाण्येषा ह वा अस्य छन्दसु प्रत्यक्षतमादिव रूपम्"-इति । शुचिषदित्यादिशब्दैर्यानि रूपाण्यभिहितानि, तानि सर्वाण्येष एव ; अस्य परब्रह्मत्वेन सर्वात्मकत्वात् । 'छन्दसु' वेदेषु मध्ये 'एषा ह वै' येयं हंसवती ऋक्, सैव 'अस्य' आदित्यस्य सर्वात्मकं 'रूपं'

* वा० सं० १०.२४ । तै० सं० १.८.१५.२ । कात्या० सू० १५.६.२६ । कठ० उप० ५.२ ।

'प्रत्यक्षतमादिव' अतिशयेन प्रत्यक्षं विस्पष्टं यथा भवति तथा प्रतिपादयतीति शेषः ॥

मन्त्रतात्पर्य्यं दर्शयन्नेव विधिं निगमयति—"तस्माद्यत्र क्व च दूरोहणं रोहेद्धंसवत्यैव रोहेत्"–इति । यत्र क्वापि कर्मणि दूरोहणविधान मस्ति, तत्र सर्वत्र हंसवत्यैव विज्ञेया ॥

फलभेदेन सूक्तान्तरं विधत्ते—"तार्क्ष्यं स्वर्गकामस्य रोहेत्"–इति । तार्क्ष्याख्येन महर्षिणा दृष्टं तार्क्ष्यम् (सं० १०.१७८.१–३.*); तस्मिन् सूक्ते स्वर्गकामस्य यजमानस्य दूरोहणं रोहेत्, न तु हंसवत्या ॥

तदेतत्प्रशंसति—"तार्क्ष्यो ह वा एतं पूर्वोऽध्वान मैद्यत्रादो गायत्री सुपर्णो भूत्वा सोम माहरत्; तद्यथा क्षेत्रज्ञ मध्वनः पुर एतारं कुर्वीत, तादृक् तद्यदेव तार्क्ष्यं; ऽयं वै तार्क्ष्यो योऽयं पवत एष स्वर्गस्य लोकस्याभिवोळ्हा"–इति । अत्रैव वक्ष्यमाणं कार्य्यं सम्पन्नम् । तत्र 'तार्क्ष्यो ह वै' गरुड़ एव 'पूर्वः' प्रथमगामी सन् 'एतम्' अध्वानम् 'ऐत्' प्राप्तवान् । किं वक्ष्यमाण मिति, तदुच्यते— गायत्री 'सुपर्णः' पक्षी भूत्वा सोम माहरत् । एतच्च पूर्व मेव प्रतिपादितम् ( ११८ पृ० ) । एवं सति 'तार्क्ष्यं' सूक्ते 'यदेव' शंसनं 'तत्' तत्र शंसने दृष्टान्तः कथ्यते,— यथा लोके 'क्षेत्रज्ञ' मार्गविशेषाभिज्ञं तद्देशवासिनं कञ्चित् पुरुषम् 'अध्वनः' मार्गस्य 'पुर एतारं' पुरतो गन्तारं मार्गप्रदर्शकं कुर्वीत, तादृक् 'तत्' तार्क्ष्यशंसनम् । यः 'अयं' वायुरन्तरिक्षे पवते, अय मेव तार्क्ष्य-

* अस्य सूक्तस्य ऋषिस्तार्क्ष्यः, देवोऽपि तार्क्ष्य एव । तत्र ऋषिपक्षे तृक्षस्य गो० प० पत्य मित्येव व्युत्पत्तिः स्यात् साधीयसी; गर्गादिषु तृक्षशब्दस्य पाठात् ( पा० ४.१.१०५. ) । देवपक्षे तु निर्वचनान्तरं [illegible] ( [illegible] ) ।

स्वरूपः *। एष च स्वर्गस्य लोकस्य 'अभिवोळ्हा' नेता भवति। तस्मात्तार्क्ष्यसूक्तेनैव दूरोहणं रोहेत् ॥

तस्य सूक्तस्य प्रथमाया ऋचि प्रथमपाद मनूद्य व्याचष्टे—"त्य मू षु वाजिनं देवजूत मित्येष वै वाजी देवजूतः"–इति। चतुर्थपादे तार्क्ष्य मिति वक्ष्यति। कीदृशं तार्क्ष्यम्? 'त्य मू षु' त्यच्छब्दः सर्वनामत्वात् प्रसिद्धवाची, उ शब्द एवकारार्थः,—पुराणादिषु प्रसिद्ध मेव। 'वाजिनम्' अन्नवन्तं, 'देवजूतं' देवानां मध्ये वेगवन्तम्। अस्मिन् पादेऽभिधीयमानः 'एष वै' तार्क्ष्य एव; तस्यान्नवत्त्वाद् देवेषु मध्ये वेगवत्त्वाच्च ॥ द्वितीयपाद मनूद्य व्याचष्टे—"सहावानं तरुतारं रथाना मित्येष वै सहावांस्तरुतैष हीमांल्लोकान्सद्यस्तरति"–इति। पुनरपि कीदृशं तार्क्ष्यम्? 'सहावानं' सहः सहनं सर्वेषामभिभवस्तद्वन्तम्। रथानां 'तरुतारम्' उल्लङ्घयितारम्। 'एष वै' तार्क्ष्य एवास्मिन् पादेऽभिहितः, 'सहावान्' अभिभवक्षमः, 'तरुता' उल्लङ्घयिता भवति; यस्मादेष इमान् लोकान् 'सद्यः' तदानी मेव तरितुं क्षमः ॥ तृतीयपाद मनूद्य व्याचष्टे—"अरिष्टनेमिं पृतनाज माशु मित्येष वा अरिष्टनेमिः पृतनाजिदाशुः"–इति। पुनरपि कीदृशं तार्क्ष्यम्? 'अरिष्टनेमिं' रिष्टं हिंसा, तद्राहित्य मरिष्टम्, तस्य च नेमिस्थानीयम्,—यथा रथचक्रस्य नेमिः परितो रक्षिका भवति तादृशम्। 'पृतना' परकीयसेना, तां जयतीति 'पृतनाजम्'। 'आशु' वेगवन्तम्। अस्मिन् पादेऽभिहितानां गुणानां तार्क्ष्ये सद्भावादेष एवात्र प्रतिपाद्यः ॥ चतुर्थपादे प्रथमभाग मनूद्य व्याचष्टे—"स्वस्तय इति स्वस्तिता माशास्ते"–इति। 'स्वस्तये'

* "क मन्य मध्यमादेव मवचात्"–इति निरु० १०.२.४। मध्यमः = वायुः।

क्षेमार्थम्। अनेन पादेन क्षेमः प्रार्थितो भवति॥ उत्तरभागमनूद्य व्याचष्टे—"तार्क्ष्य मिहा हुवेमेति ह्वयत्येवैन मेतद्"-इति। 'तार्क्ष्यं' गरुडम् 'इह' कर्मणि 'हुवेम' आह्वयामः। एतेन भागेन माह्वयत्येव ( सं० १०.१७८.१. ) * ॥

तार्क्ष्यसूक्ते द्वितीयस्या ऋचः पूर्वार्द्धे प्रथमभागमनूद्य व्याचष्टे—"इन्द्रस्येव राति माजोहुवानाः स्वस्तय इति स्वस्तिता मेवाशास्ते"-इति। यथेन्द्रस्य दातव्यं हविः प्रयच्छामः, तथैवास्य तार्क्ष्यस्य 'रातिं' दातव्यं वसु 'आजोहुवानाः' समन्तात् पुनःपुनर्ददाना वयं आजुह्मोमिति वक्ष्यमाणेन सम्बन्धः। किमर्थम्? 'स्वस्तये' क्षेमार्थम्,— एतत्पाठेन 'स्वस्तिता मेव' क्षेम मेव 'आशास्ते' प्रार्थयते॥ उत्तरभाग मनूद्य व्याचष्टे—"नाव मिवा रुहेमेति, स मेवैन मेतदधिरोहति; स्वर्गस्य लोकस्य समष्ट्यै, सम्पत्त्यै सङ्गत्यै"-इति। यथा लोके नद्युत्तरणाय नाव मारोहति, एवं च स्वर्गं प्राप्तुं दूरोहण मारुहेम। एतद्भागपाठेन 'एनं' दूरोहणं स्वर्गं 'सम्' सम्यगेव अधिरोहति। अतस्तच्छंसनं स्वर्गस्य 'समष्ट्यै' प्राप्त्यै भवति। सा च प्राप्तिः 'सम्पत्त्यै' भोगाय, भोग्यवस्तुसम्पादनाय भवति। सम्पादनं च 'सङ्गत्यै' भोगसम्बन्धाय भवति॥ उत्तरार्द्धं मनूद्य व्याचष्टे— "उर्वी न पृथ्वी बहुले गभीरे मा वा मेतौ मा परेतौ रिषामेतीमे एवैतदनुमन्त्रयत आ च परा च मेष्यन्"-इति। नकारः समुच्चयार्थः। 'उर्वी न' भूमिश्च 'पृथ्वी' विस्तीर्णा द्यौश्च, 'बहुले' उभे अपि अतिदीर्घे, 'गभीरे' अत्यन्तगाम्भीर्येण युक्ते, उभयोरियत्ता निश्चेतु मशक्येत्यर्थः। तादृश्यौ हे द्यावापृथिव्यौ! वयम् 'एतौ' आगमनवेलायां 'परेतौ' पुनर्गमन-

* निरु० १०.३.४. द्रष्टव्यम्।

वेलायाञ्च 'वाम्' उभे 'मा रिषाम' हिंसायुक्ते मा करवाम ( सं० १०.१७८.२.) । एतत्पाठेन होता 'आमेष्यंश्च' आगमिष्यन्नपि, 'परामेष्यंश्च'* पुनरपि परावृत्य गमिष्यन्नपि 'इमे एव' द्यावापृथिव्यावेव अनुमन्त्रयते ॥

तृतीयस्या ऋचः पूर्वार्द्धं मनूद्य व्याचष्टे— "सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य्य इव ज्योतिषापस्ततानेति प्रत्यक्षं सूर्य्य मभिवदति"–इति । 'यः' तार्क्ष्यः 'सद्यश्चित्' तस्मिन्नेव क्षणे 'शवसा' बलेन 'पञ्च कृष्टीः' पञ्चविधान् पुरुषजातिविशेषान्, देव-मनुष्यासुर-राक्षस-गन्धर्वान् अतिविस्तारितवान्,— यथा सूर्य्यः 'ज्योतिषा' स्वकीयरश्मिसमूहेन 'अपः' वृष्ट्युदकं 'ततान' विस्तारयति, तद्वत् । एतत्पाठेन तार्क्ष्यदेवं सूर्य्यं 'प्रत्यक्षं' मुख्यं कृत्वा 'अभिवदति' प्रशंसति ॥ उत्तरार्द्धं मनूद्य व्याचष्टे— "सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्या मित्याशिष मेवैतेनाशास्त आत्मने च यजमानेभ्यश्च"–इति । 'अस्य' तार्क्ष्यस्य 'रंहिः' गतिः 'सहस्रसाः' सहस्रभेदयुक्ताः, 'शतसाः' शतभेदयुक्ताः । "वन षण सम्भक्तौ"–इति धातुः ; सहस्रं सनुते सम्भजतीति 'सहस्रसाः' सहस्रभेदयुक्ता । तां गतिं केऽपि 'न स्मा वरन्ते' न वारयन्ति । यथा लोके 'शर्यां' शरकाष्ठनिर्मितां 'युवतिं' शत्रुशरीरमिश्रणयोग्यां न वरते, तद्वत् । नकार उपमानार्थः । यथातिशूरेण धानुष्केण प्रयुक्तो वाणः केनापि न निवार्य्यते, तथा त्वदीयगतिरित्यर्थः ( सं० १०.१७८.३. )† । 'एतेन' अर्द्धर्चपाठेन अयं होता 'आत्मने च' स्वार्थं मपि 'यजमानेभ्यश्च' सत्रानुष्ठानात् बहुयजमानार्थं

* निघण्टौ गतिकर्मसु 'मिष्यति' २.१४.२३ ।

† निरु० १०.२.५. द्रष्टव्यम् ।

मप्याशिष मेव प्रार्थयते रक्षार्थाय ; ताक्ष्यँगतेरनिवार्यत्वाभिधानात् * ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये ( अष्टादशाध्याये ) षष्ठः खण्डः ॥ ६ ( २० ) ॥

---

॥ अथ सप्तमः खण्डः ॥

आहूय दूरोहणं रोहति स्वर्गो वै लोको दूरोहणं वागाहावो ब्रह्म वै वाक् स यदाह्वयते तद् ब्रह्मणाहावेन स्वर्गं लोकं रोहति स पच्छः प्रथमं रोहतीमं तं लोक माप्नोत्यथार्द्धर्चशोऽन्तरिक्षं तदाप्नोत्यथ त्रिपदामुं तं लोक माप्नोत्यथ केवल्यां तदेतस्मिन् प्रति तिष्ठति य एष तपति त्रिपद्या प्रत्यवरोहति यथाशाखां धारयमाणस्तदमुष्मिंल्लोके प्रति तिष्ठत्यर्द्धर्चशोऽन्तरिक्षे पच्छो ऽस्मिंल्लोक आप्त्वैव तत् स्वर्गं लोकं यजमाना अस्मिंल्लोके प्रति तिष्ठन्त्यथ य एककामाः स्युः स्वर्गकामाः पराञ्च मेव तेषां रोहेत्ते जयेयुर्हैव स्वर्गं लोकं नेत्त्वेवास्मिंल्लोके ज्योगिव

---

* अहर्गणेषु द्वितीयादिष्वहस्सु निष्केवल्यसूक्तानां पुरस्तादिदं सूक्तं प्रंसनीयं भवति ; विषुवति तु निष्केवल्यसूक्ताना मन्त एव । आश्व० श्रौ० ७.१.१३, ८.६.२४ सूत्रे द्रष्टव्ये ।

वसेयुर्मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दांसि पशूना मवरुद्ध्यै ॥ ७ ( २१ ) ॥

अथ दूरोहणसूक्तशंसनस्य प्रकारान्तरं विधत्ते— "आहूय दूरोहणं रोहति ; स्वर्गो वै लोको दूरोहणं, वागाहावो, ब्रह्म वै वाक्, स यदाह्वयते तद् ब्रह्मणाहावेन स्वर्गं लोकं रोहति"–इति। "शोंसावोम्"–इत्यध्वर्योराह्वानं कृत्वा तदनन्तरं "त्य मू षु"–इत्यादिकं दूरोहणं सूक्तं 'रोहेत्' आरोहणक्रमेण पठेत्। दूरोहणस्य स्वर्गरूपत्वात्, आहावस्य वाग्रूपत्वात्, वाचश्च वेदात्मिकाया ब्रह्मत्वात्, प्रथम माह्वाने सति ब्रह्मरूपेण आहावेन स्वर्गं मारोहति ॥

अपरं प्रकारविशेषं विधत्ते— "स पच्छः प्रथमं रोहतीमं तं लोक माप्नोत्यथार्धर्चशोऽन्तरिक्षं तदाप्नोत्यथ त्रिपदाभु तं लोक माप्नोत्यथ केवल्या ; तदेतस्मिन् प्रतितिष्ठति य एष तपति"–इति। द्वेधा सूक्तस्य शंसनम्, रोहक्रमेणावरोहक्रमेण चेति। तं चारोहे चतुर्वार मावर्त्तनीयम्। प्रथमावृत्तौ 'पच्छः' पादशः पठेत्, एकैकस्मिन् पादे ऽवसानं कृत्वा शंसेत्। द्वितीयस्या मावृत्तौ 'अर्द्धर्चशः' एकैकस्मिन्नर्द्धे ऽवसानं कृत्वा पठेत्। तृतीयस्या मावृत्तौ 'त्रिपद्या' आवृत्त्या पादत्रये ऽवसानं कृत्वा पठेत्। चतुर्थ्यां मावृत्तौ अवसानरहितया सम्पूर्णया शंसेत्। 'तत्' एताभिश्चतसृभिरावृत्तिभिः लोकत्रयम् प्राप्य, पश्चात् 'एतस्मिन्' प्रकाशमाने सूर्यमण्डले प्रतितिष्ठति ॥

आरोहप्रकारविशेषं विधाय प्रत्यवरोहणं विधत्ते— "त्रिपदया प्रत्यवरोहति,— यथा शाखां धारयमाणस्तदमुष्मिंल्लोके प्रति तिष्ठ

त्यर्द्धर्चशोऽन्तरिक्षे पच्छोऽस्मिंल्लोक आत्मैव तत् स्वर्गं लोकं यजमाना अस्मिंल्लोके प्रतितिष्ठन्ति"–इति। प्रत्यवरोहक्रमे प्रथमावृत्तौ पादत्रये अवसानम्; द्वितीयावृत्तावर्द्धर्चे अवसानम्; तृतीयावृत्तौ पादे अवसानम्। तथा सति यथा लोके वृक्षाग्र मारुह्य पुरुषः प्रत्यवरोहन् हस्तेन शाखां दृढ़ मवलम्ब्य स्थिरो भवति, एव मयं प्रथमतः स्वर्गे प्रतिष्ठाय पश्चादन्तरिक्षे भूलोके च प्रतितिष्ठति। यथा होतुः प्रतिष्ठा, तथा यजमानाना मपि; ते च स्वर्गं प्राप्य पुनरागत्यास्मिंल्लोके प्रतितिष्ठन्ति। तावेतावारोहप्रत्यवरोहौ हंसवतीपक्षे तार्क्ष्यपक्षेऽपि समानौ। एव मुच्चारणस्य दुःशकत्वादस्य शंसनस्य 'दूरोहण'-सञ्ज्ञा * ॥

कामनाभेदेन प्रकारान्तरं विधत्ते— "अथ य एककामाः स्युः, स्वर्गकामाः पराञ्च मेव तेषां रोहेत्; ते जयेयुर्हैव स्वर्गं लोकम्"–इति। एकस्मिन्नेव लोके कामो येषां ते 'एककामाः। स्वर्गं लोक मेव कामयन्ते, न त्वेनं लोकम्; तेषां 'पराञ्च मेव' प्रत्यवरोहरहित मेव 'रोहेत्' शस्त्रं पठेत्। तावता ते स्वर्गं लोकं 'जयेयुर्हैव' प्राप्नुवन्त्येव ॥

अस्मिन् पक्षे कञ्चिद्दोषं दर्शयति — "नेत्त्वेवास्मिंल्लोके ज्योगिव वसेयुः"–इति। ते स्वर्गं प्राप्नुवन्त्येव, किन्त्वत्र दोषोऽस्त्येव;— ते यजमाना अस्मिन्नेव लोके 'ज्योगिव' चिरकाल मेव 'नेद्वसेयुः' सर्वथा न तिष्ठेयुः। परिभवद्योतकन्न नेदित्यनेन आयुःक्षयहेतुरयं पक्षो दूषितः ॥

सूक्तान्तराणि विधत्ते—"मिथुनानि सूक्तानि शस्यन्ते,— त्रैष्टु-

* "तस्य (तार्क्ष्यस्य) एकाम् (ऋचं) शस्त्वा ऽऽहूय (आहावं पठित्वा) दूरोहणं रोहेत्"–इति आश्व० श्रौ० ८.६.१५।

भानि च जागतानि च; मिथुनं वै पशवः, पशवश्छन्दांसि, पशूना मवरुद्ध्यै"-इति। मिथुनशब्द एकत्वनिवारकः, ततो 'बहूनि' इत्युक्तम् भवति। "यस्तिग्मशृङ्गः"-इत्यादीनि 'त्रैष्टुभानि' *, "दिवश्चिदस्य वरिमा"-इत्यादीनि 'जागतानि' †। तदेच्छन्दो-द्वयम् मिथुनसदृशम्; पशवोऽपि मिथुनात्मकाः; छन्दांसि च पशुसाधनत्वात् 'पशवः'; अतस्तेषां शंसनं पशुप्राप्त्यै भवति ॥ ७ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये
( अष्टादशाध्याये ) सप्तमः खण्डः ॥ ७ ( २१ ) ॥

---

॥ अथ अष्टमः खण्डः ॥

यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणोऽर्द्ध एवं पूर्वोऽर्द्धो विषुवतो यथोत्तरोऽर्द्ध एव मुत्तरोऽर्द्धो विषुवतस्तस्मादुत्तर इत्याचक्षते प्र बाहुक् सतः शिर एव विषुवान् विदलसंहित इव वै पुरुष-स्तद्वापि स्यू मेव मध्ये शीर्ष्णो विज्ञायते तदाहुर्विषु-

---

* "यस्तिग्मशृङ्गो ( सं० ७.१९. ), ऽभित्यं मेषम् ( सं० १.५१. ), इन्द्रस्य नु वीर्याणि ( सं० १.३२. ) इति"-इति आश्व० श्रौ० ८.६,१२।

† "दिवश्चिदस्य ( सं० १.५५.), सुत इत् त्वम् (सं० ६.२३.), एष प्र पूर्वीः (सं० १.५६.), तृषा मद ( सं० ६.२४. ), प्र मंहिष्ठाय ( सं० १.५७. ), त्य मू षु ( सं० १०,१७८. ) इति" -इति आश्व० श्रौ० ८.६.१३।

वत्येवैतदहः शंसेद्विषुवान्वा एतदुक्थानामुक्थं विषुवान् विषुवानिति ह विषुवन्तो भवन्ति श्रेष्ठतामश्नुवत इति तत्तन्नादृतं संवत्सर एव शंसेद्रेतो वा एतत्संवत्सरं दधतो यन्ति यानि वै पुरा संवत्सराद्रेतांसि जायन्ते यानि पञ्चमास्यानि यानि षण्मास्यानि स्रीव्यन्ति वै तानि न वैतैर्भुञ्जतेऽथ यान्येव दशमास्यानि जायन्ते यानि सांवत्सरिकाणि तैर्भुञ्जते तस्मात्संवत्सर एवैतदहः शंसेत् संवत्सरो ह्येतदहराप्नोति संवत्सरं ह्येतदहराप्नुवन्त्येष ह वै संवत्सरेण पाप्मानमपहत एष विषुवताङ्गेभ्यो हैव मासैः पाप्मानमपहते शीर्ष्णो विषुवताप संवत्सरेण पाप्मानं हतेऽप विषुवता य एवं वेद वैश्वकर्मणमृषभं सवनीयस्योपालम्भ्यमालभेरन् द्विरूपमुभयत एतं महाव्रतीयेऽहनीन्द्रो वै वृत्रं हत्वा विश्वकर्माभवत्प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माभवत्संवत्सरो विश्वकर्मैन्द्रमेव तदात्मानं प्रजापतिं संवत्सरं विश्वकर्माणमाप्नुवन्तीन्द्र एव तदात्मनि प्रजापतौ संवत्सरे विश्वकर्मण्यन्ततः प्रति तिष्ठन्ति प्रति तिष्ठति य एवं वेद य एवं वेद ॥ ८ (२२) ॥

॥ इत्यैतरेयब्राह्मणे चतुर्थपञ्चिकायां तृतीयोऽध्यायः ॥३॥

अथ विषुवन्नामकं महर्विशेषं मनुष्यसाम्येन प्रशंसति— "यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणोऽर्द्ध एवम् पूर्वोऽर्द्धो विषुवतो यथोत्तरोऽर्द्ध एव मुत्तरोऽर्द्धो विषुवतस्तस्मादुत्तर इत्याचक्षते प्रबाहुक् सतः शिर एव विषुवान् विदलसंहित इव वै पुरुषस्तस्यापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते"–इति। यथा लोके पुरुषो दक्षिणवामभागाभ्यां भागद्वयमध्ये शिरसा च युक्तः ;— तस्य विषुवतः षण्मासात्मकः पूर्वभागः, पुरुषसम्बन्धि-दक्षिणभागस्थानीयः ; तत्रावरोहरूपमासषट्कात्मक उत्तरार्द्धो वामभागस्थानीयः। 'तस्मात्' वामभागसादृश्यादुत्तर इत्याचक्षते, न त्वनुष्ठानाधिक्यविवक्षया। 'प्रबाहुक् सतः' वामदक्षिणभागौ समौ कृत्वा अवस्थितस्य पुरुषस्य शिरो यथोन्नतं सन्मध्येऽवतिष्ठते, एवं मासषट्कयोर्मध्ये 'विषुवान्' उत्कृष्टोऽवतिष्ठते। 'विदलं' भागः, ताभ्यां विदलाभ्यां दक्षिणवामभागाभ्यां 'संहितः' संयोजित एव लोके पुरुषो भवति ; 'तस्यापि' तस्मादेव भागद्वयसन्धानरूपात् कारणात् "शीर्ष्णो मध्ये स्यूमेव विज्ञायते" ; 'स्यूम' स्यूतं,—यथा वस्त्रयोः सन्धिः सूच्या 'स्यूतः' संयोजितो भवति, एवं शिरसि दक्षिणोत्तरकपालयोः सन्धौ स्यूतेव काचिद्रेखा दृश्यते। एतच्च भूमौ पतिते शुष्के मांसरहिते शिरःकपालद्वयसमूहरूपेऽस्थिनि विस्पष्ट मुपलभ्यते। अतः सर्वात्मना पुरुषसादृश्यात् प्रशस्तोऽयं विषुवान् ॥

अत्र कश्चित् पूर्वपक्ष मुथापयति— "तदाहुर्विषुवत्येवैतदहः शंसेद्; विषुवान्वा एतदुक्थाना मुक्थं, विषुवान्विषुवानिति ह विषुवन्तो भवन्ति, श्रेष्ठता मश्नुवत इति"–इति। विषुवन्नामके मुख्येऽहनि यच्छस्त्रं विहितम्, 'तत्' तस्मिन् शस्त्रे पूर्वपक्षिण एव माहुः,—

दक्षिणायनस्योत्तरायणस्य च मध्ये विषुवन्नामकः तुलामेष-सङ्क्रान्तिद्वयरूपो यः कालविशेषः, सोऽयं विषुवच्छब्दाभिधेयः। स च व्यवहारः स्मृतिषु प्रचुरः। अस्मिन्नेव 'विषुवति' काले 'एत-दहः' शंसेत्; एतस्मिन्नहनि विहितं शस्त्र महःशब्देनोपलक्ष्यते। 'एतत्' सङ्क्रान्तिद्वययुक्त महः 'उक्थानाम्' अह्नां मध्ये 'उक्थम्' उक्थ्यशस्त्रोपेतशस्त्रयोग्य मित्यर्थः। अत एव 'विषुवान्' विषु-वन्नामकशस्त्रवानेव सङ्क्रान्तिकालविशेषः। तत्कथ मित्युच्यते— तं सङ्क्रान्तिकालं विषुवानित्येव सर्वे व्यवहरन्ति। अतस्तस्मिन् काले शस्त्रपाठे सति यजमाना 'विषुवन्तः' योग्यशस्त्रयुक्ता भवन्ति, सर्वेष्वनुष्ठातृषु श्रेष्ठतां प्राप्नुवन्तीति पूर्वपक्षिणा माशयः॥

तं पक्षं निराकरोति— "तत्तन्नादृत्यं; संवत्सर एव शंसेद्रेतो वा एतत्संवत्सरं दधतो यन्ति"–इति। कर्म्मान्तरेष्वपि विषुवाख्य-सङ्क्रान्तियुक्ते काले समागते सति शस्त्र मेतच्छंसनीय मिति यत् पूर्वपक्षिणां मतम्, तस्मिन् शस्त्रे 'तत्' मतं नादरणीयम्। किन्तु 'संवत्सरे' सत्रे एव गवामयने तत्पूर्वोक्तं शस्त्रं शंसेत्। एवं सति यजमाना अत्यन्तसंयोगेन संवत्सरकाल मेतद्रेतो धारयन्तो 'यन्ति' अनुतिष्ठन्ति॥

विपक्षे बाधकं दर्शयति—"यानि वै पुरा संवत्सराद्रेतांसि जायन्ते, यानि पञ्चमास्यानि, यानि षण्मास्यानि, स्त्रीव्यन्ति वै तानि न वैतैर्भुञ्जते"–इति। संवत्सरधारणात् पुरैव कतिपयमास-धारणेन यानि रेतांसि जायन्ते, पञ्चमाससम्बन्धीनि वा, षण्मास-सम्बन्धीनि वा, तानि 'स्त्रीव्यन्ति वै' स्रवन्त्येव, गर्भस्रावो भवति; न तु 'तैः' अल्पमासधृतैः रेतोभिः पुत्रादिशरीरं 'भुञ्जते' अनु-भवन्ति॥

गुणकथनपूर्वकं स्वपक्ष मुपसंहरति— "अथ यान्येव दश-मास्यानि जायन्ते, यानि सांवत्सरिकाणि, तैर्भुञ्जति ; तस्मात् संवत्सर एवैतदहः शंसेत्"-इति । 'अथ' पूर्वोक्तवैपरीत्येन 'यान्येव' रेतांसि 'दशमास्यानि' दशसु मासेषु धृतानि च भूत्वा पश्चाज्जायन्ते, यानि च संवत्सरे धृतानि, तैः सर्वैः पुत्रादिशरीर मनुभवन्ति । 'तस्मात्' गुणसद्भावात्संवत्सरसत्रे एव तस्मिन्विषुवत्यह्नि यथोक्तं शस्त्रं शंसेत् ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "संवत्सरो ह्येतदहराप्नोति, संवत्सरं ह्येतदहराप्नुवन्त्येष ह वै संवत्सरेण पाप्मान मप हत एष विषुवताङ्गेभ्यो हैव मासैः पाप्मान मप हते शीर्ष्णो विषुवता"-इति । योऽयं संवत्सरसत्ररूपः कर्मविशेषः, यच्चैतद्विषुवदाख्य महः ; उभयोः परस्पर सम्प्राप्तिरस्ति ; तत्र 'संवत्सरः' कर्त्ता सन् अहराप्नोति, 'अहश्च' कर्त्तृ भूत्वा संवत्सर माप्नोति । व्यत्ययेनात्र बहुवचनम् । तयोः परस्पर मविनाभावे सति 'एषः' यजमानः कृत्स्नसंवत्सरेण पाप्मानम् 'अपहते' विनाशयति ; तथैव 'एषः' यजमानो 'विषुवता' संवत्सरमध्यगतेनाह्ना पाप्मानम् विनाशयति । तद्विविच्यते,—संवत्सरावयवैर्मासैर्हस्तपादाद्यङ्गेभ्यः सकाशात्पाप्मानं नाशयति, 'विषुवता' मुख्येनाह्ना 'शीर्ष्णः' शिरसः सकाशात् पाप्मानं नाशयति । वेदनं प्रशंसति— "अप संवत्सरेण पाप्मानं हते ऽप विषुवता य एवं वेद"-इति ॥

अथ प्रशस्तस्य विषुवतः प्रसङ्गाद् बुद्धिस्थे सत्रे महाव्रताख्ये ऽहनि कञ्चित्पशुं विधत्ते— "वैश्वकर्मण मृषभं सवनीयस्योपालम्भ्य मालभेरन्, द्विरूप मुभयत एतं महाव्रतीये ऽहनि"-इति । 'वैश्वकर्मणं' विश्वकर्मदेवताकम् 'ऋषभं' पुङ्गवम् 'सवनीयस्य'

चोदकप्राप्तस्य पशोः स्थाने उपालम्भनीयं 'द्विरूपं' वर्णद्वयोपेतम् 'उभयत एतं' दक्षिणोत्तरपार्श्वयोर्विलक्षणवर्णेन लाञ्छितं पशुं महाव्रतप्रयोगयुक्ते सत्रस्योपान्त्येऽहन्यालभेरन् ॥

तत्र देवतां प्रशंसति — "इन्द्रो वै वृत्रं हत्वा विश्वकर्माभवत्, प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माभवत्, संवत्सरो विश्वकर्मेन्द्र मेव तदात्मानं प्रजापतिं संवत्सरं विश्वकर्माण माप्नुवन्तीन्द्र एव तदात्मनि प्रजापतौ संवत्सरे विश्वकर्मण्यन्ततः प्रति तिष्ठन्ति ; प्रति तिष्ठति य एवं वेद य एवं वेद"–इति*। इन्द्रो वृत्रवधादूर्ध्वं विघ्नकर्त्तुरभावाद् 'विश्वकर्मा' जगत्पालनरूपकर्मयुक्तोऽभवत् । प्रजापतिश्च 'प्रजाः' सर्वाः 'सृष्ट्वा' उत्पाद्य कृत्स्नजगत्सृष्टिरूपकर्मयुक्तो ऽभवत् । स उभयविधो 'विश्वकर्मा' देवः संवत्सरात्मकः । अतः संवत्सरसत्रे द्विरूपपश्वालम्भनेन 'तदात्मानं' संवत्सरात्मान मिन्द्र मेव, तथा संवत्सररूपम् 'प्रजापतिम्', इत्युभयविधं 'विश्वकर्माणं' यजमानाः प्राप्नुवन्ति । प्राप्य च 'तदात्मनि' संवत्सरात्मनि 'इन्द्रे', संवत्सररूपे 'प्रजापतौ', द्विविधेऽपि 'विश्वकर्मणि' 'अन्ततः' संव-

---

* "चतुर्विंश मेतदहः"—इत्यारभ्य ( ३०४ पृ० ) एतदन्ता गवामयनादित्यानामयनाङ्गिरसामयनानां संवत्सरसत्राणां हौत्रविधय उक्ताः। कल्पेऽप्येवं 'सत्राणाम्'–इत्यधिकृत्य 'एतावत् सात्र' हौत्रकर्मान्यत्र महाव्रतात्'–इत्यन्तैः ( ७.१.१—८.१३.३०. ) सत्रसाधारणविधय उक्ताः। ततस्तत्रैव प्रदर्शितैषा यज्ञगाथेति—"प्रायणीयश्चतुर्विंशः पृष्ठ्यो ऽभिप्लव एव च। अभिजित् स्वरसामानो विषुवान् विश्वजित्तथा। छन्दोमा दशमं चाह उत्तमं तु महाव्रतम्। अहीनैकाहःसत्राणां प्रकृतिः समुदाहृता'–इत्यादिः। इत उत्तरं यानि त्रीणि सूत्राण्यभिहितानि, तानि विशेषतः सर्वत्र स्मर्त्तव्यानि। तत उत्तरं क्रमात् गवामयनादीना मेषां विशेषविधय उपदिष्टाः ( ११.७.१—१२.२.६. )। शत० ब्रा० १२.१–३। कात्या० श्रौ० १२ अ०। "गावो वा एतत् सत्र मासत"–इत्यादि तै० सं० ७.५.१। सामब्राह्मणे चैवं "गावो वा एतत् सत्र मासत"–इत्यारभ्य प्रपाठकद्वयेन ( ४,५ प्र० ) गवामयनसत्रस्यौङ्गात्रं विहितम्, तत उपरिष्टात् (२५प्र०) आदित्यानामयनस्याङ्गिरसामयनस्य च (१,२ख०)॥

त्सरसत्रस्यान्ते प्रतितिष्ठन्त्येव। यः पुनरेवं वेद, सोऽपि प्रतितिष्ठति। अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां तृतीयाध्याये
( अष्टादशाध्याये ) अष्टमः खण्डः ॥ ८ (२२) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो
भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामभाष्ये
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायाः तृतीयोऽध्यायः ॥

---

## ॥ अथ चतुर्थाध्यायः ॥

(तत्र)

### ॥ अथ प्रथमः खण्डः ॥

—०—

॥ ॐ ॥ प्रजापतिरकामयत प्रजायेय भूयान्स्या मिति स तपो ऽतप्यत स तपस्तप्त्वेमं द्वादशाह मपश्यदात्मन एवाङ्गेषु च प्राणेषु च त मात्मन एवाङ्गेभ्यश्च प्राणेभ्यश्च द्वादशधा निरमिमीत त माहरत्तेनायजत ततो वै सो ऽभवदात्मना प्र प्रजया पशुभिरजायत भवत्यात्मना प्र प्रजया पशुभिर्जायते य एवं वेद सो ऽकामयत कथं नु गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वा मृद्धि मृध्नुया मिति तं वै तेजसैव पुरस्तात्पर्यभवच्छन्दोभिर्मध्यतोऽक्षरैरुपरिष्टाद् गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वा मृद्धिमार्ध्नोत्सर्वा मृद्धि मृध्नोति य एवं वेद यो वै गायत्रीं पक्षिणीं चक्षुष्मतीं ज्योतिष्मतीं भास्वतीं वेद गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोक मेत्येषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती य* द्वादशाहस्तस्य यावभितो

* "यद" क।

ऽतिरात्रौ तौ पक्षौ यावन्तराग्निष्टोमौ ते चक्षुषी येऽष्टौ मध्य उक्थ्याः स आत्मा गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोक मेति य एवं वेद ॥ १ (२३) ॥

अभिप्लवः स्यात् षडहोऽथ मासस्त्र्यहोऽथ पूर्वस्वरसामनामा ।
गवाञ्च शस्तस्य ततः प्रशंसा मध्ये दिवाकीर्त्य महश्च तस्य ॥

अथ द्वादशाहो वक्तव्यः ; तदर्थ माख्यायिका माह—“प्रजापतिरकामयत प्रजायेय भूयान्स्या मिति ; स तपोऽतप्यत ; स तपस्तप्त्वेमं द्वादशाह मपश्यदात्मन एवाङ्गेषु च प्राणेषु च ; त मात्मन एवाङ्गेभ्यश्च प्राणेभ्यश्च द्वादशधा निरमिमीत ; त माहरत् ; तेनायजत ; ततो वै सोऽभवदात्मना प्र प्रजया पशुभिरजायत”–इति प्रजापतिः प्रजोत्पादनेनातिप्रभूतः स्या मिति कामयित्वा, तत्साध निर्णेतुं चित्तैकाग्र्यलक्षणं ‘तपः’ कृत्वा, स्वाभीष्टसाधनत्वे स्वकीयेषु हस्तपादाद्यङ्गेषु प्राणादिवायुषु चावस्थितं द्वादशा दृष्ट्वा तं स्वाङ्गेभ्यः प्राणेभ्यश्च निःसार्य्य द्वादशधा कृत्वा निर्मि वान्। ततो निर्मित माहृत्य तेनेष्ट्वा स प्रजापतिः ‘अभवत्’ भू प्राप्तवान्। ‘आत्मना’ स्वेनैव रूपेण सर्वाधिको भूत्वा प्रजाप रूपेण बहुलं प्राजायत॥ वेदनं प्रशंसति— “भवत्यात्मना प्रजया पशुभिर्जायते य एवं वेद”–इति ॥

अनेनार्थवादेन द्वादशाहयागविधिरुन्नेयः । तथाच शाखान्त विधिः श्रूयते— “यः कामयेत तत्प्रजायेयेति, स द्वादशरात्रे यजेत, बहु जायते”–इति ॥

"सो ऽकामयत,—कथं नु गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वा मृद्धि मृध्नुया मिति ; तं वै तेजसैव पुरस्तात्पर्य्यभवच्छन्दोभिर्मध्यतोऽक्षरैरुपरिष्टाद्गायत्र्या सर्वतो, द्वादशाहं परिभूय सर्वा मृद्धि मार्ध्नोत्"–इति । 'सः' प्रजापतिः पुनरेव मकामयत,— 'कथं नु' केन खलु प्रकारेण, गायत्र्या सर्वतो द्वादशाहं व्याप्य, 'सर्वां' भोग्यवस्तुसमृद्धिं प्राप्नुयाम् ? 'इति' विचार्य्य, गायत्रीं त्रेधा अभजत,— ध्वनिरूपं तेज एको भागः, अक्षरसङ्ख्याभिव्यञ्ज्यमानं छन्दो द्वितीयो भागः, अक्षराणि तृतीयो भागः ; तैस्त्रिभिर्भागैरादिमध्यावसानेषु सर्वतो द्वादशाहं गायत्र्या व्याप्य समृद्धिं प्राप्तवान् । छन्दोभिरिति बहुवचनं पूजार्थम् ॥ वेदनं प्रशंसति — "सर्वा मृद्धि मृध्नोति य एवं वेद"–इति ॥

अथ द्वादशाहस्याहःक्लृप्ति मुपकल्पनामुखेन दर्शयति— "यो गायत्रीं पक्षिणीं चक्षुष्मतीं, ज्योतिष्मतीं भास्वतीं वेद, गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोक मेत्येषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती, य द्वादशाहस्य यावभितो ऽतिरात्रौ, तौ पक्षौ ; यावन्तराग्निष्टोमौ, ते चक्षुषी ; ये ऽष्टौ मध्य उक्थ्याः, स आत्मा"–इति । आदिमध्यावसानेषु द्वादशाहस्य गायत्र्या व्याप्तत्वात् अभेद मभिप्रेत्य द्वादशाह मेव गायत्रीशब्देन व्यवहरति । सा च गायत्री पक्षद्वयोपेता, चक्षुर्द्वयोपेता, ज्योतिःशब्दोपलक्षितमध्यशरीरोपेता । तत एव सा 'भास्वती' प्रकाशवती ; अहीनसत्राणां सर्वेषां प्रकृतित्वेन भासकत्वात् भास्वत्त्वम् । ईदृशीं गायत्रीं यो वेद, स तादृशाय यथोक्तगुणवत्त्वविशिष्टया गायत्र्या स्वर्गं लोकं प्राप्नोति । एतदभिप्रायेण रूपकं परिकल्प्य "एषा वै"–इत्यादिना स्वाभिप्रायः

प्रकटीक्रियते । द्वादशाह एव यथोक्तगुणविशिष्टा गायत्री । तस्ये-त्यादिना द्वादशाहे ते गुणाः प्रदर्श्यन्ते । 'तस्य' द्वादशाहस्य आद्य-न्तावहर्विशेषावतिरात्रसंस्थौ, तावेव पक्षस्थानीयौ ; तयोरन्तर्भा-विनौ द्वितीयैकादशाहर्विशेषावग्निष्टोमसंस्थौ ; तौ चक्षुःस्वरूपौ ; ये च तृतीय मारभ्य दशमपर्यन्ता अष्टावहर्विशेषा मध्ये वर्त्तन्ते, ते सर्वेऽप्युक्थ्यसंस्था, सोऽष्टाहःसमूह 'आत्मा' मध्यशरीरम् ॥ वेदनं प्रशंसति— "गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोक मेति य एवं वेद"-इति ॥

यथोक्ताहःक्लृप्तिराश्वलायनाचार्य्यैर्दर्शिता— "अथ भरतद्वाद-शाह इम मेवैकाहं पृथक् संस्थाभिरुपेयुरतिरात्र मग्रेऽग्निष्टोम मथाष्टा उक्थ्यानग्निष्टोम मथातिरात्रम्"-इति ( श्रौ० १०. ५.८-१०. ) ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये
( एकोनविंशाध्याये ) प्रथमः खण्डः ॥ १ ( १३ ) ॥

---

॥ अथ द्वितीयः खण्डः ॥

**त्र्यश्च वा एते त्र्यहा आ दशम मह्रा द्वावतिरात्रौ य द्वादशाहो द्वादशाहानि दीक्षितो भवति यज्ञिय**

---

१ "यद् द्वादशाहो"-इति क । एव मिहोत्तरत्रापि ।

एव तैर्भवति द्वादश रात्रीरुपसद उपैति शरीर मेव ताभिर्धूनुते द्वादशाहं प्रसुतो भूत्वा शरीरं धूत्वा शुद्धः पूतो देवता अप्येति य एवं वेद षट्त्रिंशदहो वा एष य द्वादशाहः षट्त्रिंशदक्षरा वै बृहती बृहत्या वा एतदयनं य द्वादशाहो बृहत्या वै देवा इमांल्लोकानाप्नुवत ते वै दशभिरेवाक्षरैरिमं लोक माप्नुवत दशभिरन्तरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्या मेवास्मिंल्लोके प्रत्यतिष्ठन् प्रति तिष्ठति य एवं वेद तदाहुर्यदन्यानि छन्दांसि वर्षीयांसि भूयोऽक्षरतराण्यथ कस्मादेतां बृहतीत्या-चक्षत इत्येतया हि देवा इमांल्लोकानाश्नुवत ते वै दशभिरेवाक्षरैरिमं लोक माश्नुवत दशभिरन्तरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्या मेवास्मिंल्लोके प्रत्यतिष्ठंस्तस्मादेतां बृहतीत्याचक्षतेऽश्नुते यद्यत् कामयते य एवं वेद ॥ २ ( २४ ) ॥

भरतद्वादशाहं विधाय व्यूढद्वादशाहं विधत्ते— "त्र्यश्च वा एते त्र्यहा आ दशम महरा द्वावतिरात्रौ य द्वादशाहः"–इति। योऽयं व्यूढद्वादशाहोऽस्ति, सोऽय मेतादृशः,— तत्राद्यन्तौ यौ 'द्वावतिरात्रौ' प्रथमद्वादशौ, यच्च दशम महः, तत्परित्यज्यावशिष्टे-ष्वहस्सु नवसङ्ख्याकेषु 'त्रयस्त्र्यहाः' कर्त्तव्याः। त्रिरात्रः कश्चित् कर्मविशेषः, सोऽयं त्रिवार मावर्त्तनीयः; 'आ दशमम्'–इत्यत्र

योऽय माकारः, स वर्जनार्थः ; निपाताना मनेकार्थत्वात् । यद्वा मर्य्यादाया मय माङ् भविष्यति,— आद्यन्तावतिरात्रौ दशम-महश्च मर्य्यादां कृत्वा अवशिष्टो नवरात्रस्त्रिरावृत्तः त्र्यहात्मक इत्यर्थः ॥

तत्र चोदकेन दीक्षादिसङ्ख्याविकल्पः प्राप्तः ; "एका दीक्षा, तिस्रो दीक्षाः"-इत्यादिविकल्पस्य प्रकृतौ श्रुतत्वात्* । तं विकल्प मपवदितुं नियमविशेषं विधत्ते—"द्वादशाहानि दीक्षितो भवति, यज्ञिय एव तैर्भवति"-इति । द्वादशसु दिनेषु दीक्षाख्यनियमे अनुष्ठिते सति तैर्द्वादशभिः दीक्षाविशेषैरयं पुरुषः यज्ञयोग्य एव भवति † ॥

उपसत्सु विशेषं विधत्ते—"द्वादश रात्रीरुपसद उपैति, शरीर मेव ताभिर्धूनुते"-इति । प्रकृतौ तिस्र एवोपसदः ‡ ; तासैकैकां चतुर्षु दिनेषु आवर्त्त्य, द्वादशसु दिनेषु उपसदोऽनुष्ठिते सति 'ताभिः' द्वादशभिरुपसद्भिः शरीर मेव 'धूनुते' कम्पयति, शरीरगतमांसादिधातुशोषणेन पापक्षयो भवति । तथाच सूत्र-कारेणोपसंहृतम्— "यदा वै दीक्षितः कृशो भवति, अथ मेध्यो भवति"-इति । उपसद्दिनेष्वस्य क्षीरमात्राहारत्वात् भवत्येव कार्श्यम्, तदिदं सर्वं धूनुत इत्यनेन विवक्षितम् § ॥

अथ द्वादशसु दिनेषु सोमाभिषवं विधत्ते—"द्वादशाहं प्रसुतः" -इति । भवेदिति शेषः ‖ । दीक्षोपसदावङ्गकर्मणी; अभिष-

---

* "एका तिस्रो वा दीक्षा"-इति आश्व० श्रौ० ४.२,१७ ।
† "दीक्षणादिरात्रिसंख्यानेन दीक्षाः"-इति च आश्व० श्रौ० ४.२.१३ ।
‡ "तिस्र उपसदः"-इति आश्व० श्रौ० ४.२.१७ ।
§ "द्वादशाहतापश्चितेषु यथासत्योपसदः"-इति आश्व० श्रौ० ४.२.१५ ।
‖ "सुत्य महरुत्तमम्"-इति आश्व० श्रौ० ४.२.१७ ।

वस्तु प्रधानकर्म। वेदनं प्रशंसति— "भूत्वा, शरीरं धूत्वा, शुद्धः; पूतो देवता अप्येति य एवं वेद"–इति। 'द्वादशाहं प्रसुतः'–इति पदद्वय मनुवर्त्तनीयम्। वेदिता द्वादशसु दिनेषु सोमाभिषवयुक्तो भूत्वा पूर्वोक्ताभिरुपसद्भिः 'शरीरं धूत्वा' शरीरगतं पापम् परित्यज्य, अतएव शुद्धः इह लोके भूत्वा, परलोकेऽपि पूतः सर्वदेवताः प्राप्नोति। अथवा शुद्ध इत्यन्तो विधिवाक्यशेषः, पूत इत्यादिका वेदनप्रशंसा द्रष्टव्या॥

यथोक्तदीक्षोपसत्सुत्यादिनसङ्ख्याः प्रशंसति— "षट्त्रिंशदह्नो वा एष य द्वादशाहः; षट्त्रिंशदक्षरा वै बृहती; बृहत्या वा एतदयनं य द्वादशाहो; बृहत्या वै देवा इमांल्लोकानाश्नुवत,—ते वै दशभिरेवाक्षरैरिमं लोक माप्नुवत, दशभिरन्तरिक्षं, दशभिर्दिवं ,चतुर्भिश्चतस्रो दिशो, द्वाभ्या मेवास्मिंल्लोके प्रत्यतिष्ठन्"–इति। यो द्वादशाहोऽस्ति, एष पूर्वोक्तरीत्या षट्त्रिंशद्दिनात्मकः; बृहतीच्छन्दश्च षट्त्रिंशदक्षरम्। तस्माद्यो द्वादशाहोऽस्ति, एतद् बृहत्याः 'अयनम्' अयनस्थान मित्यर्थः। देवाश्च बृहत्या सर्वांल्लोकान् 'आश्नुवत्' प्राप्नुवन् ,—दशभिर्दशभिरक्षरैः प्रत्येक मेवं लोकत्रयप्राप्तिः, चतुर्भिरक्षरैर्दिक्चतुष्टयप्राप्तिः, द्वाभ्या मक्षराभ्या मस्मिंल्लोके प्रतिष्ठां प्राप्ताः। तथाविधबृहतीसाम्याद्दिनगता षट्त्रिंशत्सङ्ख्या प्रशस्ता॥ वेदनं प्रशंसति—"प्रति तिष्ठति य एवं वेद"–इति॥

अत्र किञ्चिच्चोद्य मुद्भावयति— "तदाहुर्यदन्यानि छन्दांसि वर्षीयांसि भूयोक्षरतराण्यथ कस्मादेतां बृहतीत्याचक्षत इति"–इति। यस्मात् कारणाद् बृहत्याः 'अन्यान्युत्तराणि' पङ्क्तित्रिष्टुब्जगतीच्छन्दांस्युत्तरोत्तरं चतुरक्षराधिकानि, अतो 'वर्षीयांसि',

तस्यैव व्याख्यानं 'भूयोऽक्षरतराणि'-इति। 'अथ' एवं सति पङ्क्त्यादीनि छन्दांस्युपेक्ष्य कस्मात् कारणात् 'एतां' षट्त्रिंशदक्षरमात्रयुतां वैदिकीं बृहतीत्याचक्षते ? इति चोद्यम् ॥

पूर्वोक्त मेवार्थवाद मुपजीव्य परिहार माह—"एतया हि देवा इमांल्लोकानाऽऽनुवत,—ते वै दशभिरेवाक्षरैरिमं लोक माऽऽनुवत, दशभिरन्तरिक्षं, दशभिर्दिवं, चतुर्भिश्चतस्रो दिशो, द्वाभ्या मेवास्मिंल्लोके प्रत्यतिष्ठंस्तस्मादेतां बृहतीत्याचक्षते"-इति। अक्षरसङ्ख्यान्यूनत्वेऽपि लोकत्रयप्राप्तिहेतुत्वाप्रौढत्व मभिप्रेत्य बृहतीत्यभिधानम् ॥ उक्तार्थवेदनं प्रशंसति—"अश्नुते यद्यत्कामयते य एवं वेद"-इति ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये,
(एकोनविंशाध्याये) द्वितीयः खण्डः ॥ २ (२४) ॥

---

॥ अथ तृतीयः खण्डः ॥

**प्रजापतियज्ञो वा एष य द्वादशाहः * प्रजापतिर्वा एतेनाग्रे ऽयजत द्वादशाहेन सो ऽब्रवीदृतूंश्च मासांश्च याजयत मा द्वादशाहेनेति तं दीक्षयित्वा ऽनपक्रमं गमयित्वाब्रुवन् देहि नु नो ऽथ त्वा याज-**

* "यद्द्वादशाहः" क। इह खण्डे एव मेवोत्तरत्रापि सर्वत्र।

यिष्याम इति । तेभ्य इष मूर्जं प्रायच्छत्त्वैषोर्गृतुषु च
मासेषु च निहिता । इदतं वै ते त मयाजयंस्तस्माद्
ददद्याज्यः । प्रतिगृह्णन्तो वै ते त मयाजयंस्तस्मात्प्रति-
गृह्णता याज्य मुभये राध्नुवन्ति । य एवं विद्वांसो
यजन्ते च याजयन्ति च । ते वा इम ऋतवश्च
मासाश्च । गुरव इवामन्यन्त । द्वादशाहे प्रतिगृह्य । ते
ऽब्रुवन् प्रजापतिं । याजय नो द्वादशाहेनेति । स तथेत्य-
ब्रवीत्ते । वै दीक्षध्व मिति । ते पूर्वपक्षाः पूर्वे ऽदीक्षन्त ।
ते पाप्मान मपाहत । तस्मात्ते दिवेव दिवेव ह्यपहत-
पाप्मानो । ऽपरपक्षा अपरे ऽदीक्षन्त । ते न तरां पाप्मान
मपाहत । तस्मात्ते तम इव तम इव ह्यनपहतपाप्मान ।
स्तस्मादेवं विद्वान् दीक्षमाणेषु । पूर्वः पूर्व एव दिदीक्षि-
षेताप पाप्मानं हते य एवं । वेद । स वा अयं प्रजा-
पतिः संवत्सर । ऋतुषु च मासेषु च प्रत्यतिष्ठत् ।
ते वा इम ऋतवश्च मासाश्च । प्रजापतावेव सांवत्सरे
प्रत्यतिष्ठंस्त । एते ऽन्योऽन्यस्मिन् प्रतिष्ठिता । एवं ह
वाव स ऋत्विजि प्रति तिष्ठति । यो द्वादशाहेन
यजते । तस्मादाहुर्न पापः पुरुषो याज्यो द्वादशाहेन ।
नेदयं मयि प्रति तिष्ठादिति । ज्येष्ठयज्ञो वा एष य
द्वादशाहः स वै देवानां ज्येष्ठो । य एतेनाग्रे ऽयजत ।

श्रेष्ठयज्ञो वा एष य द्वादशाहः स वै देवानां श्रेष्ठो य एतेनाग्रे ऽयजत ज्येष्ठः श्रेष्ठो यजेत कल्याणीह समा भवति न पापः पुरुषो याज्यो द्वादशाहेन नेदयं मयि प्रति तिष्ठादितीन्द्राय वै देवा ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त सोऽब्रवीद् बृहस्पतिं याजय मा द्वादशाहेनेति त मयाजयत् ततो वै तस्मै देवा ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त तिष्ठन्ते ऽस्मै स्वा ज्यैष्ठ्याय श्रैष्ठ्याय स मस्मिन्त्स्वा श्रेष्ठतायां जानते य एवं वेदोर्द्धो वै प्रथमस्त्र्यहस्तिर्यङ्मध्यमो ऽर्वाङुत्तमः स यदूर्द्धः प्रथमस्त्र्यहस्तस्मादय मग्निरूर्द्ध्व उद्दीप्यत ऊर्द्ध्वा ह्येतस्य दिग् यत्तिर्यङ् मध्यमस्तस्मादयं वायुस्तिर्यङ् पवते तिरश्चीरापो वहन्ति तिरश्ची ह्येतस्य दिग्यदर्वाङुत्तमस्तस्मादसावर्वाङ् तपत्यर्वाङ् वर्षत्यर्वाञ्चि नक्षत्राण्यर्वाची ह्येतस्य दिक् सम्यञ्चो वा इमे लोकाः सम्यञ्च एते त्र्यहाः सम्यञ्चो ऽस्मा इमे लोकाः श्रियै दीद्यति य एवं वेद ॥ ३ (२५) ॥

अस्मिन् कर्मणि यजनयाजनयोरधिकारिविशेषौ दर्शयति—"प्रजापतियज्ञो वा एष य द्वादशाहः ; प्रजापतिर्वा एतेनाग्रे ऽयजत द्वादशाहेन ; सोऽब्रवीदृतूंश्च मासांश्च,—याजयत मां द्वादशाहेनेति ; तं दीक्षयित्वानपक्रमं गमयित्वाब्रुवन्,—देहि नु नोऽथ

त्वा याजयिष्याम इति ; तेभ्य इष मूर्जं प्रायच्छत् ; सैषोर्गृतुषु च मासेषु च निहिता ; ददतं वै ते त मयाजयंस्तस्माद्दद्याज्यः ; प्रतिगृह्णन्तो वै ते त मयाजयंस्तस्मात् प्रतिगृह्णता याज्यम्"-इति। यो द्वादशाहः, स प्रजापतेर्यज्ञः । कथ मिति, तदुच्यते—प्रजापतिरेव 'अग्रे' सर्वेभ्यः पूर्व मेतेन द्वादशाहेनायजत, तस्मादयं प्रजापतियज्ञ इति। तद्यजनप्रकार उच्यते—'सः' प्रजापतिः वसन्ताद्यृतुदेवांश्चैत्रादिमासदेवांश्चाब्रवीत्। हे देवाः! यूय मृत्विजो भूत्वा मां द्वादशाहक्रतुना याजयतेति। ते च मासर्तुदेवा ऋत्विजो भूत्वा 'तं' प्रजापतिं दीक्षयित्वा, तत्राध्वानम् 'अनपक्रमं' निर्गमनरहितं गमयित्वाब्रुवन्। न हि यज्ञं सङ्कल्प्य दीक्षां कृत्वा तदनुष्ठान मन्तरेण देवयजनदेशान्निर्गन्तुं शक्यते। हे प्रजापते! 'नु' क्षिप्र मेव 'नः' अस्माकं 'देहि' अपेक्षितं प्रयच्छ, 'अथ' अनन्तरं त्वां याजयिष्याम इति। ऋतुभिर्मासैश्चोक्तः प्रजापतिः 'तेभ्यः' ऋतुभ्यो मासेभ्यश्च 'इषम्' अन्नम् 'ऊर्जं' क्षीरादिरसं प्रायच्छत्। सैषा 'ऊर्ग्' रसरूपा ऋतुषु च मासेषु चेदानी मपि 'निहिता' स्वस्वकालोचितप्रकारेण ऋतुषु मासेषु च प्रवर्त्तमानेषु गोक्षीरादेश्च बाहुल्यं भवति। ततोऽन्नपाने 'ददतं तम्' प्रजापतिं 'ते' ऋतवश्च मासाश्च अयाजयन्। तस्माद् 'ददद्' पुरुषो याज्यो यस्तु योग्यः; न हि दानहीनस्याधिकारोऽस्ति। तथा 'ते' मासाश्चर्त्तवश्च 'प्रतिगृह्णन्तो वै' प्रजापतिदत्ते अन्नपाने स्वीकुर्वन्तः सन्तः प्रजापति मयाजयन्। तस्मादिदानी मपि ऋत्विजा दक्षिणां प्रतिगृह्णता 'याज्यम्' यजनं कर्त्तव्यम्॥ यजमानाना मृत्विजां च वेदनं प्रशंसति—"उभये राध्नुवन्ति य एवं विद्वांसो यजन्ते च याजयन्ति च"-इति॥

द्वादशाहे दीक्षां प्राप्नुवत्सु यजमानेषु दीक्षाप्राप्तिं प्रशंसति—"ते वा इम ऋतवश्च मासाश्च गुरव इवामन्यन्त द्वादशाहे प्रतिगृह्य ; तेऽब्रुवन् प्रजापतिं याजय नो द्वादशाहेनेति ; स तथेत्यब्रवीत् ; ते वै दीक्षध्व मिति ; ते पूर्वपक्षाः पूर्वे ऽदीक्षन्त ; ते पाप्मान मपाहत, तस्मात् ते दिवेव,— दिवेव ह्यपहतपाप्मानो ; ऽपरपक्षा अपरे ऽदीक्षन्त ; ते न तरां पाप्मान मपाहत । तस्मात्ते तम इव, —तम इव ह्यनपहतपाप्मानस्तस्मादेवं विद्वान् दीक्षमाणेषु पूर्वः पूर्व एव दिदीक्षिषेत"–इति । ये पूर्वं ऋत्विक्त्वेन व्यवस्थिताः 'ऋतवश्च मासाश्च ते वा इमे' अपि द्वादशाहे दक्षिणां प्रतिगृह्य 'गुरवः इव' पापभारगौरवेणाक्रान्ता एव वय मित्यमन्यन्त । ततस्ते पापपरिहाराय 'द्वादशाहेन' क्रतुना 'नः' अस्मान् याजयेति प्रजापति मब्रुवन् । प्रजापतिरङ्गीकृत्य ते यूयं दीक्षां कुरुध्व मित्यब्रवीत् । तेषु मासेषु 'पूर्वपक्षाः' शुक्लपक्षाभिमानिनो देवा ये सन्ति, ते 'पूर्वे' प्रथमभाविनः सन्तो दीक्षा मकुर्वत । तादृशाः 'ते' पूर्वपक्षाः स्वकीयं पाप्मानम् 'अपहत' नाशितवन्तः । 'तस्मात्' पापराहित्यात् 'ते' शुक्लपक्षाः 'दिवा इव' दिवसा इव प्रकाशयुक्ताः । लोकेऽपि 'अपहतपाप्मानः' पुरुषाः 'दिवेव हि' दिवसा इव, पुण्यरूपेण तेजसा युक्ता भवन्ति । अथ 'अपरपक्षाः' कृष्णपक्षाभिमानिनो देवा ये सन्ति, ते तु 'अपरे' पश्चात् प्रवर्त्तमाना दीक्षां कृतवन्तः । ते मालिन्यदोषेण पाप्मानं 'न तरा मपाहत' अतिशयेन विनाशं न कृतवन्तः । 'तस्मात्' कृत्स्नपापविनाशाभावात् 'ते' कृष्णपक्षाः 'तम इव' कृष्णवर्णा दृश्यन्ते; तदीयरात्रिषु चन्द्रप्रकाशस्याभावात् । लोकेऽपि 'अनपहतपाप्मानः' पापविनाशरहिताः पुरुषाः 'तम इव हि' पापरूपान्धकारलिप्तत्वेन निन्द्या

भवन्ति। 'तस्मात्' कारणादेव पूर्वापरकालवैषम्यं 'विद्वान्' पुरुषो 'दीक्षमाणेषु' यजमानेषु एकैकस्मात् 'पूर्वः पूर्व एव' पूर्वपक्षे 'दिदीक्षिषेत' दीक्षितु मिच्छेत् ॥ वेदनं प्रशंसति— "अप पाप्मानं हते य एवं वेद"-इति ॥

यजमानपापविनाशहेतुत्वादृत्विजं प्रशंसति— 'स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत्; ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंस्त एतेऽन्योऽन्यस्मिन् प्रतिष्ठिता; एवं ह वाव स ऋत्विजि प्रति तिष्ठति यो द्वादशाहेन यजते; तस्मादाहुर्न पापः पुरुषो याज्यो द्वादशाहेन,—नेदयं मयि प्रति तिष्ठादिति"-इति। यः प्रजापतिः द्वादशाहेनायष्ट, 'स प्रजापतिः' संवत्सरकालात्मको भूत्वा ऋतुषु च मासेषु च 'प्रत्यतिष्ठत्' प्रतिष्ठितो ऽभवत्; तदार्त्विज्यबलात् प्रजापतेरुत्कर्षत्वात्। 'ते वै इमे' ऋतवश्च मासाश्च प्रजापतिरूपे संवत्सरे प्रतिष्ठिता अभवन्; प्रजापतिप्रसादेन तत्पापविनाशात्। 'त एते' प्रजापतिः ऋतवो मासाश्च अन्योन्यपापविनाशात् अन्योन्यस्मिन् प्रतिष्ठिताः। एव मेवेदानी मपि यो द्वादशाहेन यजते, सोऽय मृत्विजि प्रतितिष्ठति; ऋत्विक्प्रसादेन यजमानस्य पापविनाशात्। यस्मादेवं 'तस्मात्' अभिज्ञा एव माहुः,— "पापपुरुषो द्वादशाहेन ऋत्विग्भिर्न याज्यः" तस्य कर्मणि आर्त्विज्यं न कार्य्य मिति। 'अयं' पापो 'मयि' ऋत्विजि 'न प्रतितिष्ठात्' सर्वथा मा मां प्रविशत्वेव मभिजानामीत्यभिप्रायः ॥

द्वादशाहं प्रकारान्तरेण प्रशंसति—"ज्येष्ठयज्ञो वा एष य द्वादशाहः,— स वै देवानां ज्येष्ठो य एतेनाग्रे ऽयजत; श्रेष्ठयज्ञो वा एष य द्वादशाहः,— स वै देवानां श्रेष्ठो य एतेनाग्रे ऽयजत"-

इति। यो द्वादशाहोऽस्ति, असौ ज्येष्ठस्य यज्ञः। कथ मिति, तदुच्यते— यः पुमान् 'एतेन' द्वादशाहेन 'अग्रे' प्रथमम् अयजत, स एव देवतानां मध्ये 'ज्येष्ठः' वयसा प्रवृद्धो भवति। किञ्चायं द्वादशाहः श्रेष्ठस्य यज्ञः; य एतेन प्रथम मयजत, स देवेषु मध्ये गुणतः श्रेष्ठो भवति॥

एतां द्वादशाहप्रशंसा मुपजीव्य अधिकारिविशेषं दर्शयति— "ज्येष्ठः श्रेष्ठो यजेत,— कल्याणीह समा भवति; न पापः पुरुषो याज्यो द्वादशाहेन,— नेदयं मयि प्रति तिष्ठादिति"-इति। यः पुमान् भ्रातॄणां मध्ये वयसा ज्येष्ठो गुणैः श्रेष्ठश्च, तादृशोऽनेन यजेत। यस्मिन् देशे तथाविधकर्तृको यागः, 'इह' अस्मिन् देशे 'समा कल्याणी भवति' संवत्सरः सर्वोपद्रवरहितः सुखकरो भवति। यस्मात् अपापस्य ज्येष्ठस्य चाधिकारः, तस्मात्पापः कनिष्ठो गुणहीनश्च पुरुषो न तेन याजनीयः। 'मयि' ऋत्विजि 'अयं' पापो नैव प्रतितिष्ठत्विति तस्यर्त्विजोऽभिप्रायः॥

प्रकारान्तरेण द्वादशाहं ज्यैष्ठ्यश्रैष्ठ्यहेतुतया प्रशंसति— "इन्द्राय वै देवा ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त; सोऽब्रवीद् बृहस्पतिं याजय मा द्वादशाहेनेति, त मयाजयत्ततो वै तस्मै देवा ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त"-इति। इन्द्रस्य वयसा ज्येष्ठत्वं गुणैः श्रेष्ठत्वं च देवा नाङ्गीकृतवन्तः; ततः सोऽङ्गीकारो द्वादशाहेन लब्धः॥

वेदनं प्रशंसति—"तिष्ठन्तेऽस्मै स्वा ज्यैष्ठ्याय श्रैष्ठ्याय, स मस्मिन्त्स्वा श्रेष्ठतायां जानते य एवं वेद"-इति। 'अस्मै' अस्य वेदितुः 'स्वाः' ज्ञातयः 'ज्यैष्ठ्याय श्रैष्ठ्याय तिष्ठन्ते' ज्यैष्ठ्यं श्रैष्ठ्यं चाङ्गीकुर्वन्ति। किञ्च 'अस्मिन्' वेदितरि येयं श्रेष्ठता, तस्यां ज्ञातयः 'सञ्जानते' ऐकमत्यं प्राप्नुवन्ति॥

व्यूढे द्वादशाहे प्रथमदशद्वादशदिनव्यतिरिक्तो यो नवरात्र-स्तत्र ये त्रयस्त्र्यहाः पूर्वं मुक्ताः (१७०पृ०), तान् प्रशंसति—"ऊर्ध्वो वै प्रथमस्त्र्यहस्तिर्यङ् मध्यमो ऽर्वाङुत्तमः ; स यदूर्ध्वः प्रथमस्त्र्यह-स्तस्मादय मग्निरूर्ध्व उद्दीप्यत,—ऊर्ध्वा ह्येतस्य दिग् ; यत्तिर्यङ् मध्यमस्तस्मादयं वायुस्तिर्यङ् पवते,— तिरश्चिण्यो वहन्ति ; तिरश्ची ह्येतस्य दिग् ; यदर्वाङुत्तमस्तस्मादसावर्वाङ् तपत्यर्वाङ् वर्षत्यर्वाञ्चि नक्षत्राण्यर्वाची ह्येतस्य दिक् ; सम्यञ्चो वा इमे लोकाः, सम्यञ्च एते त्र्यहाः"-इति। योऽयं नवरात्रे प्रथमस्त्र्यहः, सोऽयम् 'ऊर्ध्वो वै' आरोहप्रकार एव। तद्यथा— गायत्रं प्रात-स्सवनं, त्रैष्टुभं माध्यन्दिनसवनं, जागतं तृतीयसवन मित्ययं स्वभाव-सिद्धः क्रमः ; तस्य व्यत्यासभावादूर्ध्व इत्युच्यते। यस्तु मध्यमस्त्र्यहः, सोऽयं 'तिर्य्यङ्' वर्त्तते। तद्यथा— जागतं प्रातस्सवनं, गायत्रं माध्यन्दिनं, त्रैष्टुभं तृतीय मित्यत्र नात्यन्त मनुक्रमो नाप्यत्यन्तं व्युत्क्रमः ; तस्मादयं तिर्य्यङ्। य उत्तमस्त्र्यहः, 'सः' 'अर्वाङ्' अधो-मुखः। तद्यथा – त्रैष्टुभं प्रातस्सवनं, जागतं माध्यन्दिनं, गायत्रं तृतीयसवन मित्येतदर्वाक्त्वम्। प्रथमो जागतान्तो द्वितीय-स्त्रैष्टुभान्तस्तृतीयो गायत्रान्त इत्येवम् ऊर्द्ध्वतिर्यक्त्वार्वाक्त्वानि त्रिष्वपि त्र्यहेषु द्रष्टव्यानि। यस्मात् 'सः' प्रथमस्त्र्यह ऊर्द्ध्वस्तस्मात्तदात्म-कोऽय मग्निरूर्द्ध्वाभिमुखो दीप्यते। 'एतस्य' चाग्नेः ऊर्ध्वा दिक् प्रिया। मध्यमस्य त्र्यहस्य तिर्यक्त्वात् तद्रूपो वायुस्तिर्यङ् वर्त्तते,— वायुना हि प्रेरिता आपः 'तिरश्चिण्यः' तिर्यग्भूताः प्रवहन्ति। 'एतस्य' वायोस्तिर्यक्त्वात् तिरश्ची दिक् प्रिया। उत्त-मस्य त्र्यहस्यार्वाक्त्वात्तद्रूपः 'असौ' आदित्योऽधोमुखस्तपति,— आदित्यप्रेरितः पर्जन्योऽधोमुखो वर्षति,— आदित्यवन्नक्षत्राण्यपि

'अर्वाञ्चि' अधोमुखानि प्रकाशन्ते। 'एतस्य' आदित्यस्य अर्वाची दिक् प्रिया। किञ्च इमे त्रयो लोकास्तत्तद्वासिनां सुखहेतुत्वात् 'सम्यञ्चः'; एते च त्र्यहाः लोकत्रयसाम्येनानुष्ठातॄणां सुखहेतुत्वात् सम्यञ्चः॥ वेदनं प्रशंसति— "सम्यञ्चोऽस्मा इमे लोकाः श्रियै दीद्यति य एवं वेद"-इति ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य चतुर्थपञ्चिकायां चतुर्थाध्याये (एकोनविंशाध्याये) तृतीयः खण्डः ॥ ३ (२५) ॥

---

॥ अथ चतुर्थः खण्डः ॥

दीक्षा वै देवेभ्यो ऽपाक्रामत् तां वासन्तिकाभ्यां मासाभ्या मन्वयुञ्जत तां वासन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्या मन्वयुञ्जत तां हैमन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्यां मासाभ्या मन्वयुञ्जत तां शैशिराभ्यां मासाभ्या माप्नुवन्नाप्नोति य मीप्सति नैनं द्विषन्नाप्नोति य एवं वेद तस्माद्यं सत्रिया दीक्षोपनमेदेतयोरेव शैशिरयो-

मासयोरागतयोर्दीक्षेत साक्षादेव तद्दीक्षाया माग- तायां दीक्षते प्रत्यक्षाद्दीक्षां परिगृह्णाति तस्मा- देतयोरेव शैशिरयोर्मासयोरागतयोर्यें चैव ग्राम्याः पशवो ये चारण्या अणिमाण मेव तत्कृषिमाणं नियन्ति दीक्षारूप मेव तद्रूप निह्नवन्ते स पुरस्ता- द्दीक्षायाः प्राजापत्यं पशु मालभेत तस्य सप्तदश सामिधेनीरनुब्रूयात् सप्तदशो वै प्रजापतिः प्रजापते- राप्त्यै तस्याप्रियो जामदग्न्यो भवन्ति तदाहुर्यदन्येषु पशुषु यथऋष्याप्रियो भवन्त्यथ कस्मादस्मिन्त्सर्वेषां जामदग्न्य एवेति सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः सर्वरूप एष पशुः सर्वसमृद्धस्तद्यज्जामदग्न्यो भवन्ति सर्वरूपतायै सर्वसमृद्ध्यै तस्य वायव्यः पशुपुरोळाशो भवति तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्मा- द्वायव्यः पशुपुरोळाशः क्रियत इति प्रजापतिर्वै यज्ञो यज्ञस्यायातयामताया इति ब्रूयाद्यद्दु वाय- व्यस्तेन प्रजापतेर्नैति वायुर्ह्येव प्रजापतिस्तदुक्त मृषिणा पवमानः प्रजापतिरिति सच मु चेत्स न्युप्याग्नीन् यजेरन्त्सर्वे दीक्षेरन्त्सर्वे सुनुयुर्वसन्त मभ्युदवस्यत्यूर्ग् वै वसन्त इष मेव तदूर्ज मभ्युद- वस्यति ॥ ४ ( २६ ) ॥

अथ द्वादशाहे दीक्षायाः कालविशेषं विधातुं प्रस्तौति—"दीक्षा वै देवेभ्यो ऽपाक्रामत्; तां वासन्तिकाभ्यां मासाभ्या मन्वयुञ्जत, तां वासन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्या मन्वयुञ्जत, तां हैमन्तिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्यां मासाभ्या मन्वयुञ्जत, तां शैशिराभ्यां मासाभ्या माप्नुवन्"-इति। पुरा कदाचित् 'दीक्षा' स्त्रीमूर्त्तिरूपा सती देवेष्वपरक्ता, तेभ्यो देवेभ्यो निर्गता। देवाश्च 'वासन्तिकाभ्यां' चैत्रवैशाख-मासाभ्यां 'तां' दीक्षाम् 'अनु'गम्य 'अयुञ्जत' तद्युक्ता भवाम इत्येव मपेक्षितवन्तः। ततस्त्वरया गच्छतीति 'तां' दीक्षां ताभ्यां मासाभ्या मुत्कर्षेण 'न आप्नुवन्' नाशक्नुवन्। एवं ग्रैष्म–वार्षिक–शारदेषु मासेषु यथायोगं पदान्यध्याहृत्य व्याख्येयम्। अध्याहारविवक्षां दर्शयितु मेव हैमन्तिके पर्य्याये सम्पूर्णं वाक्य माम्नातम्। यथोक्तपञ्चर्त्तुगतैर्मासैस्तत्प्राप्त्यभावेऽपि शैशिरमासाभ्यां तत्प्राप्तिर्जाता॥ वेदनं प्रशंसति—"आप्नोति य मीप्सति; नैनं द्विषन्नाप्नोति य एवं वेद"-इति। वेदिता पुरुषः 'यं' काम माप्तु मिच्छति, त माप्नोति; किञ्च 'एनं' वेदितारं 'द्विषन्' वैरी न प्राप्नोति॥

इदानीं कालं विधत्ते—"तस्माद्य' सत्रिया दीक्षोपनमेदेतयोरेव शैशिरयोर्मासयोरागतयोर्दीक्षेत; साक्षादेव तद्दीक्षाया मागतायां दीक्षते,— प्रत्यक्षाद्दीक्षां परिगृह्णाति; तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चारण्या अणिमाण मेव तत्परुषिमाणं नियन्ति, दीक्षारूप मेव तदुप निष्प्लवन्ते"-इति। यस्मात् शैशिराभ्यां मासाभ्यां देवानां दीक्षाप्राप्तिः,

'तस्माद्' 'यं' पुरुषं द्वादशाहादिसत्रसम्बन्धिनी दीक्षा प्राप्नुयात्, दीक्षां तत्र करिष्यामीति * यस्येच्छा जायते, स पुमान् 'एतयोरेव' शिशिरसम्बन्धि-माघफाल्गुनयोर्मासयोः प्राप्तयोः सतोः दीक्षां कुर्य्यात्। तथा सति दीक्षायां साक्षाद्देवागतायां बलात्कार मन्त्रेण स्वप्रिये काले स्वय मेव 'समागतायां' सत्या मयं दीक्षितो भवति। अतः 'प्रत्यक्षात्' प्रत्यक्षेण दृश्यमाना मिव मुख्यां दीक्षां परिगृह्णाति। यस्मादुक्तमासद्वयागमे दीक्षा, 'तस्मात्' तयोर्मासयोरागतयोः सतोः 'ग्राम्याः' गवादिपशवः, 'आरण्याः' द्विकरादिपशवश्च 'अणिमाणं' कृशत्वं 'परुषिमाणं' पारु ं च 'नियन्ति' नितरां प्राप्नुवन्ति। वर्षाशरद्धेमन्तेषु ऋतुषु सन्तापराहित्यात्सर्वत्र हरिततृणं भक्षयित्वा पशवः पुष्टाङ्गाः स्निग्धाश्चावभासन्ते; शैशिरे तु ऋतौ तृणस्य शोषणोपक्रमात्सम्पूर्णभक्षणाभावेन पशवः कृशा भवन्ति; अतएवास्थिदर्शनात् परुषा दृश्यन्ते। एतच्च युक्त मेव। 'तत्' तस्मिन् शिशिरर्त्तौ दीक्षारूप मेवोपेत्य नितरां 'प्लवन्ते' सञ्चरन्ति। दीक्षितो नियमविशेषैः पीडितः कृशः परुषश्च भवति, अतः पशूनां कृशत्वं पारुष्यञ्च दीक्षाकाललिङ्गम्॥

दीक्षार्थिनः कञ्चित्पशुं विधत्ते—"स पुरस्ताद्दीक्षायाः प्राजापत्यं पशु मालभते"—इति। यो दीक्षां वाञ्छति, 'सः' पुमान् दीक्षोपक्रमात् पुरा प्रजापतिदेवताकं पशु मालभेत †। द्विविधो हि

* "गमिष्यामीति" ग।

† "अथ सप्तदश प्राजापत्यान् पशूनालभते। ते वै सर्वे तूपरा भवन्ति, सर्वे श्यामाः, सर्वे मुष्कराः ०—०तूपरो ऽविषाणः०—०द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च०—० प्रजननं वै मुष्करः"—इत्यादि शत० ब्रा० ५.१.३.७-१०। "प्राजापत्यो वा अश्वः"—इति च शत० ब्रा० ६.५.३.९; तै० ब्रा० २.७.१.३; म० सं० ११.३८। वा० सं० २४ अ०।